# THE KATHÂSARITSÂGARA

OF

# SOMADEVABHATTA.





EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂŚÎNÂTH PÂNDURANG PARAB.

Fourth Edition.



REVISED BY

WÂSUDEV LAXMAṆ S'ÂSTRÎ PAṆS'ÎKAR.



PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

BOMBAY.

1930.

Price 5 Rupees.



॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः



# कथासरित्सागरः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।



इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

(तस्येदं चतुर्थं संस्करणम्)

पणशीकरोपाह्वेन लक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संशोधितम् ।

तच्च

१८५२ संवत्सरे

मुम्बय्यां

निर्णयसागराख्ययन्त्रालये पाण्डुरङ्ग जावजी इत्येतैः मुद्रयित्वा प्रकाशितम् ।

मूल्यं ९ रूप्यकाः



## श्रीगुणाढ्यः । (बृहत्कथा) ।

श्रीगुणाढ्यमहाकविः प्रतिष्ठानाधीशश्रीसातवाहनमहीपतिसभायामासीत् । स च लक्षश्लोकनिबद्धामद्भुतां पिशाचभाषामयीं बृहत्कथां ग्रथितवानिति तावत्कथापीठलम्बके स्फुटमेव । स च सातवाहनभूपतिः खिस्ताब्दीयप्रथमशतक आसीदित्यपि सर्वप्रसिद्धम्।[1] तस्मात्स एव गुणाढ्यस्य समयः । बृहत्कथान्तर्गताः काश्चन कथाः कथैकदेशान्वावलम्ब्य तत्तत्कविभिः प्रणीता रत्नावली-नागानन्द-प्रियदर्शिका-पञ्चतन्त्र-कादम्बरी-मालतीमाधव-मुद्राराक्षस-वेतालपञ्चविंशति-हितोपदेशादयो ग्रन्थाः सर्वत्र समुल्लसन्ति । किं तु सा पैशाचीबृहत्कथा, अन्यो वा कश्चन गुणाढ्यप्रणीतो ग्रन्थोऽधुना नोपलभ्यते । प्राचीनेषु ग्रन्थेषु क्वचित्क्वचिद्बृहत्कथाया गुणाढ्यस्य च स्मरणं वर्तते । यथा—वासवदत्तायाः कुसुमपुरवर्णने—'बृहत्कथारम्भैरिव शालिभञ्जिकोपेतैः' इति । काव्यादर्शे—'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्' (१।३८) इति । हर्षचरिते—'समुद्दीपितकंदर्पा कृतगौरीप्रसाधना । हरलीलेव नो कस्य विस्मयाय बृहत्कथा ॥' इति । कादम्बर्यामुज्जयिनीवर्णने 'बृहत्कथाकुशलैः' इति । दशरूपे—'रामायणादि च विभाव्य बृहत्कथां च' (१।६१)[2] इति । नलचम्प्वाम्—'शश्वद्बाणद्वितीयेन नमदाकारधारिणा । धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ (१।१४) इति । गोवर्धनसप्तशत्याम्—'श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः' इति, 'अतिदीर्घजीविदोषाद्व्यासेन यशोऽपहारितं हन्त । कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥' इति च । कुवलयानन्दे परिकरप्रकरणे—'चित्रार्थां न बृहत्कथामचकथं' इति प्राचीनं पद्यम् । एवमन्यत्रापि ।

---

## श्रीक्षेमेन्द्रः । (बृहत्कथामञ्जरी) ।

प्रकाशेन्द्रसूनुर्व्यासदासापरनामा क्षेमेन्द्रमहाकविरनन्तराजराज्यसमये (१०२८—१०८० खिस्ताब्देषु) कश्मीरेषु समुत्पन्नः प्रणिनाय च बहून्ग्रन्थान् । स एव बृहत्कथा अतीव विस्तीर्णेति पिशाचभाषामयीति च न सर्वहृदयंगमेति गीर्वाणगिरा तत्सारमाचकर्ष । 'बृहत्कथामञ्जरी'[3] इति तन्नाम च कृतवान् । विहितवांश्च लम्बकक्रमे क्वचित्क्वचित्कथासु च पौर्वापर्यम् । तत्रेत्थं बृहत्कथामञ्जरीप्रारम्भः—

> 'उमाप्रणामसंक्रान्तचरणालक्तकः शशी ।
> संध्यारुण इवाभाति यस्य पायात्स वः शिवः ॥ १ ॥
> सरस्वतीविभ्रमदर्पणानां सूक्तामृतक्षीरमहोदधीनाम् ।
> सन्मानसोल्लाससुधाकराणां कवीश्वराणां जयति प्रकर्षः ॥ २ ॥
> दोषालोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च ।
> दर्शनमपि भयजननं येषामनिमेषपिशुनानाम् ॥ ३ ॥
> ओजो रञ्जनमेव वर्णरचनाश्चित्रा न कस्य प्रिया
> नानालंकृतयश्च कस्य न मनःसंतोषमातन्वते ।
> काव्ये किं तु सतां चमत्कृतिकृतः सूक्तिप्रबन्धाः स्फुटं
> तीक्ष्णाग्रा झटिति श्रुतिप्रणयिनः कान्ताकटाक्षा इव ॥ ४ ॥

---

१ वेबरपण्डितस्तु 'हिस्टरी ऑफ् इण्डियन् संस्कृतलिटरेचर' नाम्नि ग्रन्थे गुणाढ्यः खिस्ताब्दीयषष्ठशतक आसीदिति वदति । दशकुमारचरितप्रणेता दण्ड्याचार्योऽपि षष्ठशतक एवासीदित्यपि स्वीकरोति । किं त्वाचार्यदण्डी काव्यादर्शे 'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्' इति वदन् 'प्राहुः' इति पदेन स्वस्माद्बृहत्कथाया बहुप्राचीनत्वं सूचयति । तत्कथमुभावपि दण्डिगुणाढ्यौ षष्ठशतकोद्भूताविति वेबरपण्डितो निश्चिकायेति न ज्ञायते । अथवा निसर्ग एवायं प्रायो यूरोपदेशीयविदुषाम्, यत्प्रत्नतमानामपि भारतवर्षीयग्रन्थानां तत्प्रणेतृणां चार्वाचीनत्वसाधनाय यावच्छक्यं यतन्ते । प्राप्तेऽपि तत्प्राचीनत्वावबोधके स्वमतप्रतिकूले दृढे प्रमाणे 'प्रक्षिप्तमेतत्' इत्युक्त्वा स्वाभिमतमेव पुरस्कुर्वन्ति । २ 'बृहत्कथामूलं मुद्राराक्षसम्' इति दशरूपावलोकः । ३ बृहत्कथामञ्जर्या इतिवृत्तं रोमनूलिप्यां कथापीठलम्बकः, वेतालद्वयकथा, फ्रेञ्चभाषया तदनुवादश्च १८८६ खिस्ताब्दे फ्रान्सदेशे पॅरिसराजधान्यां लेवी (S. Levi) पण्डितेन मुद्रितः । एकं तत्पुस्तकं चास्मभ्यं तेन महाशयेन प्रहितमिति तदुपकारं स्वीकुर्मः । बृहत्कथामञ्जरीप्रारम्भश्लोकास्तत एवास्माभिरुद्धृताः सन्ति । अस्मदीयं बृहत्कथामञ्जरीपुस्तकं त्वशुद्धं प्रारम्भे किंचित्त्रुटितं चास्ति । ४ कथासरित्सागरे तु सोमदेवभट्टेन किंचिदपि व्यत्ययो न कृत इति 'यथामूलं तथैवैतन्न मनागप्यतिक्रमः' इति तद्वाक्यात्प्रतीयते ।

एवं किल पुराणेषु सर्वागमविधायिषु ।
विश्वशासनशालिन्यां श्रुतौ च श्रूयते कथा ॥ ५ ॥
अस्ति विद्याधरत्रस्तविलासहसितद्युतिः ।
जाह्नवीनिर्झरोष्णीषः शर्वाणीजनको गिरिः ॥ ६ ॥
निशाकरकरस्मेरतुषाररुचिरत्विषा ।
आशा धनपतेर्येन विभात्यनिशचन्द्रिका ॥ ७ ॥
यः शुभ्रशिखरो भाति शिवमौलीन्दुदर्शनात् ।
तरङ्गालिङ्गिताभ्रश्रीः क्षीरार्णव इवोत्थितः ॥ ८ ॥
यः प्रांशुरश्मिनिचयैर्विदधाति मुहुर्मुहुः ।
त्रिदिवोद्यानहंसानां मृणालकवलभ्रमम् ॥ ९ ॥
यस्याश्मकूटसंघट्टविशीर्णपतनोत्थिताः ।
मुहूर्तं तारकायन्ते व्योम्नि गङ्गाम्बुशीकराः ॥ १० ॥
फेनहारविलासिन्यः फुल्लकुवलयेक्षणाः ।
विभान्ति कटके यस्य तरङ्गिण्यो महीभृतः ॥ ११ ॥
उत्तरे तस्य कैलासनाम्नि स्फाटिकशेखरे ।
विजहार हरो हारगौरे गिरिसुतासखः ॥ १२ ॥' इत्यादि ।

लम्बकक्रमस्त्वित्थम्—( १ ) कथापीठम्, ( २ ) कथामुखम्, ( ३ ) लावानकः, ( ४ ) नरवाहनदत्तजन्म, ( ५ ) चतुर्दारिका, ( ६ ) सूर्यप्रभः, ( ७ ) मदनमञ्चुका, ( ८ ) वेला, ( ९ ) शशाङ्कवती, ( १० ) विषमशीलः, ( ११ ) मदिरावती, ( १२ ) पद्मावती, ( १३ ) पञ्चलम्बकः, ( १४ ) रत्नप्रभा, ( १५ ) अलंकारवती, ( १६ ) शक्तियशोलम्बकः, ( १७ ) महाभिषेकः, ( १८ ) सुरतमञ्जरी ।

अत्र स्फुटमेव लम्बकपौर्वापर्यम् । एवं कथास्वपि भेदोऽस्ति । अन्येऽपि बहवो ग्रन्थाः क्षेमेन्द्रप्रणीताः सन्ति । तेष्वद्यावधि ज्ञातास्त्वेते—( १ ) अमृतरङ्गकाव्यम्, ( २ ) अवसरसारः, ( ३ ) औचित्यविचारचर्चा, ( ४ ) कनकजानकी, ( ५ ) कलाविलासः, ( ६ ) कविकण्ठाभरणम्, ( ७ ) चतुर्वर्गसंग्रहः, ( ८ ) चारुचर्या, ( ९ ) चित्रभारतनाटकम्, ( १० ) दर्पदलनम्, ( ११ ) दशावतारचरितकाव्यम्, ( १२ ) देशोपदेशः, ( १३ ) नीतिकल्पतरुः, ( १४ ) नीतिलता, ( १५ ) पद्यकादम्बरी, ( १६ ) पवनपञ्चाशिका, ( १७ ) बृहत्कथामञ्जरी, ( १८ ) बोधिसत्त्वावदानकल्पलता, ( १९ ) भारतमञ्जरी, ( २० ) मुक्तावली, ( २१ ) मुनिमतमीमांसा, ( २२ ) राजावली, ( २३ ) रामायणमञ्जरी, ( २४ ) ललितरत्नमाला, ( २५ ) लावण्यवती, ( २६ ) वात्स्यायनसूत्रसारः, ( २७ ) विनयवल्ली, ( २८ ) व्यासाष्टकम्, ( २९ ) शशिवंशमहाकाव्यम्, ( ३० ) समयमातृका, ( ३१ ) सुवृत्ततिलकम्, ( ३२ ) सेव्यसेवकोपदेशः । लोकप्रकाशकर्ता तु शाहजहानराज्यसमये कश्चिदन्य एव क्षेमेन्द्रः कश्मीरेषु समुत्पन्न इति लोकप्रकाशे स्फुटमस्ति । एवं हस्तिजनप्रकाशकर्ता गुर्जरदेशोद्भवो यदुशर्मसूनुः कश्चन तृतीयोऽपि क्षेमेन्द्र आसीत् ।

## भट्टश्रीसोमदेवः । ( कथासरित्सागरः )

रामभट्टसूनुः श्रीसोमदेवभट्टोऽप्यनन्तराजराज्यसमये कश्मीरेष्वेव समुत्पन्नः । स च बृहत्कथामञ्जरीमतिसंकुचितां नातिरुचिरां च विलोक्य श्रीमदनन्तराजमहिष्याः परमविदुष्याः सूर्यवत्याः प्रोत्साहनया नातिसंक्षिप्तं नातिविस्तीर्णमतिप्रसन्नं नितान्तं स्वान्ताकर्षणक्षमं बृहत्कथानुकूलं संस्कृतवाण्या कथासरित्सागरनामकं ग्रन्थरत्नं निर्ममे । स कथासरित्सागरः १८३९—१८६६ खिस्ताब्दे जर्मनीदेशे ब्रोकॉसपण्डितेन चतुर्दारिकालम्बकपर्यन्तं नागराक्षरैस्तदनन्तरं रोमनलिप्या मुद्रितः । ततः १८८३ खिस्ताब्दे कलकत्तानगरवासिना जीवानन्दभट्टाचार्यविद्यासागरेण चूर्णीकृत्य मुद्रां नीतः । एवं वारद्वयं जातेऽपि मुद्रणे ग्रन्थस्य स्वरूपहानिरेव संवृत्तेति पुनरप्येतन्मुद्रणे वयमुद्युक्ताः ।

तत्र कश्मीरलिखितमेकं नवीनं प्रायः शुद्धमस्मदीयं पुस्तकम् । तत्पत्राणि ७१० सन्ति ।

द्वितीयं डॉक्टर्भाऊदाजीतिप्रसिद्धानां विद्वद्वराणां १७४३ विक्रमाब्दे काश्यां लिखितं नातिशुद्धं मनोहारिस्वरूपं च । तत्पत्राणि ७०२ सन्ति । तच्चाधुना मुम्बईनगरे टाउनहॉलस्थितराजकीयपुस्तकालयाधीनं वर्तते ।

तृतीयं ब्रोकॉससुद्रितम् ।

इति पुस्तकत्रयाधारेणास्माभिरयं ग्रन्थः संशोधितः प्रकाशितश्च, सहृदयानां विदुषामानन्दावहो भूयादिति भद्रम् ।

---

१ एतत्केवलमनुमीयते ।

# अथ कथासरित्सागरस्य विषयानुक्रमः ।


| तरङ्गाङ्कः | विषयः | पृष्ठाङ्कः |
| --- | --- | --- |
| १ | मङ्गलाचरणम् । लम्बकानुक्रमणी । कथाया उपोद्घातः । शिवं प्रति कथाकथनार्थं पार्वत्याः प्रार्थना । शिवप्रोक्ता संक्षिप्ता पार्वत्याः पूर्वजन्मकथा । पार्वत्याः प्रणयकोपः । पुनरपि कथोपक्रमः । कथावसरे पुष्पदन्तप्रवेशः । पुष्पदन्तं माल्यवन्तं च प्रति भगवत्याः शापः । शापमोक्षकथनम् । पुष्पदन्तमाल्यवतोर्मर्त्यलोके जन्मकथनम् । ... ... ... ... ... | १ |
| २ | वररुचेर्विन्ध्यवासिनीदर्शनार्थं गमनम् । काणभूतिना समागमः । उज्जयिनीपुर्यां महाश्मशाने शिवमुखादाकर्णिता स्वप्राग्जन्मशापादिकथा काणभूतिना वर्णिता । वररुचिव्याडीन्द्रदत्तानां कथा । वर्षोपवर्षयोः कथा ।... ... ... | |
| ३ | पाटलिपुत्रनगरनिर्माणकथा । ... ... | ५ |
| ४ | वररुचिभार्याया उपकोशायाः कथा । तन्मध्य एव पाणिनिकथा । नन्दमहीपतेः कथा । शकटालवृत्तम् । ... ... ... ... | ७ |
| ५ | योगानन्दकथा । आदित्यवर्मणस्तन्मन्त्रिणः शिववर्मणश्च कथा । वररुचिकथाशेषः । चाणक्यकथा । शाकाशिनो मुनेः कथा । ... ... | ११ |
| ६ | गुणाढ्यकथा । मूषकाख्यस्य वणिजः कथा । कस्यचित्सामपाठिनः कथा । सातवाहनमहीपतिकथा । देव्युद्यानकथा । सातवाहनस्य कथा । | १५ |
| ७ | शर्ववर्मकथा । कलापव्याकरणप्रादुर्भावकथा । पुष्पदन्तस्य माल्यवतश्च कथा । ... ... | १९ |
| ८ | गुणाढ्यकृतो बृहत्कथाया अग्नौ प्रक्षेपः । पुनरपि गुणाढ्यसातवाहनयोः समागमः । कथापीठनाम्नः प्रथमलम्बकस्य समाप्तिः । ... ... ... | २२ |
| ९ | सहस्रानीकस्य कथा । वत्सराजोत्पत्तिकथा । | २४ |
| १० | श्रीदत्तब्राह्मणकथा । सहस्रानीककथाशेषः । | २६ |
| ११ | वत्सराजकथा । चण्डमहासेनकथा । ... | ३२ |
| १२ | वत्सराजकृतवासवदत्ताहरणोद्योगः । लोहजङ्घकथा । ... ... ... ... ... | ३४ |
| १३ | वासवदत्ताहरणम् । देवस्मितायाः कथा । जन्तुनाम्नो राजपुत्रस्य कथा । देवस्मितायाः परिव्राजिकायाः सिद्धिकर्याश्च कथा । समुद्रदत्तस्य तत्पत्न्याश्च कथा देवस्मिताकथाशेषश्च । ... | ३९ |
| १४ | वत्सराजस्य कौशाम्ब्यां समागमनम् । बालविनष्टककथा । रुरोः प्रमद्वरायाश्च कथा । कथामुखनाम्नो द्वितीयलम्बकस्य समाप्तिः । | ४५ |
| १५ | वत्सराजस्य द्वितीयविवाहोद्योगः । प्रव्राजकस्य वानरस्य च कथा । उन्मादिनीदेवसेनयोः कथा । यव्लकनाम्नो वणिक्सुतस्य तद्भार्यायाश्च कथा । पुण्यसेनमहीपतेः कथा। वत्सराजसभायां नारदागमनम् । सुन्दोपसुन्दकथा ।... ... | ४८ |
| १६ | वत्सराजस्य लावाणकगमनम् । वासवदत्ताया दाहप्रवादः । वासवदत्तायाः पद्मावतीसदने गमनम् । दुर्वाससः कुन्त्याश्च कथा । पद्मावत्या सह वत्सराजस्य परिणयः । पुनर्वासवदत्ताया वत्सराजेन समागमः । ... ... ... | ५२ |
| १७ | उर्वशीपुरूरवसोः कथा । विहितसेनस्य तेजोवत्याश्च कथा । सोमप्रभाया गुहचन्द्रस्य च कथा । इन्द्राहल्ययोः कथा । ... ... ... | ५९ |
| १८ | वत्सराजस्य कौशाम्ब्यामागमनम् । गोपालकथा । वत्सराजस्य निधानलाभः सिंहासनप्राप्तिश्च । विदूषककथा । ... ... ... | ६० |
| १९ | वत्सराजकृतं शिवाराधनम् । देवदासाख्यवणिजः कथा । वत्सराजकृतो दिग्विजयः । ... | ७० |
| २० | फलभूतिकथा । गणपतिकथा । कालरात्रिकथा । लावाणकलम्बकसमाप्तिः । ... ... ... | ७४ |
| २१ | वत्सराजस्य मृगयावर्णनम् । कस्याश्चन दुर्गतब्राह्मण्या वत्सराजसमीप आगमनम् । देवदत्ताभिधानस्य राजपुत्रस्य कथा । ब्राह्मणीवृत्तान्तः । | ८० |
| २२ | वासवदत्ताया गर्भधारणम् । जीमूतवाहनकथा । | ८४ |
| २३ | वासवदत्तायाः स्वप्नवर्णनम् । कस्याश्चन दुश्चारिण्या नार्या वृत्तम् । कलहकारिण्याः सिंहपराक्रमस्य च कथा । यौगन्धरायणादिमन्त्रिणां पुत्रजन्म । वासवदत्तायां नरवाहनदत्तजन्म । नरवाहनदत्तजननलम्बकसमाप्तिः । ... ... | ९१ |
| २४ | वत्सराजसभायां शक्तिवेगाख्यविद्याधरागमनम् । कनकपुरीसंबद्धा शक्तिदेवकथा । शिवमाधवयोः कथा । ... ... ... ... | ९४ |
| २५ | शक्तिदेवस्य कनकपुरीदर्शनार्थं गमनम् । अशोकदत्तकपालस्फोटयोः कथा । ... ... | १०० |
| २६ | पुनरपि शक्तिदेवस्य यात्रा । कनकपुरीप्राप्तिः । पुनरपि स्वदेशागमनम् । पुनः कनकपुरीयात्रा । जालपादाख्यव्रतिनः कथा । शक्तिदेवस्य विवाहादि । चतुर्दारिकालम्बकसमाप्तिः । ... | १०८ |
| २७ | नरवाहनदत्तस्य तारुण्यप्राप्तिः । कलिङ्गदत्तनृपतेः कथा । वणिक्पुत्रकथा । धर्मदत्ताख्य- | |

| तरङ्गाङ्कः | विषयः | पृष्ठाङ्कः |
|---|---|---|
| | महीपतिकथा। सप्तब्राह्मणकथा। ब्राह्मणचण्डालयोः कथा। विक्रमसिंहमहीपतेर्ब्राह्मणयुग्मस्य च कथा। ... ... ... ... ... | ११७ |
| २८ | कलिङ्गसेनाजन्म। सप्तकुमारिकावृत्तम्। विरक्तराजपुत्रकथा। तपस्विनो राज्ञश्च कथा। सुषेणस्य तद्दुहितुः सुलोचनायाश्च कथा। कलिङ्गसेनासमीपे सोमप्रभाया आगमनम्। राजपुत्रवणिक्पुत्रयोः कथा। पिशाचस्य ब्राह्मणकन्यायाश्च कथा। ... ... ... ... | १२२ |
| २९ | सोमप्रभावृत्तम्। सोमप्रभानीतयन्त्रपुत्रिकावर्णनम्। कलिङ्गसेनायाः सोमप्रभायाश्च स्वयंप्रभासमीपे गमनवृत्तम्। कीर्तिसेनाकथा। ... | १२८ |
| ३० | मदनवेगवृत्तान्तः। कलिङ्गसेनाया विवाहचर्चा। वत्सराजवर्णनम्। तेजस्वत्या राजपुत्रस्य च कथा। हरिशर्मब्राह्मणकथा। ... ... | १३३ |
| ३१ | बाणासुरतनयाया उषाया वृत्तम्। कलिङ्गसेनायाः कौशाम्ब्यां गमनम्। यौगन्धरायणमन्त्रः। | १३७ |
| ३२ | कलिङ्गसेनावृत्तम्। विष्णुदत्तस्य सप्तब्राह्मणपुत्राणां च कथा। कदलीगर्भायाः कथा। मध्ये नापितकथा। ... ... ... ... ... | १४० |
| ३३ | वत्सराजादिवृत्तम्। कर्पिकस्य वृत्तम्। श्रुतसेनस्य विद्युद्द्योतायाश्च कथा। नकुलमूषकमार्जारोलूकानां कथा। ब्राह्मणस्य तदीयहेमदीनारसहस्रस्य च कथा। कलिङ्गसेनावृत्तम्। | १४५ |
| ३४ | वत्सराजवृत्तम्। वणिग्भार्यायाः कथा। कलिङ्गसेनाया गर्भधारणम्। मदनमञ्चुकाया जन्म। यक्षकथा। नरवाहनदत्तस्य मदनमञ्चुकायाश्चानुरागवर्णनम्। शत्रुघ्नस्य पुंश्चल्यास्तद्भार्यायाश्च वृत्तम्। नीतिवर्णनम्। नरवाहनदत्तमदनमञ्चुकयोर्विवाहवर्णनम्। मदनमञ्चुकालम्बकसमाप्तिः। ... ... ... ... ... ... | १५१ |
| ३५ | कौशाम्ब्या उपवने रत्नप्रभागमनम्। रत्नप्रभावृत्तम्। सत्त्वशीलकथा। विक्रमतुङ्गमहीपतेर्नागशर्मब्राह्मणस्य च कथा। नरवाहनदत्तस्य रत्नप्रभायाश्च विवाहवर्णनम्। ... ... | १५९ |
| ३६ | रत्नाधिपतिमहीपतेस्तद्गजस्य तद्राज्याः पतिव्रतायाः शीलवत्याश्च कथा। ... ... | १६३ |
| ३७ | निश्चयदत्तस्यानुरागपरायाश्च कथा। मध्ये सोमस्वामिकथा। ... ... ... | १६७ |
| ३८ | विक्रमादित्यस्य वेश्याया मदनमालायाश्च कथा। ... ... ... ... ... | १७४ |
| ३९ | शृङ्गभुजरूपशिखयोः कथा। ... ... | १७८ |
| ४० | मरुभूतिगोमुखयोरुक्तिप्रत्युक्ती। सिकतासेतुकथा। विरूपशर्मकथा। विनयशीलभूपतेस्तरुणचन्द्रवैद्यस्य च कथा। ... ... ... | १८४ |
| ४१ | नागार्जुनकथा। ... ... ... ... ... | १८७ |
| ४२ | कर्पूरिकावृत्तम्। इन्दीवरसेनानिच्छासेनयोः कथा। ... ... ... ... ... | १८९ |
| ४३ | राज्यधरनाम्नस्तक्षणः कथा। मानपरासुखधनयोः कथा। कर्पूरिकानरवाहनदत्तयोर्वृत्तम्। रत्नप्रभालम्बकसमाप्तिः। ... ... ... ... | १९५ |
| ४४ | सूर्यप्रभकथा। ... ... ... | २०४ |
| ४५ | सूर्यप्रभकथा। मध्ये कालनाम्नो ब्राह्मणस्य कथा। ... ... ... ... ... ... | २०९ |
| ४६ | सूर्यप्रभकथा। मध्ये नमुचिदानवकथा। ... | २२१ |
| ४७ | सूर्यप्रभकथा। नानाविधं स्त्रीणां वर्णनम्। ... | २२८ |
| ४८ | सूर्यप्रभकथा। ... ... ... ... | २३१ |
| ४९ | सूर्यप्रभकथा। गुणशर्मकथा। ... ... | २३५ |
| ५० | सूर्यप्रभकथा। सूर्यप्रभलम्बकसमाप्तिः। ... | २४२ |
| ५१ | अलंकारवतीवृत्तम्। रामचरितम्। पृथ्वीरूपस्य रूपलतायाश्च कथा। अलंकारवतीनरवाहनदत्तयोर्विवाहवर्णनम्। ... ... ... | २४८ |
| ५२ | नरवाहनदत्तस्यालंकारवतीपितुः पुरे गमनम्। हठशर्मकथा। अनङ्गरतिकथा। ... ... | २५४ |
| ५३ | कार्पटिकवृत्तम्। लक्षदत्तमहीपतेस्तत्कार्पटिकस्य च कथा। वीरवरकथा। ... ... ... | २६५ |
| ५४ | नरवाहनदत्तस्याखेटवर्णनम्। नरवाहनदत्तस्य श्वेतद्वीपगमनादि। रुद्रनाम्नो वणिजो वृत्तम्। समुद्रशूरकथा। चमरवालस्य कथा। मध्येऽर्थवर्मभोगवर्मणोः कथा। ... ... ... | २७० |
| ५५ | मरुभूतिवृत्तम्। चिरदातुर्महीपतेः कथा। कनकवर्षस्य मदनसुन्दर्याश्च कथा। ... ... | २७६ |
| ५६ | महीपालनाम्नो ब्राह्मणकुमारस्य कथा। चक्रनाम्नो वणिक्पुत्रस्य कथा। पतिव्रताधर्मव्याधयोः कथा। कस्यचन पाशुपतस्य कथा। नलोपाख्यानम्। अलंकारवतीलम्बकसमाप्तिः। ... | २८३ |
| ५७ | कस्यचन भारजीविनो वृत्तम्। भद्रघटकथा। आजजालकथा। ... ... ... | २९५ |
| ५८ | विक्रमतुङ्गस्य कुमुदिकाख्याया वेश्यायाश्च कथा। बलवर्मणस्तद्भार्यायाश्च कथा। देवदासस्य तथार्यायाश्च कथा। वज्रसारस्य तद्भार्यायाश्च कथा। सिंहबलस्य तद्भार्यायाश्च कथा। ... | ३०८ |
| ५९ | शक्तियशोवृत्तम्। विद्याधरीयुग्मकथा। ... | ३०[illegible] |
| ६० | शूरवर्मकथा। पिङ्गलाख्यसिंहस्य दमनककर- | |

| तरङ्गाङ्कः | विषयः | पृष्ठाङ्कः |
|---|---|---|
| | कटकयोश्च कथा । कीलोत्पाटिवानरकथा । मेरीगोमायुकथा । बकमकरयोः कथा । सिंहशशकयोश्च कथा । मन्दविसर्पिण्या यूकायाष्टिट्टिभनाम्नो मत्कुणस्य च कथा । सिंहोष्ट्रयोः कथा । टिट्टिभपक्षिकथा । हंसयोः कूर्मस्य च कथा । मत्स्यत्रयकथा । वानरसूचीमुखयोः कथा । धर्मबुद्धेर्दुष्टबुद्धेश्च कथा । बकसर्पयोः कथा । वणिक्सूनोर्लोहतुलायाश्च कथा । ... ... | ३०९ |
| ६१ | अगुरुदाहिकथा । तिलकार्षिककथा । जलेऽग्निक्षेपकस्य कथा । गुरोर्भार्यायाश्च नासाकर्तकस्य कथा । वनवासिपशुपालकथा । अलंकारलम्बककथा । तूलदाहिकथा । खर्जूरीछेदककथा । निधानदर्शिकथा । लवनाशिकथा । गोदोहककथा । खल्वाटकथा । लघुपातिचित्रग्रीवहिरण्यकमन्थरकनाम्नां काककपोतमूषककूर्माणां कथा । ब्राह्मणकथा । संचयशीलजम्बुककथा । प्रव्राट्कथा । ईर्ष्यालुपुरुषकथा । गरुडनागयोः कथा । केशमुग्धकथा । तैलमुग्धकथा अस्थिमुग्धकथा । चण्डालकन्यकाकथा । मूर्खमहीपालकथा । मित्रद्वयकथा । जलभीतकथा । पुत्रघातिकथा । भ्रातृभौतकथा । ब्रह्मचारिसुतकथा । गणककथा । क्रोधनपुरुषकथा । कन्यावर्धककथा । अर्धपणोपार्जनपण्डितकथा । अभिज्ञानकर्तृकथा । प्रतिमांसप्रदकथा । पुत्रान्तरकाङ्क्षिण्याः स्त्रियाः कथा । आमलकानेतृकथा । भ्रातृद्वयकथा । नापितार्थिकथा । शकटस्थपुरुषकथा । ... ... ... ... | ३१५ |
| ६२ | काकोलूकयोः कथा । शिलीमुखाख्यशशककथा । कपिञ्जलशशकमार्जाराणां कथा । ब्राह्मणच्छागयोः कथा । वृद्धवणिक्कथा । चौरराक्षसयोः कथा । मूर्खतक्षकथा । मुनिमूषिकयोः कथा । मण्डूकसर्पयोः कथा । मूर्खभृत्यकथा । समभागकर्तृभ्रातृद्वयकथा । असंतोषिप्रव्राजककथा । सुवर्णमुग्धकथा । पेटिकारक्षकभृत्यकथा । अपूपमुग्धकथा । द्वाररक्षकभृत्यकथा । महिषभक्षकग्रामीणकथा । दरिद्रभार्याकथा । मूढवैद्यकथा । | ३२४ |
| ६३ | यशोधरलक्ष्मीधरयोः कथा । वानरशिशुमारयोः कथा । सिंहगर्दभयोः कथा । आढ्यगान्धर्विकयोः कथा । मूर्खशिष्यद्वयकथा । द्विशिरःसर्पकथा । तण्डुलभक्षकमूर्खकथा । बालकानां गर्दभस्य च कथा । ब्राह्मणमूर्खपुत्रकथा । ... | ३३० |
| ६४ | ब्राह्मणकुलयोः कथा । मूर्खरोगिवैद्ययोः कथा । मूर्खपुरुषतपस्विकथा । प्राप्तहेमभस्त्रस्य मूर्खस्य कथा । इन्दुदर्शकमूर्खकथा । चतुरनारीकथा । घटकर्पराख्यचौरयोः कथा । धनदेवरुद्रसोमशशिनां कथा । नागस्य च कथा । ... ... | ३३५ |
| ६५ | रुण्डपुरुषस्य पुंश्चल्याश्च कथा । नार्याः सिंहस्य स्वर्णचूलपक्षिणः सर्पस्य च कथा । श्वदष्टश्रमणकथा । कदर्यमूर्खकथा । मार्जारभौतकथा । कैलासगामिमूर्खकथा । गीतरसिकमूर्खकथा । मृगाङ्कलेखाहिरण्याक्षयोः कथा । ... ... | ३४० |
| ६६ | कश्मीरपाटलिपुत्रनगरवासिनोः प्रव्राजोः कथा । एकादशमारिकाकथा । एकबलीवर्दस्वामिदरिद्रकथा । धूर्तस्यालीकमन्त्रिणः कथा । हेमप्रभालक्ष्मीसेनयोः कथा । नरवाहनदत्तशक्तियशसोर्विवाहः । शक्तियशोलम्बकसमाप्तिः । ... | ३४६ |
| ६७ | रुचिरदेवपोतकयोः कथा । सार्थवाहस्य वेलायाश्च वृत्तान्तः । वेलालम्बकसमाप्तिः । ... | ३५२ |
| ६८ | नरवाहनदत्तस्य कयाचन दिव्यकन्यया मलयाचले हरणम् । करिणः करेणुकायाश्च कथा । दिव्यकन्याया वृत्तम् । ... ... ... | ३५६ |
| ६९ | मलयाचले पिशङ्गजटनाम्ना मुनिना नरवाहनदत्तस्य समागमः । मृगाङ्कदत्तकथा । वेतालमुखाच्छशाङ्कवतीवृत्ताकर्णनम् । भद्रबाहुकथा । पुष्कराक्षविनयवत्योः कथा । नैष्ठिकी ब्रह्मचारिणीकथा । ... ... ... ... ... | ३५८ |
| ७० | दशमन्त्रिसमेतस्य मृगाङ्कदत्तस्य शशाङ्कवत्यर्थमुज्जयिनीयात्रा । श्रुतधिसमागमः । तपस्विसमागमः । नागशापेन परस्परवियोगः । पुनः श्रुतधिसमागमः । विमलबुद्धिनाम्नो निजमन्त्रिणः समागमस्तद्वृत्तं च । ... ... ... | ३६३ |
| ७१ | मृगाङ्कदत्तस्य नर्मदातटे गमनम् । तत्र मायाबटुनाम्ना शबरेन्द्रेण समागमः । तत्र भीमपराक्रमनाम्ना निजमन्त्रिणा समागमस्तद्वृत्तं च । मध्ये कमलाकरहंसावल्योः कथा । ... ... | ३६६ |
| ७२ | गुणाकरनाम्ना निजमन्त्रिणा मृगाङ्कदत्तस्य समागमः । तद्वृत्तं च । विनीतमतिकथा । बोधिसत्त्वांशस्य वराहस्य कथा । ब्राह्मणब्राह्मण्यो रजकखरयोश्च कथा । दानपारमिताकथा । शीलपारमिताकथा । क्षामपारमिताकथा । धैर्यपारमिताकथा । ध्यानपारमिताकथा प्रज्ञापारमिताकथा । ... ... ... ... | ३७५ |
| ७३ | मृगाङ्कदत्तस्य विचित्रकथनाम्ना निजमन्त्रिणा समागमः । तद्वृत्तम् । अट्टहासयक्षस्य श्रीदर्श- | |

कथा० २

| तरङ्गाङ्कः | विषयः | पृष्ठाङ्कः |
|---|---|---|
| | नस्य च कथा। कश्मीरमहीपतेर्भूनन्दनस्य कथा। पुनः श्रीदर्शनस्य कथा। ... ... | ३८५ |
| ७४ | भीमभटसमरभटयोः कथा। प्रचण्डशक्तिनाम्ना निजमन्त्रिणा मृगाङ्कदत्तस्य समागमः। | ३९७ |
| ७५ | विक्रमकेसरिनाम्ना निजमन्त्रिणा मृगाङ्कदत्तस्य समागमः। तद्वृत्तम्। वेतालपञ्चविंशतिकायां प्रथमो वेतालः। ... ... ... ... | ४०५ |
| ७६ | द्वितीयो वेतालः ... ... ... ... | ४१० |
| ७७ | तृतीयो वेतालः। ... ... ... ... | ४११ |
| ७८ | चतुर्थो वेतालः। ... ... ... ... | ४१४ |
| ७९ | पञ्चमो वेतालः। ... ... ... ... | ४१८ |
| ८० | षष्ठो वेतालः। ... ... ... ... | ४१९ |
| ८१ | सप्तमो वेतालः। ... ... ... ... | ४२१ |
| ८२ | अष्टमो वेतालः। ... ... ... ... | ४२४ |
| ८३ | नवमो वेतालः। ... ... ... ... | ४२५ |
| ८४ | दशमो वेतालः। ... ... ... ... | ४२७ |
| ८५ | एकादशो वेतालः। ... ... ... ... | ४२९ |
| ८६ | द्वादशो वेतालः। ... ... ... ... | ४३० |
| ८७ | त्रयोदशो वेतालः। ... ... ... ... | ४३४ |
| ८८ | चतुर्दशो वेतालः। ... ... ... ... | ४३६ |
| ८९ | पञ्चदशो वेतालः। ... ... ... ... | ४३८ |
| ९० | षोडशो वेतालः। ... ... ... ... | ४४१ |
| ९१ | सप्तदशो वेतालः। ... ... ... ... | ४४७ |
| ९२ | अष्टादशो वेतालः। ... ... ... ... | ४४८ |
| ९३ | एकोनविंशो वेतालः। ... ... ... | ४५१ |
| ९४ | विंशो वेतालः। ... ... ... ... | ४५४ |
| ९५ | एकविंशो वेतालः। ... ... ... ... | ४५७ |
| ९६ | द्वाविंशो वेतालः। ... ... ... ... | ४६० |
| ९७ | त्रयोविंशो वेतालः। ... ... ... ... | ४६२ |
| ९८ | चतुर्विंशो वेतालः। ... ... ... ... | ४६३ |
| ९९ | पञ्चविंशो वेतालः। वेतालपञ्चविंशतिकासमाप्तिः। ... ... ... ... | ४६५ |
| १०० | मृगाङ्कदत्तस्य मार्गे गणपतिद्रुमदर्शनम्। तन्मन्त्रिणां तस्मिन्वृक्षे फलत्वम्। मृगाङ्कदत्तकृता गणपतिस्तुतिः। मन्त्रिणां युगपदेव समागमः। ... ... ... ... | ४६७ |
| १०१ | मन्त्रिचतुष्टयवृत्तान्तः। सुन्दरसेनमन्दारवत्योः कथा। ... ... ... ... | ४६९ |
| १०२ | मन्त्रिसमेतस्य मृगाङ्कदत्तस्योज्जयिनीप्राप्तिः। पुनः परावर्त्य दुर्गपिशाचनाम्नो मातङ्गेन्द्रस्य सदने गमनम्। तत्र मायाबटुप्रभृतिभिर्भिल्लैः समागमः। मन्त्रचिन्ता। उज्जयिनीपतिकर्मसेनं प्रति दूतप्रेषणम्। मृगाङ्कदत्तस्य सेनासमुद्योगः। ... ... ... ... ... | ४८० |
| १०३ | मृगाङ्कदत्तकर्मसेनयोर्युद्धम्। मृगाङ्कदत्तकृतं शशाङ्कवतीहरणम्। मृगाङ्कदत्तकर्मसेनयोः संधिः। मृगाङ्कदत्तशशाङ्कवत्योर्विवाहादि। शशाङ्कवतीलम्बकसमाप्तिः। ... ... ... | ४८४ |
| १०४ | मदनमञ्चुकाविरहार्तस्य नरवाहनदत्तस्य मलयाचलपादेषु भ्रमणम्। तत्र ब्राह्मणपुत्रद्वयेन समागमः। तत्र प्रथमस्य ब्राह्मणसूनोर्मदिरावत्याश्च कथा। द्वितीयस्य ब्राह्मणपुत्रस्य कथा। नरवाहनदत्तस्य कौशाम्ब्यामागमनम्। मदिरावतीलम्बकसमाप्तिः। ... ... ... | ४९२ |
| १०५ | मदनमञ्चुकाहरणम्। नरवाहनदत्तादीनामाकुलत्वम्। अष्टावक्रसुतायाः सावित्र्याः कथा। वेगवतीवृत्तम्। ... ... ... ... | ४९९ |
| १०६ | नरवाहनदत्तस्य गन्धर्वपुरे गमनम्। तत्र गन्धर्वराजदुहित्रा गन्धर्वदत्तया सह विवाहः। धनवत्यजिनावत्योर्वृत्तम्। प्रसेनजिन्नृपतिदुहित्रा सह नरवाहनदत्तस्य विवाहः। प्रभावतीवृत्तम्। मृतभर्तृकायाः कस्याश्चन नार्यास्तत्पुत्रस्य च कथा। नरवाहनदत्तमदनमञ्चुकयोः समागमः। मदनमञ्चुकावृत्तम्। नरवाहनदत्तमानसवेगयोर्विवादादि। ... ... ... ... ... | ५०१ |
| १०७ | ऋष्यमूकपर्वते नरवाहनस्य स्थितिः। रामायणवृत्तम्। पुनरपि धनवत्यजिनावत्योः समागमः। नरवाहनदत्तस्य कौशाम्ब्यामागमनम्। सैन्यसमेतस्य नरवाहनदत्तस्य यात्रा। गौरिमुण्डमानसवेगादिभिः सह युद्धम्। नरवाहनदत्तकृतं शिवाराधनम्। कैलासे गमनम्। सर्वविद्याप्राप्तिः। ... ... ... ... ... | ५०६ |
| १०८ | चक्रवर्तिप्रतीहारागमनम्। गोमुखादिसमागमः। गोमुखवृत्तम्। नागस्वामिनाम्नो ब्राह्मणस्य कथा। मरुभूतिवृत्तम्। हरिशिखवृत्तम्। नरवाहनदत्तस्य विद्याधरसैन्येन सह गौरिमुण्डमानसवेगौ प्रति विजययात्रा। गौरिमुण्डमानसवेगयोर्वधः। गौरिमुण्डसुतया नरवाहनदत्तस्य परिणयः। चक्रवर्तिसरसि नरवाहनदत्तस्य जलक्रीडा। वायुवेगयशःप्रभृतिभिः पञ्चकन्याभिः सह नरवाहनदत्तस्य विवाहः। नरवाहनदत्तकृतं चन्दनद्रुमसाधनम्। मन्ददेवं प्रति यात्रा। पञ्चलम्बकसमाप्तिः। ... ... ... ... | ५१० |
| १०९ | अमृतप्रभनाम्नो विद्याधरस्यागमनम्। तत्प्रेर- | |

| तरङ्गाङ्कः | विषयः | पृष्ठाङ्कः |
|---|---|---|
| | णया वामदेवाश्रमे नरवाहनदत्तस्य गमनम् । वामदेवोपदेशेन गजेन्द्रादिरत्नसाधनम् । मन्दरदेवं प्रति यात्रा । कैलाससमीपे गमनम् । देवमायेन सह युद्धम् । त्रिशीर्षगुहावृत्तम् । त्रिशीर्षगुहाप्रवेशः । कालरात्रिकोपेन नरवाहनदत्तसैन्यस्य मोहः । नरवाहनदत्तकृता कालरात्रिस्तुतिः । कालरात्रिप्रसादः । मन्दरदेवादिभिः सह युद्धम् । नरवाहनदत्तस्य विजयः । | ५१७ |
| ११० | मन्दरदेवनगरे नरवाहनदत्तस्य गमनम् । नरवाहनदत्तस्य देवभूमिविजिगीषा । नारदागमनम् । अकम्पनाश्रमे नरवाहनदत्तस्य गमनम् । तत्र मन्दरदेव्यादिपञ्चकन्याभिः सह परिणयः । नरवाहनदत्तस्य कैलासे गमनम् । ततो ऋषभाद्रौ गमनम् । तत्र नरवाहनदत्तमदनमञ्चुकयोरभिषेकः । तत्रैव वत्सराजाद्यागमनम् । तत्रैव सर्वेषां पानगोष्ठीवर्णनम् । वत्सराजस्य पुनः कौशाम्ब्यामागमनम् । महाभिषेकलम्बकसमाप्तिः । ... ... ... | ५२१ |
| १११ | वसन्तवर्णनम् । सुषेणाशूरसेनयोः कथा । नरवाहनदत्तस्य दुःस्वप्नदर्शनम् । वत्सराजादीनां परलोकगमनवृत्तम् । ... ... ... ... | ५२६ |
| ११२ | सुरतमञ्जरीवृत्तम् । राजकन्याचण्डालकुमारयोः कथा । राजकन्याकैवर्तककुमारयोः कथा । वणिक्कन्याचौरयोः कथा । ... ... ... | ५२९ |
| ११३ | जीमूतवाहनादीनां राज्यभ्रंशकारणानि । तारावलोककथा । सुरतमञ्जरीलम्बकसमाप्तिः । ... | ५३५ |
| ११४ | दिव्यहंसद्वयस्य ब्रह्मदत्तभूपतेश्च कथा । ... | ५३८ |
| ११५ | विद्युद्ध्वजमुक्ताफलध्वजयोः कथा । ... ... | ५४२ |
| ११६ | विद्युद्ध्वजमुक्ताफलध्वजयोर्युद्धादिवर्णनम् । ... | ५४६ |
| ११७ | पद्मावतीमुक्ताफलध्वजयोर्वृत्तम् । ... ... | ५४९ |
| ११८ | मुक्ताफलकेतुमलयध्वजयोः कथा । ... ... | ५५४ |
| ११९ | पद्मावतीमुक्ताफलध्वजयोर्विवाहादि । पद्मावतीलम्बकसमाप्तिः । ... ... ... ... | ५५९ |
| १२० | विक्रमादित्यकथा । दिव्यकन्यकाद्वयहेममृगयोः कथा । ... ... ... ... ... ... | ५६६ |
| १२१ | मदनमञ्जरीखण्डकामालिकयोः कथा । डाकिनेयाख्यकितवस्य कथा । ठिण्ठाकरालाख्यकितवस्य कथा । कुट्टनीकपटाख्यकितवकथा । कन्यकाद्वयवृत्तम् । ... ... ... ... | ५६९ |
| १२२ | सिंहलेश्वरदुहित्रा दिव्यकन्याद्वयेन च विक्रमादित्यस्य विवाहः । मलयवतीविक्रमादित्ययोर्वृत्तम् । ... ... ... ... ... | ५७७ |
| १२३ | विक्रमादित्यराज्या कलिङ्गसेनाया वृत्तम् । भिल्लराजकन्यया मदनसुन्दर्या सह विक्रमादित्यस्य विवाहः । गजसूकरयोः कथा । धनदत्तवृत्तम् । केसटकंदर्पयोः कथा । कुसुमायुधकमललोचनयोः कथा । ... ... ... | ५८० |
| १२४ | चन्द्रस्वामिनस्तद्भार्यायाश्च कथा । विक्रमादित्याश्रितस्य कस्यचिद्राजपुत्रस्य कथा । ब्राह्मणसूनोः कथा । अग्निशर्मब्राह्मणकथा । मूलदेवशशिनोः कथा । नरवाहनदत्तचरितसमाप्तिः । बृहत्कथाश्रवणादिफलम् । विषमशीललम्बकसमाप्तिः । ... ... ... ... | ६७६–६८४ |
| १२५ | ग्रन्थकर्तुः प्रशस्तिः । कथासरित्सागरसमाप्तिः । | ६८५ |

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।



## कथापीठं नाम प्रथमो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य सरयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

### प्रथमस्तरङ्गः ।

श्रियं दिशतु वः शंभोः श्यामः कण्ठो मनोभुवा । अङ्कस्थपार्वतीदृष्टिपाशैरिव विवेष्टितः ॥ १
संध्यानृत्तोत्सवे ताराः करेणोद्धूय विघ्नजित् । सीत्कारसीकरैरन्याः कल्पयन्निव पातु वः ॥ २
प्रणम्य वाचं निःशेषपदार्थोद्योतदीपिकाम् । बृहत्कथायाः सारस्य संग्रहं रचयाम्यहम् ॥ ३
आद्यमत्र कथापीठं कथामुखमतः परम् । ततो लावानको नाम तृतीयो लम्बको भवेत् ॥ ४
नरवाहनदत्तस्य जननं च ततः परम् । स्याच्चतुर्दारिकाख्यश्च ततो मदनमञ्चुका ॥ ५
ततो रत्नप्रभा नाम लम्बकः सप्तमो भवेत् । सूर्यप्रभाभिधानश्च लम्बकः स्यादथाष्टमः ॥ ६
अलंकारवती चाथ ततः शक्तियशा भवेत् । वेलालम्बकसंज्ञश्च भवेदेकादशस्ततः ॥ ७
शशाङ्कवत्यपि तथा ततः स्यान्मदिरावती । महाभिषेकानुगतस्ततः स्यात्पञ्चलम्बकः ॥ ८
ततः सुरतमञ्जर्यप्यथ पद्मावती भवेत् । ततो विषमशीलाख्यो लम्बकोऽष्टादशो भवेत् ॥ ९
यथा मूलं तथैवैतन्न मनागप्यतिक्रमः । ग्रन्थविस्तरसंक्षेपमात्रं भाषा च भिद्यते ॥ १०
औचित्यान्वयरक्षा च यथाशक्ति विधीयते । कथारसाविघातेन काव्यांशस्य च योजना ॥ ११
वैदग्ध्यख्यातिलोभाय मम नैवायमुद्यमः । किं तु नानाकथाजालस्मृतिसौकर्यसिद्धये ॥ १२
अस्ति किंनरगन्धर्वविद्याधरनिषेवितः । चक्रवर्ती गिरीन्द्राणां हिमवानिति विश्रुतः ॥ १३
माहात्म्यमियतीं भूमिमारूढं यस्य भूभृताम् । यद्भवानी सुताभावं त्रिजगज्जननी गता ॥ १४
उत्तरं तस्य शिखरं कैलासाख्यो महागिरिः । योजनानां सहस्राणि बहून्याक्रम्य तिष्ठति ॥ १५
मन्दरो मथितेऽप्यब्धौ न सुधासिततां गतः । अहं त्वयत्नादिति यो हसतीव स्वकान्तिभिः ॥ १६
चराचरगुरुस्तत्र निवसत्यम्बिकासखः । गणैर्विद्याधरैः सिद्धैः सेव्यमानो महेश्वरः ॥ १७
पिङ्गोत्तुङ्गजटाजूटगतो यस्याश्नुते नवः । संध्यापिशङ्गपूर्वाद्रिशृङ्गसङ्गसुखं शशी ॥ १८
येनान्धकासुरपतेरेकस्यार्पयता हृदि । शूलं त्रिजगतोऽप्यस्य हृदयाच्चित्रमुद्धृतम् ॥ १९
चूडामणिषु यत्पादनखाग्रप्रतिमाङ्किताः । प्रसादप्राप्तचन्द्रार्धा इव भान्ति सुरासुराः ॥ २०
तं कदाचित्समुत्पन्नविस्रम्भा रहसि प्रिया । स्तुतिभिस्तोषयामास भवानीपतिमीश्वरम् ॥ २१

तस्याः स्तुतिवचोहृष्टस्तामङ्कमधिरोप्य सः। किं ते प्रियं करोमीति बभाषे शशिशेखरः॥ २२
ततः प्रोवाच गिरिजा प्रसन्नोऽसि यदि प्रभो। रम्यां कांचित्कथां ब्रूहि देवाद्य मम नूतनाम्॥ २३
भूतं भवद्भविष्यद्वा किं तत्स्याज्जगति प्रिये। भवती यन्न जानीयादिति शर्वोऽप्युवाच ताम्॥ २४
ततः सा वल्लभा तस्य निर्बन्धमकरोत्प्रभोः। प्रियप्रणयहेवाकि यतो मानवतीमनः॥ २५
ततस्तच्चाटुबुद्ध्यैव तत्प्रभावनिबन्धनाम्। तस्याः स्वल्पां कथामेवं शिवः संप्रत्यवर्णयत्॥ २६
अस्ति मामीक्षितुं पूर्वं ब्रह्मा नारायणस्तथा। महीं भ्रमन्तौ हिमवत्पादमूलमवापतुः॥ २७
ततो ददृशतुस्तत्र ज्वालालिङ्गं महत्पुरः। तस्यान्तमीक्षितुं प्रायादेक ऊर्ध्वमधोऽपरः॥ २८
अलब्धान्तौ तपोभिर्मां तोषयामासतुश्च तौ। आविर्भूय मया चोक्तौ वरः कोऽप्यर्थ्यतामिति॥ २९
तच्छ्रुत्वैवाब्रवीद्ब्रह्मा पुत्रो मेऽस्तु भवानिति। अपूज्यस्तेन जातोऽसावत्यारोहेण निन्दितः॥ ३०
ततो नारायणो देवः स वरं मामयाचत। भूयासं तव शुश्रूषापरोऽहं भगवन्निति॥ ३१
अतः शरीरभूतोऽसौ मम जातस्त्वदात्मना। यो हि नारायणः सा त्वं शक्तिः शक्तिमतो मम॥ ३२
किं च मे पूर्वजाया त्वमित्युक्तवति शंकरे। कथं ते पूर्वजायाहमिति वक्ति स्म पार्वती॥ ३३
प्रत्युवाच ततो भर्गः पुरा दक्षप्रजापतेः। देवि त्वं च तथान्याश्च बह्व्योऽजायन्त कन्यकाः॥ ३४
स मह्यं भवतीं प्रादाद्धर्मादिभ्योऽपराश्च ताः। यज्ञे कदाचिदाहूतास्तेन जामातरोऽखिलाः॥ ३५
वर्जितस्त्वहमेवैकस्ततोऽपृच्छ्यत स त्वया। किं न भर्ता ममाहूतस्त्वया तातोच्यतामिति॥ ३६
कपालमाली भर्ता ते कथमाहूयतां मखे। इत्युवाच गिरं सोऽथ त्वत्कर्णविषसूचिकाम्॥ ३७
पापोऽयमस्माज्जातेन किं देहेन ममामुना। इति कोपात्परित्यक्तं शरीरं तत्प्रिये त्वया॥ ३८
स च दक्षमखस्तेन मन्युना नाशितो मया। ततो जाता हिमाद्रेस्त्वमब्धेश्चन्द्रकला यथा॥ ३९
अथ स्मर तुषाराद्रिं तपोऽर्थमहमागतः। पिता त्वां च नियुङ्क्ते स्म शुश्रूषायै ममातिथेः॥ ४०
तारकान्तकमत्पुत्रप्राप्तये प्रहितः सुरैः। लब्धावकाशोऽविध्यन्मां तत्र दग्धो मनोभवः॥ ४१
ततस्तीव्रेण तपसा क्रीतोऽहं धीरया त्वया। तच्च तत्संचयायैव मया सोढं तव प्रिये॥ ४२
इत्थं मे पूर्वजाया त्वं किमन्यत्कथ्यते तव। इत्युक्त्वा विरते शंभौ देवी कोपाकुलाब्रवीत्॥ ४३
धूर्तस्त्वं न कथां हृद्यां कथयस्यर्थितोऽपि सन्। गङ्गां वहन्नमन्संध्यां विजितोऽसि न किं मम॥ ४४
तच्छ्रुत्वा प्रतिपेदेऽस्या विहितानुनयो हरः। कथां कथयितुं दिव्यां ततः कोपं मुमोच सा॥ ४५
नेह कैश्चित्प्रवेष्टव्यमित्युक्तेन तया स्वयम्। निरुद्धे नन्दिना द्वारे हरो वक्तुं प्रचक्रमे॥ ४६
एकान्तसुखिनो देवा मनुष्या नित्यदुःखिताः। दिव्यमानुषचेष्टा तु परभागे न हारिणी॥ ४७
विद्याधराणां चरितमतस्ते वर्णयाम्यहम्। इति देव्या हरो यावद्वक्ति तावदुपागमत्॥ ४८
प्रसादवित्तकः शंभोः पुष्पदन्तो गणोत्तमः। न्यषेधि च प्रवेशोऽस्य नन्दिना द्वारि तिष्ठता॥ ४९
निष्कारणं निषेधोऽद्य ममापीति कुतूहलात्। अलक्षितो योगवशात्प्रविवेश स तत्क्षणात्॥ ५०
प्रविष्टः श्रुतवान्सर्वं वर्ण्यमानं पिनाकिना। विद्याधराणां सप्तानामपूर्वं चरिताद्भुतम्॥ ५१
श्रुत्वाथ गत्वा भार्यायै जयायै सोऽप्यवर्णयत्। को हि वित्तं रहस्यं वा स्त्रीषु शक्नोति गूहितुम्॥ ५२
सापि तद्विस्मयाविष्टा गत्वा गिरिसुताग्रतः। जगौ जया प्रतीहारी स्त्रीषु वाक्संयमः कुतः॥ ५३
ततश्चुकोप गिरिजा नापूर्वं वर्णितं त्वया। जानाति हि जयाप्येतदिति चेश्वरमभ्यधात्॥ ५४
प्रणिधानादथ ज्ञात्वा जगादैवमुमापतिः। योगी भूत्वा प्रविश्येदं पुष्पदन्तस्तदाशृणोत्॥ ५५
जयायै वर्णितं तेन कोऽन्यो जानाति हि प्रिये। श्रुत्वेत्यानाययद्देवी पुष्पदन्तमतिक्रुधा॥ ५६
मर्त्यो भवाविनीतेति विह्वलं तं शशाप सा। माल्यवन्तं च विज्ञप्तिं कुर्वाणं तत्कृते गणम्॥ ५७
निपत्य पादयोस्ताभ्यां जयया सह बोधिता। शापान्तं प्रति शर्वाणी शनैर्वचनमब्रवीत्॥ ५८
विन्ध्याटव्यां कुबेरस्य शापात्प्राप्तः पिशाचताम्। सुप्रतीकाभिधो यक्षः काणभूत्याख्यया स्थितः॥ ५९
तं दृष्ट्वा संस्मरञ्जातिं यदा तस्मै कथामिमाम्। पुष्पदन्त प्रवक्तासि तदा शापाद्विमोक्ष्यसे॥ ६०

काणभूतेः कथां तां तु यदा श्रोष्यति माल्यवान् । काणभूतौ तदा मुक्ते कथां प्रख्याप्य मोक्ष्यते ॥ ६१
इत्युक्त्वा शैलतनया व्यरमत्तौ च तत्क्षणात् । विद्युत्पुञ्जाविव गणौ दृष्टनष्टौ बभूवतुः ॥ ६२

अथ जातु याति काले गौरी पप्रच्छ शंकरं सदया ।
देव मया तौ शप्तौ प्रमथवरौ कुत्र भुवि जातौ ॥ ६३
अवदच्च चन्द्रमौलिः कौशाम्बीत्यस्ति या महानगरी ।
तस्यां स पुष्पदन्तो वररुचिनामा प्रिये जातः ॥ ६४
अन्यश्च माल्यवानपि नगरवरे सुप्रतिष्ठिताख्ये सः ।
जातो गुणाढ्यनामा देवि तयोरेष वृत्तान्तः ॥ ६५

एवं निवेद्य स विभुः सततानुवृत्तभृत्यावमाननविभावनसानुतापाम् ।
कैलासशैलतटकल्पितकल्पवल्लीलीलागृहेषु दयितां रमयन्नुवास ॥ ६६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

ततः स मर्त्यवपुषा पुष्पदन्तः परिभ्रमन् । नाम्ना वररुचिः किं च कात्यायन इति श्रुतः ॥ १
पारं संप्राप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम् । खिन्नः समाययौ द्रष्टुं कदाचिद्विन्ध्यवासिनीम् ॥ २
तपसाराधिता देवी स्वप्नादेशेन सा च तम् । प्राहिणोद्विन्ध्यकान्तारं काणभूतिमवेक्षितुम् ॥ ३
व्याघ्रवानरसंकीर्णे निस्तोयपरुषद्रुमे । भ्रमंस्तत्र च स प्रांशुं न्यग्रोधतरुमैक्षत ॥ ४
ददर्श च समीपेऽस्य पिशाचानां शतैर्वृतम् । काणभूतिं पिशाचं तं वर्ष्मणा सालसंनिभम् ॥ ५
स काणभूतिना दृष्ट्वा कृतपादोपसंग्रहः । कात्यायनो जगादैनमुपविष्टः क्षणान्तरे ॥ ६
सदाचारो भवानेवं कथमेतां गतिं गतः । तच्छ्रुत्वा कृतसौहार्दं काणभूतिस्तमब्रवीत् ॥ ७
स्वतो मे नास्ति विज्ञानं किं तु शर्वान्मया श्रुतम् । उज्जयिन्यां श्मशाने यच्छृणु तत्कथयामि ते ॥ ८
कपालेषु श्मशानेषु कस्माद्देव रतिस्तव । इति पृष्टस्ततो देव्या भगवानिदमब्रवीत् ॥ ९
पुरा कल्पक्षये वृत्ते जातं जलमयं जगत् । मया ततो विभिद्योरुं रक्तबिन्दुर्निपातितः ॥ १०
जलान्तस्तदभूदण्डं तस्माद्द्वेधाकृतात्पुमान् । निरगच्छत्ततः सृष्टा सर्गाय प्रकृतिर्मया ॥ ११
तौ च प्रजापतीनन्यान्सृष्टवन्तौ प्रजाश्च ते । अतः पितामहः प्रोक्तः स पुमाञ्जगति प्रिये ॥ १२
एवं चराचरं सृष्ट्वा विश्वं दर्पमगादसौ । पुरुषस्तेन मूर्धानमथैतस्याहमच्छिदम् ॥ १३
ततोऽनुतापेन मया महाव्रतमगृह्यत । अतः कपालपाणित्वं श्मशानप्रियता च मे ॥ १४
किं चैतन्मे कपालात्म जगद्देवि करे स्थितम् । पूर्वोक्ताण्डकपाले द्वे रोदसी कीर्तिते यतः ॥ १५
इत्युक्ते शंभुना तत्र श्रोष्यामीति सकौतुके । स्थिते मयि ततो भूयः पार्वती पतिमभ्यधात् ॥ १६
स पुष्पदन्तः कियता कालेनास्मानुपैष्यति । तदाकर्ण्याब्रवीद्देवीं मामुद्दिश्य महेश्वरः ॥ १७
पिशाचो दृश्यते योऽयमेष वैश्रवणानुगः । यक्षो मित्रमभूच्चास्य रक्षः स्थूलशिरा इति ॥ १८
संगतं तेन पापेन निरीक्ष्यैनं धनाधिपः । विन्ध्याटव्यां पिशाचत्वमादिशद्धनदेश्वरः ॥ १९
भ्रात्रास्य दीर्घजङ्घेन पतित्वा पादयोस्ततः । शापान्तं प्रति विज्ञप्तो वदति स्म धनाधिपः ॥ २०
शापावतीर्णादाकर्ण्य पुष्पदन्तान्महाकथाम् । उक्त्वा माल्यवते तां च शापात्प्राप्ताय मर्त्यताम् ॥ २१
ताभ्यां गणाभ्यां सहितः शापमेनं तरिष्यति । इतीह धनदेनास्य शापान्तो विहितस्तदा ॥ २२
त्वया च पुष्पदन्तस्य स एवेति स्मर प्रिये । एतच्छ्रुत्वा वचः शंभोः सहर्षोऽहमिहागतः ॥ २३
इत्थं मे शापदोषोऽयं पुष्पदन्तागमावधिः । इत्युक्त्वा विरते तस्मिन्काणभूतौ च तत्क्षणम् ॥ २४
स्मृत्वा वररुचिर्जातिं सुप्तोत्थित इवावदत् । स एव पुष्पदन्तोऽहं मत्तस्तां च कथां शृणु ॥ २५
इत्युक्त्वा ग्रन्थलक्षाणि सप्त सप्त महाकथाः । कात्यायनेन कथिताः काणभूतिस्ततोऽब्रवीत् ॥ २६

देव रुद्रावतारस्त्वं कोऽन्यो वेत्ति कथामिमाम्। त्वत्प्रसादाद्गतप्रायः स शापो मे शरीरतः ॥ २७
तद्ब्रूहि निजवृत्तान्तं जन्मनः प्रभृति प्रभो। मां पवित्रय भूयोऽपि न गोप्यं यदि मादृशे ॥ २८
ततो वररुचिस्तस्य प्रणतस्यानुरोधतः। सर्वमाजन्मवृत्तान्तं विस्तरादिदमब्रवीत् ॥ २९
कौशाम्ब्यां सोमदत्ताख्यो नाम्नाग्निशिख इत्यपि। द्विजोऽभूत्तस्य भार्या च वसुदत्ताभिधाभवत् ॥ ३०
मुनिकन्या च सा शापात्तस्यां जाताववातरत्। तस्यां तस्माद्द्विजवरादेष जातोऽस्मि शापतः ॥ ३१
ततो ममातिबालस्य पिता पञ्चत्वमागतः। अतिष्ठद्वर्धयन्ती तु माता मां कृच्छ्रकर्मभिः ॥ ३२
अथाभ्यगच्छतां विप्रौ द्वावस्मद्गृहमेकदा। एकरात्रिनिवासार्थं दूराध्वपरिधूसरौ ॥ ३३
तिष्ठतोस्तत्र च तयोरुदभून्मुरजध्वनिः। तेन मामब्रवीन्माता भर्तुः स्मृत्वा सगद्गदम् ॥ ३४
नृत्यत्येष पितुर्मित्रं तव नन्दो नटः सुत। अहमप्यवदं मातर्द्रष्टुमेतद्व्रजाम्यहम् ॥ ३५
तवापि दर्शयिष्यामि सपाठं सर्वमेव तत्। एतन्मद्वचनं श्रुत्वा विप्रौ तौ विस्मयं गतौ ॥ ३६
अवोचत्तौ च मन्माता हे पुत्रौ नात्र संशयः। सकृच्छ्रुतमयं बालः सर्वं वै धारयेद्धृदि ॥ ३७
जिज्ञासार्थमथाभ्यां मे प्रातिशाख्यमपठ्यत। तथैव तन्मया सर्वं पठितं पश्यतोस्तयोः ॥ ३८
ततस्ताभ्यां समं गत्वा दृष्ट्वा नाट्यं तथैव तत्। गृहमेत्याग्रतो मातुः समग्रं दर्शितं मया ॥ ३९
एकश्रुतधरत्वेन मां निश्चित्य कथामिमाम्। व्याडिनामा तयोरेको मन्मातुः प्रणतोऽब्रवीत् ॥ ४०
वेतसाख्ये पुरे मातर्देवस्वामिकरम्भकौ। अभूतां भ्रातरौ विप्रावतिप्रीतौ परस्परम् ॥ ४१
तयोरेकस्य पुत्रोऽयमिन्द्रदत्तोऽपरस्य च। अहं व्याडिः समुत्पन्नो मत्पितास्तं गतस्ततः ॥ ४२
तच्छोकादिन्द्रदत्तस्य पिता यातो महापथम्। अस्मज्जनन्योश्च ततः स्फुटितं हृदयं शुचा ॥ ४३
तेनानाथौ सति धनेऽप्यावां विद्याभिकाङ्क्षिणौ। गतौ प्रार्थयितुं स्वामिकुमारं तपसा ततः ॥ ४४
तपःस्थितौ च तत्रावां स स्वप्ने प्रभुरादिशत्। अस्ति पाटलिकं नाम पुरं नन्दस्य भूपतेः ॥ ४५
तत्रास्ति चैको वर्षाख्यो विप्रस्तस्मादवाप्स्यथः। कृत्स्नां विद्यामतस्तत्र युवाभ्यां गम्यतामिति ॥ ४६
अथावां तत्पुरं यातौ पृच्छतोस्तत्र चावयोः। अस्तीह मूर्खो वर्षाख्यो विप्र इत्यवदज्जनः ॥ ४७
ततो दोलाधिरूढेन गत्वा चित्तेन तत्क्षणम्। गृहमावामपश्याव वर्षस्य विधुरस्थिति ॥ ४८
मूषकैः कृतवल्मीकं भित्तिविश्लेषजर्जरम्। विच्छायं छदिषा हीनं जन्मक्षेत्रमिवापदाम् ॥ ४९
तत्र ध्यानस्थितं वर्षमालोक्याभ्यन्तरे तदा। उपागतौ स्वस्तत्पत्नीं विहितातिथ्यसत्क्रियाम् ॥ ५०
धूसरक्षामवपुषं विशीर्णमलिनाम्बराम्। गुणरागागतां तस्य रूपिणीमिव दुर्गतिम् ॥ ५१
प्रणामपूर्वमावाभ्यां तस्यै सोऽथ निवेदितः। स्ववृत्तान्तश्च तद्भर्तृमौर्ख्यवार्ता च या श्रुता ॥ ५२
पुत्रौ युवां मे का लज्जा श्रूयतां कथयामि वाम्। इत्युक्त्वा सावयोः साध्वी कथामेतामवर्णयत् ॥ ५३
शंकरस्वामिनामात्र नगरेऽभूद्द्विजोत्तमः। मद्भर्ता चोपवर्षश्च तस्य पुत्राविमावुभौ ॥ ५४
अयं मूर्खो दरिद्रश्च विपरीतोऽस्य चानुजः। तेन चास्य नियुक्ताभूत्स्वभार्या गृहपोषणे ॥ ५५
कदाचिदथ संप्राप्ता प्रावृट् तस्यां च योषितः। सगुडं पिष्टरचितं गुह्यरूपं जुगुप्सितम् ॥ ५६
कृत्वा मूर्खाय विप्राय ददत्येव कृते हि ताः। शीतकाले निदाघे च स्नानक्लेशक्लमापहम् ॥ ५७
दत्तं न प्रतिपद्यन्त इत्याचारो हि कुत्सितः। तद्देवरगृहिण्या मे दत्तमस्मै सदक्षिणम् ॥ ५८
तद्गृहीत्वायमायातो मया निर्भर्त्सितो भृशम्। मूर्खभावकृतेनान्तर्मन्युना पर्यतप्यत ॥ ५९
ततः स्वामिकुमारस्य पादमूलं गतोऽभवत्। तपस्तुष्टेन तेनास्य सर्वा विद्याः प्रकाशिताः ॥ ६०
सकृच्छ्रुतधरं विप्रं प्राप्यैतास्त्वं प्रकाशयेः। इत्यादिष्टः स तेनैव सहर्षोऽयमिहागतः ॥ ६१
आगत्यैव च वृत्तान्तं सर्वं मह्यं न्यवेदयत्। तदा प्रभृत्यविरतं जपन्ध्यायंश्च तिष्ठति ॥ ६२
अतः श्रुतधरं कंचिदन्विष्यानयतं युवाम्। तेन सर्वार्थसिद्धिर्वां भविष्यति न संशयः ॥ ६३
श्रुत्वैतद्वर्षपत्नीतस्तूर्णं दौर्गत्यहानये। दत्त्वा हेमशतं चास्यै निर्गतौ स्वस्ततः पुरात् ॥ ६४
अथावां पृथिवीं भ्रान्तौ न च श्रुतधरं क्वचित्। लब्धवन्तौ ततः श्रान्तौ प्राप्तावद्य गृहं तव ॥ ६५

एकश्रुतधरः प्राप्तो बालोऽयं तनयस्तव । तदेनं देहि गच्छावो विद्याद्रविणसिद्धये ॥ ६६
इति व्याडिवचः श्रुत्वा मन्माता सादरावदत् । सर्वं संगतमेवैतदस्त्यत्र प्रत्ययो मम ॥ ६७
तथाहि पूर्वं जातेऽस्मिन्नेकपुत्रे मम स्फुटा । गगनादेवमुदभूदशरीरा सरस्वती ॥ ६८
एष श्रुतधरो जातो विद्यां वर्षादवाप्स्यति । किं च व्याकरणं लोके प्रतिष्ठां प्रापयिष्यति ॥ ६९
नाम्ना वररुचिश्चायं तत्तदस्मै हि रोचते । यद्यद्वरं भवेत्किंचिदित्युक्त्वा वागुपारमत् ॥ ७०
अत एव विवृद्धेऽस्मिन्बालके चिन्तयाम्यहम् । क स वर्ष उपाध्यायो भवेदिति दिवानिशम् ॥ ७१
अद्य युष्मन्मुखाज्ज्ञात्वा परितोषश्च मे परः । तदेनं नयतं भ्राता युवयोरेष का क्षतिः ॥ ७२
इति मन्मातृवचनं श्रुत्वा तौ हर्षनिर्भरौ । व्याडीन्द्रदत्तौ तां रात्रिमबुध्येतां क्षणोपमाम् ॥ ७३
अथोत्सवार्थमम्बायास्तूर्णं दत्त्वा निजं धनम् । व्याडिनैवोपनीतोऽहं वेदार्हत्वं ममेच्छता ॥ ७४
ततो मात्राभ्यनुज्ञातं कथंचिद्रुद्धबाष्पया । मामादाय निजोत्साहशमिताशेषतद्व्यथम् ॥ ७५
मन्यमानौ च कौमारं पुष्पितं तदनुग्रहम् । व्याडीन्द्रदत्तौ तरसा नगर्याः प्रस्थितौ ततः ॥ ७६
अथ क्रमेण वर्षस्य वयं प्राप्ता गृहं गुरोः । स्कन्दप्रसादमायान्तं मूर्तं मां सोऽप्यमन्यत ॥ ७७
कृत्वास्मानग्रतोऽन्येद्युरुपविष्टः शुचौ भुवि । वर्षोपाध्याय ओंकारमकरोद्दिव्यया गिरा ॥ ७८
तदनन्तरमेवास्य वेदाः साङ्गा उपस्थिताः । अध्यापयितुमस्मांश्च प्रवृत्तोऽभूदसौ ततः ॥ ७९
सकृच्छ्रुतं मया तत्र द्विःश्रुतं व्याडिना तथा । त्रिःश्रुतं चेन्द्रदत्तेन गुरुणोक्तमगृह्यत ॥ ८०

ध्वनिमथ तमपूर्वं दिव्यमाकर्ण्य सद्यः सपदि विलसदन्तर्विस्मयो विप्रवर्गः ।
किमिदमिति समन्ताद्द्रष्टुमभ्येत्य वर्षं स्तुतिमुखरमुखश्रीरर्चति स्म प्रणामैः ॥ ८१

किमपि तदवलोक्य तत्र चित्रं प्रमदवशान्न परं तदोपवर्षः ।
अपि विततमहोत्सवः समग्रः समजनि पाटलिपुत्रपौरलोकः ॥ ८२

राजापि तं गिरिशसूनुवरप्रभावमालोक्य तस्य परितोषमुपेत्य नन्दः ।
वर्षस्य वेश्म वसुभिः स किलादरेण तत्कालमेव समपूरयदुन्नतश्रीः ॥ ८३

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बके द्वितीयस्तरङ्गः ।

---

## तृतीयस्तरङ्गः ।

एवमुक्त्वा वररुचिः शृण्वत्येकाग्रमानसे । काणभूतौ वने तत्र पुनरेवेदमब्रवीत् ॥ १
कदाचिद्याति कालेऽथ कृते स्वाध्यायकर्मणि । इति वर्ष उपाध्यायः पृष्टोऽस्माभिः कृताह्निकः ॥ २
इदमेवंविधं कस्मान्नगरं क्षेत्रतां गतम् । सरस्वत्याश्च लक्ष्म्याश्च तदुपाध्याय कथ्यताम् ॥ ३
तच्छ्रुत्वा सोऽब्रवीदस्माञ्छृणुतैतत्कथामिमाम् । तीर्थं कनखलं नाम गङ्गाद्वारेऽस्ति पावनम् ॥ ४
यत्र काञ्चनपातेन जाह्नवी देवदन्तिना । उशीनरगिरिप्रस्थाद्भित्त्वा समवतारिता ॥ ५
दाक्षिणात्यो द्विजः कश्चित्तपस्यन्भार्यया सह । तत्रासीत्तस्य चात्रैव जायन्ते स्म त्रयः सुताः ॥ ६
कालेन स्वर्गते तस्मिन्सभार्ये ते च तत्सुताः । स्थानं राजगृहं नाम जग्मुर्विद्यार्जनेच्छया ॥ ७
तत्र चाधीतविद्यास्ते त्रयोऽप्यानाथ्यदुःखिताः । ययुः स्वामिकुमारस्य दर्शने दक्षिणापथम् ॥ ८
तत्र ते चिञ्चिनीं नाम नगरीमम्बुधेस्तटे । गत्वा भोजिकसंज्ञस्य विप्रस्य न्यवसन्गृहे ॥ ९
स च कन्या निजास्तिस्रस्तेभ्यो दत्त्वा धनानि च । तपसेऽनन्यसंतानो गङ्गां याति स्म भोजिकः ॥ १०
अथ तेषां निवसतां तत्र श्वशुरवेश्मनि । अवग्रहकृतस्तीव्रो दुर्भिक्षः समजायत ॥ ११
तेन भार्याः परित्यज्य साध्वीस्तास्ते त्रयो ययुः । स्पृशन्ति न नृशंसानां हृदयं बन्धुबुद्धयः ॥ १२
ततस्तु मध्यमा तासां सगर्भाभूत्ततश्च ताः । भवनं यज्ञदत्तस्य पितृमित्रस्य शिश्रियुः ॥ १३
तत्र तस्थुर्निजान्भर्तॄन्ध्यायन्त्यः क्लिष्टवृत्तयः । आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः ॥ १४
कालेन मध्यमा चात्र तासां पुत्रमसूत सा । अन्योन्यातिशयात्तस्मिन्स्नेहश्चासामवर्धत ॥ १५

कदाचिद्व्योममार्गेण विहरन्तं महेश्वरम् । अङ्कस्था स्कन्दजननी तं दृष्ट्वा सदयावदत् ॥ १६
देव पश्य शिशावस्मिन्नेताऽस्तिस्रोऽपि योषितः । बद्धस्नेहा दधत्याशामेषोऽस्माञ्जीवयेदिति ॥ १७
तत्तथा कुरु येनायमेता बालोऽपि जीवयेत् । इत्युक्तः प्रियया देवो वरदः स जगाद ताम् ॥ १८
अनुगृह्णाम्यमुं पूर्वं सभार्येणामुना यतः । आराधितोऽस्मि तेनायं भोगार्थं निर्मितो भुवि ॥ १९
एतज्जाया च सा जाता पाटली नाम भूपतेः । महेन्द्रवर्मणः पुत्री भार्यास्यैव भविष्यति ॥ २०
इत्युक्त्वा स विभुः स्वप्ने साध्वीस्तिस्रो जगाद ताः । नाम्ना पुत्रक एवायं युष्माकं बालपुत्रकः ॥ २१
अस्य सुप्तप्रबुद्धस्य शीर्षान्ते च दिने दिने । सुवर्णलक्षं भविता राजा चायं भविष्यति ॥ २२
ततः सुप्तोत्थिते तस्मिन्बाले ताः प्राप्य काञ्चनम् । यज्ञदत्तसुताः साध्व्यो ननन्दुः फलितव्रताः ॥ २३
अथ तेन सुवर्णेन वृद्धकोषोऽचिरेण सः । बभूव पुत्रको राजा तपोधीना हि संपदः ॥ २४
कदाचिद्यज्ञदत्तोऽथ रहः पुत्रकमब्रवीत् । राजन्दुर्भिक्षदोषेण क्वापि ते पितरो गताः ॥ २५
तत्सदा देहि विप्रेभ्यो येनायान्ति निशम्य ते । ब्रह्मदत्तकथां चैतां कथयाम्यत्र ते शृणु ॥ २६
वाराणस्यामभूत्पूर्वं ब्रह्मदत्ताभिधो नृपः । सोऽपश्यद्धंसयुगलं प्रयान्तं गगने निशि ॥ २७
विस्फुरत्कनकच्छायं राजहंसशतैर्वृतम् । विद्युत्पुञ्जमिवाकाण्डसिताभ्रपरिवेष्टितम् ॥ २८
पुनस्तद्दर्शनोत्कण्ठा तथास्य ववृधे ततः । यथा नृपतिसौख्येषु न बबन्ध रतिं क्वचित् ॥ २९
मन्त्रिभिः सह संमन्त्र्य ततश्चाकारयत्सरः । स राजा स्वमते कान्तं प्राणिनां चाभयं ददौ ॥ ३०
ततः कालेन तौ प्राप्तौ हंसौ राजा ददर्श सः । विश्वस्तौ चापि पप्रच्छ हैमे वपुषि कारणम् ॥ ३१
व्यक्तवाचौ ततस्तौ च हंसौ राजानमूचतुः । पुरा जन्मान्तरे काकावावां जातौ महीपते ॥ ३२
बल्यर्थं युध्यमानौ च पुण्ये शून्ये शिवालये । विनिपत्य विपन्नौ स्वस्तत्स्थानद्रोणिकान्तरे ॥ ३३
जातौ जातिस्मरावावां हंसौ हेममयौ ततः । तच्छ्रुत्वा तौ यथाकामं पश्यन्राजा तुतोष सः ॥ ३४
अतोऽनन्यादृशादेव पितॄन्दानादवाप्स्यसि । इत्युक्तो यज्ञदत्तेन पुत्रकस्तत्तथाकरोत् ॥ ३५
श्रुत्वा प्रदानवार्तां तामाययुस्ते द्विजातयः । परिज्ञाताः परां लक्ष्मीं पत्नीश्च सह लेभिरे ॥ ३६
आश्चर्यमपरित्याज्यो दृष्टनष्टापदामपि । अविवेकान्धबुद्धीनां स्वानुभावो दुरात्मनाम् ॥ ३७
कालेन राज्यकामास्ते पुत्रकं तं जिघांसवः । निन्युस्तद्दर्शनव्याजाद्द्विजा विन्ध्यनिवासिनीम् ॥ ३८
वधकान्स्थापयित्वा च देवीगर्भगृहान्तरे । तमूचुः पूर्वमेकस्त्वं पश्य देवीं व्रजान्तरम् ॥ ३९
ततः प्रविष्टो विश्वासात्स दृष्ट्वा हन्तुमुद्यतान् । पुरुषान्पुत्रकोऽपृच्छत्कस्मान्निहथ मामिति ॥ ४०
पितृभिस्ते प्रयुक्ताः स्मः स्वर्णं दत्त्वेति चाब्रुवन् । ततस्तान्मोहितान्देव्या बुद्धिमान्पुत्रकोऽवदत् ॥ ४१
ददाम्येतदनर्घं वो रत्नालंकरणं निजम् । मां मुञ्चत करोम्यत्र नोद्भेदं यामि दूरतः ॥ ४२
एवमस्त्विति तत्तस्माद्गृहीत्वा वधका गताः । हतः पुत्रक इत्यूचुस्तत्पितॄणां पुरो मृषा ॥ ४३
ततः प्रतिनिवृत्तास्ते हता राज्यार्थिनो द्विजाः । मन्त्रिभिर्द्रोहिणो बुद्ध्वा कृतघ्नानां शिवं कुतः ॥ ४४
अत्रान्तरे स राजापि पुत्रकः सत्यसंगरः । विवेश विन्ध्यकान्तारं विरक्तः स्वेषु बन्धुषु ॥ ४५
भ्रमन्ददर्श तत्रासौ बाहुयुद्धैकतत्परौ । पुरुषौ द्वौ ततस्तौ स पृष्टवान्कौ युवामिति ॥ ४६
मयासुरसुतावावां तदीयं चास्ति नौ धनम् । इदं भाजनमेषा च यष्टिरेते च पादुके ॥ ४७
एतन्निमित्तं युद्धं नौ यो बली स हरेदिति । एतत्तद्वचनं श्रुत्वा हसन्प्रोवाच पुत्रकः ॥ ४८
कियदेतद्धनं पुंसस्ततस्तौ समवोचताम् । पादुके परिधायैते खेचरत्वमवाप्यते ॥ ४९
यष्ट्या यल्लिख्यते किंचित्सत्यं संपद्यते हि तत् । भाजने यो य आहारश्चिन्त्यते स स तिष्ठति ॥ ५०
तच्छ्रुत्वा पुत्रकोऽवादीत्किं युद्धेनास्त्वयं पणः । धावन्बलाधिको यः स्यात्स एवैतद्धरेदिति ॥ ५१
एवमस्त्विति तौ मूढौ धावितौ सोऽपि पादुके । अध्यास्योदपतद्व्योम गृहीत्वा यष्टिभाजने ॥ ५२
अथ दूरं क्षणाद्गत्वा ददर्श नगरीं शुभाम् । आकर्षिकाख्यां तस्यां च नभसोऽवततार सः ॥ ५३
वञ्चनप्रवणा वेश्या द्विजा मत्पितरो यथा । वणिजो धनलुब्धाश्च कस्य गेहे वसाम्यहम् ॥ ५४

इति संचिन्तयन्प्राप स राजा विजनं गृहम् । जीर्णं तदन्तरे चैकां वृद्धां योषितमैक्षत ॥ ५५
प्रदानपूर्वं संतोष्य तां वृद्धामादृतस्तया । उवासालक्षितस्तत्र पुत्रकः शीर्णसद्मनि ॥ ५६
कदाचित्साथ संप्रीता वृद्धा पुत्रकमब्रवीत् । चिन्ता मे पुत्र यद्भार्या नानुरूपा तव क्वचित् ॥ ५७
इह राज्ञस्तु तनया पाटलीत्यस्ति कन्यका । उपर्यन्तःपुरे सा च रत्नमित्यभिरक्ष्यते ॥ ५८
एतद्वृद्धावचस्तस्य दत्तकर्णस्य शृण्वतः । विवेश तेनैव पथा लब्धरन्ध्रो हृदि स्मरः ॥ ५९
द्रष्टव्या सा मयाद्यैव कान्तेति कृतनिश्चयः । निशायां नभसा तत्र पादुकाभ्यां जगाम सः ॥ ६०
प्रविश्य सोऽद्रिशृङ्गाभ्रतुङ्गवातायनेन ताम् । अन्तःपुरे ददर्शाथ सुप्तां रहसि पाटलीम् ॥ ६१
सेव्यमानामविरतं चन्द्रकान्त्याङ्गलग्नया । जित्वा जगदिदं श्रान्तां मूर्तां शक्तिं मनोभुवः ॥ ६२
कथं प्रबोधयाम्येतामिति यावदचिन्तयत् । इत्यकस्माद्बहिस्तावद्यामिकः पुरुषो जगौ ॥ ६३

आलिङ्ग्य मधुरहुंकृतिमलसोन्मिषदीक्षणां रहः कान्ताम् ।
यद्बोधयन्ति सुप्तां जन्मनि यूनां तदेव फलम् ॥ ६४

श्रुत्वैवैतदुपोद्घातमङ्गैरुत्कम्पविक्लवैः । आलिलिङ्ग स तां कान्तां प्राबुध्यत ततश्च सा ॥ ६५
पश्यन्त्यास्तं नृपं तस्या लज्जाकौतुकयोर्दृशि । अभूदन्योन्यसंमर्दो रचयन्त्यां गतागतम् ॥ ६६
अथालापे कृते वृत्ते गान्धर्वोद्वाहकर्मणि । अवर्धत तयोः प्रीतिर्दंपत्योर्न तु यामिनी ॥ ६७
आमन्त्र्याथ वधूमुत्कां तद्गतेनैव चेतसा । आययौ पश्चिमे भागे तद्वृद्धावेश्म पुत्रकः ॥ ६८
इत्थं प्रतिनिशं तत्र कुर्वाणेऽस्मिन्गतागतम् । संभोगचिह्नं पाटल्या रक्षिभिर्दृष्टमेकदा ॥ ६९
तैस्तदावेदितं तस्याः पितुः सोऽपि नियुक्तवान् । गूढमन्तःपुरे तत्र निशि नारीमवेक्षितुम् ॥ ७०
तया च तस्य प्राप्तस्य तत्राभिज्ञानसिद्धये । पुत्रकस्य प्रसुप्तस्य न्यस्तं वाससलक्तकम् ॥ ७१
प्रातस्तया च विज्ञप्तो राजा चारान्व्यसर्जयत् । सोऽभिज्ञानाच्च तैः प्राप्तः पुत्रको जीर्णवेश्मनि ॥ ७२
आनीतो राजनिकटं कुपितं वीक्ष्य तं नृपम् । पादुकाभ्यां खमुत्पत्य पाटलीमन्दिरेऽविशत् ॥ ७३
विदितौ स्वस्तदुत्तिष्ठ गच्छावः पादुकावशात् । इत्यङ्के पाटलीं कृत्वा जगाम नभसा ततः ॥ ७४

अथ गङ्गातटनिकटे गगनादवतीर्य स प्रियां श्रान्ताम् ।
पात्रप्रभावजातैराहारैर्नन्दयामास ॥ ७५
आलोकितप्रभावः पाटल्या पुत्रकोऽर्थितश्च ततः ।
यष्ट्या लिलेख तत्र स नगरं चतुरङ्गबलयुक्तम् ॥ ७६
तत्र स राजा भूत्वा महाप्रभावे च सत्यतां प्राप्ते ।
नमयित्वा तं श्वशुरं शशास पृथ्वीं समुद्रान्ताम् ॥ ७७
तदिदं दिव्यं नगरं मायारचितं सपौरमत एव ।
नाम्ना पाटलिपुत्रं क्षेत्रं लक्ष्मीसरस्वत्योः ॥ ७८

इति वर्षमुखादिमामपूर्वां वयमाकर्ण्य कथामतीव चित्राम् ।
चिरकालमभूम काणभूते विलसद्विस्मयमोदमानचित्ताः ॥ ७९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बके तृतीयस्तरङ्गः ।

---

चतुर्थस्तरङ्गः ।

इत्याख्याय कथां मध्ये विन्ध्यान्तः काणभूतये । पुनर्वररुचिस्तस्मै प्रकृतार्थमवर्णयत् ॥ १
एवं व्याडीन्द्रदत्ताभ्यां सह तत्र वसन्क्रमात् । प्राप्तोऽहं सर्वविद्यानां पारमुत्क्रान्तशैशवः ॥ २
इन्द्रोत्सवं कदाचिच्च प्रेक्षितुं निर्गता वयम् । कन्यामेकामपश्याम कामस्यास्त्रमसायकम् ॥ ३
इन्द्रदत्तो मया पृष्टस्ततः केयं भवेदिति । उपवर्षसुता सेयमुपकोशेति सोऽब्रवीत् ॥ ४
सा सखीभिश्च मां ज्ञात्वा प्रीतिपेशलया दृशा । कर्षन्ती मन्मनः कृच्छ्रादगच्छद्भवनं निजम् ॥ ५

पूर्णचन्द्रमुखी नीलनीरजोत्तमलोचना । मृणालनालललितभुजा पीनस्तनोज्ज्वला ॥ ६
कम्बुकण्ठी प्रवालाभरदनच्छदशोभिनी । स्मरभूपतिसौन्दर्यमन्दिरेवेन्दिरापरा ॥ ७
ततः कामशरापातनिर्भिन्ने हृदये न मे । निशि तस्यामभून्निद्रा तद्बिम्बोष्ठपिपासया ॥ ८
कथंचिल्लब्धनिद्रोऽहमपश्यं रजनीक्षये । शुक्लाम्बरधरां दिव्यां स्त्रियं सा मामभाषत ॥ ९
पूर्वभार्योपकोशा ते गुणज्ञा नापरं पतिम् । कंचिदिच्छत्यतश्चिन्ता पुत्र कार्यात्र न त्वया ॥ १०
अहं सदा शरीरान्तर्वासिनी ते सरस्वती । त्वद्दुःखं नोत्सहे द्रष्टुमित्युक्त्वान्तर्हिताभवत् ॥ ११
ततः प्रबुद्धो जातास्थो गत्वातिष्ठमहं शनैः । दयितामन्दिरासन्नबालचूततरोरधः ॥ १२
अथागत्य समाख्यातं तत्सख्या मन्निबन्धनम् । उद्गाढमुपकोशाया नवानङ्गविजृम्भितम् ॥ १३
ततोऽहं द्विगुणीभूततापस्तामेवमब्रवम् । अदत्तां गुरुभिः स्वेच्छमुपकोशां कथं भजे ॥ १४
वरं हि मृत्युर्नाकीर्तिस्तत्सखीहृदयं तव । गुरुभिर्यदि बुध्येत तत्कदाचिच्छिवं भवेत् ॥ १५
तदेतत्कुरु भद्रे त्वं तां सखीं मां च जीवय । तच्छ्रुत्वा सा गता सख्या मातुः सर्वं न्यवेदयत् ॥ १६
तया तत्कथितं भर्तुरुपवर्षस्य तत्क्षणम् । तेन भ्रातुश्च वर्षस्य तेन तच्चाभिनन्दितम् ॥ १७
विवाहे निश्चिते गत्वा व्याडिरानयति स्म ताम् । वर्षाचार्यनिदेशेन कौशाम्ब्या जननीं मम ॥ १८
अथोपकोशा विधिवत्पित्रा मे प्रतिपादिता । ततो मात्रा गृहिण्या च समं तत्रावसं सुखम् ॥ १९
अथ कालेन वर्षस्य शिष्यवर्गो महानभूत् । तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् ॥ २०
स शुश्रूषापरिक्लिष्टः प्रेषितो वर्षभार्यया । अगच्छत्तपसे खिन्नो विद्याकामो हिमालयम् ॥ २१
तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात् । सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् ॥ २२
ततश्चागत्य मामेव वादायाह्वयते स्म सः । प्रवृत्ते चावयोर्वादे प्रयाताः सप्त वासराः ॥ २३
अष्टमेऽह्नि मया तस्मिञ्जिते तत्समनन्तरम् । नभःस्थेन महाघोरो हुंकारः शंभुना कृतः ॥ २४
तेन प्रणष्टमैन्द्रं तदस्मद्व्याकरणं भुवि । जिताः पाणिनिना सर्वे मूर्खीभूता वयं पुनः ॥ २५
अथ संजातनिर्वेदः स्वगृहस्थितये धनम् । हस्ते हिरण्यगुप्तस्य विधाय वणिजो निजम् ॥ २६
उक्त्वा तच्चोपकोशायै गतवानस्मि शंकरम् । तपोभिराराधयितुं निराहारो हिमालयम् ॥ २७
उपकोशा हि मे श्रेयः काङ्क्षन्ती निजमन्दिरे । अतिष्ठत्प्रत्यहं स्नान्ती गङ्गायां नियतव्रता ॥ २८
एकदा सा मधौ प्राप्ते क्षामा पाण्डुर्मनोरमा । प्रतिपच्चन्द्रलेखेव जनलोचनहारिणी ॥ २९
स्नातुं त्रिपथगां यान्ती दृष्टा राजपुरोधसा । दण्डाधिपतिना चैव कुमारसचिवेन च ॥ ३०
तत्क्षणात्ते गताः सर्वे स्मरसायकलक्ष्यताम् । सापि तस्मिन्दिने स्नान्ती कथमप्यकरोच्चिरम् ॥ ३१
आगच्छन्तीं च सायं तां कुमारसचिवो हठात् । अग्रहीदथ साप्येनमवोचत्प्रतिभावती ॥ ३२
अभिप्रेतमिदं भद्र यथा तव तथा मम । किं त्वहं सत्कुलोत्पन्ना प्रवासस्थितभर्तृका ॥ ३३
कथमेवं प्रवर्तेय पश्येत्कोऽपि कदाचन । ततश्च ध्रुवमश्रेयस्त्वया सह भवेन्मम ॥ ३४
तस्मान्मधूत्सवाक्षिप्तपौरलोके गृहं मम । आगन्तव्यं ध्रुवं रात्रेः प्रथमे प्रहरे त्वया ॥ ३५
इत्युक्त्वा कृतसंधा सा तेन क्षिप्ता विधेर्वशात् । यावत्किंचिद्गता तावन्निरुद्धा सा पुरोधसा ॥ ३६
तस्यापि तत्रैव दिने तद्वदेव तया निशि । संकेतकं द्वितीयस्मिन्प्रहरे पर्यकल्प्यत ॥ ३७
मुक्तां कथंचित्तेनापि प्रयातां किंचिदन्तरम् । दण्डाधिपो रुणद्धि स्म तृतीयस्तां सुविह्वलाम् ॥ ३८
अथ तस्यापि दिवसे तस्मिन्नेव तथैव सा । संकेतकं त्रियामायां तृतीये प्रहरे व्यधात् ॥ ३९
दैवात्तेनापि निर्मुक्ता सकम्पा गृहमागता । कर्तव्यं सा स्वचेटीनां संविदं स्वैरमब्रवीत् ॥ ४०
वरं पत्यौ प्रवासस्थे मरणं कुलयोषितः । न तु रूपारमल्लोकलोचनापातपात्रता ॥ ४१
इति संचिन्तयन्ती च स्मरन्ती मां निनाय सा । शोचन्ती स्वं वपुः साध्वी निराहारैव तां निशाम् ॥ ४२
प्रातर्ब्राह्मणपूजार्थं व्यसर्जि वणिजस्तया । चेटी हिरण्यगुप्तस्य किंचिन्मार्गयितुं धनम् ॥ ४३
आगत्य सोऽपि तामेवमेकान्ते वणिगब्रवीत् । भजस्व मां ततो भर्तृस्थापितं ते ददामि तत् ॥ ४४

तत्र कालेन सा वृद्धिं प्राप्ता तस्याश्रमे मुनेः । दृष्टा विनयवत्येषा नभसा गच्छता मया ॥ १०४
ततोऽहं रूपगर्वेण मदनेन च मोहितः । उपेत्य तामनिच्छन्तीं हठाद्धर्तुं प्रवृत्तवान् ॥ १०५
तत्क्षणं स मुनिः क्रुद्धः क्रन्दन्त्या श्रावितस्तया । विजितासुरुपागत्य शापं मह्यमदान्नृप ॥ १०६
रूपगर्वित सर्वाङ्गनिन्दितः करभो भव । पुष्कराक्षान्नृपात्प्राप्ते वधे शापाद्विमोक्ष्यसे ॥ १०७
भर्ता विनयवत्याश्च स एवास्या भविष्यति । इत्यहं मुनिना शप्तो जातोऽस्यां करभो भुवि ॥ १०८
जातश्च सोऽद्य शापान्तस्त्वत्तस्तत्पश्चिमाम्बुधेः । पारस्थं तद्वनं गच्छ नाम्ना सुरभिमारुतम् ॥ १०९
भार्यामाप्नुहि तां दिव्यां रूपदर्पहरां श्रियः । इत्युक्त्वा पुष्कराक्षं स दिवं विद्याधरो ययौ ॥ ११०
पुष्कराक्षोऽपि गत्वा स्वां पुरीं विन्यस्य मन्त्रिषु । राज्यं रात्रौ ततः प्रायादेकोऽश्वमधिरुह्य सः ॥ १११
गच्छन्क्रमाच्च संप्राप्य पश्चिमाब्धेस्तटं पुनः । कथं तरेयमम्भोधिमिति तत्र व्यचिन्तयत् ॥ ११२
ततो ददर्श तत्रैकं स शून्यं चण्डिकागृहम् । प्रविश्य च ततः स्नात्वा देवीं तां प्रणनाम च ॥ ११३
केनापि निहितां तत्र वीणामादाय सादरः । उपवीणयति स्मैतां देवीमत्र स्वगीतकैः ॥ ११४
उपवीणिततुष्टा च सुप्तं तत्रैव सा निशि । भूतग्रामेण तं स्वेन पारमब्धेरनाययत् ॥ ११५
ततः प्रातः प्रबुद्धोऽब्धेस्तीरे राजा ददर्श सः । वनान्तःस्थितमात्मानं न तस्मिंश्चण्डिकागृहे ॥ ११६
उत्थाय विस्मितश्चात्र भ्रमन्नाश्रममैक्षत । प्रणमन्तमिवातिथ्यात्फलभारानतैर्द्रुमैः ॥ ११७
कुर्वाणं स्वागतमिव क्वणितेन पतत्रिणाम् । प्रविश्य तत्र चापश्यत्स्थितं शिष्यैर्वृतं मुनिम् ॥ ११८
उपेत्य च ववन्दे तमृषिं राजा स पादयोः । सोऽप्येनं विहितातिथ्यो ज्ञानवान्मुनिरब्रवीत् ॥ ११९
पुष्कराक्ष यदर्थं त्वमागतः सा क्षणं गता । इध्मादिहेतोर्विनयवती तत्तिष्ठ संप्रति ॥ १२०
उपयच्छस्व तां पूर्वभार्यामत्रैव भूपते । इत्युक्तो मुनिना सोऽपि पुष्कराक्षो व्यचिन्तयत् ॥ १२१
दिष्ट्या मुनिः स एवायं विजितासुस्तदेव च । वनमेतद्ध्रुवं देव्या तारितोऽहं महार्णवम् ॥ १२२
चित्रं च पूर्वभार्यैषा ममोक्ता मुनिनामुना । इत्यालोच्यैव हृष्टस्तं स पप्रच्छ मुनिं नृपः ॥ १२३
भगवन्पूर्वभार्यैषा कथं मे कथ्यतामिति । ततो जगाद स मुनिः श्रूयतां यदि कौतुकम् ॥ १२४
बभूव धर्मसेनाख्यस्ताम्रलिप्त्यां पुरा वणिक् । विद्युल्लेखेति नाम्ना च भार्या तस्याभवच्छुभा ॥ १२५
स दैवान्मुषितश्चौरैः शस्त्रैश्चाभ्याहतो वणिक् । मुमूर्षुर्निरगाद्वह्निं प्रवेष्टुं भार्यया सह ॥ १२६
अपश्यतामकस्माच्च तावुभावपि दंपती । आकाशेनागतं हंसमिथुनं रुचिराकृति ॥ १२७
ततस्तद्गतचित्तौ तौ प्रविश्य दहनं मृतौ । राजहंसौ समुत्पन्नौ पुनर्भार्यापती उभौ ॥ १२८
कदाचित्तौ च वर्षासु रात्रौ खर्जूरपादपे । नीडस्थितौ तमुन्मूल्य तरुं वात्या व्ययूयुजत् ॥ १२९
प्रातः स हंसस्तां हंसीं चिन्वञ्शान्ते प्रभञ्जने । सरःस्वथ दिगन्तेषु न कुतश्चिदवाप्तवान् ॥ १३०
ततस्तत्कालसंसेव्यं हंसानां मानसं सरः । स्मरार्तः स ययौ हंस्या जनिताशोऽन्यया पथि ॥ १३१
तत्र तां प्राप्य हंसीं स्वां नीत्वा च जलदागमम् । गिरिशृङ्गं जगामैकं विहर्तुं स तया सह ॥ १३२
तत्र तस्य हृता हंसी केनचिल्लुब्धकेन सा । तद्दृष्ट्वा भयशोकार्तः स हंसः प्राद्रवत्ततः ॥ १३३
लुब्धकस्तां हृतां हंसीं मृतामादाय वीक्ष्य च । दूरान्मार्गागतान्कांश्चित्पुरुषान्सायुधान्बहून् ॥ १३४
द्रुतं छुरिकया छिन्नैस्तामाच्छाद्य तृणैर्भुवि । हंसीं न्यधाद्विलोक्यैतां हरेयुर्जातु मामी इति ॥ १३५
गतेषु तेषु पुरुषेषूपगम्य जिघृक्षतः । लुब्धकस्योद्धृततृणा हंसी सा तस्य पश्यतः ॥ १३६
तत्तृणान्तर्निकृत्ताया मृतसंजीवनौषधेः । रसेन जीवितं प्राप्य खमुत्पत्य ततो ययौ ॥ १३७
तावत्स हंसस्तद्भर्ता गत्वैकस्मिन्सरस्तटे । मूढोऽपतद्धंसयूथे पश्यंस्तामेव तन्मनाः ॥ १३८
तत्क्षणं धीवरः कोऽपि क्षिप्त्वा जालं निबध्य तान् । हंसान्सर्वानुपाविक्षदाहारार्थं किल क्षणात् ॥ १३९
तावच्चागत्य तत्रैव सा हंसी चिन्वती पतिम् । ददर्श जालबद्धं तं दिशश्चार्ता व्यलोकयत् ॥ १४०
ततः स्नातुं प्रवृत्तेन केनाप्यत्र सरस्तटे । पुंसा वस्त्रोपरि न्यस्तामपश्यद्रत्नकण्ठिकाम् ॥ १४१

१ 'तत्र तस्य जघानैको लुब्धकस्तां शरैः प्रियाम्' इति पुस्तकान्तरपाठः.

गत्वा चापश्यतस्तस्य तां गृहीत्वैव कण्ठिकाम्। दाशाय दर्शयन्ती सा तस्मै व्योम्ना शनैर्ययौ ॥ १४२
दाशोऽपि सोऽन्वधावत्तां दृष्ट्वा चञ्च्वात्तकण्ठिकाम्। हंसीं गृहीतलगुडः पक्षिजालं विहाय तत् ॥ १४३
हंसी च गत्वा शैलाग्रे दूरे तां कण्ठिकां न्यधात्। धीवरोऽपि स तल्लोभात्तत्रारोढुं प्रचक्रमे ॥ १४४
तद्दृष्ट्वा सा द्रुतं गत्वा हंसी पत्युः समीपगे। बद्धस्य वृक्षे संसुप्तं कपिं चञ्च्वाक्ष्ण्यताडयत् ॥ १४५
स कपिस्ताडितस्त्रस्तः पतित्वोपर्यपाटयत्। जालं तत्तेन निर्जग्मुर्हंसाः सर्वेऽपि ते ततः ॥ १४६
अथ तौ संगतावुक्तस्ववृत्तान्तौ परस्परम्। हंसौ भार्यापती हृष्टौ यथाकामं विजह्रतुः ॥ १४७
दाशं तं चागतं प्राप्तकण्ठिकं पक्षिलोभतः। लेभेऽत्र स पुमांश्छिन्वन्हृता सा यस्य कण्ठिका ॥ १४८
स भीतिसूचितस्यास्य हस्तात्संप्राप्य कण्ठिकाम्। दाशस्य दक्षिणं पाणिं पुमांश्छुरिकयाच्छिनत् ॥ १४९
तौ चापि जातु हंसौ द्वौ छत्रीकृत्यैकमम्बुजम्। मध्याह्नकाले सरसः प्रोत्थाय व्योम्नि चेरतुः ॥ १५०
क्षणाच्च नद्याः कस्याश्चित्खगौ तौ तीरमापतुः। मुनिनाध्यासितं केनाप्यर्चाव्यग्रेण धूर्जटेः ॥ १५१
तत्र व्याधेन केनापि यान्तौ तौ सह दंपती। हतावेकेन युगपच्छरेण भुवि पेततुः ॥ १५२
आतपत्राम्बुजं तच्च तदीयमपतत्तदा। मुनेरर्चयतस्तस्य शिवलिङ्गस्य मूर्धनि ॥ १५३
ततो व्याधः स दृष्ट्वा तौ हंसं स्वीकृत्य हंसिकाम्। तां ददौ मुनये तस्मै सोऽप्यानर्च शिवं तया ॥ १५४
तल्लिङ्गमूर्ध्नि स्रस्तस्य तस्याब्जस्य प्रभावतः। स पुष्कराक्ष हंसस्त्वं जातो राजान्वयेऽधुना ॥ १५५
हंसी च सैषा विनयवती विद्याधरान्वये। जाता विशेषतो ह्यस्या मांसैरभ्यर्चितो हरः ॥ १५६
इत्थं ते पूर्वभार्यासावित्युक्तो विजितासुना। मुनिना पुष्कराक्षः स राजा तं पुनरब्रवीत् ॥ १५७
कथमग्निप्रवेशस्य तस्याघौघविघातिनः। पक्षियोनावभूज्जन्म भगवन्फलमावयोः ॥ १५८
इत्युक्तवन्तं राजानं तं स प्रत्यब्रवीन्मुनिः। यद्भावितात्मा म्रियते जन्तुस्तद्रूपमश्नुते ॥ १५९
तथा ह्युज्जयिनीपुर्यां नैष्ठिकी ब्रह्मचारिणी। लावण्यमञ्जरी नाम कुमारी ब्राह्मणी पुरा ॥ १६०
युवानं ब्राह्मणं दृष्ट्वा कमलोदयसंज्ञकम्। सहसा तद्गतस्वान्ता दह्यमाना स्मराग्निना ॥ १६१
अमुञ्चन्ती स्वनियमं तद्भोगध्यानभाविता। गत्वा गन्धवतीतीरं तीर्थे तत्याज जीवितम् ॥ १६२
तया भावनया किं न जाताभूद्भोगसंगिनी। नगर्यामेकलव्यायां वेश्या रूपवतीति सा ॥ १६३
तीर्थबलप्रभावाच्च सैव जातिस्मरा सती। प्रसङ्गाच्चोडकर्णाय जापकाय द्विजन्मने ॥ १६४
स्वपूर्वजन्मवृत्तान्तरहस्यं तदवर्णयत्। जपकर्मैकचित्तत्वे कुर्वाणस्यानुशासनम् ॥ १६५
अन्ते च शुद्धसंकल्पा ययौ वेश्यापि सद्गतिम्। तद्राजन्योऽत्र यच्चित्तस्तन्मयत्वमुपैति सः ॥ १६६
एवमुक्त्वा स राजानं स्नानाय विससर्ज तम्। मुनिर्मध्याह्नसवनं स्वयं च निरवर्तयत् ॥ १६७
राजा स पुष्कराक्षोऽपि गतो वननदीतटम्। तां ददर्शात्र विनयवतीं पुष्पाणि चिन्वतीम् ॥ १६८
भासमानां स्ववपुषा प्रभामिव विवस्वतः। अदृष्टपूर्वं गहनं प्रविष्टां कौतुकाद्वनम् ॥ १६९
केयं स्यादिति यावच्च स चिन्तयति सोत्सुकः। तावत्कथां निषण्णा सा विस्रब्धामवदत्सखीम् ॥ १७०
सखि विद्याधरो यो मां हर्तुमैच्छत्पुरा स मे। आगत्य शापमुक्तोऽद्य भर्तृप्राप्तिमिहोक्तवान् ॥ १७१
तच्छ्रुत्वा प्रत्यवोचत्तां सा सखी मुनिकन्यकाम्। अस्त्येतन्मयि शृण्वत्यां मुञ्जकेशोऽद्य हि प्रगे ॥ १७२
इत्थमुक्तो निजः शिष्यो मुनिना विजितासुना। गच्छ तारावलीरङ्कुमालिनावानय द्रुतम् ॥ १७३
कामं विनयवत्या हि वत्सेह दुहितुस्तयोः। राज्ञश्च पुष्कराक्षस्य विवाहोऽद्य भविष्यति ॥ १७४
इत्युक्तो गुरुणा मुञ्जकेशो यातस्तथेति सः। अत एह्याश्रमपदं गच्छावः सखि संप्रति ॥ १७५
एवं तयोक्ते विनयवती साथ ततो ययौ। पुष्कराक्षश्च शुश्राव स तद्दूरादलक्षितः ॥ १७६
ज्वलत्कामाग्निसंतापादिव नद्यां निमज्ज्य च। जगाम विजितासोस्तमाश्रमं स पुनर्नृपः ॥ १७७
तत्र तारावलीरङ्कुमालिनौ तौ समगतौ। आनर्चतुस्तं प्रणतं परिवव्रुश्च तापसाः ॥ १७८
ततो वेद्यां स्वतेजोभिर्भासितायां महर्षिणा। द्वितीयेनेव मूर्तेन वह्निना विजितासुना ॥ १७९
तस्मै स राज्ञे विनयवतीं तां प्रत्यपादयत्। रङ्कुमाली ददौ चास्मै रथं दिव्यं नभश्चरम् ॥ १८०

चतुःसमुद्रां पृथिवीं प्रशाधि सममेतया। इत्येतस्मै वरं चादाद्विजितासुर्महामुनिः॥ १८१

अथैष तदनुज्ञया नववधूमुपादाय तां
नृपो गगनगामिनं तमधिरुह्य दिव्यं रथम्।
विलङ्घ्य च पयोनिधिं सपदि पुष्कराक्षस्ततो
जगाम नगरीं निजां प्रकृतिनेत्रचन्द्रोदयः॥ १८२

तत्र च जित्वा पृथिवीं रथप्रभावादवाप्तसाम्राज्यः।
आस्ते स्म विनयवत्या सहितो भोगांश्चिराय भुञ्जानः॥ १८३

इत्थं सुदुष्करमपि स्वरसेन कार्यं सिद्ध्यत्यनुग्रहवतीष्विह देवतासु।
तत्स्वप्नदृष्टगिरिजादयितप्रसादात्सेत्स्यत्यभीष्टमचिरेण तवापि देव॥ १८४

एतां निशम्य स विचित्रकथाममात्यादौत्सुक्यवानधिगमाय शशाङ्कवत्याः।
राजात्मजः स्वसचिवैः सममुज्जयिन्यां बुद्धिं बबन्ध गमनाय मृगाङ्कदत्तः॥ १८५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वितीयस्तरङ्गः।

---

तृतीयस्तरङ्गः।

एवं मृगाङ्कदत्तोऽत्र कर्मसेननृपात्मजाम्। तां शशाङ्कवतीं प्राप्तुकामो वेतालवर्णिताम्॥ १
गन्तुमुज्जयिनीं गुप्तं स्वनगर्या निविर्गमम्। महाव्रतिकवेषेण सोऽमन्त्रयत मन्त्रिभिः॥ २
आदिदेश च खट्वाङ्गकपालादिसमाहृतौ। स राजपुत्रः सचिवं स्वैरं भीमपराक्रमम्॥ ३
तेन तच्चाहृतं स्वस्मिन्गृहे चारादबुध्यत। मृगाङ्कदत्तस्य पितुर्मन्त्री मुख्योऽत्र भूपतेः॥ ४
तत्कालं चात्र सोऽकस्मात्संचरन्हर्म्यपृष्ठतः। मृगाङ्कदत्तस्ताम्बूलनिष्ठीवनरसं जहौ॥ ५
स च तस्यापतन्मूर्ध्नि दैवात्तत्पितृमन्त्रिणः। अदृष्टस्य किलाधस्तात्तेन मार्गेण गच्छतः॥ ६
बुद्ध्वा मृगाङ्कदत्तेन मुक्तं निष्ठीवनं स तत्। मन्त्री परिभवक्रोधं कृतस्नानो हृदि न्यधात्॥ ७
अथात्रामरदत्तस्य राज्ञो दैवाद्विषूचिका। मृगाङ्कदत्तजनकस्यान्येद्युरुदपद्यत॥ ८
ततः सोऽवसरं लब्ध्वा मन्त्री तं विजने नृपम्। सहसोद्भूतरोगार्तमवदद्याचिताभयः॥ ९
अभिचारः प्रभो भीमपराक्रमगृहे तव। मृगाङ्कदत्तेनारब्धः कर्तुं तेनासि पीडितः॥ १०
मया चारमुखाज्ज्ञातं प्रत्यक्षं तच्च दृश्यते। तन्निराकुरु देशात्तं देहाद्व्याधिमिवात्मजम्॥ ११
तच्छ्रुत्वा स समुद्भ्रान्तः प्राहिणोत्तदवेक्षणे। निजं सेनापतिं भीमपराक्रमगृहं नृपः॥ १२
स च केशकलापादि लब्ध्वा सेनापतिस्ततः। आनीय तत्क्षणं तस्मै राज्ञे साक्षाददर्शयत्॥ १३
राज्यलुब्धः स पुत्रो मे द्रोही निर्वास्यतामितः। नगर्याः सहितोऽमात्यैस्त्वयाद्यैवाविलम्बितम्॥ १४
इत्यादिशत्स तं क्रुद्धो राजा सेनापतिं ततः। आश्वस्तो वेत्ति कुसृतिं प्रभुः को हि स्वमन्त्रिणाम्॥ १५
सोऽथ सेनापतिर्गत्वा राजादेशं निवेद्य तम्। मृगाङ्कदत्तं सामात्यं नगर्या निरकालयत्॥ १६
सोऽप्यपेक्षितसंपत्तिर्हृष्टोऽर्चितविनायकः। मृगाङ्कदत्तो मनसा प्रणम्य पितरौ ततः॥ १७
अयोध्यातो विनिर्गत्य दूरं तान्सहयायिनः। प्रचण्डशक्तिप्रमुखानुवाच दश मन्त्रिणः॥ १८
शक्तिरक्षितनामास्ति किराताधिपतिर्महान्। सब्रह्मचारी विद्यासु स च बालसुहृन्मम॥ १९
युद्धबन्दीकृतेन प्राक्स हि पित्रात्ममुक्तये। नियमाय प्रतिनिधिस्तातस्येह समर्प्यत॥ २०
मृते पितरि चोद्भूतगोत्रजः स्वबलेन सः। मद्विज्ञप्तेन तातेन पित्र्ये राज्येऽधिरोपितः॥ २१
तत्तस्य निकटं तावद्गच्छामः सुहृदस्ततः। क्रमेणोज्जयिनीं यामस्तां शशाङ्कवतीं प्रति॥ २२
इत्युक्तवांस्तथेत्युक्तवद्भिस्तैः सचिवैः सह। प्रययौ स ततः प्राप सायं चैकां महाटवीम्॥ २३
तस्यां निर्वृक्षतोयायां कृच्छ्रादेकमवाप सः। तीरोपान्तप्ररूढैकशुष्कपादपकं सरः॥ २४
तस्मिन्सांध्यमनुष्ठाय विधिं पीत्वा जलानि सः। श्रान्तः सुष्वाप सामात्यस्तस्य शुष्कतरोरधः॥ २५

रात्रौ च चन्द्रशुभ्रायां प्रबुद्धः स ददर्श तम्। शुष्कवृक्षं दलैः पुष्पैः फलैश्चापूरितं क्रमात्॥ २६
पक्वानि च फलान्यस्य पतन्त्यालोक्य तत्क्षणम्। प्रबोध्य दर्शयामास सचिवेभ्यस्तदद्भुतम्॥ २७
ततस्तैर्विस्मयाविष्टैः क्षुधितैः सह तानि सः। फलानि तस्य सुस्वादुरसानि बुभुजे तरोः॥ २८
भुक्तवत्सु च तेष्वत्र पश्यत्स्वेवाखिलेषु सः। शुष्कवृक्षः क्षणाद्विप्रकुमारः समपद्यत॥ २९
पृष्टो मृगाङ्कदत्तेन विस्मितेनाथ सोऽब्रवीत्। दमधिर्नाम कोऽप्यासीदयोध्यायां द्विजोत्तमः॥ ३०
तस्याहं श्रुतधिर्नाम पुत्रः स च मया सह। दुर्भिक्षे मृतजानिः सन्भ्रमन्प्रापदिमां भुवम्॥ ३१
इह केनापि दत्तानि प्राप्य पञ्च फलानि सः। क्षुत्क्षामस्त्रीणि मे प्रादाद्द्वे चास्थापयदात्मने॥ ३२
ततः स्नातुं सरस्तोयं गते तस्मिन्फलान्यहम्। तानीह भुक्त्वा निःशेषाण्यकार्षं व्याजसुप्तकम्॥ ३३
सोऽथ स्नात्वागतो बुद्ध्वा छद्मतः काष्ठवत्स्थितम्। मां शप्तवान्भवेहैव शुष्कवृक्षः सरस्तटे॥ ३४
रात्रौ च ते पुष्पफलं चन्द्रवत्यां भविष्यति। तर्पयित्वातिथीञ्जातु फलैः शापाद्विमोक्ष्यसे॥ ३५
इति पित्राभिशप्तोऽहं सद्यः शुष्कद्रुमोऽभवम्। युष्मद्भुक्तफलश्चाद्य चिरान्मुक्तोऽस्मि शापतः॥ ३६
इत्युक्तनिजवृत्तान्तं पृच्छन्तं श्रुतधिं ततः। मृगाङ्कादत्तोऽपि स तं स्ववृत्तान्तमबोधयत्॥ ३७
ततः सोऽबान्धवो नीतावधीती श्रुतधिर्द्विजः। मृगाङ्कदत्ताद्वृतवान्वरं तदनुयायिताम्॥ ३८
ततो नीत्वा निशां प्रातस्तेन श्रुतधिना सह। मृगाङ्कदत्तः स ततः प्रतस्थे सचिवान्वितः॥ ३९
गच्छंश्च स प्राप्य वनं करिमण्डितसंज्ञकम्। ददर्श पुरुषान्पञ्च भूरिकेशान्दुराकृतीन्॥ ४०
उपेत्य प्रश्रयात्ते च तमूचुर्जातविस्मयम्। काशिपुर्यां वयं जाता विप्रा धेनूपजीविनः॥ ४१
तेऽवग्रहप्लुष्टतृणात्ततो देशादिदं वनम्। आगताः स्मो बहुतृणं दुर्भिक्षे सह धेनुभिः॥ ४२
इह च प्राप्तमस्माभिर्वापीवारि रसायनम्। तीररूढद्रुमभ्रश्यत्रिफलानित्यभावितम्॥ ४३
पिबतां तत्सदास्माकमेषां क्षीरभुजां सताम्। पञ्च वर्षशतान्यस्मिन्व्यतीतान्यजने वने॥ ४४
तेनेदृशा वयं देव यूयं चातिथयोऽधुना। अस्माभिर्दैवतः प्राप्तास्तदेतास्माकमाश्रमम्॥ ४५
इति तैरर्थितो गत्वा सानुगः स तदाश्रमम्। मृगाङ्कदत्तः क्षीरादिभोजी तदनयद्दिनम्॥ ४६
प्रस्थितश्च ततः प्रातरन्यान्यपि विलोकयन्। कौतुकानि स संप्राप किरातविषयं क्रमात्॥ ४७
ताहिणोच्छ्रुतधिं चात्र स्वागमावेदनाय सः। तं किरातपतिं मित्रं शक्तिरक्षितकं प्रति॥ ४८
सोऽपि बुद्ध्वा किरातेशो निर्गत्याग्रे तमानतः। मृगाङ्कदत्तं सामात्यं पुरं प्रावेशयन्निजम्॥ ४९
ततस्तेनोपचरितस्तस्थौ तत्र स कांश्चन। मृगाङ्कदत्तो दिवसानुक्तागमनकारणः॥ ५०
स्वकार्ये प्राप्तकालं च साहाय्ये शक्तिरक्षितम्। स्थापयित्वात्र सज्जं तमामन्त्र्य च नृपात्मजः॥ ५१
प्रातिष्ठत स पुण्याहे पुनरुज्जयिनीं प्रति। शशाङ्कवत्या हृतधीरात्मना द्वादशस्ततः॥ ५२
गच्छंश्च सोऽटवीं प्राप्य शून्यां तरुतलस्थितम्। तपस्विनं ददर्शैकं भस्माजिनजटाभृतम्॥ ५३
निराश्रमपदेऽरण्ये किमेकाकीह तिष्ठसि। भगवन्नित्युपागम्य स तं पप्रच्छ सानुगः॥ ५४
सोऽथ तं तापसोऽवादीदहं शिष्यो महागुरोः। शुद्धकीर्त्यभिधानस्य नानामन्त्रौघसिद्धिमान्॥ ५५
सोऽहं कदाप्यकरवं स्वस्यावेशं प्रसङ्गतः। शुभलक्षणमासाद्य कंचित्क्षत्रकुमारकम्॥ ५६
स कुमारः समाविष्टः पृष्टो नानाविधानि मे। सिद्धौषधिरसक्षेत्राण्युदीर्येदमथाब्रवीत्॥ ५७
अस्तीहोत्तरदिग्भागे केवलः शिंशपातरुः। विन्ध्याटव्यामधश्चास्य नागेन्द्रभवनं महत्॥ ५८
तच्चार्द्रधूलिप्रच्छन्नजलं सदुपलक्ष्यते। मध्याह्ने हंसमिथुनैः क्रीडद्भिः साम्बुसारसैः॥ ५९
तत्र पारावताख्योऽस्ति नाम्ना नागवरो बली। तस्य देवासुररणात्प्राप्तः खड्गोऽस्त्यनुत्तमः॥ ६०
वैदूर्यकान्तिर्नाम्ना तं खड्गं प्राप्नोति यो नरः। स सिद्धाधिपतिर्भूत्वा विचरत्यपराजितः॥ ६१
स चासिः प्राप्यते वीरैः सहायैरित्युदीरिते। तेनाविष्टेन तस्याहमथाकार्षं विसर्जनम्॥ ६२
ततोऽन्यविमुखः खड्गं प्रेप्सुस्तं पृथिवीमहम्। भ्रान्त्वा सहायानप्राप्य खिन्नो मर्तुमिहागतः॥ ६३
एतन्मृगाङ्कदत्तोऽत्र श्रुत्वा तस्मात्स तापसात्। अहं सहायः समात्यस्तवेति तराभाषत॥ ६४

स चाभिनन्द्य तत्तेन सानुगेन समं ययौ । तस्य नागस्य भवनं पादलेपेन तापसः ॥ ६५
तत्राभिज्ञानसंप्राप्ते मन्त्रबद्धासु दिक्षु च । रात्रौ मृगाङ्कदत्तादीन्स्थापयित्वाभिमन्त्रितैः ॥ ६६
सर्षपैः प्रकटीकृत्य क्षिप्तैस्तद्भूलितो जलम् । स नागदमनैर्मन्त्रैर्होमं कर्तुं प्रचक्रमे ॥ ६७
विघ्नांश्चोत्पातमेघादीन्मन्त्रशक्त्या जिगाय सः । ततोऽत्र निर्ययौ तस्माद्दिव्या स्त्री शिंशपातरोः ॥ ६८
मोहमन्त्रं पठन्तीव सा रत्नाभरणारवैः । उपेत्य तं क्षणाच्चक्रे कटाक्षक्षतमानसम् ॥ ६९
हृतधैर्या च सा तस्य समालिङ्ग्य घनस्तनी । हस्ताद्विस्मृतमन्त्रस्य होमभाण्डमपातयत् ॥ ७०
लब्धान्तरश्च तत्कालं स नागो भवनात्ततः । पारावताख्यः कल्पान्तघनाघन इवोदगात् ॥ ७१
तं दृष्ट्वा नयनज्वालाघोरं गर्जितदारुणम् । स नष्टदिव्यनारीको हृत्स्फोटं प्राप तापसः ॥ ७२
तस्मिन्विनष्टे तस्यात्र कृतसाहायकान्स तान् । नागो मृगाङ्कदत्तादीनशपच्छान्तवैकृतः ॥ ७३
युष्माभिरेतत्संघातात्कृतं निष्कारणं यतः । विप्रयुक्तास्ततोऽन्योन्यं कंचित्कालं भविष्यथ ॥ ७४
इत्युक्त्वान्तर्हिते नागे सर्वे ते तत्र तत्क्षणम् । ध्वान्तरुद्धदृशो ध्वस्तशब्दश्रवणशक्तयः ॥ ७५
जग्मुर्मृगाङ्कदत्ताद्या विप्रयुक्ता यतस्ततः । शापप्रभावात्क्रोशन्तश्चिन्वन्तश्च परस्परम् ॥ ७६
मृगाङ्कदत्तश्च ततः स गते रात्रिविभ्रमे । भ्राम्यन्नितस्ततोऽटव्यां तत्रासीत्सचिवैर्विना ॥ ७७
गतेष्वेवं च मासेषु द्वित्रेष्वत्राथ तस्य सः । अकस्माच्छ्रुतधिर्विप्रो विचिन्वन्प्रापदन्तिकम् ॥ ७८
स पादपतितः साश्रुः श्रुतधिस्तं कृतादरम् । स्वमन्त्रिवार्तां पृच्छन्तं समाश्वास्यैवमभ्यधात् ॥ ७९
न दृष्टास्ते मया किं तु जाने यास्यन्ति ते प्रभो । पुरीमुज्जयिनीं सैव गन्तव्या वर्तते हि वः ॥ ८०
इत्याद्युक्तवता तेन प्रेरितस्तद्युतोऽथ सः । मृगाङ्कदत्तः शनकैः प्रायादुज्जयिनीं प्रति ॥ ८१
गच्छन्स्तोकैश्च दिवसैर्मार्गेणाशङ्कितागतम् । दृष्टो विमलबुद्धिं स संप्राप निजमन्त्रिणम् ॥ ८२
तद्दर्शनोद्बाष्पदृशं प्रणतं परिरभ्य सः । उपवेश्य च पप्रच्छ वार्तामितरमन्त्रिणाम् ॥ ८३
ततो विमलबुद्धिस्तं भृत्यप्रियमुवाच सः । न जाने देव कस्तेषु क्व गतो नागशापतः ॥ ८४
त्वं तु तान्प्राप्स्यसीत्येतद्यथा जाने तथा शृणु । तदाहं नागशापेन दूराकृष्टः परिभ्रमन् ॥ ८५
अटव्याः पूर्वदिग्भागे क्लान्तः केनापि साधुना । आश्रमं प्रापितोऽभूवं महर्षेर्ब्रह्मदण्डिनः ॥ ८६
तत्र तेनर्षिणा दत्तैः फलाम्भोभिर्गतक्लमः । पर्यटन्नाश्रमादारादद्राक्षं बृहतीं गुहाम् ॥ ८७
प्रविश्य कौतुकात्तस्यां दृष्टान्तर्मणिमन्दिरम् । प्रवृत्तवानहं जालगवाक्षैस्तत्र वीक्षितुम् ॥ ८८
तावत्स्थितान्तश्चक्रं स्त्री भ्रामयन्ती सभृङ्गकम् । भृङ्गास्तेऽथाश्रिता भेदेनात्रस्थौ वृषगर्दभौ ॥ ८९
ताभ्यां च वान्तौ क्षीरासृक्फेनौ पीत्वा यथाश्रयम् । द्वये सितासिता भूत्वा जातास्ते जालकारकाः॥ ९०
स्वविष्ठाभिस्ततस्तैश्च द्विविधैर्विविधाः कृताः । जालपाशाः सुपुष्पैश्च विषपुष्पैश्च संगताः ॥ ९१
तेषु पाशेषु ते सक्ता जालकारा यथासुखम् । श्वेतकृष्णोभयमुखेनैत्य दष्टा महाहिना ॥ ९२
नानाघटेष्वथ क्षिप्तास्तया नार्या समुत्थिताः । पुनस्तथैव तानेव पाशाञ्श्लिष्टा यथातथम् ॥ ९३
विषोद्वेगाच्च तत्पुष्पजालस्थेष्वारटत्स्वथ । अन्येऽपि तेऽन्यजालस्थाः प्रवृत्ताः क्रन्दितुं तदा ॥ ९४
तच्छब्दभग्नध्यानेन तत्रस्थेन कृपालुना । केनापि भालतो मुक्ता ततो ज्वाला तपस्विना ॥ ९५
तया निर्दग्धपाशास्ते दण्डं सुषिरवैद्रुमम् । प्रविश्यैव तदूर्ध्वस्थे लीना ज्योतिषि भास्वरे ॥ ९६
तावत्क्वापि गता सा स्त्री सचक्रवृषगर्दभा । तद्दृष्ट्वा विस्मितो यावत्स्थितोऽहं तत्र पर्यटन् ॥ ९७
तावत्पुष्करिणीं हृद्यामपश्यं भृङ्गनादितैः । इहाप्यागत्य वीक्षस्वेत्याह्वयन्तीमिवाम्बुजैः ॥ ९८
तीरोपविष्टस्तस्याश्च वीक्षे यावद्वनं महत् । जालान्तरे वने चैको लुब्धकस्तत्र तेन च ॥ ९९
दशबाहुरवाप्यैकः सिंहपोतो विवर्ध्य च । अनायत्त इति क्रोधाद्वनात्तस्मात्प्रवासितः ॥ १००
सोऽपि सिंहः समाकर्ण्य सिंह्याः शब्दं वनान्तरे । तत्र गच्छन्महावातेनावकीर्णभुजः कृतः ॥ १०१
ततो लम्बोदरेणैत्य पुंसारोपितबाहुकः । संपादितः स यातस्तद्वनं केसरिणीकृते ॥ १०२
तत्र तस्याः कृते क्लेशमनुभूय वनान्तरे । प्रागात्तां प्राप्य तद्युक्तः स निजं वनमागतः ॥ १०३

सभार्यमागतं तं च दृष्ट्वैव करिमर्दनम्। वनं समर्प्य तत्तस्मै लुब्धकः स ततो गतः॥ १०४
एतदप्यहमालोक्य गत्वाश्रमपदं ततः। उभयं तन्महाश्चर्यमवोचं ब्रह्मदण्डिने॥ १०५
सोऽथ प्रीत्या त्रिकालज्ञो मुनिर्मामेवमभ्यधात्। धन्योऽसि दर्शितं सर्वं प्रसन्नेनेश्वरेण ते॥ १०६
या दृष्टा स्त्री त्वया तत्र सा माया भ्रमितं च यत्। तया संसारचक्रं तद्ये भृङ्गास्ते च जन्तवः॥ १०७
वृषगर्दभरूपौ तौ धर्माधर्मौ पृथक्पृथक्। श्रितास्तद्भ्रान्तदुग्धासृग्रूपे सुकृतदुष्कृते॥ १०८
स्वस्वाश्रयोत्थे संसेव्य भूत्वा च श्वेतकल्मषाः। द्विविधा जालकाराभा विष्टब्धा निजवीर्यतः॥ १०९
निर्माय द्विविधानेव जालपाशान्सुतादिकान्। सत्पुष्पविषपुष्पाभसुखदुःखानुषङ्गिणः॥ ११०
यथास्वं तेषु संसक्ताः कालेनोरगरूपिणा। शुभाशुभाभ्यां वक्त्राभ्यां हताः पुत्र यथोचितम्॥ १११
ततो घटकरूपासु नानायोनिषु मायया। स्त्रीरूपया तया क्षिप्तास्तथैवोत्थाय ते पुनः॥ ११२
तुल्यासु पतिताः श्वेतकृष्णास्वाकृतिषु द्विधा। पुत्रादिजालपाशेषु सुखदुःखानुबन्धिषु॥ ११३
ततः कृष्णा निजैर्जालैर्बद्धा दुःखविषार्दिताः। प्रवृत्ताः क्रन्दितुं विप्राः शरणं परमेश्वरम्॥ ११४
तद्दृष्ट्वा जातवैराग्यास्ते श्वेता अपि जन्तवः। प्रारब्धा निजजालस्थास्तमेवाक्रन्दितुं प्रभुम्॥ ११५
ततः प्रबुध्य देवेन तेन तापसरूपिणा। ज्ञानाग्निज्वालया दग्धपाशाः सर्वेऽपि ते कृताः॥ ११६
तेन विद्रुमसद्दण्डरूपमादित्यमण्डलम्। प्रविश्य तत्तदूर्ध्वस्थं परमं धाम ते श्रिताः॥ ११७
नष्टा च चक्राकारेण संसारेण सहैव सा। माया वृषखराकारधर्माधर्मसमन्विताः॥ ११८
एवं भ्रमन्ति संसारे शुक्लकृष्णाः स्वकर्मभिः। ईश्वराराधनादेव विमुच्यन्ते च जन्तवः॥ ११९
इति ते मोहशान्त्यर्थमीश्वरेण प्रदर्शितम्। वापीजले च यद्दृष्टं भवता तदिदं शृणु॥ १२०
मृगाङ्कदत्तभाव्यर्थप्रदर्शनमिदं जले। प्रतिबिम्बमिवोत्पाद्य कृतं भगवता तव॥ १२१
स हि बालमृगारातिपोततुल्यो भुजोपमैः। सचिवैर्दशभिर्युक्तो वर्धितो वनसंनिभात्॥ १२२
देशाल्लुब्धकतुल्येन पित्रा कोपात्प्रवासितः। अवन्तिदेशादुद्भूतां ख्यातिमन्यवनोपमात्॥ १२३
शशाङ्कवत्यास्तत्सिंह्या इव श्रुत्वा प्रधावितः। नागशापेन वातेन भ्रष्टमन्त्रिभुजः कृतः॥ १२४
ततो विनायकेनात्र स लम्बोदररूपिणा। संघटितामात्यभुजः प्रकृतिस्थः पुनः कृतः॥ १२५
ततो गत्वानुभूयातिक्लेशं प्राप्तां ततोऽन्यतः। तां शशाङ्कवतीं सिंहीमादायात्रागतश्च सः॥ १२६
ततश्च निकटं प्राप्तं विधुताराति वारणम्। मृगाङ्कदत्तसिंहं तं दृष्ट्वा भार्यासमन्वितम्॥ १२७
तत्स्वदेशवनं तस्मै समर्प्य सकलं स्वतः। तत्पिता लुब्धकनिभः स प्रयातस्तपोवनम्॥ १२८
इति संपन्नवद्भावि दर्शितं विभुना तव। तद्गुष्मान्मन्त्रिणो भार्यां राज्यं चाप्स्यति वः प्रभुः॥ १२९

इत्यहं मुनिवरेण बोधितस्तेन लब्धधृतिराश्रमात्ततः।
निर्गतोऽथ शनकैरुपाव्रजन्नद्य देव मिलितस्त्वया सह॥ १३०

तस्मादभिमतमाप्स्यसि सचिवांल्लब्ध्वा प्रचण्डशक्तिमुखान्।
प्रस्थानकालपूजाप्रसन्नविघ्नेश्वरो नियतम्॥ १३१

इति स्वसचिवात्क्षणं विमलबुद्धितः सोऽद्भुतं
निशम्य परितोषवानपि मृगाङ्कदत्तः पुनः।
विचार्य सह तेन तामपरमन्त्र्यवाप्त्यै क्रमा-
दवन्तिनगरीं प्रति प्रजितवान्स्वकार्याय च॥ १३२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके तृतीयस्तरङ्गः।

---

चतुर्थस्तरङ्गः।

ततः श्रुतधियुक्तेन समं विमलबुद्धिना। स शशाङ्कवतीहेतोर्गच्छन्नुज्जयिनीं प्रति॥ १
मृगाङ्कदत्तः संप्रापदन्तरा नर्मदानदीम्। वीचिवेल्लद्भुजलतां विलसत्फेनपाण्डुराम्॥ २

दिष्ट्या मिलदमात्योऽयं संवृत्त इति वीक्ष्य तम् । हर्षादिव प्रनृत्यन्तीं हसन्तीं चपलाशयाम् ॥ ३

तस्यां स्नानावतीर्णे च तस्मिन्कश्चिदुपाययौ । तत्र मायाबटुर्नाम स्नातुं शबरभूपतिः ॥ ४

तं स्नान्तं सहसोत्थाय त्रयोऽत्र जलमानुषाः । युगपज्जगृहुर्भिल्लं भीतिनश्यत्परिच्छदम् ॥ ५

तद्दृष्ट्वाकृष्टखड्गोऽन्तः प्रविश्य जलमानुषान् । हत्वा मृगाङ्कदत्तस्तान्भिल्लेन्द्रं तममोचयत् ॥ ६

स तद्ग्राहभयान्मुक्तो भिल्लराजो जलोत्थितः । तं राजपुत्रं पप्रच्छ पतित्वा पादयोस्ततः ॥ ७

धात्रा कस्त्वमिहानीतः प्राणत्राणाय मे वद । कस्य चालंकृतो वंशस्त्वया सुकृतिनः पितुः ॥ ८

को वा कटाक्षितः पुण्यैर्देशो यत्र गमिष्यसि । इत्युक्त्वा श्रुतधेः श्रुत्वा तद्वृत्तान्तमशेषतः ॥ ९

सुतरां प्रणतस्तं स शबरेन्द्रोऽब्रवीत्पुनः । तर्ह्यहं ते यथादिष्टे सहायोऽत्राभिवाञ्छिते ॥ १०

सख्या दुर्गपिशाचेन मातङ्गपतिना सह । तत्प्रसादं कुरुष्वैहि गृहान्भृत्यस्य मे प्रभो ॥ ११

इति सप्रणयैस्तैस्तैर्वचोभिः प्रार्थ्य तं ततः । मृगाङ्कदत्तं पल्लीं स्वां शबरेन्द्रो निनाय सः ॥ १२

उपाचरच्च तं तत्र यथावत्स्वविभूतिभिः । राजपुत्रमशेषेण पल्लीलोकेन पूजितम् ॥ १३

सोऽपि मातङ्गराजोऽत्र समेत्याभिननन्द तम् । दासीभूय सुहृत्प्राणप्रदं न्यस्तशिरा भुवि ॥ १४

ततो मायाबटोस्तस्य भिल्लेन्द्रस्यानुरोधतः । मृगाङ्कदत्तस्तत्रैव तस्थौ कांश्चित्स वासरान् ॥ १५

एकदा च स्थिते तस्मिन्द्यूतं स शबरेश्वरः । समं निजप्रतीहारेणारेभे चण्डकेतुना ॥ १६

तावन्नभसि मेघेषु गर्जत्सु गृहबर्हिणः । प्रनृत्तान्द्रष्टुमुत्तस्थौ स मायाबटुभूपतिः ॥ १७

ततः स द्यूतरसिकः प्रतीहारस्तमभ्यधात् । किमेभिः प्रेक्षितै राजन्नसुशिक्षितताण्डवैः ॥ १८

स मयूरो गृहे मेऽस्ति नास्ति योऽन्यत्र भूतले । दर्शयिष्यामि तं प्रातस्तुभ्यं तद्रसिकोऽसि चेत् ॥ १९

तच्छ्रुत्वा दर्शनीयो मे सर्वथा स त्वयेति च । उक्त्वा स तं प्रतीहारं दिनकृत्यं व्यधान्नृपः ॥ २०

मृगाङ्कदत्तोऽप्याकर्ण्य सर्वं तत्तत्र सानुगः । तथैवोत्थाय विदधे स्नानाहारादिकाः क्रियाः ॥ २१

ततो रात्रावुपेतायामन्धे तमसि जृम्भिते । कस्तूरिकानुलिप्ताङ्गो वसानो नीलवाससी ॥ २२

स राजपुत्रः स्वोद्देशाद्वीरचर्यार्थमेककः । सुप्तानुगाद्वासगृहात्खड्गपाणिर्विनिर्ययौ ॥ २३

भ्रमंश्च तत्र केनापि पुंसा मार्गागतेन सः । अपश्यता ध्वान्तवशादंसेनांसेऽभ्यहन्यत ॥ २४

ततः सोऽभ्यभवत्क्रुद्धो युद्धायाह्वयति स्म तम् । स चाहतः पुमान्प्रौढस्तत्कालोचितमभ्यधात् ॥ २५

किं ताम्यस्यविचार्यैव विचारयसि चेत्ततः । वाच्यो निशापतिर्येन निशैषा न प्रकाशिता ॥ २६

धाता वा येन पूर्णोऽस्य नाधिकारोऽत्र निर्मितः । येन वैराणि जायन्ते तमसीदृश्यकारणम् ॥ २७

तच्छ्रुत्वा सत्यमित्युक्त्वा तुष्टो नागरिकोक्तितः । मृगाङ्कदत्तः कोऽसीति स तं पप्रच्छ पूरुषम् ॥ २८

चौरोऽहमिति तेनोक्तः पुंसा सोऽप्यवदन्मृषा । हस्तमानय सब्रह्मचारी मम भवानिति ॥ २९

कृत्वा च सख्यं जिज्ञासुः स तेनैव सह व्रजन् । मृगाङ्कदत्तः संप्राप जीर्णकूपं तृणावृतम् ॥ ३०

तत्र तेन प्रविष्टेन पुंसा सह सुरुङ्गया । गत्वा मायाबटोस्तस्य राज्ञोऽन्तःपुरमाप्तवान् ॥ ३१

तत्र दीपेन दृष्ट्वा तं परिजज्ञे स पूरुषम् । यावत्सोऽत्र प्रतीहारश्चण्डकेतुर्न तस्करः ॥ ३२

प्रतीहारस्तु न स तं मन्दालोकैककोणगम् । परिजज्ञेऽन्यवेषस्थं राजस्त्रीछन्नकामुकः ॥ ३३

राजवध्वा च स तया प्राप्त एवानुरक्तया । उत्थाय कण्ठे जगृहे मञ्जुमत्यभिधानया ॥ ३४

उपवेश्य च पर्यङ्के स पृष्टोऽभूत्तया तदा । अद्यैव भवता कोऽयमिहानीतः पुमानिति ॥ ३५

सुहृन्ममायं विश्वस्ता भवेत्युक्ता च तेन सा । प्रतीहारेण सोद्वेगा मञ्जुमत्येवमब्रवीत् ॥ ३६

कुतो मे मन्दभाग्याया विश्वासो यदसौ नृपः । मृत्योर्मृगाङ्कदत्तेन मुखं प्राप्तोऽपि रक्षितः ॥ ३७

तच्छ्रुत्वा स प्रतीहारस्तामवादीदलं शुचा । नृपं मृगाङ्कदत्तं च हनिष्याम्यचिरात्प्रिये ॥ ३८

इत्युक्तवन्तं तं दैवात्साब्रवीत्किं विकत्थसे । आक्रान्तोऽभूद्यदा ग्राहैर्नृपोऽसौ नर्मदाम्भसि ॥ ३९

मृगाङ्कदत्त एवैकस्तदा तत्क्षणोद्यतः । त्वया किं न हतस्तत्र भीतो हि त्वं पलायितः ॥ ४०

तत्तूष्णीं भव मा कश्चिदेतच्छ्रोष्यति ते वचः । ततो मृगाङ्कदत्तात्त्वं शूरादशिवमाप्स्यसि ॥ ४१

एवमुक्तवतीं तां च जारः क्षत्ता न चक्षमे। पापे मृगाङ्कदत्ते त्वं बद्धभावाधुना ध्रुवम्॥ ४२
तदस्यानुभवेदानीमधिक्षेपस्य मे फलम्। इत्युक्त्वा च स हन्तुं तामुत्तस्थौ सासिधेनुकः॥ ४३
ततो रहस्यधारिण्या तत्र चेटिकयैकया। धावित्वा छुरिका तस्यावष्टब्धाभूत्करेण सा॥ ४४
तावद्ययौ मञ्जुमती ततो निर्गत्य सान्यतः। क्षत्ता च तस्याश्चेट्यास्तां निकृत्ताङ्गुलितः करात्॥ ४५
आक्षिप्य छुरिकां प्रायात्स्वगृहं स यथागतम्। मृगाङ्कदत्तेन सममाकुलो विस्मितात्मना॥ ४६
गच्छाम्यहं भवान्प्राप्तो गृहानिति च तत्र तम्। मृगाङ्कदत्तः क्षत्तारं तमस्यप्रकटोऽब्रवीत्॥ ४७
इह निद्रां भज क्षिप्रं परिश्रान्तो भृशं ह्यसि। इति सोऽपि प्रतीहारो राजपुत्रं तमभ्यधात्॥ ४८
ततस्तथेति तेनोक्ते तच्चेष्टालोकनैषिणा। क्षत्ता स्वभृत्यमत्रैकं समाहूय जगाद सः॥ ४९
स मयूरः स्थितो यत्र तत्रैनं नय वासकम्। पुरुषं विश्रमायास्मै शयनीयं प्रयच्छ च॥ ५०
तथेति च स तद्भृत्यस्तस्मिन्प्रावेशयद्गृहे। नीत्वा मृगाङ्कदत्तं तं दत्तशय्यं सदीपके॥ ५१
गते तस्मिन्बहिर्द्वारं बद्धा शृङ्खलयात्र सः। मृगाङ्कदत्तोऽपश्यत्तं मयूरं पञ्जरस्थितम्॥ ५२
सोऽयमुक्तोऽमुना क्षत्रा शिखीत्यालोच्य कौतुकात्। तस्य चोद्घाटयामास मयूरस्य स पञ्जरम्॥ ५३
मयूरः स च निर्गत्य निपुणं वीक्ष्य पादयोः। मृगाङ्कदत्तस्य मुहुर्निपपात लुलोठ च॥ ५४
लुठतस्तस्य दृष्ट्वा च कण्ठबद्धं स सूत्रकम्। राजपुत्रो मुमोचाशु मत्वा तं तेन पीडितम्॥ ५५
स मुक्तकण्ठसूत्रश्च मयूरस्तस्य पश्यतः। संपन्नोऽभूत्तदा तस्य मन्त्री भीमपराक्रमः॥ ५६
ततो मृगाङ्कदत्तस्तमाश्लिष्योत्सुकमानतम्। सखे कथय किं न्वेतदिति पप्रच्छ विस्मयात्॥ ५७
अवोचदथ संहृष्टः स तं भीमपराक्रमः। शृणु देव स्ववृत्तान्तमा मूलात्कथयामि ते॥ ५८
तदाहं नागशापेन विभ्रष्टो भवदन्तिकात्। भ्रमन्नटव्यां संप्रापमेकं शाल्मलिपादपम्॥ ५९
तस्मिन्निखातरूपां च गणेशप्रतिमामहम्। दृष्ट्वा प्रणम्य तन्मूले परिश्रान्त उपाविशम्॥ ६०
अचिन्तयं च धिक्सर्वमिदं पापं मया कृतम्। रात्रिवेतालवृत्तान्तमावेद्य स्वामिने तदा॥ ६१
तदिहैव त्यजाम्येतमात्मानमपराधिनम्। इत्यालोच्यात्र देवाग्रे स्थितोऽभूवमभोजनः॥ ६२
गते कतिपयाहे च कोऽपि तेनागतः पथा। वृद्धपान्थस्तरोस्तस्य च्छायायां समुपाविशत्॥ ६३
एवं म्लानमुखः पुत्र किं स्थितोऽसीह निर्जने। इति दृष्ट्वा च सोऽपृच्छत्साधुर्मामनुबन्धतः॥ ६४
ततो मया स्ववृत्तान्ते यथावद्विनिवेदिते। स वृद्धपथिकः प्रीत्या धीरयन्मामभाषत॥ ६५
आत्मानं हंसि वीरोऽपि कथं क्लीबवत्स्त्रियोऽपि वा। धैर्यमापदि नोज्झन्ति तथा चेमां कथां शृणु॥ ६६
नगर्यां कोशलाख्यायां विमलाकर इत्यभूत्। राजा तस्य च पुत्रोऽभूत्कमलाकरसंज्ञकः॥ ६७
यस्तेजोरूपदातृत्वगुणैः श्लाघ्यो विनिर्ममे। धात्रेव स्कन्दकंदर्पकल्पद्रुमजिगीषया॥ ६८
तस्यैकदा कुमारस्य दिक्षु स्तुत्यस्य बन्दिभिः। गाथामेकां पपाठैको बन्दी परिचितः पुरः॥ ६९

पद्मासादनसोत्सवनानामुखरद्विजालिपरिगीतम्।
कमलाकरमप्राप्ता क्व रतिं हंसावली लभताम्॥ ७०

एवं मुहुः पठन्पृष्टस्तेन बन्दी जगाद तम्। स मनोरथसिद्ध्याख्यः कुमारं कमलाकरम्॥ ७१
देव भ्राम्यन्गतोऽभूवं राज्ञोऽहं मेघमालिनः। नगरीं विदिशां नाम लीलोद्यानभुवं श्रियः॥ ७२
तत्र दर्दुरकाख्यस्य गीताचार्यस्य वेश्मनि। अहमासं स चैवं मां प्रसङ्गेनैकदाब्रवीत्॥ ७३
इह हंसावली नाम दुहिता नृपतेः पुरः। नवीनशिक्षितं प्रातः स्वनृत्तं दर्शयिष्यति॥ ७४
तच्छ्रुत्वा कौतुकाद्युक्त्या समं तेनापरेऽहनि। अहं राजकुलं गत्वा प्राविशं रङ्गमण्डपम्॥ ७५
तत्राहतमहातोद्ये तामपश्यं सुमध्यमाम्। हंसावलीं राजकन्यां नृत्यन्तीं पितुरग्रतः॥ ७६
आलोलपुष्पाभरणां पाणिप्रेङ्खितपल्लवाम्। वल्लीमिव स्मरतरोर्यौवनानिलघूर्णिताम्॥ ७७
ततश्चाचिन्तयमहं नैवास्या हरिणीदृशः। भर्तास्ति कश्चिद्योग्योऽन्यः कुमारात्कमलाकरात्॥ ७८
तेन चेत्तादृशेनेयं युज्यते नेदृशी ततः। कामस्य किं कृते पुष्पकार्मुकारोपणग्रहः॥ ७९

तदुपायं करोम्यत्र तावदित्यनुचिन्तयन् । प्रेक्षणान्ते ततो राजकुलद्वारमगामहम् ॥ ८०
चित्रं लिखतु योऽत्रास्ति चित्रकृत्सदृशो मया । अभिलिख्येति तत्राहं चीरिकामुदलम्बयम् ॥ ८१
अपाटितायामन्येन तस्यां बुद्ध्वा नृपोऽत्र तत् । आहूय स्वसुतावासे चित्रकृत्ये न्ययुङ्क्त माम् ॥ ८२
ततो वासगृहे तस्या हंसावल्याः सभृत्यकः । भित्तौ मयाभिलिखितस्त्वं देव कमलाकर ॥ ८३
स्पष्टं चेत्ख्यापयाम्येतत्तद्धूर्तं वेत्ति मामियम् । तदेतां राजतनयां युक्त्यैतद्बोधयाम्यहम् ॥ ८४
इति संचिन्त्य सुहृदं विश्वस्तं कृतसंविदम् । तत्रैकमहमुन्मत्तरूपं रम्यमकारयम् ॥ ८५
स उन्मत्तो भ्रमन्गायन्नृत्यंश्चालोक्य दूरतः । आनाय्यत क्रीडनको राजपुत्रैर्निजान्तिकम् ॥ ८६
ततः क्रीडावशाद्दृष्ट्वा हंसावल्या स्ववासकम् । प्रवेशितश्च संपश्यन्स चित्रं त्वत्स्तुतिं व्यधात् ॥ ८७
दिष्ट्या दृष्टोऽब्जशङ्खाङ्कपाणिर्लक्ष्मीविलासभूः । सोऽयं हरिरिवानन्तगुणौघः कमलाकरः ॥ ८८
इत्यादि नृत्यतस्तस्माद्राजकन्या निशम्य सा । मामपृच्छत्किमाहार्यं कश्चैष लिखितस्त्वया ॥ ८९
इति तामनुबन्धेन पृच्छन्तीमहमुक्तवान् । दृष्टपूर्वोऽमुना नूनमुन्मत्तेनैष सुन्दरि ॥ ९०
राजपुत्रो मया योऽयं लिखितो रूपगौरवात् । इत्युक्त्वा त्वं मया तस्यै गुणैर्नाम्ना च वर्णितः ॥ ९१
ततः स्फूर्जद्भवत्प्रेमरसासेकाप्लुते हृदि । संभूतोऽभिनवस्तस्या हंसावल्याः स्मरद्रुमः ॥ ९२
अथागतेन राज्ञात्र पित्रा तस्या विलोक्य सः । नृत्यन्नुन्मत्तकोऽहं च क्रोधान्निष्कालितौ ततः ॥ ९३
ततः प्रभृति चोत्का सा क्षीयमाणा दिने दिने । कृष्णपक्षेन्दुलेखेव याता लावण्यशेषताम् ॥ ९४
मान्द्यव्याजाच्च पापघ्नमाश्रित्यायतनं हरेः । विजनासेविनी युक्त्या जाता सानुज्ञया पितुः ॥ ९५
भवच्चिन्ताविनिद्रा च चन्द्रचन्द्रातपासहा । स्थिता निशावासरयोरत्र भेदमजानती ॥ ९६
तत्र चायतनोद्देशात्प्रविष्टं मां विलोक्य सा । आहूय वस्त्राभरणैः सगौरवमपूजयत् ॥ ९७
पूजितो निर्गतश्चाहं तद्दत्तवसनाञ्चले । गाथामपश्यं लिखितां त्वत्कृते शृणु तां पुनः ॥ ९८

पद्मासादनसोत्सवनानामुखरद्विजालिपरिगीतम् ।
कमलाकरमप्राप्ता क्व रतिं हंसावली लभताम् ॥ ९९

वाचयित्वाहमेतां च लब्धतच्चित्तनिश्चयः । त्वद्बोधनार्थमागत्य तवैनां पुरतोऽपठम् ॥ १००
इदं वस्त्रं च तद्यत्र गाथैषा लिखिता तया । इति बन्दिवचः श्रुत्वा गाथां तां प्रविलोक्य च ॥ १०१
स श्रोत्रेणोत नेत्रेण प्रविष्टामिव तां हृदि । तदा हंसावलीं ध्यायन्नहर्ष कमलाकरः ॥ १०२
तत्प्राप्त्युपायं यावच्च स चिन्तयति सोत्सुकः । तावत्पिता तमाहूय राजा दैवादभाषत ॥ १०३
अलसाः पुत्र राजानो मन्त्रबद्धा इवोरगाः । नश्यन्त्यन्ये तु नष्टा अप्युदयन्ते कथं पुनः ॥ १०४
त्वया च दृष्टा नाद्यापि जिगीषा सुखसङ्गिना । तदुद्युक्तो भवालस्यमुत्सृज्य मयि तिष्ठति ॥ १०५
विजयस्वाग्रतो गत्वा त्वमङ्गाधिपतिं रिपुम् । अस्मान्प्रति कृतारम्भं निजदेशाद्विनिर्गतम् ॥ १०६
एतत्पितृवचो हृष्टः प्रतिपेदे तथेति सः । शूरः प्रियां प्रति च तां यियासुः कमलाकरः ॥ १०७
ततः पित्रा समादिष्टैः प्रतस्थे स बलैः सह । आकम्पयन्महीपृष्ठं हृदयानि च विद्विषाम् ॥ १०८
अथ प्रयाणकैः कैश्चित्प्राप्याङ्गाधिपतेश्चमूम् । प्रत्यवस्कन्दभग्नेन सहायुध्यत तेन सः ॥ १०९
अब्धेर्जलमिवागस्त्यस्तेजस्वी तस्य च द्विषः । बलं पपौ स जग्राह जीवग्राहं च तं जयी ॥ ११०
प्रणिधाय च संयम्य पितुः पार्श्वममुं रिपुम् । प्रतीहारस्य धुर्यस्य हस्ते दत्त्वानुयात्रिकान् ॥ १११
अहमन्यान्रिपूञ्जेतुमितस्तात गतोऽधुना । इति क्षत्तुर्मुखेनास्मै पित्रे संदिशति स्म सः ॥ ११२
ततो जयन्क्रमेणान्यान्नृपानुपचितो बलैः । स प्राप विदिशापुर्या निकटं कमलाकरः ॥ ११३
तत्र स्थितश्च व्यसृजत्स दूतं मेघमालिने । राज्ञे हंसावलीपित्रे याचितुं तां तदात्मजाम् ॥ ११४
सोऽपि दूताददुष्टं तं बुद्ध्वा कन्यार्थमागतम् । मेघमाली नृपः प्रीत्या तत्पार्श्वं स्वयमाययौ ॥ ११५
कृतातिथ्योऽब्रवीच्चैनं राजपुत्रं कृतादरम् । स्वयं परिश्रमो दूतसाध्येऽर्थे किं कृतस्त्वया ॥ ११६
ममाभिवाञ्छितं ह्येतत्कारणं शृणु चात्र यत् । एतां हंसावलीं बाल्येऽप्यच्युतार्चनतत्पराम् ॥ ११७

शिरीषसुकुमाराङ्गीं दृष्ट्वा चिन्ता ममोदभूत्। ईदृग्गुणायाः सदृशो वरः कोऽस्या भवेदिति ॥ ११८
अपश्यतश्च सदृशं वरमस्यास्ततो मम। तच्चिन्तया विनिद्रस्य क्षुदपादि महाज्वरः ॥ ११९
तत्प्रशान्त्यै च संपूज्य कृतविज्ञप्तिमार्तितः। रात्रावीषत्सनिद्रं मां हरिः स्वप्ने समादिशत् ॥ १२०
यत्कृते पुत्र जातोऽयं ज्वरस्ते सैव पाणिना। हंसावली त्वां स्पृशतु ततः शाम्यति ते ज्वरः ॥ १२१
मत्पूजापावनेनैषा यं यं हस्तेन संस्पृशेत्। तस्य तस्य ह्यसाध्योऽपि ज्वरो नश्येदसंशयम् ॥ १२२
एतद्विवाहचिन्ता च न कार्या भवता पुनः। राजपुत्रः पतिर्भावी यतोऽस्याः कमलाकरः ॥ १२३
कालं तु कंचिदेतस्या मनाक् क्लेशो भविष्यति। इति शार्ङ्गभृतादिष्टः प्रबुद्धोऽस्मि निशाक्षये ॥ १२४
ततो हंसावलीहस्तस्पर्शाज्जातोऽस्मि विज्वरः। तदेवं युवयोरेष संयोगो देवनिर्मितः ॥ १२५
तत्ते हंसावली दत्ता मयेत्युक्त्वा प्रकल्प्य च। लग्नं स राजधानीं स्वां मेघमाली नृपो ययौ ॥ १२६
तत्रोक्तं तेन तत्सर्वं श्रुत्वा हंसावली रहः। सखीमाह रहस्यज्ञां नाम्ना कनकमञ्जरीम् ॥ १२७
त्वयासौ दृश्यतां गत्वा राजपुत्रः स एव किम्। चित्रकृल्लिखितेनेह येन मे हृदयं हृतम् ॥ १२८
तातः कदाचिदन्यस्मै सबलायागताय माम्। दद्यात्तन्नामधेयाय भयाद्धि प्राभृतीकृताम् ॥ १२९
इत्युक्त्वा प्रेषिता स्वैरं तया कनकमञ्जरी। साक्षसूत्राजिनजटं तापसीवेषडम्बरम् ॥ १३०
विधाय गत्वा कटकं राजपुत्रस्य तस्य सा। आवेदिता परिजनैः प्रविश्यैव विलोक्य तम् ॥ १३१
कामस्येव जगज्जैत्रमोहनास्त्राधिदैवतम्। तद्रूपहृतचित्ताभूत्समाधिस्थेव तत्क्षणम् ॥ १३२
सोत्का चाचिन्तयत्स्यान्मे संगमो नेदृशेन चेत्। धिग्जन्म तर्हि युक्तं तत्करिष्येऽत्र यदस्त्विति ॥ १३३
अथोपसृत्य दत्ताशीस्तस्मै मणिमुपानयत्। उवाच चोपविष्टा तमात्तरत्नं कृतादरम् ॥ १३४
मयायमसकृद्दृष्टप्रत्ययो मणिरुत्तमः। धारितेनामुना शत्रोः स्तम्भ्यते शस्त्रमुत्तमम् ॥ १३५
गुणानुरागाच्च मया तुभ्यमेष समर्पितः। यथा तवोपयुक्तोऽयं राजपुत्र न मे तथा ॥ १३६
एवमुक्तवती तेन व्याहृता राजसूनुना। एकभिक्षाव्रतव्याजात्सा निषिध्य ययौ ततः ॥ १३७
विमुच्य तापसीवेषं कृत्वोद्विग्नमिवाननम्। हंसावलीमुपागात्सा पृष्टा तां च मृषाब्रवीत् ॥ १३८
अवाच्यमपि ते राजरहस्यं वच्मि भक्तितः। इतो मां तापसीवेषां राजपुत्रस्य तस्य तम् ॥ १३९
गतां कञ्चुकमभ्येत्य स्वैरमेकोऽभ्यधात्पुमान्। भगवत्यपि जानासि भूततन्त्रविधिक्रमम् ॥ १४०
तच्छ्रुत्वा तं प्रतीहारमिव दृष्ट्वाहमब्रवम्। सुष्ठु जानामि किं नाम ममैतत्किल वस्त्विति ॥ १४१
ततोऽहं तेन तस्यैव सकाशं देवि तत्क्षणम्। राजपुत्रस्य कमलाकरस्यात्र प्रवेशिता ॥ १४२
स च दृष्टो मया रुग्णो भूताविष्टो विषण्णया। संयम्यमानः पार्श्वस्थैराबद्धौषधिसन्मणिः ॥ १४३
रचितालीकरक्षा च निर्गताहं ततः क्षणात्। प्रातरेत्यापनेष्यामि दोषमस्येतिवादिनी ॥ १४४
ततोऽशङ्कितदृष्टेदृगनिष्टात्यर्थदुःखिता। आगतास्मि तवाख्यातुं प्रमाणं त्वमतः परम् ॥ १४५
श्रुत्वैतद्रचितं तस्या वचो निर्घातदारुणम्। ऋज्वी हंसावली क्षिप्रं संमुह्यैव जगाद ताम् ॥ १४६
गुणवत्यां स्वसृष्टावप्यहो धिङ्मत्सरो विधेः। इन्दोः कलङ्को दोषश्च तस्य येनैष निर्मितः ॥ १४७
वृतश्च स मया भर्ता न शक्यश्चोपलक्षितुम्। तस्मान्मे मरणं श्रेयो वने वा गमनं क्वचित् ॥ १४८
तदत्र वद किं कार्यमित्युक्ता मुग्धया तया। मायिनी तामवादीत्सा पुनः कनकमञ्जरी ॥ १४९
विवाहे विनिधायैकां त्वद्वेषामिह चेटिकाम्। निर्गत्य क्वापि यास्यावस्तत्कालं व्याकुले जने ॥ १५०
तच्छ्रुत्वा राजपुत्री सा कुसखीं तामभाषत। त्वमेव तर्हि मद्वेषं कृत्वात्मानं विवाहय ॥ १५१
तेन राजसुतेनान्या का ममाप्ता भवादृशी। इत्युक्ता सा तया पापावोचत्कनकमञ्जरी ॥ १५२
एवं करिष्ये युक्त्याहं भवाश्वस्ता यदस्तु मे। तत्कालं तु यथा वक्ष्ये कुर्वीथास्त्वं तथैव तत् ॥ १५३
इत्याश्वास्यैव तां गत्वाशोककर्यै शशंस सा। विश्वासभूमये सख्यै स्वरहस्यं चिकीर्षितम् ॥ १५४
तयैव सहिता तां च तान्यहान्यन्वसेवत। हंसावलीं विमनसं कृतकर्तव्यसंविदम् ॥ १५५
प्राप्ते चोद्वाहदिवसे वरे सायमुपागते। तस्मिन्गजाश्वपादातसहिते कमलाकरे ॥ १५६

सर्वस्मिन्नुत्सवव्यग्रे जने युक्त्यान्यचेटिकाः। निवार्य वासकं गुप्तं प्रसाधननिभाद्द्रुतम् ॥ १५७
हंसावलीं प्रवेश्यैव कृत्वा तद्वेषमात्मनः। चक्रेऽशोककरीवेषां तां सा कनकमञ्जरी ॥ १५८
अशोककर्याः स्वं वेषं सहचर्या विधाय च। प्राप्ते निशागमे हंसावलीमेतामुवाच सा ॥ १५९
पश्चिमेन विनिर्गत्य द्वारेणास्याः पुरो बहिः। क्रोशमात्रे पुराणोऽस्ति सुषिरः शाल्मलिद्रुमः ॥ १६०
गत्वा तस्यान्तरे स्थित्वा प्रतीक्षस्व मदागमम्। कृते कार्ये च तत्राहं त्वामुपैष्यामि निश्चितम् ॥ १६१
इत्युक्ता सा तया व्याजसख्या हंसावली तदा। निरगात्तत्सखीवेषा तथेत्यन्तःपुरान्निशि ॥ १६२
प्रायाच्च जन्याकीर्णेन पुरीद्वारेण तेन सा। निर्गत्यालक्षिता तस्य मूलं शाल्मलिशाखिनः ॥ १६३
दृष्ट्वान्धकारगहनं तद्गर्भं नाविशच्च सा। बिभ्यती तत्समीपस्थं त्वारुरोह वटद्रुमम् ॥ १६४
तत्रासीत्पल्लवच्छन्ना कुसखी मार्गदर्शिनी। बुबुधे न तु तस्यास्तां कुसृतिं सरलाशया ॥ १६५
तावद्राजकुले तत्र लग्नकालेऽभ्युपस्थिते। धृतहंसावलीवेषां स्थितां कनकमञ्जरीम् ॥ १६६
आनाय्यारोपितां वेदीं राज्ञा तां कमलाकरः। उपयेमे सनीरङ्गीं[1] निशि केनाप्यलक्षिताम् ॥ १६७
कृतोद्वाहो गृहीत्वा च व्याजहंसावलीं द्रुतम्। मायाकनकमञ्जर्याशोककर्या युतां स ताम् ॥ १६८
अद्यैव शुभनक्षत्रवशात्स्वकटकं प्रति। तेन प्रत्यक्पुरीद्वारमार्गेण प्रययौ ततः ॥ १६९
गच्छंश्च शाल्मलितरोर्निकटं प्राप तस्य सः। यस्यान्तिके विप्रलब्धा स्थिता हंसावली वटे ॥ १७०
प्राप्तं चात्र तमालिङ्ग्य त्रस्तेव कमलाकरम्। कूटहंसावली साशु तदारूढेभपृष्ठगा ॥ १७१
संभ्रमात्तेन पृष्टा च कैतवात्साश्रुरब्रवीत्। आर्यपुत्राद्य जानेऽहं स्वप्नेऽस्माच्छाल्मलिद्रुमात् ॥ १७२
निर्गत्य राक्षसीव स्त्री मां भक्षयितुमग्रहीत्। ततः प्रधाव्य केनापि ब्राह्मणेनास्मि मोचिता ॥ १७३
तेनैवाश्वास्य चोक्ताहं पुत्र्यमुं दाहयेस्तरुम्। एतस्मान्निरियात्स्त्री चेत्क्षेप्तव्यात्रैव सा पुनः ॥ १७४
एवं शिवं स्यादित्युक्त्वा द्विजे तस्मिंस्तिरोहिते। प्रबुद्धाहं स्मृतं चैतद्दृष्ट्वा तरुममुं मया ॥ १७५
तेन भीताहमित्युक्तस्तया स कमलाकरः। आदिदेशाशु भृत्यान्स्वांस्तयोर्दाहे तरुस्त्रियोः ॥ १७६
अथाशुस्ते च तं वृक्षं कूटहंसावली च सा। दग्धां हंसावलीमत्र मेने तस्मादनिर्गताम् ॥ १७७
ततस्तया स कमलाकरो निर्वृतया सह। सत्यहंसावलीलाभं मन्वानः कटकं ययौ ॥ १७८
ततोऽपि त्वरितं यातः प्रातः स्वां कोशलां पुरीम्। कृतकार्यत्वतुष्टेन पित्रा राज्येऽभ्यषिच्यत ॥ १७९
वनं पितरि याते च सोऽनुशास्ति स्म मेदिनीम्। व्याजहंसावलीं भार्यां बिभ्रत्कनकमञ्जरीम् ॥ १८०
स मनोरथसिद्धिस्तु दूरे राजकुलादभूत्। बन्दी तया परिज्ञानाच्छरीरभयशङ्कया ॥ १८१
सापि हंसावली तस्यां रात्रौ तत्र वटे स्थिता। श्रुत्वा दृष्ट्वा च तत्सर्वं वञ्चितास्मीत्यबुध्यत ॥ १८२
अचिन्तयत्तु तत्कालं प्रयाते कमलाकरे। अहो ममैतया कान्तः कुसख्या छद्मना हृतः ॥ १८३
अहो दग्ध्वैव मामस्मान्निर्वृतिं प्राप्तुमीप्सति। अश्रेयसे न वा कस्य विश्वासो दुर्जने जने ॥ १८४
तदस्य मत्कृते दग्धस्याङ्गारार्चिषि शाल्मलेः। क्षिपाम्यभव्यमात्मानं भवस्याम्यानृणा तरोः ॥ १८५
इत्यालोच्यावरुह्याथ वटात्प्राणव्ययोन्मुखी। जातबुद्धिर्विधेर्योगादित्यन्तर्विममर्श सा ॥ १८६
किं त्यजामि वृथात्मानं जीवन्ती नचिरादहम्। मन्युप्रतिक्रियां तस्याः करिष्यामि सखीद्रुहः ॥ १८७
तातस्य हि तदा स्वप्ने ज्वराक्रान्तस्य शौरिणा। तच्छान्तिं मत्करस्पर्शादादिश्योक्तमभूदिदम् ॥ १८८
हंसावली पतिं प्राप्स्यत्युचितं कमलाकरम्। कालं कमपि तु क्लेशो भविताস्या मनागिति ॥ १८९
तद्गत्वा क्वापि पश्यामि तावदित्यवधार्य सा। हंसावली ततः प्रायान्निर्जनामटवीं प्रति ॥ १९०
दूरं गतायास्तस्याश्च क्लान्तायाः प्रस्खलद्गतेः। मार्गप्रकटनायेव दयया सा ययौ क्षपा ॥ १९१
तद्दर्शनसमुद्भूतकृपावेशवशादिव। मुमोच यौरवश्यायबाष्पवारिकणोत्करम् ॥ १९२
तदश्रुमार्जनायेव प्रसारितकरो रविः। दर्शिताशाकृताश्वासमुदगाद्गुणिबान्धवः ॥ १९३
ततः सा किंचिदुच्छ्वस्ता निरस्तजनदर्शना। उत्पथैः क्रमशो यान्ती कुशकण्टकविक्षता ॥ १९४

[1] मुखाच्छादनवस्त्रं नीरङ्गीत्युच्यते.

राजपुत्री चिरात्प्राप वनमेकं विहंगमैः । गुञ्जद्भिरित एहीति वदद्भिरिव राजितम् ॥ १९५
तत्र सा प्राविशच्छ्रान्ता वीज्यमानेव सादरम् । वातवेल्लल्लताजालतालवृन्तैरनोकहैः ॥ १९६
ददर्श च वनं सा तन्मधुस्फीतं प्रियोत्सुका । प्रफुल्लसहकारस्थकलकूजितकोकिलम् ॥ १९७
विग्ना च चिन्तयामास मां दहत्यत्र यद्यपि । पुष्परेणुपिशङ्गोऽयं मलयानिलपावकः ॥ १९८
तरुभ्यो निपतन्तश्च कुसुमप्रकरा इमे । नदत्स्वलिषु निघ्नन्ति कामबाणोत्करा इव ॥ १९९
तथापि कुसुमैरेभिः पूजयन्ती रमापतिम् । इहैव तावत्तिष्ठामि क्षपयन्ती स्वदुष्कृतम् ॥ २००
इति संचिन्त्य वापीषु स्नान्ती तस्थौ फलाशना । तत्र पूजापरा शौरेः प्रेप्सुः सा कमलाकरम् ॥ २०१
अत्रान्तरे कोशलायां विधियोगाज्ज्वरेण सः । चातुर्थिकेन दीर्घेण जगृहे कमलाकरः ॥ २०२
तद्दृष्ट्वा तत्र सा पापा कूटहंसावली तदा । भीता व्यचिन्तयच्चेतस्येवं कनकमञ्जरी ॥ २०३
एकं तावद्भयं मेऽन्तः सदाशोककरीकृतम् । मन्त्रभेदात्तदुपरि द्वितीयमिदमागतम् ॥ २०४
यदस्य मत्प्रभोः पूर्वं कथितो ज्वरनाशनः । हंसावलीकरस्पर्शस्तत्पित्रा जनसंनिधौ ॥ २०५
तच्चाधुना ज्वराक्रान्तो यदैवैष स्मरिष्यति । अतत्प्रभावा नङ्क्ष्यामि तदैवोद्घाटिता सती ॥ २०६
तन्मे कयापि योगिन्या यः पूर्वं ज्वरचेटकः । प्रोक्तो विधिवदस्यार्थे ज्वरघ्नं साधयामि तम् ॥ २०७
तस्यैवाग्रे च हन्म्येतां युक्त्याशोककरीं यतः । मानुषाङ्गैः कृतार्घादिः स सिद्धोऽभीष्टकृद्भवेत् ॥ २०८
एवं राज्ञो ज्वरे नष्टेऽशोककर्यानया सह । उभे भये मे शाम्येतां न पश्याम्यन्यथा शिवम् ॥ २०९
इत्यालोच्याविरुद्धं यत्तत्तस्यै स्वमनीषितम् । शशंसाशोककर्यै सा मानुषाघातवर्जितम् ॥ २१०
ततो दत्तानुमतया संभारे ढौकिते तया । तद्द्वितीया स्वया युक्त्या बहिः कृत्वा परिच्छदम् ॥ २११
द्वारान्तरेण निर्गत्य गुप्तमन्तःपुरान्निशि । ययौ शून्यैकलिङ्गं सा खड्गहस्ता शिवालयम् ॥ २१२
तत्र खड्गहतच्छागशोणितस्नातरञ्जितम् । तदस्रकल्पितार्घं च तदन्त्रस्रग्विवेष्टितम् ॥ २१३
आनर्च शिवलिङ्गं सा तद्धृत्पद्मेन मूर्धनि । धूपं दत्त्वा तदक्षिभ्यां तच्छिरोऽस्मै बलिं ददौ ॥ २१४
ततस्तदग्रवेद्यां च लिप्तायां रक्तचन्दनैः । लिलेख गोरोचनया कमलं साष्टपल्लवम् ॥ २१५
तत्कर्णिकायां सास्रेण पिष्टेन रचितं ज्वरम् । भस्ममुष्टिप्रहरणं त्रिपादं त्रिमुखं न्यधात् ॥ २१६
पल्लवेषु निवेश्यात्र परिवारं यथाविधि । ज्वरस्य निजमन्त्रेण तस्याह्वानं व्यधत्त सा ॥ २१७
ततः पूर्वोक्तवत्सास्य स्नानार्घ्याद्युपहारिकम् । चिकीर्षुर्मानुषाङ्गास्त्रैः प्राहाशोककरीं स्म ताम् ॥ २१८
भूतले न्यस्तसर्वाङ्गं देवस्य सखि सांप्रतम् । कुरु प्रणाममेवं हि श्रेयस्तव भविष्यति ॥ २१९
ततस्तथेति धरणौ प्रणताया दुराशया । तस्याः खड्गप्रहारं सा ददौ कनकमञ्जरी ॥ २२०
तेन दैवान्मनाक्स्कन्धे क्षता सत्रासमुत्थिता । विद्रुता सानुयान्तीं तां दृष्ट्वा कनकमञ्जरीम् ॥ २२१
त्रायध्वमिति चक्रन्द यदाशोककरी मुहुः । तेनाभ्यधावन्नगरीरक्षिणोऽत्राभितो जनाः ॥ २२२
ते दृष्ट्वाकृष्टखड्गां तां भीमां कनकमञ्जरीम् । मृतकल्पां व्यधुः शस्त्रप्रहारै राक्षसीधिया ॥ २२३
बुद्ध्वाशोककरीवक्त्राद्यथातत्त्वं ततश्च ते । द्वे ते राजकुलं निन्युः पुरस्कृत्य पुराधिपम् ॥ २२४
विज्ञप्तस्तत्र तै राजा संभ्रान्तः कमलाकरः । आनाययत्कुभार्यां तां स्वान्तिकं तां च तत्सखीम् ॥ २२५
तयोश्चानीतयोर्भीत्या प्रहारव्यथया च सा । तीव्रयोत्क्रान्तजीवाभूत्सद्यः कनकमञ्जरी ॥ २२६
ततोऽशोककरीं राजा व्रणितां तां स तत्सखीम् । किमिदं निर्भया ब्रूहीत्यपृच्छदतिदुर्मनाः ॥ २२७
सा च तस्मै तदा मूलात्तथा सर्वमवर्णयत् । यथा कनकमञ्जर्या कृतं तद्व्याजसाहसम् ॥ २२८
ततोऽधिगततत्त्वार्थः स राजा कमलाकरः । एवं शुशोच तत्कालमात्मानं भृशदुःखितः ॥ २२९
विप्रलब्धोऽस्म्यहं कूटहंसावल्या बतैतया । मूढेन यत्स्वहस्तेन दग्धा हंसावली मया ॥ २३०
स्वदुष्कृतफलं तावत्पापया लब्धमेतया । यद्राजमहिषी भूत्वा प्राप्तैषा वधमीदृशम् ॥ २३१
कथं तु रूपमात्रेण संमोह्याहं शिशुर्यथा । हृतरत्नेन मुषितो दत्त्वा काचं कुवेधसा ॥ २३२
ज्वरशान्त्यै मया सोऽपि ज्ञप्तिकृद्बत न स्मृतः । हंसावलीकरस्पर्शस्तत्पितुर्विष्णुनोदितः ॥ २३३

एवं स विलपन्स्मृत्वा व्यमृशत्कमलाकरः । हंसावली पतिं प्राप्स्यत्येषा क्लेशो मनाक्पुनः ॥ २३४
भवितास्या इति वचो वैष्णवं मेघमालिना । तत्पित्रोक्तं हि मे तच्च प्रसिद्धं न भवेन्मृषा ॥ २३५
तत्सा कथंचिदन्यत्र गता जीवेत्कदाचन । स्त्रीचित्तस्येव दैवस्य को वेत्ति गहनां गतिम् ॥ २३६
तन्मनोरथसिद्धिः स बन्दी मेऽत्र गतिः पुनः । इत्यालोच्य स तं बन्दिवरमानाययन्नृपः ॥ २३७
अब्रवीच्च कथं भद्र भवान्नैवेह दृश्यते । क्व मनोरथसिद्धिर्वा तेषां ये धूर्तवञ्चिताः ॥ २३८
तच्छ्रुत्वा सोऽवदद्बन्दी मन्त्रभेदभयाहता । एषैवाशोककर्यत्र महाराज ममोत्तरम् ॥ २३९
न च हंसावलीहेतोः कार्या तेऽत्र विषादिता । आदिष्टा हरिणैवास्याः कंचित्कालं हि दुःस्थितिः ॥ २४०
तन्नित्याराधनोद्योगान्निश्चितं तां स रक्षति । प्रभवत्येव धर्मो हि नेह दृष्टं तथा च किम् ॥ २४१
तदहं देव यास्यामि तत्प्रवृत्त्युपलब्धये । इति तेन स विज्ञप्तो बन्दिना क्षितिपोऽब्रवीत् ॥ २४२
आत्मनाहं प्रयास्यामि तामन्वेष्टुं त्वया सह । अन्यथा नैव मे चेतः क्षणमप्यवतिष्ठते ॥ २४३
एवमुक्त्वा विनिश्चित्य प्रज्ञाढ्याख्यस्य मन्त्रिणः । हस्तेऽन्येद्युर्निचिक्षेप राज्यं स कमलाकरः ॥ २४४
वार्यमाणोऽप्यलं तेन नगर्याः प्रययौ ततः । निर्गत्यालक्षितः साकं स मनोरथसिद्धिना ॥ २४५
बभ्राम च विचिन्वानः क्षेत्राश्रमवनानि सः । अनपेक्षितदेहार्तिर्गुर्वी ह्याज्ञा मनोभुवः ॥ २४६
क्रमेण प्राप दैवात्तत्काननं यत्र सा स्थिता । हंसावली तपस्यन्ती समनोरथसिद्धिकः ॥ २४७
तत्रापश्यच्च तां मूले रक्ताशोकस्य भास्वतः । अन्त्यामिव कलामिन्दोः क्षामां पाण्डुमनोरमाम् ॥ २४८
उवाच बन्दिनं तं स केयं निःशब्दनिश्चला । ध्यानस्था देवता किं स्याद्रूपमस्या ह्यमानुषम् ॥ २४९
तच्छ्रुत्वा वीक्ष्य सोऽवादीद्बन्दी दिष्ट्याभिवर्धसे । देव हंसावलीप्राप्त्या सैव ह्येषात्र तिष्ठति ॥ २५०
श्रुत्वा तत्प्रेक्ष्य तौ तं च प्रत्यभिज्ञाय बन्दिनम् । चक्रन्द सा नवीभूतदुःखा हंसावली तदा ॥ २५१
हा तात हा हतास्म्यार्यपुत्र हा कमलाकर । हा मनोरथसिद्धे हा विपरीतविधे विधे ॥ २५२
इत्येवं विलपन्ती सा मुमूर्च्छ भुवि सोऽपि ताम् । श्रुत्वा दृष्ट्वापतद्भूमौ दुःखार्तः कमलाकरः ॥ २५३
आश्वासितौ ततस्तेन तौ मनोरथसिद्धिना । उभौ निश्चितविज्ञातपरस्परसुनिर्वृतौ ॥ २५४
वियोगार्णवोत्तीर्णौ कांचिन्मुदमवापतुः । अन्योन्यं च क्रमात्सर्वं स्वं स्वं वृत्तान्तमूचतुः ॥ २५५
ततो हंसावलीं तां स गृहीत्वा कमलाकरः । बन्दिना सहितस्तेन ययौ स्वां कोशलां पुरीम् ॥ २५६
तत्रामयहरं तस्याः पाणिं विधिवदग्रहीत् । आनायिते तत्पितरि प्रतीते मेघमालिनि ॥ २५७
तदा तया समं युक्तो विशुद्धोभयपक्षया । हंसावल्यातिविमलः शुशुभे कमलाकरः ॥ २५८
अरंस्त च तया साकं कृती फलितधैर्यया । शासन्महीमवियुतः स मनोरथसिद्धिना ॥ २५९
एवमापद्यसंत्यक्तधैर्यैः सर्वमवाप्यते । तद्वत्स मा तनुं त्याक्षीर्जीवन्प्राप्स्यसि तं प्रभुम् ॥ २६०
इत्थं स वृद्धपथिकः कथामाख्याय देव मे । निवार्य मरणान्मां च यथाकामं ययौ ततः ॥ २६१
इत्युक्त्वा तत्र रात्रौ स चण्डकेतुगृहे तदा । मृगाङ्कदत्तमवदत्पुनर्भीमपराक्रमः ॥ २६२
अथ लब्धोपदेशः संस्ततोऽटव्यास्त्वदाप्तये । गन्तुं तवाभिलषितामगामुज्जयिनीमहम् ॥ २६३
तत्र युष्मानसंप्राप्य श्रान्तः कस्याश्चन स्त्रियः । दत्तभोजनमूल्योऽहं वासाय प्राविशं गृहम् ॥ २६४
तत्र तद्दत्तशयनः क्षणं सुप्तः श्रमादहम् । प्रबुध्य यावत्पश्यामि कौतुकान्निभृतस्थितः ॥ २६५
तावत्सा स्त्री गृहीत्वैव यवमुष्टिं गृहान्तरे । समन्तादावपत्तत्र मन्त्रेण स्फुरिताधरा ॥ २६६
तैर्यवैस्तत्क्षणं जातैः फलितैः पक्वतां गतैः । लूनैर्भृष्टैश्च पिष्टैश्च सक्तवो विहितास्तया ॥ २६७
तान्सक्तून्कांस्यपात्र्यां सा निधायाद्भिः समुक्षितान् । पूर्वावस्थं गृहं कृत्वा स्नानाय निरगाद्द्रुतम् ॥ २६८
ततस्तां शाकिनीं मत्वा स्वैरमुत्थाय सत्वरम् । अन्यत्र सक्तुभाण्डे तान्पात्र्यां सक्तून्न्याधमहम् ॥ २६९
सक्तुभाण्डात्ततश्चान्यान्सक्तूनुद्धृत्य तावतः । तस्यां स्थापितवानस्मि पात्र्यां रक्षितसंकरः ॥ २७०
ततो मय्याश्रिते भूयः शयनं स्त्री प्रविश्य सा । उत्थाप्य मामदात्पात्र्यास्तान्सक्तून्भोजनाय मे ॥ २७१
स्वयं च बुभुजे तस्माद्गृहीत्वा सक्तुभाण्डतः । तान्सिद्धसक्तूनज्ञातमत्कृतव्यत्यया सती ॥ २७२

मुक्तैस्तैः सक्तुभिश्छागी समपद्यत सा तदा । ततो नीत्वा मयामर्षाद्विक्रीता सौनिकस्य सा ॥ २७३
ततः सौनिकभार्या मामुपेत्यावोचत क्रुधा । मत्सखी विप्रलब्धेयं त्वया तल्लप्स्यसे फलम् ॥ २७४
इति तत्तर्जितो गत्वा ततो गुप्तं बहिः पुरः । श्रान्तः शयितवानस्मि मूले न्यग्रोधशाखिनः ॥ २७५
तथाभूतस्य मे तत्र तया सौनिकभार्यया । आगत्य दुष्टयोगिन्या गलेऽबध्यत सूत्रकम् ॥ २७६
तस्यां गतायां पापायां प्रबुद्धोऽहं च तत्क्षणम् । पश्यामि यावत्प्राप्तोऽस्मि मयूरत्वं स्थितस्मृतिः ॥ २७७
ततो दिनानि कतिचिद्विग्नो भ्राम्यन्नितस्ततः । जीवन्शाकुनिकेनाहं गृहीतोऽभूवमेकदा ॥ २७८
स चानीय ददाति स्म मामस्मै चण्डकेतवे । भिल्लराजप्रतीहारमुख्याय प्राभृतीकृतम् ॥ २७९
प्रतीहारोऽप्ययं प्रादात्स्वभार्यायै तदैव ताम् । तयाहं स्थापितश्चास्मि मण्डपे क्रीडनीयकः ॥ २८०
अद्येह दैवानीतेन त्वया मे कण्ठसूत्रके । मुक्ते प्राप्तोऽस्मि तां देव पुनः स्वां मानुषाकृतिम् ॥ २८१
तदितो मङ्क्षु गच्छावः प्रतीहारो हि हन्त्यसौ । रात्रिचर्यासखीन्पापः प्रतिभेदभयात्सदा ॥ २८२
स्वं चानीतोऽमुना रात्रिचर्याद्रष्टाद्य तत्प्रभो । योगिनीनिर्मितं बद्ध्वा कण्ठे सूत्रमिदं भवान् ॥ २८३
मयूरीभूय निर्यातु गवाक्षेणामुना बहिः । ततः प्रसारितभुजः सूत्रं कण्ठात्तवोच्छ्रितात् ॥ २८४
मुक्त्वा बद्ध्वात्मनः कण्ठे तद्वन्निर्याम्यहं द्रुतम् । त्वयाथ मुक्ते मे सूत्रे भवावः प्रकृतिस्थितौ ॥ २८५
बहिरर्गलितेनास्ति द्वारेण न विनिर्गमः । एवमुक्तवति प्राज्ञे तस्मिन्भीमपराक्रमे ॥ २८६
मृगाङ्कदत्तस्तद्युक्तस्तथेति निरगात्ततः । जगाम च स्वनिलयं स्थितान्यसचिवद्वयम् ॥ २८७
तत्र सर्वेऽपि तेऽन्योन्यकृतस्ववृत्तान्तवर्णनैः । निन्युर्मृगाङ्कदत्ताद्याः प्रहृष्टास्तां विभावरीम् ॥ २८८
प्रातर्मृगाङ्कदत्तस्य पार्श्वं तस्याजगाम सः । मायाबटुर्भिल्लराजस्तस्यां पल्ल्यामधीश्वरः ॥ २८९
स पृष्टरात्रिसौख्यस्तं राजपुत्रं विनोदयन् । अक्षैः क्रीडाम एहीति मायाबटुरभाषत ॥ २९०
ततस्तं सप्रतीहारं वीक्ष्य भिल्लं समागतम् । सखा मृगाङ्कदत्तस्य सोऽथ श्रुतधिरभ्यधात् ॥ २९१
किमक्षैर्विस्मृतं किं वा दृश्यमद्य हि वर्तते । प्रतीहारमयूरस्य नृत्यमुक्तं ह्य एव यत् ॥ २९२
श्रुत्वैतच्छ्रुतधेः स्मृत्वा कौतुकाच्छबरेश्वरः । प्राहिणोत्स प्रतीहारं मयूरानयनाय तम् ॥ २९३
कथं प्रमादाद्विस्मृत्य न स चौरो मया हतः । साक्षी रात्रिरहस्यस्य क्षिप्तोऽपि शिखिवेश्मनि ॥ २९४
तद्यामि शीघ्रमुभयं करोमीति विचिन्तयन् । स्मृत्वोद्धातात्प्रतीहारः सोऽप्यगात्सत्वरं गृहम् ॥ २९५
तत्र यावत्प्रविश्यैव वीक्षते शिखिवेश्मनि । तावन्न चौरं नाप्यत्र स मयूरं ददर्श तम् ॥ २९६
अथ भीतविषण्णः स गत्वा स्वं नृपमब्रवीत् । निशि चौरेण मे नीतः स मयूरः प्रभो इति ॥ २९७
प्रसिद्धः स महाचौरो येन बर्ही हृतः स ते । इति तत्र स्मितमुखेनोक्ते श्रुतधिना ततः ॥ २९८
दृष्ट्वा मृगाङ्कदत्तादीन्हसतोऽन्योन्यदर्शिनः । मायाबटुस्तान्निर्बन्धात्किमेतदिति पृष्टवान् ॥ २९९
ततः क्षत्रा यथा तेन रात्रौ मेलो यथा च सः । राजपत्न्या गृहं कामी गत्वा शस्त्रकलिं व्यधात् ॥ ३००
यथा क्षत्तृगृहप्राप्तिर्यथा भीमपराक्रमः । मोचितोऽत्र मयूरत्वान्निर्गमश्च यथा ततः ॥ ३०१
तथा मृगाङ्कदत्तः स्वं क्षत्तुः संबन्धिनं च तम् । वृत्तान्तं शबरेन्द्राय तस्मै सर्वं शशंस सः ॥ ३०२

तद्बुद्ध्वाच्छुरिकापरिक्षतकरामन्तःपुरे चेटिकां
दृष्ट्वा तामथ वीक्ष्य कण्ठरचिते तस्मिन्क्षणं सूत्रके ।
भूयो भीमपराक्रमस्य शिखितां शुद्धान्तविध्वंसिनं
क्षत्तारं शबरेश्वरः सपदि तं मायाबटुं सोऽवधीत् ॥ ३०३

तां त्वविनीतां राज्ञीं मृगाङ्कदत्तेन रक्षितां वधतः ।
दूरस्थितां चकार स मञ्जुमतीं परिहृतस्पर्शाम् ॥ ३०४

तत्पूजितः स च ततोऽत्र पुलिन्दपल्ल्यामासीद्दिनानि किल तानि मृगाङ्कदत्तः ।
बद्धोद्यमोऽप्यधिगमाय शशाङ्कवत्याः संप्राप्तशेषसखिसंगमसव्यपेक्षः ॥ ३०५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुर्थस्तरङ्गः ।

पञ्चमस्तरङ्गः ।

एवं विमलबुद्ध्यादियुतो यावत्स तिष्ठति । मृगाङ्कदत्तो भिल्लाधिपतेर्मायाबटोर्गृहे ॥ १
तावत्तत्संनिधावेत्य तमात्मीयश्चमूपतिः । एकदा शबराधीशं ससंरम्भो व्यजिज्ञपत् ॥ २
त्वदादेशाद्विचिन्वद्भिर्भगवत्याः कृते प्रभो । उपहाराय पुरुषः प्राप्तोऽस्माभिः स तादृशः ॥ ३
येनास्मद्वीरयोधानां खण्डितं शतपञ्चकम् । आनीतश्च स भूयिष्ठप्रहारविवशीकृतः ॥ ४
तच्छ्रुत्वा स पुलिन्देन्द्रः सेनापतिमुवाच तम् । प्रवेश्यतामिहैवाशु सोऽस्माकं दृश्यतामिति ॥ ५
ततः प्रवेशितस्तेन यावत्सर्वैः स दृश्यते । शस्त्रक्षतोद्यद्रक्ताक्तरणधूलीकलङ्कितः ॥ ६
गण्डसिन्दूरसंपृक्तस्रवद्दानाम्बुपङ्किलः । पाशैर्विवेष्टितो घूर्णन्मत्तो बद्ध इव द्विपः ॥ ७
तावत्तं प्रत्यभिज्ञाय मन्त्रिणं स्वं गुणाकरम् । मृगाङ्कदत्तो धावित्वा कण्ठे प्ररुदितोऽग्रहीत् ॥ ८
बुद्ध्वाथ तत्सखिभ्यस्तं स भिल्लेन्द्रो गुणाकरम् । प्रह्वस्तमाश्वासितवान्पादलग्नं निजप्रभोः ॥ ९
प्रवेश्य च गृहं स्नातं तं बद्धव्रणपट्टकम् । उपाचरद्भिषक्प्रोक्तैः स पथ्यैः पानभोजनैः ॥ १०
ततो मृगाङ्कदत्तस्तं समाश्वस्तं स्वमन्त्रिणम् । सखे कथय वृत्तान्तः कस्तवेति स पृष्टवान् ॥ ११
अथ सर्वेषु शृण्वत्सु स जगाद गुणाकरः । श्रूयतां देव वृत्तान्तमात्मीयं कथयामि वः ॥ १२
ततो नागस्य शापेन भवद्भ्योऽहं वियोजितः । न किंचिदविदं मोहाद्दूरां तामटवीं भ्रमन् ॥ १३
चिरात्संप्राप्तबुद्धिश्च दुःखितोऽहमचिन्तयम् । अहो दुःशिक्षितस्यैष विलासः कोऽपि वेधसः ॥ १४
मृगाङ्कदत्तः खिद्येत स्थितो हर्म्यतलेऽपि यः । सोऽस्यामटव्यां संतप्तसिकतायां कथं भवेत् ॥ १५
कथं च ते वयस्याः स्युरित्यन्तर्विमृशन्मुहुः । दैवात्संप्राप्तवानस्मि पर्यटन्विन्ध्यवासिनीम् ॥ १६
तस्या उपाहृतानेकनानाजीवमहर्निशम् । प्राविशं भवनं देव्याः कृतान्तसदनोपमम् ॥ १७
तत्र देवीं प्रणम्याहमपश्यं पुरुषं शवम् । कण्ठान्तर्गतनिस्त्रिंशहस्तमात्मोपहारिणम् ॥ १८
तं दृष्ट्वैव पुनर्दुःखहेतोर्मे त्वद्वियोगिनः । अभूदात्मोपहारेण देवीं तोषयितुं मतिः ॥ १९
तत्खड्गमेव धावित्वा यावदस्मि गृहीतवान् । तावन्निवारयन्तीव दूराद्वार्धककम्पिना ॥ २०
शिरसा समुपेत्यैव सकृपा कापि तापसी । निवार्य मरणात्पृष्ट्वा वृत्तान्तं निजगाद माम् ॥ २१
मैवं कृथाः पुनर्दृष्टो मृतानामपि संगमः । किं पुनर्जीवतां पुत्र तथा चैतां कथां शृणु ॥ २२
अहिच्छत्रेति नाम्नास्ति विख्याता नगरी भुवि । तस्यामुदयतुङ्गाख्यः पुराभूद्राजकुञ्जरः ॥ २३
तस्य क्षत्ता च कमलमतिर्नाम महानभूत् । विनीतमतिरित्यासीत्तस्याप्यसदृशः सुतः ॥ २४
समाहृतगुणेनापि प्रापि यस्य न तुल्यता । सच्छिद्रेण मृणालेन चापेन कुटिलेन च ॥ २५
स कदाचित्सुधाधौतप्रासादोपरि पञ्चके । स्थितो ददर्श शीतांशुमुद्गच्छन्तं निशामुखे ॥ २६
कामकल्पद्रुमोत्थेन पल्लवेन विनिर्मितम् । रजन्या वासवदिशः कर्णपूरमिवोज्ज्वलम् ॥ २७
क्रमात्तद्रश्मिजालैश्च जगद्वीक्ष्य विराजितम् । स विनीतमतिर्जातहृदुल्लासो व्यचिन्तयत् ॥ २८
अहो चन्द्रिकया मार्गाः सुधयेवावभासिताः । दृश्यन्ते तदमीष्वेको गत्वा न विहरामि किम् ॥ २९
इति ध्यात्वैव स धनुर्धरो निर्गत्य पर्यटन् । क्रोशमात्रं गतोऽकस्माच्छुश्राव रुदितध्वनिम् ॥ ३०
गत्वा तदनुसारेण ददर्शैकां स कन्यकाम् । दिव्यरूपां प्ररुदतीं तरुमूलसमाश्रयाम् ॥ ३१
पप्रच्छ च शुभे का त्वं किं चायं नीयते तुलाम् । मुखेन्दुः समलस्येन्दोस्त्वयाश्रुमलिनीकृतः ॥ ३२
इत्युक्ता तेन सावोचत्सुता नागपतेरहम् । कन्या विजयवत्याख्या महात्मन्गन्धमालिनः ॥ ३३
स मे पिता रणाभ्रष्टः शप्तो वासुकिनैकदा । यास्यसि त्वं रिपोः पाप जितः सन्दासतामिति ॥ ३४
तच्छापात्स च यक्षेण कालजिह्वेन वैरिणा । जित्वा मनोनुगः पुष्पभारवाहीकृतः सदा ॥ ३५
तद्दुःखात्तत्कृते गौरीं तपसाहमतोषयम् । प्रत्यक्षीभूय मे सा च भगवत्येवमब्रवीत् ॥ ३६
वत्से शृण्वस्ति सरसो मानसस्यान्तरे महत् । सहस्रदलविस्तीर्णं स्फाटिकं दिव्यमम्बुजम् ॥ ३७
यदर्ककरसंस्पर्शकीर्णतेजो विराजते । शेषस्येव शिरो भूरिफणं रत्नांशुपिञ्जरम् ॥ ३८

तदेकदा वैश्रवणो दृष्ट्वा स्नात्वात्र मानसे। जातश्रद्धोऽम्बुजे तस्मिन्हरस्यारभतार्चनम् ॥ ३९
तत्कालं चानुगास्तस्य यक्षास्तत्र सरोन्तरे। विजहुश्चक्रहंसादिरूपैर्वारिचरोचितैः ॥ ४०
तत्र युष्मद्रिपोस्तस्य कालजिह्वस्य दैवतः। विद्युज्जिह्व इति ज्येष्ठो भ्राता यक्षः प्रियासखः ॥ ४१
क्रीडंश्चक्राह्वरूपेण पक्षविक्षेपघट्टनात्। कुबेरस्य कराग्रस्थमर्घ्यपात्रमपातयत् ॥ ४२
ततः स धनदः क्रुद्धः शापेनात्रैव मानसे। चक्राह्वमेव तं चक्रे विद्युज्जिह्वं सभार्यकम् ॥ ४३
तथाकृतं च संप्रीत्या रात्रौ रात्रौ विनोदयन्। कृततत्प्रेयसीरूपो विरहातुरमग्रजम् ॥ ४४
कालजिह्वोऽद्य तत्रास्ते स दिवा निजरूपभृत्। दासीकृतेन त्वत्पित्रा सहितो गन्धमालिना ॥ ४५
तत्तत्र प्रेर्यतां पुत्रि प्रतीहारसुतस्त्वया। अहिच्छत्रो महावीरो विनीतमतिरुद्यमी ॥ ४६
इममश्वं च खड्गं च गृहाणाभ्यां विजित्य तम्। यक्षं स हि प्रवीरस्ते जनकं मोचयिष्यति ॥ ४७
खड्गरत्नस्य चैतस्य स्वामी भवति यः पुमान्। स जित्वा निखिलाञ्शत्रून्राजा भवति भूतले ॥ ४८
एवमुक्त्वाश्वखड्गौ मे देवी दत्त्वा तिरोऽभवत्। अथ त्वत्प्रेरणायाद्य क्रमेणाहमिहागता ॥ ४९
देवीप्रसादसहितं वीक्ष्य त्वां निर्गतं निशि। युक्त्या चानीतवत्यस्मि संश्राव्य रुदितध्वनिम् ॥ ५०
तदेतत्साधयेष्टं मे सुभगेति तयार्थितः। स विनीतमतिस्तस्याः प्रतिपेदे तथेति तत् ॥ ५१
ततो गत्वैव सा नागकन्या तत्क्षणमेव तम्। वाजिनं जवनं श्वेतं पिण्डीभूतमिवैन्दवम् ॥ ५२
रश्मिजालं दिगन्तेषु तमो हन्तुं प्रधावितम्। तच्च वीरावलोकिन्या विप्रेक्षितमिव श्रिया ॥ ५३
खड्गरत्नमुपानीय सतारगगनच्छवि। तस्मै विनीतमतये समर्पयत ते उभे ॥ ५४
सोऽप्यात्तखड्गस्तुरगं तमारुह्य तया सह। प्रस्थितोऽश्वप्रभावेण तदैव प्राप मानसम् ॥ ५५
वातोद्धूताम्बुजकरं चक्रवाकार्तकूजितैः। निषेधदिव मा मेति कालजिह्वानुकम्पया ॥ ५६
दृष्ट्वा स तत्र यक्षाणां वशे तं गन्धमालिनम्। मुक्तये तस्य तान्क्षुद्रान्व्यद्रावयदसिक्षतान् ॥ ५७
तद्दृष्ट्वा स सरोमध्यान्मुक्तचक्राङ्गनावपुः। कालजिह्वः समुत्तस्थौ प्रावृण्मेघ इवोन्नदन् ॥ ५८
प्रवृत्ते चाहवे व्योम्नि कालजिह्वं तमुत्प्लुतम्। विनीतमतिरुत्प्लुत्य साश्वः केशेषु सोऽग्रहीत् ॥ ५९
छेत्तुमिच्छति यावच्च शिरः खड्गेन तस्य सः। तावत्स कृपणं जल्पन्यक्षस्तं शरणं ययौ ॥ ६०
ददौ च तस्मै मुक्तः सन्प्रीतिघ्नं स्वाङ्गुलीयकम्। प्रह्वो मुमोच दास्याच्च नागं तं गन्धमालिनम् ॥ ६१
गन्धमाली च मुदितो विनीतमतये तदा। तस्मै सुतां तां विजयवतीं दत्त्वा गृहानगात् ॥ ६२
ततः खड्गाङ्गुलीयाश्वकन्यारत्नयुतः कृती। स विनीतमतिर्जाते प्रभाते गृहमाययौ ॥ ६३
तत्राभिनन्दितः पित्रा पृष्टवृत्तान्ततोषिणा। राज्ञा च स्वेन तां नागकन्यां स परिणीतवान् ॥ ६४
अथ रत्नैश्चतुर्भिस्तैर्गुणैः स्वैश्चोपबृंहितम्। पिता कदाचित्कमलमतिः प्रोवाच तं रहः ॥ ६५
इहास्योदयतुङ्गस्य सुतैषा यास्ति भूपते। पुत्रोदयवती नाम सर्वविद्यासु शिक्षिता ॥ ६६
तस्यां पणः कृतोऽनेन यो विप्रः क्षत्रियोऽपि वा। वादे पराजयेत्तां तस्मै दद्यामिमामिति ॥ ६७
पराजिताश्च वादेन वादिनोऽन्येऽनयाखिलाः। जगदाश्चर्यरूपेण रूपेणेवामराङ्गनाः ॥ ६८
त्वं चैकवीरः स्वक्षत्रवादे तूर्णीं च तत्कथम्। स्थितोऽसि विजयस्वैनां वादे परिणयस्व च ॥ ६९
इत्युक्तस्तेन पित्रा स विमीतमतिरब्रवीत्। पेशलाभिः सह स्त्रीभिर्वादः कस्तात मादृशाम् ॥ ७०
तथाप्येतं त्वदादेशं करिष्यामीत्युदीरिते। प्रौढेन तेन स ययौ तत्पिता क्षितिपान्तिकम् ॥ ७१
राजपुत्र्या समं वादः प्रातर्देव करिष्यते। विनीतमतिनेत्यत्र स तं भूपं व्यजिज्ञपत् ॥ ७२
भूपेन प्रतिपन्नार्थो गृहमेत्य च सूनवे। विनीतमतये तस्मै तत्तथैव शशंस सः ॥ ७३
ततः प्राप्तः स्वयं तेन राजहंसेन संश्रिताम्। विनीतमतिरागत्य वादी विद्वत्सभाब्जिनीम् ॥ ७४
भास्वान्स भासयामास लोललोचनषट्पदैः। विलोक्यमानोऽभिमुखैर्गुणिवृन्दैस्तदाश्रितैः ॥ ७५
क्षणान्तरे चाययौ सा तत्रोदयवती शनैः। राजपुत्री गुणाकृष्टा कामस्येव धनुर्लता ॥ ७६
शोभिता गुणवद्भिः स्वैश्चारुशब्दैर्विभूषणैः। तत्पूर्वपक्षोपक्षेपमिव कुर्वद्भिरादितः ॥ ७७

निर्दोषे निर्मला चेत्स्यादिन्दुलेखाम्बरे ततः । भजेत्साम्यं निषण्णायास्तस्या मरकतासने ॥ ७८
चक्रेऽथ पूर्वपक्षं सा स्फुरद्दन्तांशुतन्तुषु । गुम्फयन्तीव सुश्लक्ष्णपदरत्नमयीं स्रजम् ॥ ७९
तमवद्यार्थसिद्धान्तं स विनीतमतिर्व्यधात् । क्षणान्निरुत्तरीकृत्य सुमुखीं तां पदे पदे ॥ ८०
ततः सभ्यैः स्तुते तस्मिन्स्वात्मनो राजपुत्रिका । पराजयेऽपि सद्भर्तृलाभाज्जयममन्यत ॥ ८१
स चाप्युदयतुङ्गोऽथ राजा हृष्टोऽत्र तां सुताम् । तस्मै विनीतमतये ददौ वादपणार्जिताम् ॥ ८२
तद्दत्तरत्नपूर्णोऽत्र स विनीतमतिस्ततः । ताभ्यां नागसुताराजसुताभ्यां सह तस्थिवान् ॥ ८३
एकदा जीयमानोऽन्यैर्द्यूतस्थो व्याकुलाशयः । निर्बन्धाद्ब्राह्मणेनैत्य स भोजनमयाच्यत ॥ ८४
ततः स कर्णे भृत्यस्य कथयित्वा क्रुधा वृतः । वस्त्रेणाच्छाद्य सिकतापात्रमस्मायदापयत् ॥ ८५
स तद्विप्रो गृहीत्वैव गुरुत्वात्सहिरण्यकम् । मत्वा प्रहर्षादेकान्तमुपेत्योदघाटयत् ॥ ८६
दृष्ट्वा च वालुकापूर्णमुत्सार्य धरणीतले । विप्रलब्धोऽस्मि तेनेति विषण्णः स्वगृहं ययौ ॥ ८७
विनीतमतिरप्येतदविचिन्त्य विमुच्य तत् । द्यूतं तस्थौ यथाकामं स्वगृहेषु प्रियासखः ॥ ८८
याति काले च जरसा विश्लिष्यत्संधिविग्रहः । सोऽभूदुदयतुङ्गोऽत्र राजा राज्यभराक्षमः ॥ ८९
ततो जामातरं राज्ये विनीतमतिमेव तम् । सोऽभिषिच्य ययौ गङ्गामपुत्रो देहमुक्तये ॥ ९०
प्राप्तराज्यश्च नचिरात्स विनीतमतिस्ततः । अश्वखड्गप्रभावेण जिगायापि दिशो दश ॥ ९१
ईतिघ्नस्याङ्गुलीयस्य प्रभावादस्य चाभवत् । राष्ट्रं नीरोगदुर्भिक्षं राज्ञो रघुपतेरिव ॥ ९२
एकदाभ्याययौ तं च भिक्षुर्देशान्तरान्नृपम् । रत्नचन्द्रमतिर्नाम वादिद्विरदकेसरी ॥ ९३
स च भिक्षुः कृतातिथ्यो राजानं तं गुणिप्रियम् । प्रार्थयामास वादार्थमीदृशं च पणं जगौ ॥ ९४
त्वया जितेन राजेन्द्र ग्राह्यं सुगतशासनम् । मया जितेन शुश्रूष्या विप्राः संत्यज्य चीवरम् ॥ ९५
एतच्छ्रुत्वा तथेत्युक्त्वा वादं तेन सहाकरोत् । स विनीतमती राजा भिक्षुणा दिनसप्तकम् ॥ ९६
अष्टमेऽहनि भिक्षुस्तं स जिगाय महीपतिम् । येनोदयवती वादिमुण्डमुद्गरिका जिता ॥ ९७
ततस्तेनोपदिष्टं स भिक्षुणा सौगतं मतम् । सत्त्वोपकारपुण्याढ्यं जातश्रद्धोऽग्रहीन्नृपः ॥ ९८
भिक्षूणां ब्राह्मणादीनां सर्वेषां च चकार सः । विहारसत्रवसतीर्जिनपूजापरायणः ॥ ९९
तदभ्यासोपशान्तश्च भिक्षोस्तस्मादयाचत । स बोधिसत्त्वचर्यायामाज्ञां सत्त्वोपकारिणीम् ॥ १००
सोऽथ भिक्षुस्तमाह स्म राजन्विगतकल्मषैः । बोधिसत्त्वमहाचर्या चरितव्येह नेतरैः ॥ १०१
तव चास्माद्दृशैर्लक्ष्यं स्थूलं नास्त्येव किल्बिषम् । किं तु त्वं सूक्ष्ममनया युक्त्यान्विष्य शमं नय ॥ १०२
इत्युक्त्वोपादिशत्तस्मै स भिक्षुः स्वप्नमाणवम् । सोऽपि तेन नृपः स्वप्नं दृष्ट्वास्मै प्रातरभ्यधात् ॥ १०३
आचार्य जाने स्वप्नेऽद्य परलोकमहं गतः । तत्र क्षुधार्थितान्नं मां पुरुषा दण्डिनोऽब्रुवन् ॥ १०४
भुङ्क्ष्वैता भूयसी राजन्नर्जितास्तप्तवालुकाः । या दत्ताः क्षुधिताय प्राग्ब्राह्मणायार्थिने त्वया ॥ १०५
दत्त्वा दश स्वर्णकोटीः पापादस्माद्विमोक्ष्यसे । इत्युक्तो दण्डहस्तैस्तैः प्रबुद्धोऽहं निशाक्षये ॥ १०६
एवमुक्त्वा तदाख्याय मूलं दत्त्वा च ता दश । स्वर्णकोटीः पुनश्चक्रे स राजा स्वप्नमाणवम् ॥ १०७
दृष्ट्वा पुनश्च स स्वप्नमुत्थायोषस्यवर्णयत् । अद्यापि दत्तं स्वप्ने तैः क्षुधितस्य परत्र मे ॥ १०८
वालुकाभोजनं पुंभिः पृष्टास्ते च ततो मया । दत्तेऽपि दाने भोक्ष्यामि किमिमाः सिकता इति ॥ १०९
ततस्ते मां रुदन्ति स्म तद्दानं तव निष्फलम् । तत्रैकं विप्रसंबन्धि सुवर्णमभवद्यतः ॥ ११०
एतच्छ्रुत्वा प्रबुद्धोऽहमिति स्वप्नमुदीर्य सः । राजा प्रायच्छदर्थिभ्यः स्वर्णकोटीः पुनर्दश ॥ १११
चक्रे ततश्च भूयोऽपि निशायां स्वप्नमाणवम् । दृष्ट्वा पुनश्च स स्वप्नमुत्थायोषस्यवर्णयत् ॥ ११२
अद्याप्यहो तैः पुरुषैस्तदेव सिकताशनम् । दत्तं परत्र मे स्वप्ने पृष्टश्चोक्तोऽस्मि तैरिदम् ॥ ११३
राजंस्तदपि ते दानं निष्फलं दस्युभिर्यतः । अटव्यां तव देशेऽद्य मुषित्वा निहतो द्विजः ॥ ११४
न च रक्षा त्वदीयाभूदरक्षाविफलं ततः । तत्तवाद्यतनं दानं तद्देहि द्विगुणं पुनः ॥ ११५
श्रुत्वैवेह प्रबुद्धोऽहमित्याख्याय स भिक्षवे । गुरवे नृपतिः स्वप्नं दानं तद्द्विगुणं ददौ ॥ ११६

ततो जगाद तं भिक्षुमाचार्यं कथमीदृशः । बहुच्छिद्रोऽनुपाल्यः स्याद्धर्मो जगति मादृशैः ॥ ११७
तच्छ्रुत्वा सोऽब्रवीद्भिक्षुर्देव नैतावता बुधैः । धर्मस्य रक्षणविधौ कार्यानुत्साहिनी मतिः ॥ ११८
धीरानुत्साहसंपन्नान्स्वधर्मानवमानिनः । देवता अभिरक्षन्ति पुष्णन्त्येषां च वाञ्छितम् ॥ ११९
तथा चेदं भगवतो बोधिसत्त्वस्य जातकम् । वाराहं न श्रुतं राजन्यदि तच्छ्रूयतां त्वया ॥ १२०
पुरा गुहायां विन्ध्याद्रावासीद्बुद्धांशसंभवः । वराहः कोऽपि सुहृदा मर्कटेन समं सुधीः ॥ १२१
स सर्वसत्त्वहितकृत्सख्या तेन युतः सदा । अतिथीन्पूजयन्कालं निनाय स्वोचितैः क्रमैः ॥ १२२
एकदा चोदभूत्तत्र दुर्दिनं पञ्च वासरान् । अच्छिन्नधाराविच्छिन्नप्राणिसंचारदारुणम् ॥ १२३
पञ्चमेऽह्नि वराहस्य सुप्तस्य सकपेर्निशि । आगात्तस्य गुहाद्वारं सिंहो भार्यासुतान्वितः ॥ १२४
स सिंहस्तत्र भार्यां तामवादीद्दुर्दिने ध्रुवम् । मरिष्यामोऽद्य दीर्घेऽस्मिन्नप्राप्तप्राणिनः क्षुधा ॥ १२५
तच्छ्रुत्वा साब्रवीत्सिंही सर्वे तावत्क्षुधा वयम् । न भवामस्तदेकां मां भुक्त्वा द्वौ जीवतं युवाम् ॥ १२६
त्वं हि प्रभुरयं पुत्रः प्राणसर्वस्वमावयोः । मादृशी भवितान्या ते तन्मयैवास्तु वां शिवम् ॥ १२७
एवमन्योन्यसंलापो जायापत्योस्तयोस्तदा । दैवात्प्रबुद्धः शुश्राव स वराहो महाशयः ॥ १२८
प्रीतश्चाचिन्तयद्दिष्ट्या क्व निशेयं क्व दुर्दिनम् । क्व चेदृगतिथिप्राप्तिरहो पुण्योदयोऽद्य मे ॥ १२९
तद्विघ्नो न भवेद्यावत्तावत्क्षणविनाशिना । किमनेन न देहेन तर्पयाम्यतिथीनमून् ॥ १३०
इत्युत्थाय स निर्गत्य वराहः स्निग्धया गिरा । सिंहं जगाद तं भद्र मा गमस्त्वं विषादिताम् ॥ १३१
अयं ससुतदारस्य भक्ष्यः प्राप्तोऽस्म्यहं तव । तद्भुङ्क्ष्व मामिति क्रोडेनोक्ते तेन स केसरी ॥ १३२
हृष्टस्तामब्रवीद्भार्यां पूर्वं भुङ्क्तामयं शिशुः । अनन्तरमहं भोक्ष्ये भोक्ष्यसे त्वमतः परम् ॥ १३३
तथेत्युक्ते तया पूर्वं सिंहपोतेन भक्षिते । क्रोडस्य तस्य मांसेऽथ सिंहो भोक्तुं प्रचक्रमे ॥ १३४
भुञ्जानं च तमाह स्म महासत्त्वः स सूकरः । शीघ्रं पिबैतद्रक्तं मे यावद्भूमौ न लीयते ॥ १३५
कुरु तृप्तिं च मन्मांसैः शेषमश्नातु ते प्रिया । इति जल्पन्क्रमात्तेन स सिंहेनास्थिशेषताम् ॥ १३६
नीतोऽपि सूकरः प्राणैः सत्त्वस्थो न व्यमुच्यत । तत्र तद्धैर्यपर्यन्तमवेक्षितुमिव स्थितैः ॥ १३७
तावच्च सा क्षुधाक्रान्ता सिंही तत्र व्यपद्यत । स सुतः काप्यगात्सिंहः क्षीयते स्म च यामिनी ॥१३८
अत्रान्तरे प्रबुद्धः स सखा निर्गत्य मर्कटः । वराहं तं तथाभूतं दृष्ट्वा पप्रच्छ संभ्रमात् ॥ १३९
केनावस्था कृतेयं ते ब्रूहि शक्नोषि चेत्सखे । तच्छ्रुत्वा स यथावृत्तं धीरोऽस्मै सूकरोऽभ्यधात् ॥ १४०
ततो रुदन्स तं नत्वा पादयोः कपिरब्रवीत् । त्वं देवतांशो येनात्मा तिर्यक्त्वान्मोचितोऽमुतः ॥ १४१
तत्कंचिदभिलाषं मे ब्रूहि संसाधयामि ते । इत्युक्तस्तेन कपिना स वराहो जगाद तम् ॥ १४२
यो वयस्याभिलाषो मे दुःसाध्यो विधिनापि सः । पश्यतो मे मृता येयं क्षुधा सिंही तपस्विनी ॥ १४३
एषा संप्राप्तपूर्वाङ्गं पुनर्मां प्राप्तजीविता । भुक्त्वा तृप्यत्विति सखे चेतो हि मम वाञ्छति ॥ १४४
इति तं वादिनं क्रोडं प्रत्यक्षीभूय पाणिना । परामृश्य व्यधाद्धर्मो मुनीन्द्रं दिव्यविग्रहम् ॥ १४५
उवाच च मयैवेयं माया सिंहादिरूपिणा । कृताभूत्त्वां परार्थैकबद्धकक्ष्यं जिगीषता ॥ १४६
त्वया त्वखण्डसत्त्वेन परार्थे प्राणदायिना । विजित्य मामिमं धर्मं प्राप्तैवाद्य मुनीन्द्रता ॥ १४७
तच्छ्रुत्वा धर्ममालोक्य पुरःस्थं सोऽब्रवीन्मुनिः । सख्यावस्मिन्नसंत्यक्ततिर्यक्त्वे मर्कटेऽधुना ॥ १४८
न मां प्रीणाति भगवन्प्राप्ताप्येषा मुनीन्द्रता । श्रुत्वैतत्तस्य मुनिं चक्रे धर्मस्तमपि मर्कटम् ॥ १४९
ध्रुवं फलाय महते महद्भिः सह संगमः । अथ धर्मस्तिरोऽभूत्स सिंही चान्तर्दधे मृता ॥ १५०
एवं सत्त्वबलात्त्यक्तधर्मोत्साहैरदुर्लभाः । देवताकृतसाहाय्यै राजन्वाञ्छितसिद्धयः ॥ १५१
इति भिक्षोर्वचः श्रुत्वा स विनीतमतिः पुनः । दानशूरो नृपश्चक्रे रात्रौ तं स्वप्रमाणवम् ॥ १५२
दृष्ट्वा शशंस च स्वप्नं प्रातस्तस्मै स भिक्षवे । जाने स्वप्नेऽद्य मामेवं दिव्यः कोऽप्यवदन्मुनिः ॥ १५३
पुत्र निष्कल्मषो बोधिसत्त्वचर्यां चराधुना । तच्छ्रुत्वैव च तद्वाक्यं प्रबुद्धोऽस्म्यद्य निर्वृतः ॥ १५४
एवं निवेद्य गुरवे भिक्षवे स महीपतिः । जग्राह तां महाचर्यां शुभेऽह्नि तदनुज्ञया ॥ १५५

तस्थौ च कामानर्थिभ्यो वर्षन्नविरतं ततः । धनं चास्याक्षयं जज्ञे धर्ममूला हि संपदः ॥ १५६
अथैकदा तमभ्येत्य ब्राह्मणोऽर्थी व्यजिज्ञपत् । विप्रोऽहं देव वास्तव्यः पुरे पाटलिपुत्रके ॥ १५७
तत्राग्निशालामावृत्य पुत्रोऽपि ब्रह्मरक्षसा । आवृतो मे न चैतस्मिन्नुपायः क्रमते मम ॥ १५८
अतोऽर्थिकल्पवृक्षं त्वामागतोऽस्मीह याचितुम् । देह्येतत्सर्वदोषघ्नमङ्गुलीयं शिवाय मे ॥ १५९
इत्यर्थितः स विप्रेण तेन राजाङ्गुलीयकम् । कालजिह्वादवाप्तं तत्तस्मै प्रादादविह्वलः ॥ १६०
आदाय तद्गते तस्मिन्विप्रे तस्य च भूपतेः । बोधिसत्त्वव्रतयशो दिगन्तेष्वपि पप्रथे ॥ १६१
ततः कदाचिदपरस्तस्यागादुत्तरापथात् । कोऽपीन्दुकलशो नाम राजपुत्रोऽतिथिः प्रभोः ॥ १६२
स कृतप्रश्रयस्तेन राज्ञा ज्ञातोत्तमान्वयः । पृष्टकामश्च धीरेण राजपुत्रस्तमब्रवीत् ॥ १६३
त्वं तावदर्थिसार्थस्य ख्यातश्चिन्तामणिर्भुवि । प्राणानामपि ते ह्यर्थी न प्रयाति पराङ्मुखः ॥ १६४
अहं चास्कन्द्य कनककलशाख्येन राज्यतः । भ्रात्रा निर्वासितः पित्र्यादर्थित्वात्त्वमुपागतः ॥ १६५
तदश्वखड्गरत्ने ते ये स्तस्ते वीर देहि मे । यत्प्रभावेण दायादं जित्वा राज्यमवाप्नुयाम् ॥ १६६
तच्छ्रुत्वैवाश्वखड्गौ तौ राज्यरक्षामणी अपि । ददौ राजसुतायास्मै स विनीतमतिर्नृपः ॥ १६७
न च तस्याभवत्कश्चिद्विकल्पो धीरचेतसः । अधोमुखेषु मुञ्चत्सु निःश्वासानपि मन्त्रिषु ॥ १६८
सोऽथ प्राप्ताश्वखड्गः सन्गत्वा राजसुतस्ततः । तत्प्रभावेण जित्वा तं भ्रातरं राज्यमाप्तवान् ॥ १६९
तद्भ्राता सोऽपि कनककलशो राज्यतश्च्युतः । तस्य तां नगरीमागाद्विनीतमतिभूपतेः ॥ १७०
अग्निप्रवेशं कर्तुं च दुःखेनारभतात्र सः । तद्बुद्ध्वा स नृपोऽमात्यान्विनीतमतिरब्रवीत् ॥ १७१
एष साधुरिमां प्राप्तो दशां मदपराधतः । तत्स्वराज्यप्रदानेन भवाम्यस्यानृणोऽधुना ॥ १७२
परार्थानुपयुक्तेन किं राज्येनामुना च मे । एष एवानपत्यस्य पुत्रो मेऽस्तु च राज्यभृत् ॥ १७३
इत्युक्त्वाहूय कनककलशाय स तद्ददौ । तस्मै स्वराज्यं सचिवेष्वनिच्छत्स्वपि भूपतिः ॥ १७४
दत्तराज्यश्च निरगान्नगर्यास्तत्क्षणं ततः । भार्याभ्यां सहितो द्वाभ्यां निर्विकल्पेन चेतसा ॥ १७५
हा हा धिग्जगदाप्यायी संपूर्णोऽमृतदीधितिः । जातश्चान्तरितश्चैत्य मेघेनाकाण्डपातिना ॥ १७६
प्रवृत्तश्चैष सर्वाशापूरणे सर्वदेहिनाम् । नीतश्च विधिना क्वापि प्रजाकल्पद्रुमो नृपः ॥ १७७
इत्याद्याक्रन्दमुखरास्तद्दृष्ट्वा विह्वलास्तदा । बाष्पाम्बुसिक्तवसुधाः पौरास्तमनु निर्ययुः ॥ १७८
निवर्त्य च कथंचित्तान्सभार्योऽकम्पितस्ततः । स विनीतमतिः प्रायादरण्यं प्रत्यवाहनः ॥ १७९
क्रमात्प्रापार्कसंतप्तसिकतां निर्जलद्रुमाम् । मरुभूमिं स विधिना सृष्टां धैर्यमवेक्षितुम् ॥ १८०
तदेकदेशे तृष्णार्तो दूराध्वक्लमविक्लवः । निषण्णः स क्षणं जह्रे सपत्नीकोऽपि निद्रया ॥ १८१
प्रबुद्धो वीक्षते यावत्तावत्तत्र ददर्श सः । स्वसत्त्वोत्कर्षनिष्पन्नं महदुद्यानमद्भुतम् ॥ १८२
फुल्लाब्जशीतलस्वच्छसलिलापूर्णवापिकम् । नीलशाद्वलसंछन्नं फलभारानतद्रुमम् ॥ १८३
प्रच्छायगतसुश्लक्ष्णपृथुतुङ्गशिलातलम् । दानप्रभावेणाकृष्टं त्रिदिवादिव नन्दनम् ॥ १८४
स्वप्नः किं नु भ्रमो वायं देवतानुग्रहोऽथ मे । इति तद्वीक्ष्य वीक्ष्यैष यावच्चित्रीयते नृपः ॥ १८५
तावद्व्युचारिणा हंसद्वन्द्वरूपेण केनचित् । सिद्धद्वयेन गगनादीरितामशृणोद्गिरम् ॥ १८६
राजन्स्वसत्त्वमाहात्म्ये तव कोऽत्रातिविस्मयः । तदस्मिन्कानने स्वेच्छं सदापुष्पफले वस ॥ १८७
इति सिद्धवचः श्रुत्वा निर्वृतस्तत्र कानने । तपस्यन्सह पत्नीभ्यां विनीतमतिरास्त सः ॥ १८८
एकदा च ददर्शाराच्छिलातलगतोऽत्र सः । उद्बन्धनेन पुरुषं कमप्यात्मवधोद्यतम् ॥ १८९
द्रुतं गत्वा प्रियैर्वाक्यैरनुनीय निवार्य च । मरणात्कारणं तत्र पुरुषं तं स पृष्टवान् ॥ १९०
ततः स पुरुषोऽवादीदामूलं शृणु वच्मि ते । नागशूरसुतो नाम्ना सोमशूरोऽस्मि सोमकः ॥ १९१
सोऽहं जातकनिर्दिष्टचौर्यस्तच्छास्त्रवेदिभिः । तद्भीत्याध्यापितः पित्रा धर्मशास्त्रं प्रयत्नतः ॥ १९२
तदधीत्यापि चौर्येऽहं प्रवृत्तो दुष्टसंगतेः । कस्य प्राक्कर्म केनेह शक्यते कर्तुमन्यथा ॥ १९३
अथैकदा चौरमध्याद्गृहीत्वा पुररक्षिभिः । शूलाधिरोपणस्थानं वधाय प्रापितोऽभवम् ॥ १९४

तत्क्षणं राजसंबन्धी भग्नालानो महाद्विपः। मत्तो व्यापादयञ्जन्तूंस्तदेव स्थानमागमत् ॥ १९५
तत्रासान्मां परित्यज्य क्वापि ते वधका गताः। अहं च तुमुले तस्मिन्पलाय्यैव ततो गतः ॥ १९६
वधाय नीयमानं मां श्रुत्वैवोत्क्रान्तजीवितम्। पितरं लोकतोऽश्रौषं मात्रा मेऽनुगतं ततः ॥ १९७
अथ शोकातुरो भ्राम्यन्खिन्नो देहव्ययोन्मुखः। क्रमादिदमहं प्राप्तो विजनं काननं महत् ॥ १९८
इह प्रविष्टमात्रं मामकस्माद्दत्तदर्शना। उपेत्य कापि दिव्या स्त्री कृताश्वासाभ्यभाषत ॥ १९९
त्वं विनीतमतेः पुत्र राजर्षेरिममाश्रमम्। प्राप्तो गतं च ते पापं ज्ञानं तस्माच्च लप्स्यसे ॥ २००
इदमुक्त्वा तिरोऽभूत्सा भ्राम्यंश्चाहमनाप्नुवन्। राजर्षिं तं शुचात्मानं त्यक्तुमिच्छंस्त्वयेक्षितः ॥ २०१
इत्युक्तवन्तं नीत्वा तं सोमशूरं निजोटजम्। आवेद्यात्मानमतिथिं स राजर्षिरपूजयत् ॥ २०२
कृताहारश्च तं प्रह्वं नानाधर्मकथान्तरे। निवारयिष्यन्नज्ञानात्स राजमुनिरब्रवीत् ॥ २०३
अज्ञानं वत्स हातव्यं विपर्यस्तधियां हि तत्। लोकद्वयेऽपि दोषाय शृणु चात्रागमश्रुतिम् ॥ २०४
पाञ्चालेषु पुरा देवभूतिनामाभवद्द्विजः। तस्याभूद्भोगवत्याख्या भार्या वेदवतः सती ॥ २०५
सा स्नानाय गते तस्मिञ्शाकार्थं शाकवाटिकाम्। प्रविष्टा धावकखरं खादन्तं शाकमैक्षत ॥ २०६
गृहीतलगुडा तं च साभ्यधावत्खरश्च सः। पलायमानः पतितः श्वभ्रे भग्नखुरोऽभवत् ॥ २०७
तद्बुद्ध्वा सोऽत्र तत्स्वामी क्रोधादागत्य धावकः। लगुडैः पादघातैश्च ब्राह्मणीं तामताडयत् ॥ २०८
तेन साकाण्डविभ्रष्टगर्भाभूद्गर्भिणी सती। ततः स खरमादाय धावकः स्वगृहं ययौ ॥ २०९
स्नात्वागतोऽथ तद्भर्ता तद्बुद्ध्वा वीक्ष्य तां च सः। भार्यां विप्रः पुराध्यक्षं गत्वोद्विग्नो व्यजिज्ञपत् ॥ २१०
स बलासुरनामानं तदैवानीय धावकम्। श्रुत्वा तयोर्द्वयोर्वादं मूर्खो विवृतवानिदम् ॥ २११
खुरभङ्गात्खरस्यास्य धावकस्य वहत्वयम्। खरभारं द्विजो यावत्प्रकृतिस्थो भवेत्खरः ॥ २१२
धावकोऽप्ययमेतस्य भार्यायामग्रजन्मनः। गर्भं प्रजनयत्वन्यं तस्यां तद्गर्भपातनात् ॥ २१३
एषोऽनयोर्द्वयोर्दण्ड इत्युक्ते तेन स द्विजः। संतापाद्भक्षितविषः सभार्योऽपि जहावसून् ॥ २१४
तद्बुद्ध्वा तत्र निहतो राज्ञा दुरवधारकः। ब्रह्महा स पुराध्यक्षस्तिर्यग्योनिं गतश्चिरम् ॥ २१५
इत्यज्ञानतमश्छन्नाः स्वदोषोन्मार्गगामिनः। अपुरस्कृतसच्छास्त्रदीपा भ्रश्यन्ति निश्चितम् ॥ २१६
एवमुक्त्वा स राजर्षिरुपदेशार्थिनं पुनः। सोमशूरं विनेतुं तं विनीतमतिरभ्यधात् ॥ २१७
वत्स पारमितार्थं ते वच्मि तावत्क्रमाच्छृणु। पूर्वं राजा कुरुक्षेत्रे मलयप्रभ इत्यभूत् ॥ २१८
तं कदाचित्प्रजाभ्योऽर्थं दुर्भिक्षे ददतं नृपम्। मन्त्रिभिर्वारितं लोभाज्जगादेन्दुप्रभः सुतः ॥ २१९
उपेक्षसे प्रजास्तात कथं दुर्मन्त्रिणां गिरा। त्वं हि कल्पद्रुमस्तासां ताश्च ते कामधेनवः ॥ २२०
निर्बन्धादिति जल्पन्तं पुत्रं मन्त्रिवशो नृपः। खेदात्तं सोऽब्रवीद्वत्स किं मेऽस्ति धनमक्षयम् ॥ २२१
विना तेन प्रजाकल्पपादपश्चेद्भवाम्यहम्। तत्त्वमेव किमेतासां न धत्से कल्पवृक्षताम् ॥ २२२
एतच्छ्रुत्वा पितुश्चक्रे प्रतिज्ञां स नृपात्मजः। मर्तव्यं कल्पवृक्षत्वं साध्यं वा तपसा मया ॥ २२३
इति निश्चित्य स प्रायान्महासत्त्वस्तपोवनम्। आरूढ एव तस्मिंश्च स दुर्भिक्षो न्यवर्तत ॥ २२४
ततोऽर्थितवरस्तीव्रतपस्तुष्टान्महेन्द्रतः। स्वस्मिन्नेव स संजज्ञे नगरे कल्पपादपः ॥ २२५
आकर्षन्निव दूरस्थानाह्वयन्निव चार्थिनः। प्रसारिताभिः शाखाभिर्दिक्षु शब्दैश्च पक्षिणाम् ॥ २२६
ददौ च कामानर्थिभ्यो दुष्प्रापानपि सोऽन्वहम्। चक्रे च ता निराकाङ्क्षाः प्रजाः स्वर्गस्थिता इव ॥ २२७
कालेन च महेन्द्रस्तमागत्योवाच लोभयन्। पूर्णः परोपकारस्ते स्वर्गायागम्यतामिति ॥ २२८
ततः कल्पद्रुमीभूतस्तं स राजसुतोऽभ्यधात्। यत्र पुष्पैः फलै रम्यैरप्यन्यतरवोऽप्यमी ॥ २२९
पारार्थ्यमेव सततं भजन्ति स्वार्थनिःस्पृहाः। तत्र कल्पतरुर्भूत्वा स्वसुखाय कथं दिवम् ॥ २३०
इयतोऽस्य जनस्याशाच्छेदं कृत्वा व्रजाम्यहम्। इत्युदारं वचस्तस्य श्रुत्वा शक्रोऽब्रवीत्पुनः ॥ २३१
तर्हि प्रजापि ते कृत्स्ना स्वर्गमायात्वसाविति। ततस्तमब्रवद्राजसूनुः कल्पद्रुमोऽपि सः ॥ २३२
तुष्टोऽसि चेन्नय स्वर्गं प्रजा नार्थोऽस्ति तेन मे। अहं परोपकारैकसिद्ध्यै तप्स्ये तपो महत् ॥ २३३

इत्युक्तवन्तं स्तुत्वा तं सुगतांशं तथेति सः । आदाय च प्रजास्तुष्टः सुरेन्द्रस्त्रिदिवं ययौ ॥ २३४
सोऽपि तां तरुतां त्यक्त्वा राजपुत्रः स्वरूपभृत् । तपसेन्दुप्रभः प्राप वनस्थो बोधिसत्त्वताम् ॥ २३५
एवं स्याद्दानसक्तानां सिद्धिरित्युदिता मया । दानपारमितैषा ते शीलपारमितां शृणु ॥ २३६
पुरा शुकानां राजाभूद्विन्ध्याद्रौ सुगतांशजः । प्राग्जन्माभ्यस्तशीलाढ्यो नाम्ना हेमप्रभो वशी ॥ २३७
तस्य जातिस्मरस्यासीदपि धर्मोपदेशिनः । रागिमूर्खः प्रतीहारो नाम्ना चारुमतिः शुकः ॥ २३८
स जातु पाशिना भार्यां व्याधेन निहतां शुकीम् । शोचन्नवस्थां करुणां तद्वियोगातुरो ययौ ॥ २३९
ततः स शुकराजस्तं युक्त्या शोकं निवारयन् । हेमप्रभो हितायैवमुवाच मतिमान्मृषा ॥ २४०
न सा तव मृता भार्या पाशाच्छाकुनिकस्य सा । गता पलाय्य दृष्टा हि जीवन्त्येव मयाधुना ॥ २४१
दर्शयाम्येहि तुभ्यं तामित्युक्त्वा स निनाय तम् । राजा चारुमतिं व्योममार्गेणैकं जलाशयम् ॥ २४२
तत्र संदर्श्य तस्यैव प्रतिबिम्बं जलान्तरे । तमब्रवीदियं सा ते भार्या पश्येह तिष्ठति ॥ २४३
तच्छ्रुत्वा वीक्ष्य चात्रात्मप्रतिबिम्बं स मूढधीः । हृष्टः प्रविश्य तोये तामालिलिङ्ग चुचुम्ब च ॥ २४४
अप्राप्नुवन्प्रियास्पर्शमशृण्वंस्तद्वचश्च सः । स्पर्शालापौ प्रिया किं मे न ददातीत्यचिन्तयत् ॥ २४५
कोपाशङ्की ततो गत्वैवानीयामलकं ततः । चाट्वर्थं दयिताबुद्ध्या न्यधात्स्वे प्रतिबिम्बके ॥ २४६
तन्मग्नोत्पतितं कान्ताप्रतिक्षिप्तमवेत्य च । गत्वा सखेदो राजानं तं हेमप्रभमभ्यधात् ॥ २४७
देव भार्या न सा स्पर्शमालापं वा ददाति मे । किं चैतया प्रतिक्षिप्तं दत्तमामलकं मया ॥ २४८
एतच्छ्रुत्वा स राजा तं शनैः कृच्छ्रादिवाब्रवीत् । न युक्तमेतद्वक्तुं मे वच्मि स्नेहात्तथापि ते ॥ २४९
अन्यानुरक्ता ह्यद्यैषा त्वयि प्रीतिं कथं भजेत् । दर्शयामि च ते साक्षादेह्यत्रैव जलान्तरे ॥ २५०
इत्युक्त्वा तत्र नीत्वा तं स्वं तदीयं च वारिणि । प्रतिबिम्बे उभे राजा तस्मै श्लिष्टे अदर्शयत् ॥ २५१
ते दृष्ट्वैव स तां भार्यां मूर्खो मत्वान्यसंगताम् । संनिवृत्य विरक्तस्तं स्वं राजानं व्यजिज्ञपत् ॥ २५२
देव त्वदुपदेशो यन्मया मूढेन न श्रुतः । तस्यैष पाकस्तन्मेऽत्र कर्तव्यमधुनादिश ॥ २५३
इति तं कृतविज्ञप्तिं राजा हेमप्रभोऽथ सः । लब्धोपदेशावसरः प्रतीहारमभाषत ॥ २५४
वरं हालाहलं भुक्तमहिर्बद्धो वरं गले । न पुनः स्त्रीषु विश्वासो मणिमन्त्राद्यगोचरः ॥ २५५
कलङ्कयन्ति सन्मार्गजुषः परिभवन्त्यलम् । वात्या इवातिचपलाः स्त्रियो भूरिरजोभृतः ॥ २५६
तत्तासु न प्रसक्तव्यं धीरसत्त्वैः सुबुद्धिभिः । शीलमभ्यसनीयं तु वीतरागपदाप्तये ॥ २५७
इति तेनानुशिष्टः स राज्ञा चारुमतिः स्त्रियः । परिहृत्य बभूवोर्ध्वरेता बुद्धसमः क्रमात् ॥ २५८
इत्यन्यानपि शीलाढ्यास्तारयन्तीति ते मया । शीलपारमिता प्रोक्ता क्षमापारमितां शृणु ॥ २५९
आसीच्छुभनयो नाम केदाराद्रौ महामुनिः । सदा मन्दाकिनीतोयस्नायी दान्तस्तपःकृशः ॥ २६०
निशि तत्रैकदा पूर्वनिखातं भुवि काञ्चनम् । अन्वेष्टुमाययुश्चौरा न च प्रापुः कुतोऽपि तत् ॥ २६१
ततोऽत्र विजने मत्वा तेन तन्मुनिना हृतम् । प्रविश्य मठिकां तस्य चौरास्ते ब्रुवते स्म तम् ॥ २६२
अरे दम्भमुने मुञ्च नीतं नः काञ्चनं क्षितेः । चौराणामप्यहो चौरस्त्वमस्माकमुपस्थितः ॥ २६३
इत्याक्षिप्तः स तैः पापैरहृतार्थो मृषा मुनिः । न नीतं तन्मया किंचिन्न दृष्टं चेत्यभाषत ॥ २६४
ततस्तैर्लगुडैर्दुष्टैस्ताडितोऽपि स दस्युभिः । यदा तदेव वक्ति स्म सत्यवाङ्मुनिसत्तमः ॥ २६५
तदा ते चिच्छिदुस्तस्य क्रूरोऽयमिति तस्कराः । क्रमाद्धस्तौ च पादौ च नयने चोदपाटयन् ॥ २६६
तथाप्यनन्यवचनं निर्विकारमवेत्य तम् । मत्वान्यलुप्तं स्वर्णं ते जग्मुश्चौरा यथागतम् ॥ २६७
प्रातश्च शेखरज्योतिर्नाम राजात्र तं मुनिम् । पश्यति स्म तथाभूतं शिष्यस्तद्दर्शनागतः ॥ २६८
ततः स गुरुशोकार्तस्तं दृष्ट्वा तदवेत्य च । अन्विष्यानाययच्चौरांस्तांस्तत्रैव तदा प्रभुः ॥ २६९
तेषां वधे प्रवृत्तं च नृपं तं सोऽब्रवीन्मुनिः । राजन्यदि निहंस्येतांस्तदात्मानं निहन्म्यहम् ॥ २७०
शस्त्रेणेदं कृतं चेन्मे तदेषां कापराधिता । तस्य वा प्रेरका ह्येते तर्ह्येतेषामपि क्रुधः ॥ २७१
तासामपि स्वर्णनाशस्तस्य मत्पूर्वदुष्कृतम् । तस्यापि स्वं ममाज्ञानं तस्मात्तदपकारि मे ॥ २७२

तततस्त्वदेव मे घात्यं किं च यद्यपकारतः। वध्या एते कथं नात्र रक्ष्याः स्युरुपकारतः॥ २७३
नैते कुर्युरिदं चेन्मे क्षमां मोक्षफलामहम्। कस्य कुर्यां तदेतैर्मे पूर्णैवोपकृतिः कृता॥ २७४
इत्यादिभिः स बहुभिर्वाक्यैः क्षान्तिपरो मुनिः। प्रबोध्य तं नृपं चौराग्निग्रहात्तानमोचयत्॥ २७५
तपसश्चास्य माहात्म्यात्तत्क्षणं प्राग्वदक्षतम्। शरीरमभवत्तस्य सिद्धिश्चाविरभूत्तदा॥ २७६
एवं तरन्ति क्षमिणः संसारमिति वर्णिता। क्षमापारमिता तुभ्यं धैर्यपारमितां शृणु॥ २७७
आसीन्मालाधरो नाम पूर्वं ब्राह्मणपुत्रकः। सोऽपश्यदेकदा सिद्धकुमारं व्योमगामिनम्॥ २७८
तत्स्पर्धया तृणमयान्पक्षानाबध्य पार्श्वयोः। उत्प्लुत्योत्प्लुत्य गगने गत्यभ्यासमशिक्षत॥ २७९
प्रत्यहं च तथा कुर्वन्परिश्रममपार्थकम्। ददृशे स कुमारेण कदाचिद्व्योमचारिणा॥ २८०
धैर्ययुक्तः परिश्राम्यन्दुष्प्रापेऽर्थेऽपि सोद्यमः। बालोऽयमनुकम्प्यो मे मम ह्येष परिग्रहः॥ २८१
इति संचिन्त्य तुष्टेन नीत्वा तेन स्वशक्तितः। स्कन्देन द्विजमुख्योऽसावात्मनोऽनुचरः कृतः॥ २८२
इत्थं धैर्येण तुष्यन्ति देवता अपि ते मया। धैर्यपारमिता प्रोक्ता ध्यानपारमितां शृणु॥ २८३
आसीद्विजयमालीति कर्णाटेषु पुरा वणिक्। अभून्मलयमालीति महर्द्धेस्तस्य चात्मजः॥ २८४
स तेन पित्रा सहितो जातु राजकुलं गतः। राज्ञस्तस्य युवापश्यदिन्दुकेसरिणा सुताम्॥ २८५
सा तस्येन्दुयशा नाम मारवल्लीव मोहिनी। वणिक्पुत्रस्य दृष्टैव विवेश हृदि कन्यका॥ २८६
ततः स गृहमागत्य विनिद्रो निशि पाण्डुरः। दिवा संकुचितस्तस्थावालम्ब्य कुमुदव्रतम्॥ २८७
तामेव चान्वहं ध्यायन्नाहारादिपराङ्मुखः। पृष्टोऽपि स्वजनैर्नैव मूकवत्किंचिदभ्यधात्॥ २८८
अथैकान्ते तथारूपं तमाप्तो विरहातुरम्। सुहृन्मन्थरको नाम राजचित्रकरोऽब्रवीत्॥ २८९
सखे किं भित्तिसक्तस्त्वं तिष्ठस्यालिखितो यथा। रूपैकसारोऽनाश्वासी न शृणोषि न पश्यसि॥ २९०
इति निर्बन्धतस्तस्मै पृच्छते स वणिक्सुतः। सख्ये मलयमाली स्वमभिप्रायं शशंस तम्॥ २९१
युक्ता न ते वणिक्पुत्र राजपुत्रीं प्रति स्पृहा। हंसो वाञ्छतु नामान्यसरोम्बुजसुखश्रियम्॥ २९२
हरिनाभीह्रदाम्भोजभोगलक्ष्म्याः स कः पुनः। इति ब्रुवन्स च यदा चित्रकृन्न शशाक तम्॥ २९३
प्रतिषेद्धुं तदा तस्मै तामुत्कण्ठाविनोदिनीम्। कालातिवाहायालिख्य राजपुत्रीं पटे ददौ॥ २९४
सोऽपि चित्रस्थितां प्राप्य पश्यन्ननुनयन्स्पृशन्। आसीन्मलयमाली तां भूषयंश्च वणिक्सुतः॥ २९५
सेयमिन्दुयशा राजपुत्रीत्येवं स भावयन्। क्रमात्तन्मयतां प्राप्य तया वृत्त्याकरोत्क्रियाः॥ २९६
शनैश्च तामालपन्तीं चुम्बनादि च कुर्वतीम्। तद्भावनाभावितः सन्नपश्यल्लिखितामपि॥ २९७
ततः स भावनासिद्धकान्तासंभोगसुस्थितः। तस्थौ चित्रपटस्थैककृत्स्नसंसारनिर्वृतः॥ २९८
एकदादाय तं चित्रपटं चन्द्रोदयेऽथ सः। निर्गत्योद्यानमगमद्विहर्तुं प्रियया सह॥ २९९
तत्रैकस्य तरोर्मूले तं निवेश्य पटं च सः। विप्रकृष्टं ययौ पुष्पाण्यवचेतुं प्रियाकृते॥ ३००
तत्कालं विनयज्योतिर्नामाम्बरतलान्मुनिः। दृष्ट्वा तं कृपया मोहादुद्धरिष्यन्नवातरत्॥ ३०१
सोऽत्र चित्रपटस्यैकदेशे तस्य स्वशक्तितः। सजीवं सर्पमालिख्य कृष्णं तस्थावलक्षितः॥ ३०२
तावन्मलयमाली च पुष्पाण्युच्चित्य तत्र सः। आगत्य कृष्णसर्पं तं पटे दृष्ट्वा व्यचिन्तयत्॥ ३०३
सर्पः कुतोऽधुनात्रैषो विधिना किं नु निर्मितः। निधानभूतां रूपस्य रक्षितुं सुन्दरीमिमाम्॥ ३०४
इति संचिन्त्य पुष्पैस्तामलंकृत्य प्रियां पटे। भावनोपनतां यावदालिङ्ग्यैतत्स पृच्छति॥ ३०५
तावद्ददर्श तस्यात्र मुनेर्मायाप्रभावतः। एतां कृष्णाहिना तेन दष्टां विगतजीविताम्॥ ३०६
ततः स विस्मृतपटो हाहेत्युक्त्वैव मोहितः। पपात पटसंसिद्धविद्याधर इव क्षितौ॥ ३०७
क्षणाच्च संज्ञां संप्राप्य विलपन्मरणोन्मुखः। उत्थायारुह्य वृक्षाग्रात्तुङ्गादात्मानमक्षिपत्॥ ३०८
पतन्तमेव तस्माच्च पाणिभ्यां स तमग्रहीत्। मुनीन्द्रः प्रकटीभूय समाश्वास्य जगाद च॥ ३०९
मूढ वेत्सि न किं यत्सा राजपुत्री स्वमन्दिरे। स्थिता चित्रपटे चैषा निर्जीवा चित्रपुत्रिका॥ ३१०
तदालिङ्गसि कां का वा तव दष्टा महाहिना। रागिणस्ते स्वसंकल्पभावनाभ्रम एष कः॥ ३११

एतावद्ध्यानदार्ढ्येन तत्त्वं जिज्ञाससे न किम्। येनेदृशानां दुःखानां न पुनर्यासि पात्रताम्॥ ३१२
इत्युक्तस्तेन मुनिना जातमोहनिशाक्षयः। प्रबुद्धः स वणिक्पुत्रः प्रणिपत्य जगाद तम्॥ ३१३
त्वत्प्रसादेन भगवन्नेतां तीर्णोऽहमापदम्। यथा तरेयं संसारं प्रसादं मे तथा कुरु॥ ३१४
एवं सोऽभ्यर्थितो बोधिसत्त्वो मलयमालिना। मुनिस्तस्मै स्वविज्ञानमुपदिश्य तिरोदधे॥ ३१५
ततो मलयमाली स वनं गत्वा तपोबलात्। सहेतुहेयोपादेयतत्त्वज्ञोऽर्हत्त्वमाप्तवान्॥ ३१६
आगत्य च कृपालुस्तमिन्दुकेसरिणं नृपम्। चक्रे ज्ञानोपदेशेन सपौरं मुक्तिभागिनम्॥ ३१७
इत्यसत्यमपि ध्यानबलिनामेति सत्यताम्। ध्यानपारमितैषोक्ता प्रज्ञापारमितां शृणु॥ ३१८
चौरः प्राक्सिंहलद्वीपे सिंहविक्रम इत्यभूत्। आजन्मपोषिततनुः परस्वैः सर्वतो हृतैः॥ ३१९
वृद्धीभूतः स कालेन विरम्यैतदचिन्तयत्। परत्र कोऽभ्युपायो मे कं तत्र शरणं श्रये॥ ३२०
यदि व्रजामि शरणं शंभुं शौरिमथात्र तम्। कोऽहं तयोर्ययोर्देवा मुनयोऽन्ये च सेवकाः॥ ३२१
तद्यो लिखति जन्तूनामेकः सुकृतदुष्कृते। तं चित्रगुप्तं सेवेऽहं स रक्षेन्मां स्वयुक्तितः॥ ३२२
कायस्थो हि करोत्येको व्यापारं ब्रह्मरुद्रयोः। लिखत्युत्पुंसयति च क्षणाद्विश्वं करस्थितम्॥ ३२३
इति संचिन्त्य तस्यैव भक्तिमारभते स्म सः। तमेवानर्च तत्प्रीत्यै विप्रान्नित्यमभोजयत्॥ ३२४
एवमाचरतस्तस्य चित्तं चौरस्य वीक्षितुम्। चित्रगुप्तो गृहानागादेकदातिथिरूपभृत्॥ ३२५
सोऽथ चौरस्तमभ्यर्च्य भोजितं दत्तदक्षिणम्। उवाच चित्रगुप्तस्ते प्रीतोऽस्त्वित्युच्यतामिति॥ ३२६
ततः स चित्रगुप्तस्तमवोचद्ब्राह्मणाकृतिः। मुक्त्वा हरिहरादींस्ते चित्रगुप्तेन किं वद॥ ३२७
तच्छ्रुत्वा सोऽप्यवादीत्तं तस्करः सिंहविक्रमः। किं तवानेन नार्थो मे तदन्यैर्दैवतैरिति॥ ३२८
अथ स द्विजरूपी तं चित्रगुप्तोऽब्रवीत्पुनः। तर्हि मे यदि भार्यां स्वां ददास्येवं वदामि तत्॥ ३२९
श्रुत्वैवैतत्स हृष्टस्तमवादीत्सिंहविक्रमः। अभीष्टदैवतप्रीत्यै भार्या दत्तैव ते मया॥ ३३०
चित्रगुप्तोऽथ तच्छ्रुत्वा प्रदर्श्यात्मानमब्रवीत्। सैष तुष्टोऽस्मि तत्किं ते करवै कथ्यतामिति॥ ३३१
ततो हृष्टोऽभ्यधात्तं स विशेषात्सिंहविक्रमः। भगवन्न यथा मृत्युर्भवेन्मम तथा कुरु॥ ३३२
ततोऽब्रवीच्चित्रगुप्तो मृत्युः शक्यो न रक्षितुम्। तथापि तावद्युक्तिं ते करिष्ये तां च मे शृणु॥ ३३३
ततः प्रभृति निर्दग्धः कालः श्वेतनिमित्ततः। कुपितेनेश्वरेणेह पुनः कार्याच्च निर्मितः॥ ३३४
ततः प्रभृति यत्रैव श्वेतो वसति तत्र सः। न जन्तून्बाधतेऽन्यानप्याज्ञया यन्त्रितः प्रभोः॥ ३३५
स चाधुना श्वेतमुनिः पारे पूर्वाम्बुधेः स्थितः। तरङ्गिणीं नाम नदीं समुत्तीर्य तपोवने॥ ३३६
तत्र मृत्योरनाक्रम्ये नीत्वा त्वां स्थापयाम्यहम्। तरङ्गिण्या इदं पारमागन्तव्यं च न त्वया॥ ३३७
आगतं वा प्रमादात्त्वां मृत्युर्बाधिष्यते यदि। तदुपायं करिष्यामि परलोकागतस्य ते॥ ३३८
इत्युक्त्वा चित्रगुप्तस्तं प्रहृष्टः सिंहविक्रमम्। नीत्वा श्वेताश्रमे तस्मिन्निधायादर्शनं ययौ॥ ३३९
ततः कालेन तत्रस्थं नेतुं तं सिंहविक्रमम्। कालस्तस्यास्तरङ्गिण्या इदं पारमुपाययौ॥ ३४०
तत्र स्थितो ददर्शान्यमुपायं न यदा तदा। स तस्मै प्राहिणोद्दिव्यां स्त्रियं निर्माय मायया॥ ३४१
सा गत्वोपेत्य तं युक्त्या वशीचक्रे विलासिनी। मोहयित्वा स्वलावण्यसंपदा सिंहविक्रमम्॥ ३४२
गतेष्वहःसु सा बन्धुदिदृक्षाव्यपदेशतः। सतरङ्गां तरीतुं तां प्रविवेश तरङ्गिणीम्॥ ३४३
वीक्षमाणेऽन्वगायाते तीरस्थे सिंहविक्रमे। मध्येनदि च सा चक्रे परिस्खलितमात्मनः॥ ३४४
ओघेन ह्रियमाणेव तारं चक्रन्द तत्र सा। वीक्षसे म्रियमाणां मामार्यपुत्र न रक्षसि॥ ३४५
सृगालविक्रमः किं त्वं न पुनः सिंहविक्रमः। तच्छ्रुत्वैवावतीर्णोऽभूत्स नद्यां सिंहविक्रमः॥ ३४६
सापि स्त्री वारिवेगेन नीयमानेव तत्र तम्। त्रातुं तमनुगच्छन्तं तत्पारमनयत्क्षणात्॥ ३४७
तत्र प्राप्तं गलक्षिप्तपाशः कालस्तमब्रवीत्। अपायो मस्तकस्थो हि विषयग्रस्तचेतसाम्॥ ३४८
ततो यमसभां नीतं कालेनैतं प्रमादिनम्। चित्रगुप्तोऽब्रवीद्दृष्ट्वा प्राक्प्रसन्नो जनान्तिकम्॥ ३४९
पूर्वं किं नरकं भुङ्क्षे किं वा स्वर्गमितीह चेत्। पृच्छ्यसे प्रार्थयेथास्तत्स्वर्गवासं त्वममतः॥ ३५०

स्वर्गे वसंश्च कुर्वीथाः पुण्यं तद्दार्ढ्यसिद्धये । ततः कुर्यास्तपस्तत्र कृत्स्नपापापनुत्तये ॥ ३५१
इत्युक्तश्चित्रगुप्तेन स स्वैरं सिंहविक्रमः । विलक्षोऽधोमुखो भीतः प्रतिपेदे तथेति तत् ॥ ३५२
क्षणाच्च धर्मराजोऽत्र चित्रगुप्तमभाषत । कश्चित्कोऽप्यस्य पुण्यांशश्चौरस्यास्त्यत्र किं न वा ॥ ३५३
चित्रगुप्तस्ततोऽवादीदस्त्यसावतिथिप्रियः । प्रादाद्दारानपि स्वेष्टदेवताप्रीतयेऽर्थिने ॥ ३५४
ततोऽस्य दिवसं दिव्यमस्ति स्वर्गगतिः प्रभो । श्रुत्वैतद्धर्मराजस्तमपश्यत्सिंहविक्रमम् ॥ ३५५
रे शुभाशुभयोः पूर्वं भुङ्क्षे किं कथ्यतामिति । ततः प्रार्थितवान्पूर्वं स शुभं सिंहविक्रमः ॥ ३५६
तेनाज्ञया धर्मराजस्यागतं स विमानकम् । आरुह्य त्रिदिवं प्रायाच्चित्रगुप्तवचः स्मरन् ॥ ३५७
तत्र व्योमसरित्स्नानजपव्रतपरायणः । द्वितीयं दिवसं प्राप स स्वर्गे भोगनिःस्पृहः ॥ ३५८
एवं क्रमेण चासाद्य स्वर्गं तीव्रतपोबलात् । आराध्य शंकरं प्राप ज्ञानं निर्दग्धकिल्बिषः ॥ ३५९
ततोऽस्य नारका दूता न शेकुर्मुखमीक्षितुम् । चित्रगुप्तो ममार्जाघं भूर्जे तूष्णीमभूद्यमः ॥ ३६०
इत्थं चौरोऽपि सत्प्रज्ञाबलात्सिद्धिमवाप सः । सिंहविक्रम इत्येपा प्रज्ञापारमितोदिता ॥ ३६१
एवं चारुह्य नौतुल्यां तरन्त्येव भवाम्बुधिम् । वत्स बुद्धोक्तदानादिषट्पारमितां बुधाः ॥ ३६२
इति तस्मिन्वने सोमशूरं तस्यानुशासतः । बोधिसत्त्वपदस्थस्य विनीतमतिभूपतेः ॥ ३६३
भास्करस्ता निशम्यैव प्रशाम्यन्धर्मदेशनाः । संध्यारागात्तकाषायो विवेशास्ताद्रिकंदरम् ॥ ३६४
ततः संध्यामुपस्थाय यथावत्तत्र तां निशाम् । स विनीतमती राजा सोमशूरश्च निन्यतुः ॥ ३६५
अन्येद्युश्च क्रमात्तस्मै सोमशूराय शासनम् । स विनीतमतिर्बौद्धं सरहस्यमुपादिशत् ॥ ३६६
ततः स सोमशूरस्तमुपासीनो गुरुं वने । तस्थौ समाधिनिष्ठोऽत्र वृक्षमूले कृतोटजः ॥ ३६७
क्रमाच्च तौ समं तत्र गुरुशिष्यावुभावपि । लब्धयोगमहासिद्धी परां बोधिमवापतुः ॥ ३६८
अत्रान्तरे स कनककलशो मत्सरान्नृपः । तेनेन्दुकलशेनैत्य तत्खड्गाश्वप्रभावतः ॥ ३६९
भ्रात्रा निर्वासितस्तस्मादप्यहिच्छत्रराज्यतः । यद्विनीतमतिस्तस्मै तदुत्खाताय दत्तवान् ॥ ३७०
स राज्यविच्युतो भ्राम्यन्द्वित्रस्वसचिवान्वितः । तद्विनीतमतेः प्राप दैवादाश्रमकाननम् ॥ ३७१
तत्र यावत्स दुर्वारक्षुत्तृष्णार्तोऽभिवाञ्छति । फलमूलाम्बु तावत्तन्माययेन्द्रेण काननम् ॥ ३७२
दग्ध्वा मरूकृतं प्राग्वत्तं वञ्चयितुमिच्छता । विनीतमतिमेताद्दगध्वगातिथ्यलोभतः ॥ ३७३
सोऽप्यकस्मान्मरूभूतमात्माश्रममवेक्ष्य तम् । विनीतमतिरुद्भ्रान्तो बभ्रामेतस्ततः क्षणम् ॥ ३७४
ददर्श तं च कनककलशं भ्रान्तमागतम् । क्षुधा कण्ठगतप्राणमतिथिं सानुगं ततः ॥ ३७५
उपेत्य तादृशं तं च वृत्तान्तं परिपृच्छ्य च । आतिथेयः कृतप्रश्नो बोधिसत्त्वो जगाद सः ॥ ३७६
अरण्येऽस्मिन्निरातिथ्ये मरुभूमित्वमागते । जीवितोपायमप्येतं क्षुधितानां वदामि वः ॥ ३७७
इतोऽर्धक्रोशमात्रेऽत्र पतित्वा खातके मृतः । मृगस्तिष्ठति तन्मांसैः प्राणात्रक्षत गच्छत ॥ ३७८
तथेत्यार्तेऽतिथौ तत्र सानुगे गन्तुमुद्यते । स विनीतमतिर्बोधिसत्त्वः पूर्वं ततो ययौ ॥ ३७९
प्राप्य तत्खातकं कृत्वा मृगरूपं च योगतः । निक्षिप्य तत्र चात्मानं सोऽर्थिहेतोर्जहावसून् ॥ ३८०
ततः शनैस्ते कनककलशाद्याः समाययुः । खातं तद्ददृशुश्चात्र तं विपन्नस्थितं मृगम् ॥ ३८१
उद्धृत्य तमथोत्पाद्य ज्वलनं तृणकण्टकैः । भृष्ट्वा च तस्य मांसानि ते निःशेषाण्यभक्षयन् ॥ ३८२
तावच्च तस्य भार्ये द्वे बोधिसत्त्वस्य विह्वले । पश्यन्त्यावाश्रमध्वंसमपश्यन्त्यौ च तं पतिम् ॥ ३८३
गत्वा नागसुताराजसुते तस्मै तदूचतुः । सोमशूराय निबिडाचलिताय समाधितः ॥ ३८४
सोऽपि तत्प्रणिधानेन विज्ञाय गुरुचेष्टितम् । शशंस गुरुपत्नीभ्यां ताभ्यां दुःखप्रदाप्यपि ॥ ३८५
ताभ्यामेव समं चाशु तत्खातनिकटं ययौ । यत्रातिथिभ्यस्तेनात्मा दत्तोऽस्य गुरुणा तथा ॥ ३८६
तत्र ते नागतनयाराजपुत्र्यौ मृगाकृतिम् । शृङ्गास्थिमात्रशेषं तं पतिं दृष्ट्वान्वशोचताम् ॥ ३८७
तच्छृङ्गास्थीनि चादाय स्वाश्रमाद्दारुसंचयम् । आनीयाग्निप्रवेशं ते कुरुतः स्म पतिव्रते ॥ ३८८
ततस्तत्र स्थितः सोऽपि ज्ञातवृत्तान्तदुःखितः । अग्निप्रवेशं कनककलशः सानुगो व्यधात् ॥ ३८९

एवंगते सोमशूरो गुरुदुःखासहोऽत्र सः । दर्भसंस्तरमध्यास्त प्राणोत्क्रान्तिविधित्सया ॥ ३९०
तत्क्षणं च तमागत्य साक्षादिन्द्रोऽभ्यभाषत । मैवं कृथा मया ह्येष गुरुस्तव परीक्षितः ॥ ३९१
अस्थिभस्मावशेषोऽपि जीवन्नुत्थापितो ह्यसौ । सिक्त्वैवामृतवर्षेण सभार्यः सातिथिर्मया ॥ ३९२
इतीन्द्रवचनं श्रुत्वा तं प्रणम्योत्थितो मुदा । गत्वा स वीक्षते सोमशूरो यावत्स तद्गुरुः ॥ ३९३
बोधिसत्त्वः पुनर्जीवन्विनीतमतिरुत्थितः । भार्याभ्यां तैश्च कनककलशप्रमुखैः सह ॥ ३९४
ततः स तं सपत्नीकं परलोकागतं गुरुम् । मूर्ध्नावन्दत वाक्पुष्पैरार्चयच्चक्षुषा पपौ ॥ ३९५
भक्तिप्रह्वेषु कनककलशादिषु तेषु च । ब्रह्मविष्णुमुखा देवाः सर्वे तत्राययुस्ततः ॥ ३९६
सत्त्वात्तुष्टाश्च ते तस्मै विनीतमतये वरान् । दिव्यानुभावान्पाराश्र्यवृतान्दत्त्वा तिरोदधुः ॥ ३९७
सोऽपि तैरुक्तवृत्तान्तैर्विनीतमतिरन्वितः । सोमशूरादिभिः प्रायाद्दिव्यमन्यत्तपोवनम् ॥ ३९८
एवं मिलन्तीह पुनर्भस्मीभावं गता अपि । किं पुनस्तात जीवन्तः स्वच्छन्दगतयो नराः ॥ ३९९
तदलं देहमुत्सृज्य वत्स वीरो ह्यसि व्रज । भावी मृगाङ्कदत्तेन तवावश्यं समागमः ॥ ४००
इत्येतां वृद्धतापस्या मुखाच्छ्रुत्वा कथामहम् । जातास्थः खड्गहस्तस्तां नत्वा प्रस्थितवांस्ततः ॥ ४०१
क्रमात्प्राप्तोऽटवीमेतामेभिर्लब्धोऽस्मि दैवतः । उपहारं विचिन्वद्भिः शबरैश्चण्डिकाकृते ॥ ४०२
वष्टभ्य चैतैरानीतः प्रयुद्धेऽहं व्रणार्दितः । शबराधिपतेरस्य पार्श्वं मायाबटोरिह ॥ ४०३
अत्र लब्धो मया द्विमत्रिमत्रियुक्तो भवान्प्रभो । त्वत्प्रसादाच्च जाता मे निर्वृतिः स्वगृहे यथा ॥ ४०४

इति तेन गुणाकरेण सख्या निजवृत्तान्तमुदीरितं निशम्य ।
शबरेशगृहस्थितः स भेजे परितोषं परमं मृगाङ्कदत्तः ॥ ४०५
समवेक्ष्य च तस्य संगरे तां व्रणितस्योचितपथ्यदेहचर्याम् ।
अहनि वलति सोऽपरैर्वयस्यैः सममुत्थाय निजाह्निकं चकार ॥ ४०६
आसीच्च तत्राथ गुणाकरं तमुल्लाघयन्संप्रति तान्यहानि ।
शेषान्सखीन्प्राप्तुमसौ शशाङ्कवत्याप्तये चोज्जयिनीं यियासुः ॥ ४०७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चमस्तरङ्गः ।

---

षष्ठस्तरङ्गः ।

अथ रूढव्रणे स्वस्थे जाते तस्मिन्गुणाकरे । शुभेऽहनि तमापृच्छ्य सुहृदं शबराधिपम् ॥ १
सुदूरमन्वगायातं कार्याय कृतसंविदम् । सख्या दुर्गपिशाचेन मातङ्गपतिना युतम् ॥ २
मायाबटुं सानुचरं स शशाङ्कवतीकृते । मृगाङ्कदत्तस्तत्पल्ल्याः प्रायादुज्जयिनीं प्रति ॥ ३
गच्छंश्च स श्रुतधिना तदा विमलबुद्धिना । गुणाकरेण च समं सहभीमपराक्रमः ॥ ४
चिन्वन्नन्यान्सखींस्तस्यां विन्ध्याटव्यामथैकदा । सामात्यः पथि सुष्वाप रात्रौ क्वापि तरोस्तले ॥ ५
अकस्माच्च प्रबुद्धः सन्यावदुत्थाय वीक्षते । तावत्तत्र ददर्शैकं सुप्तस्थं मानुषं परम् ॥ ६
विवृणोति मुखं यावत्तस्य तावत्स्वमन्त्रिणम् । प्रत्यभिज्ञातवान्प्राप्तं विचित्रकथसंज्ञकम् ॥ ७
सोऽपि प्रबुद्धो दृष्ट्वैव तं विचित्रकथः प्रभुम् । मृगाङ्कदत्तं सानन्दं साधुर्जग्राह पादयोः ॥ ८
तेनाप्यालिङ्गितोऽकाण्डदर्शनोत्फुल्लचक्षुषा । तन्मन्त्रिभिश्च तैः सर्वैः प्रबुद्धैरभ्यनन्द्यत ॥ ९
अथोक्तस्वस्ववृत्तान्तैः पृष्टस्तैरखिलैः क्रमात् । स विचित्रकथो वक्तुं स्ववृत्तान्तं प्रचक्रमे ॥ १०
तदा पारावताख्यस्य शापाद्युष्मास्वितस्ततः । विभ्रष्टेष्वहमेकाकी मोहात्तत्राभ्रमं चिरम् ॥ ११
दूरभ्रान्तोऽपरेद्युश्च नष्टसंज्ञोऽहमाप्तवान् । अकस्मादटवीप्रान्ते क्लान्तो दिव्यं महत्पुरम् ॥ १२
तत्र दिव्यः पुमानेको दिव्यनारीद्वयान्वितः । मामाश्वासितवान्दृष्ट्वा स्नपितं शीतलैर्जलैः ॥ १३
प्रवेश्य चान्तः प्रादान्मे यत्नाद्दिव्यं स भोजनम् । ततोऽभुङ्क्त स्वयं नार्यावभुञ्जातां ततोऽपि ते ॥ १४
भुक्तोत्तरं च तमहं विश्रान्तोऽत्र व्यजिज्ञपम् । को भवान्किं च मामेवं मुमूर्षुं त्रातवानसि ॥ १५

मया ह्यवश्यं त्यक्तव्यं शरीरं स्वप्रभुं विना । इत्युक्त्वा वर्णितस्तस्मै स्ववृत्तान्तोऽखिलो मया ॥ १६
ततश्च स महात्मा मां प्रीतिमानेवमब्रवीत् । यक्षोऽहमेते मद्भार्ये त्वं च प्राप्तोऽद्य मेऽतिथिः ॥ १७
यथाशक्त्यतिथेः पूजा धर्मो हि गृहमेधिनाम् । मयार्चितोऽस्यतः किं च प्राणान्कस्मान्मुमुक्षसि ॥ १८
वियोगो नागशापेन कंचित्कालमयं हि वः । अवश्यं क्षीणशापानां युष्माकं स्यात्समागमः ॥ १९
निर्दुःखो नाम कश्चात्र संसारे भद्र जायते । यक्षेणापि मया दुःखं यद्दृष्टं वच्मि तच्छृणु ॥ २०
अस्त्यस्या वसुधावध्वा मौलिमण्डनमालिका । त्रिगर्ता नाम नगरी सुमनोगुणगुम्फिता ॥ २१
तस्यां द्विजयुवा कोऽपि पवित्रधर इत्यभूत् । धनैर्दरिद्रः स्वजनैरदरिद्रः कुलादिभिः ॥ २२
स वसञ्श्रीमतां मध्ये द्विजो मानी व्यचिन्तयत् । एषामर्थवतां मध्ये वृत्तस्थोऽपि न भाम्यहम् ॥ २३
एकः सत्काव्यशब्दानामिव शब्दो निरर्थकः । मनस्वी च न शक्नोमि सेवां नापि प्रतिग्रहम् ॥ २४
तद्गत्वा क्वचिदेकान्ते यक्षिणीं साधयाम्यहम् । अस्ति मन्त्रोपदेशो हि तत्र मे गुरुवक्त्रतः ॥ २५
इति संकल्प्य विधिवद्गत्वारण्याय यक्षिणीम् । भार्यात्वे साधयामास स पवित्रधरो द्विजः ॥ २६
सिद्धया च तया युक्तः सौदामिन्यभिधानया । तस्थौ घोरहिमोत्तीर्णो विटपीव मधुश्रिया ॥ २७
एकदा तं सुतोत्पत्तिं विना दुःखितचेतसम् । दृष्ट्वा सा यक्षिणी भार्या पवित्रधरमब्रवीत् ॥ २८
मार्यपुत्र कृथाश्चिन्तां सूनुरुत्पद्यते हि नौ । इमं च शृणु वृत्तान्तमत्राहं कथयामि ते ॥ २९
अस्ति दक्षिणदिक्प्रान्ते प्रावृषो जन्मभूरिव । पिहितार्का घनश्यामा तमालवनवीथिका ॥ ३०
तस्यां पृथूदरो नाम यक्षो वसति विश्रुतः । तस्याहमियमेकैव नाम्ना सौदामिनी सुता ॥ ३१
सा स्नेहात्तेन पित्राहं नीयमाना कुलाद्रिषु । तेषु तेषु सदाक्रीडं दिव्योपवनभूमिषु ॥ ३२
एकदा च समं सख्या क्रीडन्ती कपिशभ्रुवा । अद्राक्षमट्टहासाख्यं कैलासे यक्षपुत्रकम् ॥ ३३
सोऽपि मां सखिमध्यस्थो दृष्टवानथ तत्क्षणम् । जातावावां किलान्योन्यरूपाकृष्टविलोचनौ ॥ ३४
तद्दृष्ट्वा तुल्यसंयोगमवेत्याहूय चात्र तम् । सद्योऽट्टहासं तातेन विवाहो नौ विनिश्चितः ॥ ३५
स्थापिते लग्नदिवसे ताते मामनयद्गृहम् । अट्टहासोऽपि मुदितः समित्रः स्वगृहानगात् ॥ ३६
अन्येद्युश्च विषण्णेव कपिशभ्रूः सखी मम । आगात्समीपं पृष्टा च कृच्छ्रादेवमभाषत ॥ ३७
अनाख्येयमपीदं ते कथयाम्यप्रियं सखि । अद्यायान्त्या मया दृष्टः सोऽट्टहासो वरस्तव ॥ ३८
चित्रस्थलाख्ये हिमवत्सानूद्याने त्वदुत्सुकः । विनोदयद्भिः सखिभिः क्रीडया यक्षराट् कृतः ॥ ३९
भ्राता दीप्तशिखस्तस्य तत्पुत्रो नडकूबरः । कल्पितस्तैः स्वयं ते च तस्य साचिव्यमाश्रयन् ॥ ४०
एवं कृतविनोदं तं वयस्यैस्त्वत्प्रियं तदा । व्योम्ना यदृच्छया गच्छन्नपश्यन्नडकूबरः ॥ ४१
स तमाहूय संक्रुद्धो धनाधिपसुतोऽशपत् । भृत्यो भूत्वा प्रभोर्लीलामभिवाञ्छसि यत्ततः ॥ ४२
दुर्मते भव मर्त्यस्त्वमूर्ध्वमिच्छन्नधो व्रज । इत्युक्तस्तेन विग्रस्तं सोऽट्टहासो व्यजिज्ञपत् ॥ ४३
औत्सुक्यं नुदता देव मूर्खेणेदं मया कृतम् । नाधिकाराभिमानेन तत्क्षमां कुरु मे प्रभो ॥ ४४
इत्यार्तं तद्वचः श्रुत्वा प्रणिधानात्तथैव तत् । बुद्ध्वा शापान्तहेतोस्तं सोऽब्रवीन्नडकूबरः ॥ ४५
यस्यां त्वमुत्सुकस्तस्यां यक्षिण्यां मानुषो भवन् । जनयित्वानुजं दीप्तशिखमेवैतमात्मजम् ॥ ४६
शापाद्विमुक्तः स्वपदं तया पत्न्या सहाप्स्यसि । भ्राता तु ते सुतो भूत्वा कृत्वा राज्यमसौ भुवि ॥ ४७
शापान्मोक्ष्यत इत्युक्ते तेन वित्तेशसूनुना । सोऽट्टहासस्तिरोभूतः क्वापि शापप्रभावतः ॥ ४८
तद्दृष्ट्वाहमिहायाता पार्श्वे ते सखि दुःखिता । इत्युक्ताहं तया सख्या दुःखात्कामप्यगां दशाम् ॥ ४९
आत्मानमनुशोच्याथ गत्वा पित्रोर्निवेद्य तत् । अनैषं तमहं कालं पुनः संगमवाञ्छया ॥ ५०
सोऽट्टहासस्त्वमुत्पन्नः सा चाहं मिलितावुभौ । अद्येहावां तदेवं नौ जनितैवाचिरात्सुतः ॥ ५१
एवं तयोक्ते ज्ञानिन्या सौदामिन्या प्रहर्षवान् । अभूदुत्पन्नपुत्रार्थः स पवित्रधरो द्विजः ॥ ५२
कालेन तस्य यक्षिण्यां तस्यां सूनुरजायत । गृहं चित्तं च जातेन तयोर्येन प्रकाशितम् ॥ ५३
दृष्ट्वा च तस्य पुत्रस्य स पवित्रधरो मुखम् । संपेदे सोऽट्टहासोऽत्र यक्षो दिव्याकृतिः क्षणात् ॥ ५४

उवाच यक्षिणीं चैतां प्रिये शापो गतः स नौ । जातः सैषोऽट्टहासोऽहमेहि यावो निजां गतिम् ॥ ५५
इत्युक्तवन्तं तं भार्या सावादीच्छिशुरेव ते । भ्राता शापात्सुतीभूता कथं स्यादिति चिन्त्यताम् ॥ ५६
तच्छ्रुत्वा ध्यानतोऽवेक्ष्य सोऽट्टहासो जगाद ताम् । देवदर्शन इत्यस्ति ब्राह्मणोऽस्यां पुरि प्रिये ॥ ५७
पञ्चाग्नेस्तस्य चान्यौ द्वावधिकं ज्वलतः क्षुधा । जठराग्नी सभार्यस्य दरिद्रस्य प्रजाधनैः ॥ ५८
धनपुत्रार्थिनं तं च तपसि स्थितमेकदा । आराधयन्तं भगवानग्निः स्वप्ने समादिशत् ॥ ५९
औरसो नास्ति पुत्रस्ते कृत्रिमस्तु भविष्यति । तद्वशादेव च ब्रह्मन्दारिद्र्यं ते निवर्त्स्यति ॥ ६०
इत्यग्न्यादेशतो विप्रस्तत्प्रतीक्षोऽद्य संस्थितः । तस्मै शिशुरयं देयो भवितव्यमिदं हि तत् ॥ ६१
इत्युक्त्वा तां प्रियां स्वर्णपूर्णकुम्भोपरि स्थितम् । कृत्वा च तं गलाबद्धदिव्यरत्नस्रजं शिशुम् ॥ ६२
क्षिप्त्वा तस्य गृहे रात्रौ प्रसुप्तस्य द्विजन्मनः । सभार्यस्य सभार्यः स्वां सोऽट्टहासो ययौ गतिम् ॥ ६३
सोऽपि प्रबुध्य विप्रोऽत्र विस्फुरद्रत्नतारकम् । अपश्यद्बालचन्द्रं तं सभार्यो देवदर्शनः ॥ ६४
किमेतदिति विस्मित्य हेमकुम्भं विलोक्य तम् । स स्वप्नादेशमाग्नेयं सस्मार च ननन्द च ॥ ६५
जग्राह बालकं तं च पुत्रं विधिसमर्पितम् । धनं च तत्प्रभाते च विदधे स महोत्सवम् ॥ ६६
एकादशे च दिवसे तस्य पुत्रस्य तत्र सः । बालस्य स्वोचितं नाम श्रीदर्शन इति व्यधात् ॥ ६७
ततो महाधनो भूत्वा तस्थौ क्रत्वादिकाः क्रियाः । कुर्वन्भोगांश्च भुञ्जानः स विप्रो देवदर्शनः ॥ ६८
सोऽपि श्रीदर्शनस्तत्र वृद्धिं प्राप्तः पितुर्गृहे । प्रकर्षं वेदविद्यासु प्रापास्त्रेषु च वीर्यवान् ॥ ६९
कालेन यौवनस्थस्य स पिता देवदर्शनः । तीर्थयात्रागतस्तस्य प्रयागे प्रशमं ययौ ॥ ७०
तद्बुद्ध्वा तस्य मातापि प्रविष्टाग्निं ततश्च सः । व्यधाच्छ्रीदर्शनः शोचंस्तयोः शास्त्रोदिताः क्रियाः ॥ ७१
शनैश्च स तनूभूतशोकोऽकृतपरिग्रहः । द्यूतक्रीडाप्रसक्तोऽभूद्दैवात्प्राज्ञोऽप्यबान्धवः ॥ ७२
अचिरेण च कालेन तस्य क्षीणार्थसंपदः । तेन दुर्व्यसनेनासीद्भोजनेऽपि कदर्थना ॥ ७३
एकदा द्यूतशालायां निराहारस्थितं त्र्यहम् । अशक्नुवन्तं निर्गन्तुं लज्जयानुचिताम्बरम् ॥ ७४
अन्यैर्दत्तमभुञ्जानं दुःखितं कितवः सखा । कश्चिन्मुखरको नाम तं श्रीदर्शनमभ्यधात् ॥ ७५
किं मुह्यसीदृगेवेदं द्यूतव्यसनपातकम् । अश्रीकटाक्षपाताः किमक्षा न विदितास्तव ॥ ७६
बाहू प्रावरणं शय्या पांसवश्चत्वरं गृहम् । भार्या विध्वस्तता धात्रा कितवस्य हि निर्मितम् ॥ ७७
किं तन्न भुङ्क्षे विद्वानप्यात्मानं किमुपेक्षसे । जीवन्हि धीरोऽभिमतं किं नाम न यदाप्नुयात् ॥ ७८
तथा च चित्रामत्रैतां भूनन्दनकथां शृणु । अस्तीहाभरणं भूमेः कश्मीरा इति मण्डलम् ॥ ७९
दृश्यभोगं विधायैकं त्रिदिवं सुकृतां कृते । भोग्यभोगं विधाता यद्द्वितीयमिव निर्ममे ॥ ८०
अहमत्राधिका नाहमित्यन्योन्यमिवेर्ष्यया । प्रविष्टाभ्यां श्रितं द्वाभ्यां सरस्वत्या श्रिया च यत् ॥ ८१
धर्मद्रुहः प्रवेशोऽत्र कलेर्मा भूदितीव यत् । स्वदेहपरिवेषेण रक्ष्यते तुहिनाद्रिणा ॥ ८२
देवतीर्थमयाद्दूरमितो याहीति कल्मषम् । वीचिहस्तैर्नुदन्त्येव भूषितं यद्वितस्तया ॥ ८३
यस्मिन्सितसुधाधौतास्तुङ्गाः प्रासादपङ्क्तयः । कुर्वन्त्यासन्नहिमवत्पादशैलावलीभ्रमम् ॥ ८४
तस्मिन्वर्णाश्रमगुरुः प्रजानन्दनचन्द्रमाः । अभूद्विद्यागमबुधो नाम्ना भूनन्दनो नृपः ॥ ८५
नखराजिनियुक्तेषु विरेजे यस्य विक्रमः । कामिनीकुचयुग्मेषु मण्डलेषु च विद्विषाम् ॥ ८६
यस्य नीतिमतोऽप्यासन्प्रजाः शश्वदनीतयः । कृष्णैकासक्तचित्तस्याप्यकृष्णतरमानसाः ॥ ८७
स जातु राजा द्वादश्यां विधिवत्पूजिताच्युतः । स्वप्ने कामप्युपायातामपश्यद्दैत्यकन्यकाम् ॥ ८८
तया संप्राप्य संयोगं प्रबुद्धो न ददर्श ताम् । व्यक्तं ददर्श संभोगचिह्नमङ्गे तु विस्मितः ॥ ८९
नायं स्वप्नः स्फुटो ह्येष संभोगस्तर्कयाम्यहम् । विप्रलब्धस्तया नूनं नार्या किमपि दिव्यया ॥ ९०
इत्यवेत्य च तच्चित्तस्तथाभूद्विरहातुरः । यथा स राजकार्याणि जहौ सर्वाण्यपि क्रमात् ॥ ९१
अपश्यन्प्राप्त्युपायं च तस्याः सोऽचिन्तयन्नृपः । हरेः प्रसादात्सोऽभून्मे तथा तत्संगमक्षणः ॥ ९२
आराधयामि तत्प्राप्त्यै गत्वैकान्ते तमेव तत् । राज्यपाशं विमुच्येमं हा तद्विरहनीरसम् ॥ ९३

इति संकल्प्य संबोध्य सचिवाननुजाय सः। सुनन्दनाभिधानाय राज्यं भूनन्दनो ददौ ॥ ९४
त्यक्तराज्यश्च स ययौ पादन्यासोद्भवं हरेः। तीर्थं क्रमसरो नाम त्रिविक्रमकृतं पुरा ॥ ९५
यदध्यासितमभ्यर्णपर्वताग्रनिवेशिभिः। शृङ्गाकारैस्त्रिभिर्देवैर्ब्रह्मविष्णुमहेश्वरैः ॥ ९६
येन विष्णुपदेनान्या काश्मीरेषु सुरापगा। सृष्टा विषुवती नाम वितस्ता मत्सरादिव ॥ ९७
तत्रासीत्स तपः कुर्वन्राजान्यरसनिःस्पृहः। क्काम्यन्नन्यरसाकाङ्क्षी निदाघ इव चातकः ॥ ९८
व्यतीतद्वादशाब्दे च तस्मिंस्तत्र तपःस्थिते। आगात्तेन पथा कोऽपि तपस्वी ज्ञानिनां वरः ॥ ९९
पिङ्गलाग्रजटश्चीरवासाः शिष्यगणान्वितः। तत्तीर्थशैलशिखरादवतीर्ण इवेश्वरः ॥ १००
स तं दृष्ट्वैव राजानं जातप्रीतिरुपेत्य च। प्रह्वः पृष्ट्वा च वृत्तान्तं ध्यात्वा क्षणमिवाब्रवीत् ॥ १०१
राजन्सा दैत्यकन्या ते प्रिया पातालवासिनी। तदाश्वसिहि तस्यास्त्वामन्तिकं प्रापयाम्यहम् ॥ १०२
अहं हि दाक्षिणात्यस्य यज्ञसंज्ञस्य यज्वनः। पुत्रो भूतिवसुर्नाम ब्राह्मणो योगिनां गुरुः ॥ १०३
सोऽहं संक्रमितज्ञानः पित्रा पातालशास्त्रतः। शिक्षित्वा हटकेशानमन्त्रतन्त्रविधिक्रमम् ॥ १०४
गत्वा श्रीपर्वतेऽकार्षं त्र्यम्बकाराधनं तपः। तेन तुष्टोऽथ मां तत्र साक्षादित्यादिशच्छिवः ॥ १०५
गच्छ दैत्याङ्गनायुक्तो भुक्त्वा भोगान्रसातले। मामुपैष्यस्युपायं च तत्प्राप्तौ शृणु वच्मि ते ॥ १०६
सन्ति भूयांसि पातालविवराण्यत्र भूतले। प्रकाशं त्वस्ति कश्मीरेष्वेकं मयकृतं महत् ॥ १०७
येन प्रवेश्य गुप्तासु दानवोद्यानभूमिषु। उषा बाणसुता कान्तमनिरुद्धं व्यनोदयत् ॥ १०८
प्रद्युम्नश्च तदा पुत्रं रक्षितुं तं व्यधत्त यत्। प्रकटं गिरिशृङ्गेण प्रकल्प्य द्वारमेकतः ॥ १०९
तद्द्वाररक्षाहेतोश्च यत्र दुर्गां न्यवेशयत्। आराध्य स स्तुतिशतैः शारिकानामधारिणीम् ॥ ११०
येन प्रद्युम्नशिखरं शारिकाकूटमित्यपि। नामद्वयेन तत्तत्र स्थानमद्याभिधीयते ॥ १११
गच्छ तेन बिलाग्रेण प्रविश्यानुचरैः सह। पातालं मत्प्रसादाच्च सिद्धिस्तेऽत्र भविष्यति ॥ ११२
इत्युक्त्वान्तर्हिते देवे तत्प्रसादप्रभावतः। उत्पन्नाखिलविज्ञानः कश्मीरानागतोऽस्म्यमून् ॥ ११३
तदस्माभिः समं राजञ्शारिकाकूटमेहि तत्। यावदिष्टाङ्गनापार्श्वं पातालं त्वां नयाम्यहम् ॥ ११४
एवमुक्तवता तेन तथेति स तपस्विना। समं तच्छारिकाकूटं ययौ भूनन्दनो नृपः ॥ ११५
तत्र स्नात्वा वितस्तायामर्चयित्वा विनायकम्। संपूज्य शारिकां देवीं दिग्बन्धादिपुरःसरम् ॥ ११६
विधिवत्सर्षपक्षेपाद्धरानुग्रहशालिना। महातपस्विना तेन विवरे प्रकटीकृते ॥ ११७
प्रविश्य तेनैव समं सशिष्येण स भूपतिः। जगाम पातालपथं पञ्चाहानि दिवानिशम् ॥ ११८
षष्ठेऽह्नि सर्वेऽप्युत्तीर्य गङ्गां पातालवाहिनीम्। भूमौ रजतमय्यां ते दिव्यमैक्षन्त काननम् ॥ ११९
स्थलप्रफुल्लसौवर्णकमलामोदवासितम्। उद्यत्प्रवालकर्पूरचन्दनागुरुपादपम् ॥ १२०
तन्मध्ये सुमहाभोगं रत्नसोपानसुन्दरम्। सौवर्णभित्ति माणिक्यस्तम्भसंभारभासुरम् ॥ १२१
चन्द्रकान्तशिलाबद्धविशालामलसारकम्। प्रहृष्टा ददृशुः प्रांशु शैवमायतनं च ते ॥ १२२
ततश्च स तपस्वी तान्स्वशिष्यांस्तं च भूपतिम्। भूनन्दनं ज्ञानिवरो जाताश्चर्यानभाषत ॥ १२३
अयं स देवः पातालनिलयो हाटकेश्वरः। गीयते त्रिषु लोकेषु तदसौ पूज्यतामिति ॥ १२४
ततः सर्वेऽपि ते तैस्तैः पुष्पैः पातालसंभवैः। तद्गङ्गाम्भःप्लुताः शंभुं पूजयामासुरत्र तम् ॥ १२५
तत्पूजाक्षणविश्रान्ता गत्वा प्रापुस्ततश्च ते। पतत्पक्वफलं दिव्यमेकं जम्बुमहाद्रुमम् ॥ १२६
तं प्रेक्ष्य स तपस्वी तानवोचन्न फलानि वः। भक्ष्याण्येतस्य विघ्नं हि भुक्तान्येतानि कुर्वते ॥ १२७
तच्छ्रुत्वापि चखादैकस्तच्छिष्यस्तत्फलं क्षुधा। खादित्वैव च संपेदे निश्चेष्टः स्थावराकृतिः ॥ १२८
ततस्तद्दर्शनत्रासपरित्यक्तफलस्पृहैः। स तपस्वी सहान्यैस्तैः शिष्यैर्भूनन्दनान्वितः ॥ १२९
क्रोशमात्रमतिक्रम्य हेमप्राकारमुच्छ्रितम्। सद्रत्नरचितद्वारमत्रावस्थितमैक्षत ॥ १३०
तद्द्वारपार्श्वयोर्लोहमयाङ्गावुभयोरुभौ। प्रवेशरोधिनौ मेषौ दृष्ट्वा शृङ्गप्रहारिणौ ॥ १३१
हत्वा सपदि दण्डेन न्यस्तमन्त्रेण मूर्धनि। विद्रावयामास स तौ क्वापि वज्रहताविव ॥ १३२

ततः स तेन द्वारेण तच्छिष्याश्च नृपश्च सः । प्रविश्य ददृशुर्दिव्यान्हेमरत्नमयान्गृहान् ॥ १३३
द्वारि द्वारि च तेषां ते दन्तदष्टाधरोत्कटान् । गृहीतलोहमुसलानपश्यन्द्वाररक्षिणः ॥ १३४
ततश्चोपाविशन्सर्वे तत्रैकस्य तरोस्तले । स तपस्वी तु दुष्टघ्नीमबध्नाद्योगधारणाम् ॥ १३५
तद्धारणाप्रभावेण रौद्रास्ते द्वाररक्षकाः । सर्वेऽपि सर्वद्वारेभ्यः पलाय्यादर्शनं ययुः ॥ १३६
क्षणाच्च तेभ्यो द्वारेभ्यो दिव्याभरणवाससः । दैत्यकन्यापरीवारवारनार्यो विनिर्ययुः ॥ १३७
ताः पृथक्पृथगभ्येत्य तान्सर्वाना तपस्विनः । प्रवेशायार्थयामासुर्यथास्वं स्वामिनीगिरा ॥ १३८
अन्तःप्रविष्टैर्युष्माभिर्नोल्लङ्घ्यं स्वप्रियावचः । इति तानपरानुक्त्वा स तपस्वी कृती ततः ॥ १३९
कतिभिश्च समं ताभिः प्रविश्य वरमन्दिरम् । एकां प्रापोत्तमां दैत्यकन्यां भोगांश्च वाञ्छितान् ॥ १४०
अन्येऽप्येकैकशोऽन्याभिस्ताभिस्ते दिव्यवेश्मसु । प्रवेशिता ययुर्दैत्यसुतासंभोगपात्रताम् ॥ १४१
राजा भूनन्दनः सोऽपि नीतोऽभूदेकया तदा । प्रश्रयानतया तत्र बहिर्मणिमयं गृहम् ॥ १४२
परीवारवरस्त्रीणां प्रतिबिम्बैः समन्ततः । सजीवचित्रविन्यासमिव यद्रत्नभित्तिषु ॥ १४३
यत्सुश्लक्ष्णमहानीलमयभूभागनिर्मितम् । दिवः पृष्ठमिवारूढं विमानविजिगीषया ॥ १४४
मदाकुललसद्रामं हृद्यप्रद्युम्नविभ्रमम् । यदच्युतप्रभावाढ्यं वृष्णीनामिव केतनम् ॥ १४५
बालातपसहं पुष्पमपि यत्र न योषिताम् । वपुषः सुकुमारत्वे प्राप्नुयादुपमानताम् ॥ १४६
तत्र प्रविष्टः सोऽपश्यद्दिव्यसंगीतनादिनि । राजा प्राक्स्वप्नदृष्टां तां कान्तामसुरकन्यकाम् ॥ १४७
यस्याः प्रकाशिते कान्त्या पातालेऽर्कादिवर्जिते । रत्नाद्यालोकनिर्माणं पुनरुक्तं प्रजापतेः ॥ १४८
तां स पश्यन्ननिर्वाच्यरूपां हर्षाश्रुणा नृपः । अन्यावलोकनमलं चक्षुषोर्धौतवानिव ॥ १४९
सापि तं वीक्ष्य राजेन्द्रं ख्याप्यमानालिगीतिभिः । बाला कुमुदिनी नाम कमपि प्रमदं दधौ ॥ १५०
उत्थाय पाणावादाय क्लेशितोऽसि मयेति च । ब्रुवती सादरा सा तमुपावेशयदासने ॥ १५१
क्षणमात्रं च विश्रान्तं स्नातं वस्त्राद्यलंकृतम् । सा निनाय तमुद्यानमापानायासुराङ्गना ॥ १५२
तत्र तीरतरूलम्बिशवरक्तवसासवैः । पूर्णायाः सा तटे वाप्यास्तेन साकमुपाविशत् ॥ १५३
तद्वसासवपूर्णं च पात्रं तस्मै नृपाय सा । ददौ पानाय स च तन्न जग्राह जुगुप्सितम् ॥ १५४
न ते क्षेमं भवेदेतदस्मत्पानं निषेधतः । इति निर्बन्धतस्तां च ब्रुवाणां सोऽब्रवीन्नृपः ॥ १५५
अपेयं निश्चितं नैव पास्याम्येतद्यदस्त्विति । ततः सा तस्य तन्मूर्ध्नि पात्रं क्षिप्त्वान्यतो ययौ ॥ १५६
स च कूणितनेत्रास्यो राजान्यस्यां जलान्तरे । तच्चेटिकाभिरादाय दीर्घिकायां निचिक्षिपे ॥ १५७
क्षिप्त एव च तत्कालं तस्मिन्पूर्वतपोवने । तीर्थे क्रमसरस्येव प्राप्तमात्मानमैक्षत ॥ १५८
पश्यंश्च स हिमं तत्र हसन्तमिव तं नगम् । विषण्णविस्मितोद्भ्रान्तो वञ्चितः स व्यचिन्तयत् ॥ १५९
क्व तद्दैत्यसुतोद्यानं कायं क्रमसरो गिरिः । अहो किमिदमाश्चर्यं किं माया किं मतिभ्रमः ॥ १६०
किमन्यद्वा ध्रुवं तस्या यन्मयोल्लङ्घितं वचः । तपस्विवाक्यं श्रुत्वापि तस्येदं मे विजृम्भितम् ॥ १६१
न च तन्निन्दितं पानं सा ममैव परीक्षिणी । मूर्ध्नि च्युतेन यत्तेन दिव्यमायाति सौरभम् ॥ १६२
तत्सर्वथा ह्यभव्यानां कृतः क्लेशो महानपि । न फलाय विधिस्तेषु तथा वामो हि वर्तते ॥ १६३
इत्येवं चिन्तयन्नेत्य भृङ्गैर्भूनन्दनोऽत्र सः । अवेष्ट्यतासुरसुतापानसिक्ताङ्गगन्धतः ॥ १६४
कष्टमिष्टफलो मा भूज्जातोऽनिष्टफलस्तु मे । परिक्लेशोऽल्पसत्त्वस्य वेतालोत्थापनं यथा ॥ १६५
इति तैर्दश्यमानश्च भृङ्गैः स विमृशंस्तदा । जातोद्वेगो मतिं चक्रे देहत्यागाय भूपतिः ॥ १६६
तावच्च तेन मार्गेण कोऽपि दैवात्समागतः । मुनिपुत्रः क्षितिपतिं तथाभूतं ददर्श तम् ॥ १६७
सोऽभ्युपेत्य निवार्याशु भ्रमरान्करुणार्द्रधीः । ऋषिः पृष्ट्वा च वृत्तान्तं नृपमेतमभाषत ॥ १६८
राजन्यावदयं देहस्तावद्दुःखक्षयः कुतः । तदनुद्वेगतः साध्यः पुरुषार्थः सदा बुधैः ॥ १६९
यावच्च नाच्युतेशानविरिञ्चिष्वेकतामतिः । भेदोपासनजास्तावद्धङ्कुरा एव सिद्धयः ॥ १७०
तदभेदधिया ध्यायन्ब्रह्मविष्णुमहेश्वरान् । धैर्येण द्वादशान्यानि वर्षाणीह तपः कुरु ॥ १७१

ततः प्राप्स्यसि कान्तां तामन्ते सिद्धिं च शाश्वतीम् । देहस्तु तावत्सिद्धस्ते पश्यायं दिव्यसौरभः ॥ १७२
समन्त्रं च गृहाणेदं मम कृष्णमृगाजिनम् । कृतावगुण्ठनो येन भ्रमरैर्नहि बाध्यसे ॥ १७३
इत्युक्त्वाजिनमन्त्रौ स तस्मै दत्त्वा मुनिर्ययौ । तथेत्यात्तधृतिः सोऽपि तीर्थे तत्रावसन्नृपः ॥ १७४
द्वादशाब्दोषितं तं च तपसाराधितेश्वरम् । भूपं कुमुदिनी दैत्यकन्या सा स्वयमभ्यगात् ॥ १७५
तया साकं स पातालं गत्वा दयितया चिरम् । राजा भूनन्दनो भोगान्भुञ्जानः सिद्धिमाप्तवान् ॥ १७६
इत्यनुद्वेगशीला ये भव्या धैर्यावलम्बिनः । दूरभ्रष्टामपि निजां भूमिं संप्राप्नुवन्ति ते ॥ १७७
त्वं चेह भाविकल्याणः श्रीदर्शन सुलक्षणः । तदाहारं विनात्मानं किमुद्वेगादुपेक्षसे ॥ १७८
इत्युक्तो द्यूतशालान्तः सख्या मुखरकेण सः । तेन श्रीदर्शनो रात्रौ निराहारो जगाद तम् ॥ १७९
यथात्थ त्वं कुलीनः सन्किलत्स्यां पुरि लज्जया । निर्गन्तुं न बहिः शक्नोमीदृशो द्यूतदुर्गतः ॥ १८०
तदस्यामेव चेद्रात्रौ विदेशे गमनं क्वचित् । न निषेधसि मे मित्र तदाहारं करोम्यहम् ॥ १८१
तच्छ्रुत्वैव तथेत्युक्त्वा तस्मै मुखरकोऽथ सः । आनीय भोजनं प्रादात्सोऽपि तद्बुभुजे तदा ॥ १८२
भुक्त्वैव च स तेनैव सह श्रीदर्शनस्ततः । प्रायात्स्नेहानुयातेन सख्या देशान्तरं प्रति ॥ १८३
गच्छन्तं चात्र तं मार्गे यक्षौ दैवादपश्यताम् । यदृच्छयागतौ व्योम्ना जननीजनकौ निशि ॥ १८४
सौदामिन्यट्टहासौ तौ याभ्यां विप्रस्य वेश्मनि । स देवदर्शनस्यात्र जातमात्रो न्यधीयत ॥ १८५
तौ विज्ञाय तमापन्नं द्यूतव्यसननिर्धनम् । विदेशप्रस्थितं स्नेहाददृश्यावूचतुर्दिवः ॥ १८६
भोः श्रीदर्शन मात्रा ते देवदर्शनभार्यया । भूमावाभरणान्यन्तः स्थापितानि स्ववासके ॥ १८७
तानि गत्वा गृहीत्वा त्वं निश्चिन्तं मालवं व्रज । ऊर्जितश्रीर्हि तत्रास्ति श्रीसेन इति भूपतिः ॥ १८८
स च द्यूतविपत्क्लिष्टः कुमारत्वे भृशं यतः । अतस्तेन कृतः स्फीतः कितवानां महामठः ॥ १८९
लभन्ते कितवास्तत्र वसन्तोऽभीष्टभोजनम् । तद्वत्स तत्र गच्छ त्वं भद्रं तव भविष्यति ॥ १९०
इति वाचं दिवः श्रुत्वा गत्वा श्रीदर्शनो गृहम् । भुवः खातात्समित्रस्तान्यादत्ताभरणानि सः ॥ १९१
ततो हृष्टः समं तेन सख्या मुखरकेण सः । देवतानुग्रहं मत्वा प्रतस्थे मालवं प्रति ॥ १९२
गत्वा सुदूरमध्वानं तया रात्र्या दिनेन च । सायं स बहुसस्याख्यं ग्रामं तेन सहाप्तवान् ॥ १९३
श्रान्तश्च तस्य ग्रामस्य नातिदूरे सुहृत्सखः । उपाविशत्तडागस्य तीरे विमलपाथसः ॥ १९४
तत्र तस्मिन्क्षणं धौतपादे पीताम्भसि स्थिते । काप्यनन्यसमा रूपे कन्या तोयार्थमाययौ ॥ १९५
नीलोत्पलसवर्णाङ्गलेखा रतिरिवैकिका । हरदग्धस्य कामस्य धूमेन श्यामलीकृता ॥ १९६
सा तं श्रीदर्शनं दृष्ट्वा प्रेमनिर्भरया दृशा । उपेत्य दर्शनप्रीतं सवयस्यमभाषत ॥ १९७
कुत्रागतौ महाभागौ युवामिह विपत्तये । किमज्ञानाज्ज्वलत्यग्नौ पतितौ स्थः पतङ्गवत् ॥ १९८
एतच्छ्रुत्वा स संभ्रान्तः कन्यां मुखरकोऽत्र ताम् । पप्रच्छ का त्वं किं चैतत्त्वयोक्तं कथ्यतामिति ॥ १९९
ततोऽब्रवीत्सा संक्षेपाद्वच्म्येतच्छृणुतं युवाम् । अस्त्यग्रहारः सुमहान्सुघोषो नाम विश्रुतः ॥ २००
तत्राभूत्पद्मगर्भाख्यो ब्राह्मणो वेदवित्तमः । तस्योत्तमकुला भार्या नाम्ना शशिकलाभवत् ॥ २०१
तस्यां च तस्यापत्ये द्वे जाते आस्तां सुजन्मनः । सुतो मुखरको नाम पद्मिष्ठेति सुताप्यहम् ॥ २०२
स मे मुखरको भ्राता द्यूतव्यसनविप्लुतः । बाल्येऽपि निर्गत्य गृहात्क्वापि देशान्तरं गतः ॥ २०३
तेन शोकेन पञ्चत्वं गतायां मम मातरि । मत्पितोभयदुःखार्तस्त्यक्तवान्स गृहस्थितिम् ॥ २०४
एकाकी च गृहीत्वा मां तं गवेषयितुं सुतम् । भ्राम्यन्नितस्ततः प्रापदिमं ग्रामं विधेर्वशात् ॥ २०५
इह चास्ति महान्ग्रामे चौरश्चौरचमूपतिः । वसुभूतिरिति ख्यातो ब्राह्मणो नाममात्रतः ॥ २०६
तेनेह प्राप्य पापेन सभृत्येन पितुर्मम । तस्य प्राणाः सुवर्णं च शरीरान्तर्गतं हृतम् ॥ २०७
अहं च तेन नीत्वैव गृहं बन्दीकृता सती । सुभूतिनाम्ने पुत्राय प्रदातुं परिकल्पिता ॥ २०८
स चास्य पुत्रो मुषितं सार्थं क्वापि गतः स्थितः । नायात्यद्यापि मत्पुण्यैः प्रमाणं मेऽधुना विधिः ॥ २०९
तदेष चौरो दृष्ट्वा वां कुर्यादत्याहितं ध्रुवम् । विमुच्येथे यथैतस्मादुपायं कुरुतं तथा ॥ २१०

एवमुक्तवतीं जातप्रत्यभिज्ञस्तदैव ताम् । कन्यां कण्ठे समालम्ब्य रुदन्मुखरकोऽब्रवीत् ॥ २११
हा पद्मिष्ठे स एषोऽहं भ्राता मुखरकस्तव । बन्धुद्रोही भगिनिके मन्दभाग्यो हतोऽस्मि हा ॥ २१२
तच्छ्रुत्वा सापि पद्मिष्ठा विप्रा दृष्टेऽग्रजे तथा । कृपयेवाखिलैर्दुःखैः परिवव्रे जवाद्यथा ॥ २१३
ततस्तौ पितरावार्त्या शोचन्तौ भ्रातरावुभौ । श्रीदर्शनः समाश्वास्य कालोचितमभाषत ॥ २१४
शोकस्यावसरो नायं रक्ष्यो ह्यात्मैव सांप्रतम् । त्यक्त्वाप्यर्थं ततः कार्या चौरस्यास्य प्रतिक्रिया ॥ २१५
एवं श्रीदर्शनेनोक्ते दुःखं संहृत्य धैर्यतः । कर्तव्यसंविदं चक्रुस्ते त्रयोऽपि परस्परम् ॥ २१६
ततः श्रीदर्शनो मान्द्यं विधायासीन्निपत्य सः । तीरे तस्य तडागस्य कृशः पूर्वैरभोजनैः ॥ २१७
पादौ तस्य गृहीत्वा च तस्थौ मुखरको रुदन् । पद्मिष्ठा च ययौ तस्य पार्श्वं चौरपतेर्द्रुतम् ॥ २१८
अब्रवीच्च तडागान्ते मन्दः कोऽप्यागतः स्थितः । पान्थस्तस्य द्वितीयश्च तत्रास्ते परिचारकः ॥ २१९
तच्छ्रुत्वैव स चौरोऽत्र भृत्यांश्चौरान्विसृष्टवान् । ते गत्वा तौ तथारूपौ दृष्ट्वा मुखरकं तयोः ॥ २२०
अपृच्छन्नस्य किं भद्र कृते रोदिषि यद्भृशम् । एतच्छ्रुत्वा कृतार्तिस्तांश्चौरान्मुखरकोऽब्रवीत् ॥ २२१
अग्रजो ब्राह्मणोऽयं मे तीर्थयात्राप्रवासतः । रोगाक्रान्तः शनैर्भ्राम्यन्निह प्राप्तोऽद्य मत्सखः ॥ २२२
प्राप्त एव च निश्चेष्टीभूतो मामयमुक्तवान् । उत्तिष्ठ वत्स मे दर्भसंस्तरं कुरु सत्वरम् ॥ २२३
ब्राह्मणं कंचिदस्माच्च ग्रामाद्गुणिनमानय । तस्मै ददामि सर्वस्वं नाद्य जीवाम्यहं निशि ॥ २२४
इत्युक्तोऽहमनेनेह विदेशेऽस्तं गते रवौ । कर्तव्यमूढो दुःखार्तो रोदनं शरणं श्रितः ॥ २२५
तद्यूयं ब्राह्मणं कंचिदस्यानयत जीवतः । यावद्ददात्ययं तस्मै स्वहस्तेन यदस्ति नौ ॥ २२६
एष ह्यद्य ध्रुवं रात्रौ नभविष्यत्यहं च तत् । दुःखं सोढुं न शक्नोमि श्वः प्रवेक्ष्यामि पावकम् ॥ २२७
तदस्मदर्थनामेतां कुरुध्वं यत्कृपालवः । मिलिता यूयमस्माकमिहाकारणबान्धवाः ॥ २२८
तच्छ्रुत्वा जातकरुणाश्चौरा गत्वा तथैव तत् । उक्त्वा तं वसुभूतिं ते स्वामिनं पुनरब्रुवन् ॥ २२९
तदागच्छ गृहाण त्वं स्वयं तस्मात्प्रयच्छतः । प्रतिग्रहेण विप्रात्तद्धनं ग्राह्यं निपात्य यत् ॥ २३०
इत्युक्तो वसुभूतिस्तैरवादीदेप कः क्रमः । अनिपात्य धनादानमस्माकमनयः परः ॥ २३१
कुर्वीत निश्चयं दोषं हृतस्वो ह्यनिपातितः । इत्युक्तवन्तं तं पापं भृत्याः प्रत्यूचुरत्र ते ॥ २३२
केयं शङ्का क्व हरणं क्व मुमूर्षोः प्रतिग्रहः । प्रातर्वा तौ हनिष्यामो द्विजौ जीविष्यतो यदि ॥ २३३
अन्यथा तु वृथा ब्रह्महत्यापापेन किं फलम् । श्रुत्वैतत्प्रतिपेदे स वसुभूतिस्तथेति तत् ॥ २३४
आगात्प्रतिग्रहार्थं च नक्तं श्रीदर्शनान्तिकम् । श्रीदर्शनोऽप्यवच्छाद्य किंचित्किंचिद्ददौ श्वसन् ॥ २३५
मात्राभरणमस्मै तत्कृत्वा ग्रस्ताक्षरां गिरम् । ततः कृतार्थश्चौरोऽसौ सानुगोऽपि गृहान्ययौ ॥ २३६
अथ सुप्तेषु चौरेषु रात्रौ श्रीदर्शनस्य सा । पद्मिष्ठोपाययौ तस्य पार्श्वं मुखरकस्य च ॥ २३७
ततस्त्रयोऽपि ते तूर्णं मन्त्रयित्वा ययुस्ततः । पथा चौरविहीनेन मालवं प्रति तं पुनः ॥ २३८
तया रात्र्या च दूरं ते गत्वा प्रापुर्महाटवीम् । नित्यं कण्टकितां भ्राम्यत्कृष्णसारमृगेक्षणाम् ॥ २३९
शुष्यत्तनुलतां तारचीरचीत्काररोदिनीम् । उन्नदद्व्याघ्रसिंहादिप्राणिभ्यो बिभ्यतीमिव ॥ २४०
तस्यां च गच्छतां तेषां क्लेशं दृष्ट्वाखिलं दिनम् । कृपयेवोपसंहृत्य भासमस्तं ययौ रविः ॥ २४१
ततः श्रान्ताः क्षुधार्तास्ते वृक्षमूलमुपाश्रिताः । प्रदीपेऽग्नेरिव ज्वालां ददृशुस्तत्र दूरतः ॥ २४२
ग्रामोऽयमत्र जातु स्यात्तद्गत्वालोकयाम्यहम् । इत्युक्त्वानुसरञ्ज्वालां सोऽथ श्रीदर्शनो ययौ ॥ २४३
प्राप्तोऽत्र वीक्षते यावत्तावद्रत्नमयं गृहम् । स ददर्श महत्तां च तस्य ज्वालामिव प्रभाम् ॥ २४४
तदन्तर्दिव्यरूपां च यक्षिणीं बहुभिर्वृताम् । विपरीताङ्घ्रिभिर्यक्षैराकेकरविलोचनैः ॥ २४५
विविधं चान्नपानं तैराहृतं तत्र वीक्ष्य सः । उपेत्यातिथिभागं तां वीरोऽयाचत यक्षिणीम् ॥ २४६
सत्त्वतुष्टा च सा तस्मै यथार्थितमदापयत् । अन्नमात्मतृतीयस्य संतृप्त्यै तस्य वारि च ॥ २४७
तद्गृहीत्वा तदादिष्टयक्षस्कन्धाधिरोपितम् । आययौ स तयोः पार्श्वं पद्मिष्ठास्ववयस्ययोः ॥ २४८
विसृज्य यक्षं बुभुजे ताभ्यां सह च तत्र सः । तदन्नं विविधं दिव्यं पपौ शीतात्छमम्बु च ॥ २४९

ततः सत्त्वप्रभावाढ्यं देवांशं तमवेत्य सः। आत्मनो धन्यतां वाञ्छंस्तुष्टो मुखरकोऽब्रवीत्॥ २५०
त्वं तावत्कोऽपि देवांशः पद्मिष्ठेयं च मत्स्वसा। लोकैकसुन्दरी तत्ते दत्तैषाद्य मयोचिता॥ २५१
तच्छ्रुत्वा सुहृदं तं सानन्दः श्रीदर्शनोऽभ्यधात्। मयाभिनन्दितमिदं त्वद्वाक्यं पूर्वकाङ्क्षितम्॥ २५२
एतां तु परिणेष्यामि स्थानं प्राप्य यथाविधि। इत्यूचिवान्स तौ चोभौ हृष्टास्तामनयन्निशाम्॥ २५३
प्रातश्च प्रस्थिताः सर्वे ततः प्रापुः क्रमेण ते। नगरं मालवेन्द्रस्य तस्य श्रीसेनभूपतेः॥ २५४
तत्र प्रविविशुस्तेऽथ सद्यः श्रान्तागता गृहम्। विश्रान्तिहेतोः कस्याश्चिद्वृद्धाया द्विजयोषितः॥ २५५
तत्र तैश्च प्रसङ्गोक्तनिजवृत्तान्तनामभिः। विप्रैव दृष्टा पृष्टा सा वृद्धयोषिदुवाच तान्॥ २५६
अहं यशस्वती नाम राजसेवोपजीविनः। भार्या सत्यव्रताख्यस्य विप्रस्येहामलान्वया॥ २५७
मृते भर्तर्यपुत्रायास्तस्या मे वृत्तयेऽमुना। तज्जीवनचतुर्भागो दत्तो राज्ञा दयालुना॥ २५८
अद्य चैष ममापुण्यैर्विश्वाप्यायकरोऽपि सन्। गृहीतो राजशशभृद्वैद्यासाध्येन यक्ष्मणा॥ २५९
मन्त्राश्चौषधयश्चास्मिन्क्रमन्ते नैव तद्विदाम्। एकेन तु प्रतिज्ञातमस्याग्रे मन्त्रवादिना॥ २६०
यदि वीरः सहायो मे तादृग्भवति कोऽपि तत्। वेतालसाधनेनाहं रुजं हन्यामिमामिति॥ २६१
ततो हतेऽपि पटहे यदा प्राप्तो न तादृशः। वीरः कोऽपि तदा राजा सचिवानेवमादिशत्॥ २६२
कितवानां कृते योऽयमिह ख्यातो महामठः। आगन्तुकोऽत्र कितवो वीरश्चिन्त्यः स कश्चन॥ २६३
कितवा निरपेक्षा हि दारबन्धुधनोज्झिताः। निर्भया वृक्षमूलादिशायिनो योगिनो यथा॥ २६४
इति राज्ञा समादिष्टैर्मन्त्रिभिस्तन्मठाधिपः। तथैवोक्तो विचिनुते वीरमागन्तुकं सदा॥ २६५
यूयं च कितवास्त्वं च तस्मिन्कर्मणि चेत्क्षमः। तन्नयाम्यहमेवाद्य त्वां श्रीदर्शन तं मठम्॥ २६६
सत्कारं प्राप्नुयास्त्वं च राजतो मम च त्वया। कृता भवेदुपकृतिर्दुःखं प्राणान्तकृद्धि मे॥ २६७
एवमुक्तवतीं तां च वृद्धां श्रीदर्शनोऽब्रवीत्। बाढं शक्तोऽस्मि तत्कार्यं कर्तुं तन्नय मां मठम्॥ २६८
एतच्छ्रुत्वा सपद्मिष्ठं सा तं मुखरकान्वितम्। नीत्वा वृद्धा मठे तत्र मठाधिपतिमभ्यधात्॥ २६९
ब्राह्मणो द्यूतकारोऽयं राजार्थे मन्त्रवादिनः। तस्य साहायके शक्तो वीरो देशान्तरागतः॥ २७०
तच्छ्रुत्वा मठपः पृष्ट्वा तं तथेत्येव वादिनम्। श्रीदर्शनं स सत्कृत्य निनायाशु नृपान्तिकम्॥ २७१
तत्र चावेदितस्तेन राजानं स ददर्श तम्। श्रीदर्शनः पाण्डुकृशं शशाङ्कमिव पार्वणम्॥ २७२
राजापि प्रणतं भव्यमुपविष्टं विलोक्य तम्। आकारतुष्टः श्रीसेनो जाताश्वासो जगाद सः॥ २७३
त्वद्यत्नादेव मे रोगो नाशमेष्यत्यसंशयम्। एतत्त्वद्दर्शनध्वस्तपीडा वक्ति हि मे तनुः॥ २७४
तत्कुरुष्वार्य साहाय्यमित्युक्ते तेन भूभृता। देव किं नाम वस्त्वेतदिति श्रीदर्शनोऽब्रवीत्॥ २७५
अथानाय्य स राजा तं मन्त्रवादिनमभ्यधात्। अयं वीरः सहायस्ते यत्त्वयोक्तं कुरुष्व तत्॥ २७६
तच्छ्रुत्वा मन्त्रवादी तं श्रीदर्शनमुवाच सः। वेतालाह्वानसाहाय्ये समर्थो भद्र चेदसि॥ २७७
तत्त्वं कृष्णचतुर्दश्यामद्यैवास्यां निशागमे। इह श्मशानमागच्छेरन्तिकं मम सिद्धये॥ २७८
इत्युक्त्वा स ततोऽयासीत्तपस्वी मन्त्रसाधकः। श्रीदर्शनोऽप्यगच्छत्तं मठमामन्त्र्य भूपतिम्॥ २७९
तत्र पद्मिष्ठया साकं भुक्त्वा मुखरकेण च। एकः कृपाणभृद्रात्रौ श्मशानं तज्जगाम सः॥ २८०
भूरिभूताकुलं शून्यमशिवं निनदच्छिवम्। गाढान्धकारमालोकं कमप्युपचितं दधत्॥ २८१
तत्रास्पदे विरुद्धानां वीरो भ्रान्त्वा ददर्श सः। श्रीदर्शनो मध्यभागस्थितं तं मन्त्रसाधकम्॥ २८२
भस्मानुलिप्तसर्वाङ्गं धृतकेशोपवीतकम्। प्रेतवस्त्रकृतोष्णीषं संवीतासितवाससम्॥ २८३
उपेत्यावेदितात्मा च स तं श्रीदर्शनस्ततः। आबद्धकक्ष्यः पप्रच्छ ब्रूहि किं करवाणि ते॥ २८४
गच्छार्धक्रोशमात्रेऽस्ति पश्चिमायामितो दिशि। चिताग्नितापनिर्दग्धपल्लवः शिंशपातरुः॥ २८५
तस्य स्थितः शवो मूले तमक्षतमिहानय। इति सोऽपि तमाह स्म साधको हृष्टमानसः॥ २८६
ततस्तथेति स गतस्तत्र श्रीदर्शनो द्रुतम्। अन्येन नीयमानं तं केनापि शवमैक्षत॥ २८७
धावित्वा तस्य च स्कन्धाच्चकर्ष तममुञ्चतः। मुञ्च दाह्यं क्व मे मित्रं नयस्येतमिति ब्रुवन्॥ २८८

ततः सोऽपि द्वितीयोऽत्र तं श्रीदर्शनमब्रवीत् । न मोक्ष्यामि मम ह्येष मित्रं कोऽस्य भवानिति ॥ २८९
एवं तयोरुभयतः स्कन्धयोः कर्षतोः शवः । वेतालानुप्रविष्टः सन्नमुञ्चद्भैरवं रवम् ॥ २९०
तेन त्रस्तो द्वितीयः स हृत्स्फोटेन व्यपद्यत । श्रीदर्शनश्चचालाथ स गृहीत्वैव तं शवम् ॥ २९१
तावच्चात्र द्वितीयः स मृतोऽप्युत्थाय पूरुषः । वेतालाधिष्ठितो रुन्धंस्तं श्रीदर्शनमुक्तवान् ॥ २९२
तिष्ठ स्कन्धार्पितं कृत्वा मित्रं मे मा स्म गा इति । ततः स भूताविष्टं तं मत्वा श्रीदर्शनोऽभ्यधात् ॥ २९३
किं प्रमाणं तवैतस्य मित्रत्वे मित्रमेष मे । तच्छ्रुत्वा सोऽपरोऽवादीत्प्रमाणमयमेव नौ ॥ २९४
श्रीदर्शनस्ततोऽवोचन्मित्रं स्वं तर्हि वक्त्यसौ । ततस्तत्स्कन्धवर्ती स सवेतालः शवोऽब्रवीत् ॥ २९५
अहमेवं ब्रुवे मह्यमाहारं यः प्रयच्छति । क्षुधिताय स मे मित्रं स्वेच्छं नयतु मां च सः ॥ २९६
एतच्छ्रुत्वा स वेतालो द्वितीयः सोऽवदच्छवः । मम नास्त्यस्य चेदस्ति तदाहारं ददातु ते ॥ २९७
तच्छ्रुत्वाहं ददामीति वदन्यावत्तमेव सः । श्रीदर्शनो निजांसस्थवेतालाहारसिद्धये ॥ २९८
हन्ति खड्गेन तावत्स हन्यमानः स्वसिद्धितः । अन्तर्दधे द्वितीयोऽत्र सवेतालः शवस्तदा ॥ २९९
अथ श्रीदर्शनं तं स वेतालोंऽसस्थितोऽब्रवीत् । प्रतिपन्नमिदानीं मे भोजनं दीयतामिति ॥ ३००
ततो यदा न लेभेऽन्यन्मांसं श्रीदर्शनोऽत्र सः । भोजनाय ततस्तस्मै स्वमुत्कृत्यासिना ददौ ॥ ३०१
तेन तुष्टः स वेतालस्तमेवमवदत्तदा । प्रीतोऽस्मि ते महासत्त्व देहस्तेऽस्त्वयमक्षतः ॥ ३०२
नय मामधुना कार्यं तवैवेदं हि सेत्स्यति । स साधकस्तपस्वी तु स्वल्पसत्त्वो विनङ्क्ष्यति ॥ ३०३
इत्युक्तस्तेन भूत्वैव स स्वस्थाङ्गस्तदैव तम् । नीत्वा श्रीदर्शनस्तस्मै साधकाय समर्पयत् ॥ ३०४
स चाभिनन्द्य संपूज्य रक्तमाल्यानुलेपनैः । नरास्थिचूर्णलिखिते कोणन्यस्तास्रकुम्भके ॥ ३०५
महातैलज्वलद्दीपे मण्डले विपुलान्तरे । वेतालं तं तदोत्तानमात्तप्रेततनुं व्यधात् ॥ ३०६
वक्षस्थलोपविष्टश्च तस्यास्यकुहरेऽथ सः । नरास्थिस्रुक्स्रुवकरो होमं कर्तुं प्रचक्रमे ॥ ३०७
क्षणाच्च तस्य वेतालस्यास्याज्ज्वालोदभूत्तदा । यथा स साधकस्त्रासादुत्थायापासरत्ततः ॥ ३०८
सत्त्वच्युतं च तं स्रस्तस्रुक्स्रुवं परिधाव्य सः । वेतालो व्यात्तवदनः साङ्गोपाङ्गं निगीर्णवान् ॥ ३०९
तद्दृष्ट्वा खड्गमुद्यम्य यावच्छ्रीदर्शनः स तम् । अभिधावति तावत्स वेतालस्तमभाषत ॥ ३१०
भोः श्रीदर्शन धैर्येण तुष्टोऽस्म्येवंविधेन ते । तत्सर्षपान्गृहाण त्वमिमान्मन्मुखसंभवान् ॥ ३११
एभिः शिरोनिबद्धैश्च पाणिस्थैश्चैष भूपतिः । निवृत्तयक्ष्मदोषार्तिः सद्य एव भविष्यति ॥ ३१२
त्वं चाचिरेण सर्वस्याः पृथ्व्या राजा भविष्यसि । इति तद्वचनं श्रुत्वा तं स श्रीदर्शनोऽभ्यधात् ॥ ३१३
साधकेन विनैतेन तत्र यास्याम्यहं कथम् । अनेन स हतः स्वार्थलोभादिति वदेन्नृपः ॥ ३१४
एवं श्रीदर्शनेनोक्ते वेतालः स जगाद तम् । वच्मि ते प्रत्ययं येन शुद्धिस्तव भविष्यति ॥ ३१५
इमं मृतं मन्निगीर्णमिहास्यैव शवस्य हि । उदरं पाटयित्वा त्वमन्तस्थं दर्शयिष्यसि ॥ ३१६
इत्युक्त्वा स ययौ क्वापि वेतालोऽर्पितसर्षपः । निर्गत्यैव शवात्तस्माच्छवः सोऽप्यपतद्भुवि ॥ ३१७
स्वीकृत्य सर्षपान्सोऽपि गत्वा श्रीदर्शनस्ततः । सहायाध्युषिते तस्मिन्मठे रात्रिं निनाय ताम् ॥ ३१८
प्रगे राज्ञोऽन्तिकं गत्वा रात्रिवृत्तं निवेद्य तत् । मन्त्रिभ्योऽदर्शयन्नीत्वा साधकं तं शवोदरात् ॥ ३१९
ततो बबन्ध राज्ञस्तान्पाणौ मूर्ध्नि च सर्षपान् । तेन सोऽभून्नृपो नष्टनिःशेषव्याधिनिर्वृतः ॥ ३२०
अथ तुष्टः स नृपतिः श्रीसेनः प्राणदायिनम् । अनपत्यः सुतत्वेन तं श्रीदर्शनमग्रहीत् ॥ ३२१
अभ्यषिञ्चच्च तं वीरं यौवराज्ये तदैव सः । उप्तं सुकृतबीजं हि सुक्षेत्रेषु महाफलम् ॥ ३२२
ततः श्रीदर्शनः श्रीमानुपयेमे स तत्र ताम् । पद्मिष्ठां पूर्वसेवार्थं लक्ष्मीमिव सहागताम् ॥ ३२३
तया समं स भुञ्जानो भोगान्मुखरकेण च । तद्भ्रात्रा सोऽथ तत्रासीत्पृथ्वीं वीरोऽनुपालयन् ॥ ३२४
एकदा जलधेस्तीरात्प्राप्य रत्नविनायकम् । उपेन्द्रशक्तिरानीय ददौ तस्मै महावणिक् ॥ ३२५
तमनर्घं समालोक्य युवराजः स भक्तितः । तत्र प्रतिष्ठापितवान्विभवेनातिभूयसा ॥ ३२६
ददौ ग्रामसहस्रं च नित्यभोगाय तत्र सः । यात्रोत्सवं च विदधे मिलिताखिलमानवम् ॥ ३२७

नृत्तवादित्रगीतैश्च तत्र सातिशयैर्निशि। परितुष्टो गणानेवमादिदेश गणाधिपः॥ ३२८
मत्प्रसादादयं भावी सम्राट् श्रीदर्शनो भुवि। तदिहास्त्यपराम्भोधौ हंसद्वीपमिति श्रुतम्॥ ३२९
द्वीपं तत्रास्ति च क्ष्माभृदनङ्गोदयसंज्ञकः। अनङ्गमञ्जरीत्यस्ति स्त्रीरत्नं तस्य चात्मजा॥ ३३०
मद्भक्ता सा च कन्या मामर्चित्वा याचते सदा। सर्वपृथ्वीश्वरं देहि पतिं मे भगवन्निति॥ ३३१
अतः श्रीदर्शनेनैतां पत्न्या संयोजयाम्यहम्। उभयोरेतयोरेवं दत्तं भक्तिफलं भवेत्॥ ३३२
तस्माच्छ्रीदर्शनस्तत्र नीत्वा युष्माभिरेतयोः। अन्योन्यदर्शनं युक्त्या संपाद्यानीयतां द्रुतम्॥ ३३३
संयोगस्तु शनैः सम्यक्क्रमेण भवितानयोः। अद्यैव तु स नास्त्येव भवितव्यं हि तत्तथा॥ ३३४
किं चैवं वणिजोऽप्यस्य प्रतिमाप्रापकस्य मे। उपेन्द्रशक्तेरस्त्येव विहिता काप्युपक्रिया॥ ३३५
एवं गणेशेनादिष्टा गणा रात्रौ तदैव तम्। सुप्तं श्रीदर्शनं निन्युर्हंसद्वीपं स्वसेद्मितः॥ ३३६
तत्र चानङ्गमञ्जर्यास्तं प्रवेश्यैव वासके। सुप्तायाः शयने तस्या राजपुत्र्या न्यवेशयन्॥ ३३७
प्रबुद्धः स क्षणात्तत्र ज्वलद्रत्नप्रदीपके। द्योतमानवितानादिनानानर्घमहामणौ॥ ३३८
राजावर्तोपलश्यामतले सद्वासवेश्मनि। पर्यङ्कशयने धौतसितपट्टोत्तरच्छदे॥ ३३९
शयानाममृतस्यन्दसुन्दरप्रसरद्द्युतिम्। सर्वतः प्रस्फुरत्तारतारावलिमनोरमे॥ ३४०
गगने धवलाम्भोदशकलोत्सङ्गवर्तिनीम्। शरच्छशभृतो मूर्तिमिवानन्दकरीं दृशोः॥ ३४१
श्रीदर्शनस्तां सहसा ददर्शानङ्गमञ्जरीम्। हृष्टविस्मितविभ्रान्तश्चिन्तयामास च क्षणम्॥ ३४२
क्व सुप्तः क्व प्रबुद्धोऽस्मि किमिदं केयमङ्गना। स्वप्नो ध्रुवमसौ सोऽपि वरमस्त्वयमीदृशः॥ ३४३
प्रबोध्य तदिमां तावत्पश्यामीति विविच्य सः। नुदति स्म शनैरंसे पाणिनानङ्गमञ्जरीम्॥ ३४४
सापि तस्य करस्पर्शादिन्दोरिव कुमुद्वती। व्यालोलनेत्रभ्रमरा प्रबोधं प्राप तत्क्षणम्॥ ३४५
दृष्ट्वा च तं क्षणं दध्यौ कोऽयं दिव्याकृतिर्भवेत्। दुष्प्रवेशे प्रविष्टोऽत्र देवो नूनमसाविति॥ ३४६
उत्थाय चैतं पप्रच्छ संभ्रमप्रश्रयाकुला। कस्त्वं कस्मात्कथं चेह प्रविष्टोऽस्युच्यतामिति॥ ३४७
ततः श्रीदर्शनेनोक्ते स्वोदन्ते साप्यवोचत। तत्पृष्टा सुन्दरी चास्मै देशनामान्वयान्निजान्॥ ३४८
सोत्कावन्योन्यसंत्यक्तस्वप्नभ्रान्ती ततश्च तौ। भूषणानां विनिमयं चक्रतुर्निश्चयाप्तये॥ ३४९
अथोभावपि गान्धर्वविवाहोत्सुकमानसौ। ते गणा मोहयित्वा तौ निन्युर्निद्रावशं तदा॥ ३५०
जातनिद्रं गृहीत्वा च तं तु श्रीदर्शनं ततः। स्वगृहं प्रापयामासुस्तदैवाप्रप्तवाञ्छितम्॥ ३५१
तत्रापगतनिद्रश्च धाम्नि श्रीदर्शनो निजे। स्थितः स्त्र्याभरणैर्युक्तं दृष्ट्वात्मानं व्यचिन्तयत्॥ ३५२
अहो किमेतत्क नु सा हंसद्वीपेश्वरात्मजा। क्व तद्वासगृहं दिव्यं क्वाहं पुनरिहैव च॥ ३५३
न च स्वप्नः स यत्तानि तदीयाभरणानि मे। तिष्ठन्त्येतानि तन्नूनं विलासः कोऽप्ययं विधेः॥ ३५४
इत्यादि चिन्तयन्पत्न्या पृष्टः सुप्तप्रबुद्धया। पद्मिष्ठया धीर्यमाणः साध्व्या तां सोऽनयन्निशाम्॥ ३५५
प्रातश्च सर्वं राज्ञेऽपि श्रीसेनाय तदब्रवीत्। अनङ्गमञ्जरीनामचिह्निताभरणान्वितः॥ ३५६
राजापि तत्प्रियैषी स हंसद्वीपं गवेषयन्। मार्गं दत्त्वापि पटहं नोपलेभे कुतश्चन॥ ३५७
ततः श्रीदर्शनस्तत्र स विनानङ्गमञ्जरीम्। आसीत्स्मरज्वराक्रान्तः सर्वभोगपराङ्मुखः॥ ३५८
नाहारं श्रद्दधे पश्यन्ना हारं तदलंकृतीः। स्वापं जहावपश्यंस्तु स्वापं तन्मुखपङ्कजम्॥ ३५९
अत्रान्तरे च सा तत्र हंसद्वीपे नृपात्मजा। तूर्यशब्दैः प्रबुबुधे प्रभातेऽनङ्गमञ्जरी॥ ३६०
स्मृत्वा तद्रात्रिवृत्तं सा दृष्ट्वा चालंकृतां तनुम्। श्रीदर्शनालंकरणैश्चिन्तामौत्सुक्यतो ययौ॥ ३६१
स्वप्नभ्रान्तिहरैर्दत्तप्रेमभिर्दुर्लभे जने। एभिराभरणैर्नीतास्म्यहं जीवितसंशयम्॥ ३६२
इत्यादि चिन्तयन्तीं तां पुरुषाभरणैर्युताम्। पितानङ्गोदयोऽकस्मात्प्रविश्यात्र व्यलोकयत्॥ ३६३
वाससाच्छादिताङ्गीं च लज्जयावनतां ततः। पप्रच्छोत्सङ्गमारोप्य स तां राजातिवत्सलः॥ ३६४
किमयं पुत्रि पुंवेषः किं त्रपा चेदृशी वद। मा कृथा मय्यविश्वासं बद्धाः प्राणा हि मे त्वयि॥ ३६५
इत्यादिभिः प्रियालापैस्तेन मन्दीकृतत्रपा। पित्रा शनैस्तं वृत्तान्तं कृत्स्नं तस्मै शशंस सा॥ ३६६

ततः सोऽस्याः पिता राजा तदमानुषगोचरम् । इन्द्रजालमिवावेत्य ययौ कर्तव्यसंशयम् ॥ ३६७
गत्वैव तत्र पप्रच्छ सुप्रीतं सिद्धयोगिनम् । महाव्रतधरं ब्रह्मसोमं नाम स्वदेशम् ॥ ३६८
स वीक्ष्य प्रणिधानेन नृपं तं तापसोऽभ्यधात् । मालवात्सत्यमानिन्ये गणैः श्रीदर्शनो नृपः ॥ ३६९
गणेश्वरः प्रसन्नो हि त्वत्पुत्र्यास्तस्य चोभयोः । तत्प्रसादाच्च राजा स सार्वभौमो भविष्यति ॥ ३७०
तच्छ्लाघनीयो दुहितुस्तव भर्ता स तादृशः । इत्युक्ते ज्ञानिना तेन प्रह्वो राजा जगाद तम् ॥ ३७१
क्व मालवः क्व भगवन्हंसद्वीपो महानयम् । पन्था दुर्गश्च कार्यं च नेदं कालान्तरक्षमम् ॥ ३७२
तत्प्रसादपरो नित्यं त्वमेवात्र गतिर्मम । इति राज्ञा स विज्ञप्तस्तपस्वी भक्तवत्सलः ॥ ३७३
एषोऽहं साधयाम्येतदित्युक्त्वान्तर्दधे ततः । क्षणाच्च मालवं प्राप पुरं श्रीसेनभूभृतः ॥ ३७४
तत्र तस्मिन्प्रविश्यैव श्रीदर्शनविनिर्मिते । देवागारे गणाधीशं प्रणम्योपविवेश सः ॥ ३७५
नमोऽस्तु तुभ्यं नक्षत्रमालामण्डितमूर्धने । सुमेरुशिखराभाय कल्याणमयमूर्तये ॥ ३७६
नौमि नृत्तोत्सवोत्क्षिप्तसरलाभ्रंलिहं तव । करं त्रिभुवनागारधारणस्तम्भसंनिभम् ॥ ३७७
निधानं सर्वसिद्धीनां विघ्नान्तक नमाम्यहम् । पृथुलोदरकुम्भं ते पन्नगाभरणं वपुः ॥ ३७८
इति तत्र स यावच्च गणेशं स्तौति तापसः । तावत्तत्प्रतिमानेतुः पुत्रस्तस्य वणिक्पतेः ॥ ३७९
उपेन्द्रशक्तेरुद्दामचिरोन्मादविशृङ्खलः । भ्राम्यन्महेन्द्रशक्त्याख्यो विवेशात्रैव दैवतः ॥ ३८०
अभ्यधावद्ग्रहीतुं च तमेव स तपस्विनम् । ततः स पाणिना तत्र तपस्वी तमताडयत् ॥ ३८१
स तेन न्यस्तमन्त्रेण पाणिना तस्य ताडितः । शान्तोन्मादस्तथैवाभूत्स्वस्थबुद्धिर्वणिक्सुतः ॥ ३८२
जातलज्जश्च स ततो निर्गत्यैव दिगम्बरः । हस्ताच्छादितकौपीनो जगाम स्वगृहं प्रति ॥ ३८३
तत्कालं लोकतो बुद्ध्वा समेत्यानन्दनिर्भरः । उपेन्द्रशक्तिः स्वपिता तमनैषीन्निजं गृहम् ॥ ३८४
तत्र तं स्नपयित्वा च कृत्वा वस्त्राद्यलंकृतम् । तद्युक्तस्तापसं तं स ब्रह्मसोममुपाययौ ॥ ३८५
उपानयच्च बह्वस्मै धनं पुत्रप्रदायिने । स तु तन्नैव जग्राह तापसो दिव्यसिद्धिभृत् ॥ ३८६
अत्रान्तरे च तद्बुद्ध्वा तमुपागात्तपस्विनम् । श्रीदर्शनान्वितो भक्त्या श्रीसेननृपतिः स्वयम् ॥ ३८७
प्रणिपत्य स्तुतिं कृत्वा तं स राजा व्यजिज्ञपत् । संपन्ना वणिजस्तावत्पुत्रस्वास्थ्यादुपक्रिया ॥ ३८८
युष्मदागमनादस्य तन्ममापि तथा कुरु । यथा श्रीदर्शनस्यास्य मत्सूनोः कुशलं भवेत् ॥ ३८९
इति तेनार्थितो राज्ञा तापसः सोऽब्रवीद्धसन् । राजन्किमस्य चौरस्य करोम्यहमभीप्सितम् ॥ ३९०
यो राजपुत्र्या हृदयं मुषित्वाभरणानि च । रात्रावनङ्गमञ्जर्या हंसद्वीपादिहागतः ॥ ३९१
तथापि त्वद्वचः कार्यं मयेत्युक्त्वा प्रकोष्ठतः । श्रीदर्शनं तमादाय तापसोऽन्तर्दधेऽथ सः ॥ ३९२
स प्राप्य हंसद्वीपं च राज्ञोऽनङ्गोदयस्य तम् । प्रावेशयद्राजधानीं तत्सुताभरणैर्युतम् ॥ ३९३
सोऽप्यभ्यनन्दत्तं राजा प्राप्तं श्रीदर्शनं तदा । हृष्टः पूर्वं तमभ्यर्च्य पादनम्रस्तपस्विनम् ॥ ३९४
ददौ च तां सुतां तस्मै पुण्याहेऽनङ्गमञ्जरीम् । श्रीदर्शनाय रत्नौघमालिनीं वसुधामिव ॥ ३९५
तया बद्ध्वा समेतं च तं स जामातरं पुनः । मालवं प्रापयामास शक्त्या तस्य तपस्विनः ॥ ३९६
तत्र प्राप्तश्च स ततः कान्ताद्वितयसंगतः । श्रीदर्शनः सुखं तस्थौ हृष्टराजाभिनन्दितः ॥ ३९७
कालेन तस्मिञ्श्रीसेने राज्ञि लोकान्तरं गते । तद्राज्यं प्राप्य पृथिवीं कृत्स्नां वीरो जिगाय सः ॥ ३९८
समासादितसाम्राज्यः स तयोर्भार्ययोर्द्वयोः । पद्मिष्ठानङ्गमञ्जर्योस्तनयौ द्वावजीजनत् ॥ ३९९
एकं तयोः पद्मसेनं नाम्ना स कृतवान्नृपः । अनङ्गसेनमपरं वृद्धिं तौ चात्र नीतवान् ॥ ४००
याति काले च देवीभ्यां सह सोऽभ्यन्तरे स्थितः । श्रीदर्शनोऽशृणोद्राजा विप्रस्याक्रन्दितं बहिः ॥ ४०१
प्रवेश्य तं च पप्रच्छ विप्रमाक्रन्दकारणम् । ततः स दर्शितोद्वेगो विप्रस्तमिदमब्रवीत् ॥ ४०२
योऽभूद्दीप्तशिखोऽग्निर्मे सोऽट्टहाससुताधुना । सज्योतिर्धूमलेखोऽपि कालमेघेन नाशितः ॥ ४०३
इत्युक्त्वा दृष्टनष्टोऽभूद्ब्राह्मणः सोऽत्र तत्क्षणम् । किमेतदुक्तमेतेन क्व गतश्चेति विस्मयात् ॥ ४०४
यावत्स राजा ब्रूते च तावद्देव्यावशङ्कितम् । धाराश्रुणा रुदन्त्यौ ते तस्य पञ्चत्वमापतुः ॥ ४०५

तद्दृष्ट्वाशनिपातोग्रं सहसा स महीपतिः। हा हा किमिदमित्यार्तो विलपन्नपतद्भुवि ॥ ४०६
पतितं च तमादाय पार्श्वगा निन्युरन्यतः। देव्योश्च वह्निसंस्कारं नीत्वा मुखरको व्यधात् ॥ ४०७
लब्धसंज्ञोऽनुशोच्याथ भार्ये ते सुचिरं नृपः। तयोर्निर्वर्तयामास स स्नेहादौर्ध्वदैहिकम् ॥ ४०८
बाष्पदुर्दिनबद्धान्धकारं नीत्वा च वत्सरम्। द्वाभ्यां विभज्य पुत्राभ्यां पृथ्वीराज्यं ददौ द्विधा ॥ ४०९
ततो निर्गत्य नगरात्प्रकृतीरनुयायिनीः। निवर्त्य जातवैराग्यः शिश्रिये तपसे वनम् ॥ ४१०
फलमूलाशनस्तत्र वसञ्जातु यदृच्छया। भ्रमन्सोऽन्तिकमेकस्य प्राप न्यग्रोधशाखिनः ॥ ४११
तत्र प्राप्तमकस्मात्तं निर्गत्यैव तरोस्ततः। ऊचतुर्दिव्यरूपे द्वे फलमूलकरे स्त्रियौ ॥ ४१२
राजन्नेहि गृहाणैतान्यद्य मूलफलानि नौ। तच्छ्रुत्वा सोऽब्रवीद्ब्रूतं तावन्मे के युवामिति ॥ ४१३
ततस्ते दिव्यनार्यौ तमूचतुस्तर्हि नौ गृहम्। एहि प्रविश्य तत्रैतद्वक्ष्यामस्ते यथातथम् ॥ ४१४
तच्छ्रुत्वा स तथेत्युक्त्वा ताभ्यां श्रीदर्शनः सह। प्रविष्टोऽत्र ददर्शान्तर्दिव्यं हेममयं पुरम् ॥ ४१५
विश्रान्तस्तत्र दिव्यानि भुक्तवांश्च फलानि सः। नारीभ्यां जगदे ताभ्यामिदानीं नृपते शृणु ॥ ४१६
आसीत्कमलगर्भाख्यः प्रतिष्ठाने पुरा द्विजः। तस्याभूतां च भार्ये द्वे एका पथ्या बलापरा ॥ ४१७
जराक्रान्ताश्च कालेन ते भार्यापतयस्त्रयः। पर्यन्ते विविशुर्वह्निं सहान्योन्यानुरागिणः ॥ ४१८
भार्यापतित्वं सर्वस्मिन्भूयाज्जन्मनि नः प्रभो। इति प्रार्थ्यत तस्मिंश्च काले तैरनलाद्वरः ॥ ४१९
ततः कमलगर्भोऽसौ यक्षयोनावजायत। प्रदीप्ताक्षस्य यक्षस्य पुत्रो दीप्तशिखाभिधः ॥ ४२०
कनीयानट्टहासस्य भ्राता तीव्रतपोबलात्। तद्भार्ये अपि ते पथ्याबले यक्षपतेः सुते ॥ ४२१
धूमकेत्वभिधानस्य जज्ञाते यक्षकन्यके। ज्योतिर्लेखाभिधानैका धूमलेखेति चापरा ॥ ४२२
कालेन च भगिन्यौ ते कन्यके प्राप्तयौवने। भर्त्रर्थं तपसा गत्वारण्येऽतोषयतां हरम् ॥ ४२३
स तुष्टो दर्शनं दत्त्वा देवस्ते द्वे समादिशत्। सममेव प्रविश्याग्निं युवाभ्यां पूर्वजन्मनि ॥ ४२४
येन साकं वृतं भार्यापतित्वं सर्वजन्मसु। स वां यक्षोऽट्टहासस्य भ्राता दीप्तशिखाभिधः ॥ ४२५
जातः स स्वामिशापेन पुनर्मर्त्यत्वमागतः। जातः श्रीदर्शनो नाम तद्युवामपि गच्छतम् ॥ ४२६
भवेतां मर्त्यलोकेऽस्य भार्ये शापक्षये पुनः। यूयं च भार्यापतयो यक्षाः सर्वे भविष्यथ ॥ ४२७
इति गौरीपतेर्वाक्यादुभे ते यक्षकन्यके। पद्मिष्ठानङ्गमञ्जर्यावजायेतां भुवस्तले ॥ ४२८
श्रीदर्शनस्य भार्यात्वं प्राप्ते सत्यौ च तेऽचिरात्। एत्य तेनाट्टहासेन युक्त्या ब्राह्मणरूपिणा ॥ ४२९
श्लिष्टोक्त्या स्मारिते दैवाज्जातिं नामान्युदीर्य यत्। तेन ते तां तनुं त्यक्त्वा यक्षिणीत्वमुपागते ॥ ४३०
ते चावां त्वमिमे विद्धि भवान्दीप्तशिखश्च सः। इत्युक्त एव ताभ्यां तां जातिं श्रीदर्शनोऽस्मरत् ॥ ४३१
संपन्नश्च ततः सद्यो यक्षो दीप्तशिखोऽत्र सः। प्राप्तश्च ताभ्यां भार्याभ्यां संयोगं विधिवत्पुनः ॥ ४३२
तमिमं विद्धि मां यक्षं विचित्रकथ ते इमे। ज्योतिर्लेखां तथा धूमलेखां जानीहि मे प्रिये ॥ ४३३
तदेवं मादृशां देववंशजानामपीदृशम्। सुखदुःखं भवेत्कामं मानुषाणां कथैव का ॥ ४३४
युष्माकं चाचिराद्वत्स भविष्यति समागमः। भर्त्रा मृगाङ्कदत्तेन मा विषादमतः कृथाः ॥ ४३५
अहं चेह तवातिथ्यहेतोरास्थामिदं हि मे। भौमं धाम तदास्स्वेह करिष्येऽभिमतं तव ॥ ४३६
ततो यास्यामि कैलासं स्वं धामेति निजां कथाम्। उक्त्वा स यक्षो मां तत्र कंचित्कालमुपाचरत् ॥ ४३७
अद्य युष्मानिह प्राप्ताञ्ज्ञात्वा रात्रौ स सन्मतिः। सुप्तानां भवतां मध्ये सुप्तमानीय मां न्यधात् ॥ ४३८
ततो दृष्टोऽस्मि युष्माभिर्यूयं दृष्टा मयापि च। इत्येष युष्मद्विश्लेषे वृत्तान्तो देव मामकः ॥ ४३९

इति निजसचिवान्निशम्य तस्मान्निशि स विचित्रकथाद्यथार्थनाम्नः।
सुखमभजदतीव राजपुत्रः सममपरैः सचिवैर्मृगाङ्कदत्तः ॥ ४४०

नीत्वात्र रात्रिमटवीभुवि नागशापविश्लेषितान्मिलितशेषसखीन्विचिन्वन्।
अभ्युज्जयिन्युदचलच्च शशाङ्कवत्या लाभाय सोऽर्पितमतिः सह तैर्वयस्यैः ॥ ४४१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षष्ठस्तरङ्गः।

---

सप्तमस्तरङ्गः ।

ततस्तैः सचिवैर्युक्तः क्रमाच्छ्रुतधिपञ्चमैः । मृगाङ्कदत्तस्तस्यां स गच्छन्विन्ध्याटवीभुवि ॥ १
संप्राप सफलस्निग्धतरुच्छायमनोरमम् । एकं काननमच्छाच्छस्वादुशीतजलाशयम् ॥ २
तत्र स्नातः ससचिवो भुक्तनानाफलश्च सः । एकदेशे लताच्छन्ने समालापमिवाशृणोत् ॥ ३
गत्वा ददाति यावच्च दृष्टिं तत्र लतान्तरे । तावद्ददर्श तत्रान्तर्महान्तं वरवारणम् ॥ ४
आश्वासयन्तं पुरुषं पथि श्रान्तमचक्षुषम् । करेणोपाहृतैस्तोयैः फलैः कर्णानिलैस्तथा ॥ ५
कच्चित्किंचित्समाश्वस्तो भवानिति च तं मुहुः । साधुमानुषवल्लीला वदन्तं व्यक्तया गिरा ॥ ६
तं दृष्ट्वा स सखीनाह राजपुत्रः सविस्मयः । पश्यत क्व गजो वन्यः क्वाचारो मानुषोचितः ॥ ७
अवश्यं कोऽप्ययं हेतोः कुतोऽप्येवमिह स्थितः । अयं प्रचण्डशक्तेश्च सख्युः सुसदृशः पुमान् ॥ ८
किं त्वन्ध एष तत्क्षिप्रं पश्याम इति तान्सखीन् । उक्त्वा मृगाङ्कदत्तोऽत्र तस्थौ शृण्वन्नलक्षितः ॥ ९
तावत्स तं समाश्वस्तमन्धं पप्रच्छ वारणः । कस्त्वं कथमिहायातोऽस्यन्धः सन्कथ्यतामिति ॥ १०
ततः सोऽपि जगादैतं पुमानन्धो गजोत्तमम् । अस्तीहामरदत्ताख्यो राजायोध्यापुरीपतिः ॥ ११
मृगाङ्कदत्त इत्यस्ति तस्योत्तमगुणः सुतः । तस्य प्रचण्डशक्त्याख्यो भृत्योऽहं शुभजन्मनः ॥ १२
स राजपुत्रः केनापि कारणेन स्वदेशतः । पित्रा निर्वासितोऽस्माभिः सहायैर्दशभिर्वृतः ॥ १३
ते शशाङ्कवतीहेतोर्वयमुज्जयिनीं ततः । प्रस्थिता नागशापेन सर्वेऽटव्यां वियोजिताः ॥ १४
अहं चान्धत्वमायातस्तच्छापेन परिभ्रमन् । इह प्राप्तो यथालब्धफलमूलजलाशनः ॥ १५
श्वभ्रादिपातानशनैर्मृत्युरिष्टतमोऽपि मे । अनुभावयता क्लेशं न दत्तो बत वेधसा ॥ १६
जाने त्वया यथा शान्तं क्षुद्दुःखं त्वत्प्रसादतः । तथान्ध्यमपि मे शाम्येत्किमपि त्वं हि दैवतम् ॥ १७
इत्युक्ते तेन संजातनिश्चयो हर्षशोकयोः । मृगाङ्कदत्तो मध्यस्थः सचिवांस्तानभाषत ॥ १८
प्रचण्डशक्तिरेवायं कष्टमेतां दशां गतः । न चैष संभावयितुं युक्तो नस्त्वरयाधुना ॥ १९
नेत्रोपकारमस्यैष द्विपः कुर्वीत जातुचित् । अस्मान्दृष्ट्वा त्वसौ नश्येद्द्रष्टव्योऽन्तस्तदत्र नः ॥ २०
इत्युक्त्वा सानुगः शृण्वंस्तस्थौ राजसुतोऽत्र सः । प्रचण्डशक्तिश्च ततस्तं स पप्रच्छ वारणम् ॥ २१
इदानीं ब्रूहि वृत्तान्तं महात्मन्मम को भवान् । कैषा ते गजता वाक्च समदस्यापि निर्मदा ॥ २२
तदाकर्ण्य स निःश्वस्य गजेन्द्रस्तमभाषत । शृण्विमं निजवृत्तान्तमामूलात्कथयामि ते ॥ २३
नगर्यामेकलव्यायां पुरा श्रुतधराभिधः । राजाभूत्तस्य चाभूतां सुतौ द्वौ भार्ययोर्द्वयोः ॥ २४
तयोः शीलधरं नाम ज्येष्ठं तस्मिन्दिवं गते । राज्यात्सत्यधरो नाम कनीयान्निरवासयत् ॥ २५
सोऽथ शीलधरो गत्वा तेनामर्षेण शंकरम् । आराध्य तपसा तुष्टात्तस्माद्वरमयाचत ॥ २६
भूयासं देव गन्धर्वो येनाम्बरचरो भवन् । तं सत्यधरदायादं हन्यामेवावहेलया ॥ २७
तच्छ्रुत्वा भगवानेवं शंभुरादिशति स्म तम् । एतत्ते भावि किं त्वस्य स शत्रुस्ते मृतः स्वयम् ॥ २८
जनिष्यते च राढायां पुनरुग्रभटस्य सः । नृपस्य पुत्रः समरभटो नाम पितृप्रियः ॥ २९
त्वं च भीमभटो नाम तस्य द्वैमातुरोऽग्रजः । भ्राता जनिष्यते तं च हत्वा राज्यं करिष्यसि ॥ ३०
सामर्षेण त्वया चैतद्यतस्तप्तं तपस्ततः । मुनिशापात्पदभ्रष्टो वन्यो हस्ती भविष्यसि ॥ ३१
जातिस्मरो व्यक्तवाक्च भवानाश्वासयिष्यति । यदावसन्नमतिथिं स्ववृत्तान्तं च वक्ष्यति ॥ ३२
तदा गजत्वान्निर्मुक्तो गन्धर्वस्त्वं भविष्यसि । उपकारश्च तस्यापि भविष्यत्यतिथेस्तदा ॥ ३३
इत्यादिश्य तिरोभूते भर्गे शीलधरोऽत्र सः । दृष्ट्वा चिरतपःक्षीणां गङ्गायां तनुमक्षिपत् ॥ ३४
अत्रान्तरे कथासंधौ पूर्वोद्दिष्टस्य भूपतेः । तस्योग्रभटसंज्ञस्य राढायां पुरि तुल्यया ॥ ३५
मनोरमाख्यया देव्या समं निवसतः सुखम् । पार्श्वं देशान्तरादागाल्लासको नाम नर्तकः ॥ ३६
स च नाट्यप्रयोगं तं राज्ञे तस्मायदर्शयत् । दैत्यानां हरिणा यत्र हृतं स्त्रीरूपिणामृतम् ॥ ३७
तत्र चामृतिकाभूमौ नृत्यन्तीं नर्तकस्य सः । ददर्श तनयां तस्य नाम्ना लास्यवतीं नृपः ॥ ३८

तस्याः स रूपं दृष्ट्वैव विश्वक्षोभितदानवम् । सत्यामृताया इव तद्राजा कामवशं ययौ ॥ ३९
नृत्तान्ते च धनं भूरि तत्पित्रे प्रवितीर्य सः । प्रावेशयत्तां तत्कालं कन्यामन्तःपुरं स्वकम् ॥ ४०
ततस्तया स नर्तक्या विहितोद्वाहया सह । लास्यवत्या नृपस्तस्थौ तन्मुखासक्तलोचनः ॥ ४१
एकदा स यजुःस्वामिसंज्ञं प्राह पुरोहितम् । पुत्रो नास्तीह मे तत्त्वं पुत्रेष्टिं मम कुर्विति ॥ ४२
ततस्तथेति विधिवत्तामिष्टिं तस्य भूपतेः । पुरोहितः स विदधे विद्वद्भिर्ब्राह्मणैः सह ॥ ४३
प्राशयन्मन्त्रपूतं च तद्देवीं तां मनोरमाम् । भागमग्र्यं चरोर्ज्येष्ठां स पूर्वाराधितस्तया ॥ ४४
शेषं तस्यै द्वितीयस्यै लास्यवत्यै ददौ च सः । ततश्च तौ तयोः शीलधरसत्यधरावुभौ ॥ ४५
उभयोरुदरे राज्ञ्योः पूर्वोक्तौ संबभूवतुः । प्राप्ते च समये चात्र देवी तस्य महीपतेः ॥ ४६
मनोरमा प्रसूते स्म पुत्रं कल्याणलक्षणम् । एष भीमभटो नाम जातः ख्यातयशा नृपः ॥ ४७
इत्युच्चचार तत्कालं सुस्पष्टा भारती दिवः । ततोऽन्येद्युः प्रसुषुवे सापि लास्यवती सुतम् ॥ ४८
पिता च तं स समरभटं नाम्नाकरोन्नृपः । अथ तौ कृतसंस्काराववर्धेतां शनैः शिशू ॥ ४९
ज्येष्ठो भीमभटस्तं तु कनिष्ठमजयद्गुणैः । तत्संघर्षेण चान्योन्यं तयोर्वैरमवर्धत ॥ ५०
एकदा बाहुना बाहुयुद्धकेलौ समत्सरः । हन्ति स्म कण्ठे समरभटो भीमभटं हठात् ॥ ५१
ततो भीमभटः क्रोधाद्भुजाभ्यां परिवेष्ट्य तम् । न्यधादुत्क्षिप्य समरभटं चटदिति क्षितौ ॥ ५२
स तेनाभिहतो गाढं सर्वद्वारैरसृग्वमन् । समुत्थाप्यान्तिकं मातुर्नीतोऽभून्निजसेवकैः ॥ ५३
सा तं दृष्ट्वा च बुद्ध्वा च वृत्तान्तं स्नेहकातरा । तस्य मूर्धनि मूर्धानमासज्य प्रारुदद्भृशम् ॥ ५४
तावद्राज्ञा प्रविष्टेन तद्दृष्ट्वाकुलचेतसा । किमेतदिति पृष्टा सा लास्यवत्येवमब्रवीत् ॥ ५५
इयं भीमभटेनास्य कृतावस्था सुतस्य मे । सदा चाभिभवत्येनं न चाहं देव वच्मि ते ॥ ५६
इदं दृष्ट्वा तु जानेऽहं तवैव स्याच्छिवं कथम् । तस्मिन्नेवंविधे पुत्रे विचारयतु वा भवान् ॥ ५७
एवं तयोक्तः प्रियया स तमुग्रभटो नृपः । क्रुद्धो भीमभटं स्वात्मसंनिकर्षान्न्यवारयत् ॥ ५८
हृतवृत्तिं च कृत्वैनं राजपुत्रशतं व्यधात् । रक्षार्थं तस्य समरभटस्य सपरिच्छदम् ॥ ५९
स्वाधीनं चाकरोत्तस्य भाण्डागारं कनीयसः । तं तु भीमभटं ज्येष्ठं सर्वाकारमपाकरोत् ॥ ६०
ततो माता तमाहूय सा वक्ति स्म मनोरमा । नर्तकीरागिणा तावत्पित्रा त्वं परिवर्जितः ॥ ६१
तन्मातामहशालां त्वं गच्छ पाटलिपुत्रकम् । तत्र मातामहः स्वं ते राज्यं दास्यत्यपुत्रकः ॥ ६२
इह त्वां चैष समरभटो हन्याद्रिपुर्बली । इति मातुर्वचः श्रुत्वा तां स भीमभटोऽब्रवीत् ॥ ६३
क्षत्रियः सन्न देशं स्वं त्यक्ष्यामि क्लीबवद्भयात् । धीरा भवाम्ब कः शक्तो वराको मां प्रबाधितुम् ॥ ६४
इत्युक्तवन्तं तं माता साब्रवीत्तर्हि भूयसः । सहायान्कुरु रक्षार्थं मदीयैस्त्वं धनैरिति ॥ ६५
ततो भीमभटोऽवादीदेतदम्ब न शोभते । एवं हि सत्यं तातस्य प्रातिपक्ष्यं कृतं भवेत् ॥ ६६
तन्मे त्वदाशिषैव स्यात्कल्याणं निर्वृता भव । इत्याश्वास्य स तां भीमभटो निरगमत्ततः ॥ ६७
तावच्च तत्र बुद्ध्वा तत्पौराः सर्वे व्यचिन्तयन् । अनौचित्यं परं राज्ञा कृतं भीमभटस्य तु ॥ ६८
नैवास्य राज्यं समरभटो हर्तुं प्रगल्भते । तदेष पूर्वसेवायाः कालो भीमभटस्य नः ॥ ६९
इति निश्चित्य गुप्तं ते पौरा भीमभटं धनैः । तथापुष्यन्यथा सोऽत्र तस्थौ भृत्यैः समं सुखम् ॥ ७०
कनिष्ठः स तु तस्यासीद्वधमेव निरूपयन् । पितुः परिच्छदकृतः परिकल्प्य तदाशयम् ॥ ७१
तावच्च शङ्खदत्ताख्यो विप्रः शूरो युवा धनी । द्वयोर्वयस्यः समरभटमेत्य तमब्रवीत् ॥ ७२
भ्रात्रा वैरं न युक्तं ते नैष धर्मो न च त्वया । ज्यायान्स बाधितुं शक्यः स्यादकीर्तिः परं तव ॥ ७३
इति ब्रुवन्नधिक्षिप्य स तेन निरभर्त्स्यत । हितोपदेशो मूर्खस्य कोपायैव न शान्तये ॥ ७४
ततस्तत्कोपतो गत्वा धीरस्तद्विजिगीषया । शङ्खदत्तो व्यधादेकसख्यं भीमभटेन सः ॥ ७५
अथात्र मणिदत्ताख्यः कोऽपि देशान्तरागतः । आनीतवानश्वरत्नमेकमत्युत्तमं वणिक् ॥ ७६
शशाङ्कधवलं शुद्धशङ्खादिश्रव्यनिःस्वनम् । दुग्धाब्धेरिव कल्लोलजालमुच्छ्रितमुत्थितम् ॥ ७७

रोचमानैः समायुक्तचूडामण्यङ्गदादिभिः । गन्धर्वकुलसंभूतिसंसिद्धैरिव भूषितम् ॥ ७८
आख्यातं शङ्खदत्तेन तं च गत्वा हयोत्तमम् । क्रीणाति स्म धनैर्भीमभटस्तस्माद्वणिग्वरात् ॥ ७९
तत्क्षणं चात्र समरभटो बुद्ध्वा तदैत्य सः । मूल्येन द्विगुणेनाश्वं वणिजो मार्गति स्म तम् ॥ ८०
परतश्रीकृतं तं च तस्मै नादाद्वणिग्यदा । तदा सोऽश्वं बलान्नेतुं तं प्रावर्तत मत्सरात् ॥ ८१
तेनोभयोस्तयो राजपुत्रयोः शस्त्रपाणिषु । भृत्येषु धावितेष्वत्र समभूद्युद्धमुद्धतम् ॥ ८२
तत्र भीमभटोचण्डदोर्दण्डनिहतानुगः । त्यक्त्वा हयं स समरभटोऽभज्यत तद्भयात् ॥ ८३
भज्यमानं च धावित्वा केशेष्वाकृष्य पृष्ठतः । निहन्ति शङ्खदत्तस्तं यावन्मन्युभराकुलः ॥ ८४
तावद्भीमभटः पश्चादुपेत्यैनं न्यवारयत् । आस्तां संप्रति तातस्य दुःखमेवं भवेदिति ॥ ८५
ततः स शङ्खदत्तेन मुक्तो रक्तं व्रणैर्वमन् । त्रस्तः पलाय्य समरभटः पार्श्वमगात्पितुः ॥ ८६
ततोऽत्र स्वीकृताश्वं तं वीरं भीमभटं क्षणात् । उपेत्य ब्राह्मणः कश्चिन्नीत्वा विजनमब्रवीत् ॥ ८७
माता मनोरमा देवी यजुःस्वामी पुरोहितः । पितृमन्त्री स सुमतिस्त्वामिदं ब्रुवतेऽधुना ॥ ८८
जानासि यादृशो वत्स राजा त्वयि विशेषतः । अस्मिन्व्यतिकरे वृत्ते शत्रुतामेव ते गतः ॥ ८९
तदात्मानं च धर्मं च यशश्च यदि रक्षसि । आयतिं यदि जानासि यद्यस्मान्मन्यसे हितान् ॥ ९०
तदर्कोऽस्तं गतो यावदितस्तावदलक्षितः । निर्गत्य सांप्रतं सिद्ध्यै मातामहगृहं व्रज ॥ ९१
इति संदिष्टवद्भिश्च सद्रत्नस्वर्णपूरितम् । तैरिदं प्रेषितं भाण्डं मद्धस्तेन च गृह्यताम् ॥ ९२
एतत्तस्माद्द्विजाच्छ्रुत्वा स तथेत्यभिनन्द्य च । सुधीस्तत्स्वर्णसद्रत्नभाण्डं भीमभटोऽग्रहीत् ॥ ९३
दत्त्वा च प्रतिसंदेशमनुरूपं विसृज्य तम् । द्विजं कृपाणपाणिस्तमारूढोऽभूत्तुरङ्गमम् ॥ ९४
गृहीतहेमरत्नेन द्वितीयाश्वाधिरोहिणा । सहितः शङ्खदत्तेन सोऽथ प्रस्थितवांस्ततः ॥ ९५
दूरं व्यतीत्य चाध्वानं निशीथे स नृपात्मजः । प्रापद्भीमभटो मार्गमध्ये शरवणं महत् ॥ ९६
तत्रानवरतं तस्य सवयस्यस्य गच्छतः । पतद्वाजिखुरक्षुण्णशरशब्दप्रबोधितम् ॥ ९७
उत्थाय सिंहमिथुनमुद्गर्जत्पोतकैः सह । अपाटयत्तौ तुरगौ नखैरुदरयोरधः ॥ ९८
सद्वितीयश्च तान्सर्वान्सिंहान्वीरः स तत्क्षणम् । खङ्गप्रहारलूनाङ्गानकरोद्गतजीवितान् ॥ ९९
समित्रोऽप्यवरुह्याथ तुरगौ यावदीक्षते । तावद्विगलितान्त्रौ तौ भूमावपततामुभौ ॥ १००
तद्दृष्ट्वा स विषण्णस्तं शङ्खदत्तमभाषत । सखे विरुद्धात्स्वजनाद्वयं यत्नात्पलायिताः ॥ १०१
ब्रूहि यत्नशतेनापि क्व पलायामहे विधेः । येनेहापि हताः सोऽद्य वाहमात्रासहिष्णुना ॥ १०२
यत्कृते विहितो देशत्यागः सोऽपि हयो मृतः । तदस्माभिः कथं पद्भ्यां गम्येयमटवी निशि ॥ १०३
इत्युक्तस्तेन स सुहृच्छङ्खदत्तस्तमब्रवीत् । नैतन्नवं जयति यत्पौरुषं विधुरो विधिः ॥ १०४
निसर्ग एव तस्यायं धैर्येण तु स जीयते । वातोऽद्रेरिव किं कुर्याद्धीरस्याकम्पितस्य सः ॥ १०५
तदेह्यारूढधैर्याश्वौ व्रजावोऽत्रेति वादिना । शङ्खदत्तेन स समं प्रायाद्भीमभटस्ततः ॥ १०६
व्यतिक्रान्तस्य शनकैः कान्तारमथ तस्य तत् । शरपाटितपादस्य शर्वरी पर्यहीयत ॥ १०७
उदितेऽथ जगद्दीपे भानौ नैशतमोमुषि । मार्गाब्जिनीसरोजेषु मधुरक्वणितालिषु ॥ १०८
दिष्ट्या सिंहादिसंकीर्णा तीर्णोऽयमटवीमिमाम् । जल्पत्स्विवोत्फुल्लमुखेष्वन्योन्यमवलोक्य तम् ॥ १०९
क्रमेण गच्छन्नुटजैः समकीर्णं तपस्विनाम् । पुलिनं जह्नुकन्यायाः प्रापत्स सवयस्यकः ॥ ११०
तत्र शार्वशिरोवासलग्नचन्द्रामृतैरिव । तज्जलैः स्वादुभिः शीतैः स्नातो विश्राम्यति स्म सः ॥ १११
व्याधान्मार्गागतात्क्रीतैर्भृष्टैश्च हरिणामिषैः । शङ्खदत्तोपनीतैश्च देहवृत्तिं व्यधत्त सः ॥ ११२
उत्तरीतुमशक्यां च पूर्णामालोक्य जाह्नवीम् । तरङ्गहस्तैरसकृद्वारयन्तीमिवोच्छ्रितैः ॥ ११३
तस्याः कूलेन स ततो गत्वा ब्राह्मणपुत्रकम् । स्वाध्यायासक्तमद्राक्षीद्विजनस्थोटजाङ्गणे ॥ ११४
उपेत्य तमपृच्छच्च कस्त्वं किमिह निर्जने ? एकाक्येव करोपीति ततः सोऽप्येनमभ्यधात् ॥ ११५
अहं वाराणसीवासी श्रीकण्ठाख्यद्विजात्मजः । नीलकण्ठाभिधः पित्रा कृतसंस्कारपद्धतिः ॥ ११६

सोऽहं गुरुकुलाधीतविद्यो बाल्ये निजं गृहम् । उपैमि यावत्तावन्मे विनष्टाः सर्वबान्धवाः ॥ ११७
तेनानाथोऽर्थहीनश्च गार्हस्थ्यासिद्धिदुःखितः । निर्विण्णोऽहमिहागत्य तपस्तीव्रमशिश्रियम् ॥ ११८
ततः स्वप्नेऽब्रवीद्देवी गङ्गा दत्त्वा फलानि मे । एतानि खादंस्तिष्ठेह यावत्प्राप्स्यसि वाञ्छितम् ॥ ११९
एतच्छ्रुत्वा प्रबुद्ध्यैव गत्वा स्नात्वा निशाक्षये । प्राप्तं फलानि गङ्गायामागतानि जलान्तरे ॥ १२०
तान्यानीयामृतस्वादून्युटजेऽहं च भुक्तवान् । एवं तान्यन्वहं प्राप्तान्यश्नन्नहमिह स्थितः ॥ १२१
इति तेनोदिते शङ्खदत्तं भीमभटोऽब्रवीत् । अस्मै गार्हस्थ्यपर्याप्तं ददामि गुणिने धनम् ॥ १२२
तच्छ्रुत्वा श्रद्धितवचास्तेन राजसुतोऽथ सः । मात्रा निसृष्टं तद्द्रव्यमदात्तस्मै द्विजन्मने ॥ १२३
अलुप्तसत्त्वकोषाणां महत्त्वं महतां हि किम् । आकर्णितां परस्यार्तिं न चेच्छिन्दन्ति तत्क्षणम् ॥ १२४
कृतार्थीकृत्य तं विप्रं ततो गत्वा स सर्वतः । चिन्वन्नुत्तरणोपायं गङ्गायां नाप्तवान्यदा ॥ १२५
तदा भीमभटो मूर्धनिबद्धासिविभूषणः । शङ्खदत्तयुतो दोर्भ्यां तरीतुं तामवातरत् ॥ १२६
मध्यभागे च वार्योघदूरीकृतवयस्यकः । कथंचित्तीर्णवान्पारं ह्रियमाणः स वीचिभिः ॥ १२७
पारं प्राप्तस्य मित्रं तं शङ्खदत्तमपश्यतः । अन्विष्यतश्चानुतटं तस्यास्तमगमद्रविः ॥ १२८
ततो निराशो हा मित्रेत्याक्रन्दन्नतिदुःखितः । गङ्गायां क्षेप्तुमात्मानमुद्यतोऽभून्निशागमे ॥ १२९
जीवितं मे सखा देवि जाह्नव्यपहृतस्त्वया । तच्छून्यं देहमप्येतं त्वं गृहाणाधुना मम ॥ १३०
इत्युक्त्वा यावदात्मानं क्षेप्तुमिच्छति तत्र सः । तावदाविरभूत्साक्षाद्गङ्गा तस्याम्बुमध्यतः ॥ १३१
अब्रवीत्तीव्रसंवेगतुष्टा सा तं च तत्क्षणम् । मा पुत्र साहसं कार्षीः स ते जीवन्सखा स्थितः ॥ १३२
अचिरेण च संयोगस्तव तेन भविष्यति । प्रतिलोमानुलोमाख्यां विद्यां चैतां गृहाण मे ॥ १३३
अदृश्यः स्यात्परस्यैतामनुलोमां पठन्नरः । प्रतिलोमां पठन्कुर्यादिष्टरूपप्रकाशनम् ॥ १३४
एतत्प्रभावा विद्येयं यत्सा सप्ताक्षरोम्भिता । एतत्प्रभावात्त्वं चास्यां पृथ्व्यां राजा भविष्यसि ॥ १३५
इत्युक्त्वा दत्तविद्या सा तिरोऽभूत्तस्य जाह्नवी । जातास्थः सखिलाभादौ मरणात्सोऽप्युपारमत् ॥ १३६
मित्रप्राप्त्युत्सुको नीत्वा कृच्छ्रात्पद्म इव क्षपाम् । प्रातर्भीमभटस्तं स चिन्वन्प्रस्थितवांस्ततः ॥ १३७
अथान्वेष्टुं क्रमादेतं शङ्खदत्तं परिभ्रमन् । देशं स लाटविषयं कदाचित्प्रापदेककः ॥ १३८
यत्रासंकीर्णवर्णोऽपि जनश्चित्रोज्ज्वलस्थितिः । निलयोऽपि कलानां यो न दोषाकरशब्दभाक् ॥ १३९
तत्रान्तर्नगरे देवकुलावासान्विलोकयन् । भ्रान्त्वा स द्यूतकाराणामेकां शालामवाप्तवान् ॥ १४०
तत्र प्रविश्य चापश्यत्कितवानक्षदेविनः । कटिकर्पटमात्रैकवसनानपि पेशलैः ॥ १४१
विभक्तैः पीवरैश्चाङ्गैर्भोगव्यायामसूचकैः । शंसतो गूढमैश्वर्यमर्थार्थाश्रिततत्कलम् ॥ १४२
कृतालापैश्च तैः साकं द्यूतमारभते स्म सः । अयं साभरणोऽस्माकं भक्ष्य इत्यात्तबुद्धिभिः ॥ १४३
ततस्तेन हृतं तेषां जित्वाक्षैरखिलं धनम् । धूर्तैर्यद्वञ्चयित्वान्यांस्तैरभूत्समुपार्जितम् ॥ १४४
हारितार्थांश्च कितवान्स्वगृहान्गन्तुमुद्यतान् । द्वारार्पितभुजो रुद्ध्वा स तान्भीमभटोऽब्रवीत् ॥ १४५
क्व गच्छथेदं गृह्णीत धनं किममुना मम । मयैतद्देयमिष्टेभ्यो यूयं चेष्टा न किं मम ॥ १४६
भवद्भिः सदृशानिष्टान्सखीन्प्राप्नोम्यहं कुतः । इति तस्मिन्वदत्येव तेष्वगृह्णत्सु च ह्रिया ॥ १४७
अक्षक्षपणको नाम तत्रैकः कितवोऽब्रवीत् । तद्द्यूतपरिभाषैषा हारितं यन्न दीयते ॥ १४८
तथाप्येष सुहृद्भूत्वा यद्यस्मभ्यं प्रयच्छति । स्वेच्छया जितमप्यर्थं तद्गृह्णीमो वयं न किम् ॥ १४९
तच्छ्रुत्वा तेऽब्रुवन्नन्ये सख्यं चेदेष शाश्वतम् । तादृशं कुरुतेऽस्माभिस्तदैतदुपपद्यते ॥ १५०
एवमुक्तवतस्तान्स मत्वा वीरांस्तथेति तैः । व्यधाद्भीमभटः सख्यमदात्तेभ्यश्च तद्धनम् ॥ १५१
तदर्थितश्च तैः साकमुद्याने सकुटुम्बकैः । गत्वा भोजनपानाद्यैर्व्यहरत्तदुपाहृतैः ॥ १५२
ततोऽक्षक्षपणाद्यैस्तैः पृष्टस्तेभ्योऽब्रवीन्निजम् । स वंशनामवृत्तान्तमपृच्छच्च तथैव तान् ॥ १५३
अथैवमक्षक्षपणस्तस्मै स्वोदन्तमभ्यधात् । शिवदत्ताभिधानोऽभूद्ब्राह्मणो हस्तिनापुरे ॥ १५४
तस्याहं वसुदत्ताख्यो महाधनवतः सुतः । बाल्ये मया शस्त्रविद्या वेदविद्याश्च शिक्षिताः ॥ १५५

ततो विवाहः पित्रा मे विहितः सदृशात्कुलात् । माता तु मे महारौद्रा दुराराध्यातिकोपना ॥ १५६
तया चोद्वेजितोऽत्यर्थं दृष्ट्वा मां सपरिग्रहम् । पिता मे स्वगृहं त्यक्त्वा स गतः क्वाप्यतर्कितः ॥ १५७
तद्दृष्ट्वा सभयोऽम्बायाश्चित्तग्रहविधावहम् । यत्नान्नियुक्तवान्भार्यां सापि भीता तथाकरोत् ॥ १५८
अम्बा तु तस्या नातुष्यत्कथंचित्कलहोद्यता । तूष्णींस्थानमवज्ञानं दैन्यालापं च कैतवम् ॥ १५९
प्रत्यायनं विवादं च मन्यमाना दुराशया । को हि त्याजयितुं शक्तो वह्नेः स्वां दहनात्मताम् ॥ १६०
ततस्तस्या विरुद्धैस्तैश्चेष्टितैः सा ममाचिरात् । खिन्ना भार्यापि निर्गत्य न जाने क्व गता गृहात् ॥ १६१
अथोद्विग्नो गृहं त्यक्तुमना अपि बलादहम् । मिलित्वा बन्धुभिः पापैर्विवाहं कारितोऽपरम् ॥ १६२
सापि भार्या मम तया तथा संतापिताम्भया । उद्बध्य पाशेनात्मानं व्यापादितवती यथा ॥ १६३
ततोऽहं नितरां खिन्नो विदेशं गन्तुमुद्यतः । निवारयद्भ्यो बन्धुभ्योऽवर्णयं मातृदुष्टताम् ॥ १६४
पितृप्रवासनादौ मे कारणान्तरवादिनाम् । तेषां यत्प्रत्ययो नाभूत्तद्युक्त्या दारुपुत्रिका ॥ १६५
कारयित्वा मयैकान्ते परिणीता मृषा पुनः । आनीय स्थापिता चान्तर्गृहेऽन्यत्रार्पितार्गले ॥ १६६
रक्षिकैका कृता चास्या नारी कर्मकरीनिभा । मयैषा नूतना भार्या स्थापितैव पृथग्गृहे ॥ १६७
त्वं चाहं चाधुनात्रैव स्वगृहे पृथगास्वहे । न गन्तव्यं त्वया तत्र नागन्तव्यमितस्तया ॥ १६८
आराधनं तवाप्रौढा न सा वेत्ति हि संप्रति । इत्यम्बामब्रवं चाहमन्वमन्यत सापि तत् ॥ १६९
ततो दिनेषु यातेषु यदा तां कपटस्नुषाम् । न कथंचिदपि प्रापत्सार्गलेऽन्तर्गृहे स्थिताम् ॥ १७०
तदाश्मना सा मूर्धानमाहत्य स्वयमेकदा । तारमाक्रन्दति स्माम्बा रक्ताक्ता स्वगृहाङ्गणे ॥ १७१
श्रुत्वाक्रन्दं प्रविष्टेन मया सर्वैश्च बान्धवैः । दृष्ट्वा किमेतद्ब्रूहीति पृष्टा सासूयमभ्यधात् ॥ १७२
ईदृशी स्नुषयागत्य विनाहेतुः कृता मम । अवस्था तदिदानीं मे मरणेनैव निष्कृतिः ॥ १७३
तच्छ्रुत्वैव सकोपास्ते तां सहादाय बान्धवाः । तत्रागच्छन्मया साकं यत्र सा दारुपुत्रिका ॥ १७४
अपास्यार्गलमुद्घाट्य द्वारं यावद्विशन्ति ते । तावत्काष्ठमयीं नारीमपश्यंस्तत्र केवलाम् ॥ १७५
ततो विडम्बितात्मानं हसन्तोऽम्बां विलक्षिताम् । उत्पन्नप्रत्यया याता बान्धवास्ते यथागतम् ॥ १७६
अहं च त्यक्ततद्देशो भ्राम्यन्निममवाप्तवान् । प्रदेशमिह च द्यूतशालां दैवात्किलाविशम् ॥ १७७
अत्रैतानहमद्राक्षं पञ्चाक्षैर्दीव्यतो जनान् । इमं चण्डभुजंगाख्यमेतं पांसुपटं तथा ॥ १७८
अमुं श्मशानवेतालमिमं कालवराटकम् । शारिप्रस्तरमेतं च शूरांस्तुल्यपराक्रमान् ॥ १७९
एतैः समं च द्यूतेन तत्र क्रीडितवानहम् । दासः स्याद्विजितो जेतुरिति बद्ध्वा मिथः पणम् ॥ १८०
ततो द्यूतेन विजिता मम दास्यमिमे गताः । अहं गुणैर्जितस्त्वेषां दासतामागतः स्वयम् ॥ १८१
एभिः समं च वसतः स्वदुःखं विस्मृतं मम । नाम्नावस्थोचितेनात्र विद्ध्यक्षक्षपणं च माम् ॥ १८२
इत्यहं सत्कुलोत्पन्नैरिहैवं गूहितात्मभिः । एतैः सह स्थितः पुण्यैस्त्वं चाद्य मिलितोऽत्र नः ॥ १८३
तदिदानीं त्वमस्माकं प्रभुः प्रागेव चैतया । बुद्ध्या तवात्तमस्माभिस्तद्धनं गुणरागिभिः ॥ १८४
इत्यक्षक्षपणेनोक्ते स्ववृत्तान्ते क्रमेण ते । सर्वे भीमभटायान्येऽप्युदन्तान्स्वानवर्णयन् ॥ १८५
ततोऽर्थार्थमुपात्ताभिः कलाभिश्छादितात्मनः । प्रवीरांस्तान्सखीन्मत्वा कृत्वान्या विविधाः कथाः ॥ १८६
नीत्वा विहारेण दिनं दृष्ट्वा पौरंदरीं दिशम् । उद्भासमानशीतांशुतिलकालंकृताननाम् ॥ १८७
अगाद्भीमभटस्तस्मादुद्यानात्स नृपात्मजः । अक्षक्षपणकाद्यैस्तैः षड्भिः सह तदास्पदम् ॥ १८८
तैः समं तिष्ठतश्चात्र तस्य प्रावृडुपागमत् । शंसन्तीव सुहृत्प्राप्तिं प्रवृष्टघनगर्जितैः ॥ १८९
तदा चात्र विपाशाख्या नदी मत्ता समुद्रगा । प्रतीपवाहिनी जाता सागरौघेण पूरिता ॥ १९०
समापूर्य महावारिपूरेण पुलिनं च सा । ओघप्रशान्तावम्भोधिसंमुखीव जगाम सा ॥ १९१
तस्मिन्कालेऽत्र चानीय क्षिप्तस्तेनौघवारिणा । महामत्स्यो गरीयस्त्वाद्व्यासक्तोऽभून्नदीतटे ॥ १९२
दृष्ट्वा च तं प्रधाव्यैव निहन्तुं विविधायुधैः । तत्रत्याः पाटयामासुर्जनास्तस्योदरं तिमेः ॥ १९३
पाटितान्निरगाच्चात्र तस्माज्जीवन्युवा द्विजः । तद्दर्शनाद्भुतात्तत्र लोकः कोलाहलं व्यधात् ॥ १९४

तच्छ्रुत्वा सह मित्रैस्तैर्गतो भीमभटोऽत्र सः । अपश्यच्छङ्खदत्तं तं मित्रं मत्स्याद्विनिर्गतम् ॥ १९५
समाश्लिषच्च धावित्वा सिञ्चन्धाराश्रुभिः स तम् । मीनोदरदरीवासविस्रं प्रक्षालयन्निव ॥ १९६
सोऽपि तद्विपदुत्तीर्णः प्राप्य तं परिरभ्य च । सुहृदं शङ्खदत्तोऽगादुत्सवादुत्सवं तदा ॥ १९७
ततो भीमभटेनात्र तेन पृष्टः स कौतुकात् । शङ्खदत्तः स्ववृत्तान्तं संक्षेपादेवमब्रवीत् ॥ १९८
तदा गङ्गोर्मिवेगेन हृतस्त्वद्दृष्टिगोचरात् । अशङ्कितं निगीर्णोऽस्मि मत्स्येनातिमहीयसा ॥ १९९
तस्योदरमहावेश्मप्रविष्टोऽहं ततश्चिरम् । अतिष्ठं छुरिकोत्कृत्तं तन्मांसं भक्षयन्क्षुधा ॥ २००
अथ सोऽयमिहानीय धात्रा क्षिप्तः कथंचन । मत्स्यो हतो जनैरेभिः कृष्टश्चास्योदरादहम् ॥ २०१
दृष्टो मया त्वमर्कश्च प्रकाशं मे गता दिशः । एष मे मित्र वृत्तान्तो वेद्मि नाहमतः परम् ॥ २०२
इत्युक्तः शङ्खदत्तेन तेन भीमभटश्च सः । अन्ये च सर्वे तत्रस्था विस्मयादेवमब्रुवन् ॥ २०३
क गङ्गायां निगरणं मत्स्येनाब्धौ क तद्रतिः । क च तद्वर्त्मना तस्य विपाशायां निवेशनम् ॥ २०४
क वधस्तस्य तस्माच्च जीवतः कास्य निर्गमः । अहो विधेरचिन्त्यैव गतिरद्भुतकर्मणः ॥ २०५
इत्यादि तैः सह वदन्नक्षक्षपणकादिभिः । अनयच्छङ्खदत्तं स धाम भीमभटो निजम् ॥ २०६
तत्र चोपाचरत्स्नानवस्त्राद्यैस्तं स सोत्सवः । तेनैव वपुषा जातमिव मत्स्योदरात्पुनः ॥ २०७
ततस्तेन समं देशे तस्मिन्भीमभटे स्थिते । आगाद्यात्रोत्सवस्तत्र नागराजस्य वासुकेः ॥ २०८
तद्दर्शनाय स प्रायाद्राजपुत्रः सुहृद्वृतः । मिलन्महाजनं तस्य नागमुख्यस्य केतनम् ॥ २०९
तत्र प्रणम्य तन्मूर्तिं प्रासादे माल्यदामभिः । भृते भोगिगणाकारैः पातालोदकसंनिभे ॥ २१०
गत्वा दक्षिणतोऽपश्यन्महान्तं तस्य स ह्रदम् । फणारत्नप्रभापुञ्जैरिव रक्ताम्बुजैश्चितम् ॥ २११
विषाग्निधूमपटलैरिव नीलोत्पलैर्भृतम् । वृतं वातपतत्पुष्पैरर्चद्भिरिव पादपैः ॥ २१२
स्वल्पः समुद्रोऽमुद्रस्य पुरोऽस्य प्रतिभाति मे । अनन्यहारिश्रीकस्य हृतश्रीकः स शौरिणा ॥ २१३
इति यावच्च तं दृष्ट्वा स चिन्तयति विस्मितः । तावत्स्नानार्थमायातामद्राक्षीत्तत्र कन्यकाम् ॥ २१४
राज्ञो लाटेश्वरस्यात्र चन्द्रादित्यस्य पुत्रिकाम् । जातां कुवलयावल्यां नाम्ना हंसावलीं शुभाम् ॥ २१५
अङ्गैरपहुतोऽप्यन्यैर्यस्या दिव्यानुकारिभिः । चक्षुषा चपलेनोक्तो मर्त्यभावो निमेषतः ॥ २१६
सा पुष्पपेलववपुष्कोटिप्राप्तस्फुरद्भ्रुणा । मुष्टिग्राह्येण मध्येन मान्मथीव धनुर्लता ॥ २१७
दृष्ट्वैव तिर्यग्वलितैरपि लोचनसायकैः । अमोहयद्भीमभटं हृदि निर्भिद्य तं तदा ॥ २१८
सोऽपि तस्याः प्रविश्यैव तिर्यङ् नयनवर्त्मना । हृत्कोपमहरद्धैर्यं जगत्सौन्दर्यतस्करः ॥ २१९
ततो गुप्तविसृष्टाप्तदक्षचेटीमुखेन सा । अन्विष्यति स्म मित्रेभ्यस्तस्य नामास्पदादिकम् ॥ २२०
अथागात्सा परिजनैर्नीयमाना स्वमन्दिरम् । स्नाता विवर्तितमुखी मुहुस्तद्गतया दृशा ॥ २२१
ततो भीमभटः सोऽपि स्वावासं सखिभिः सह । प्रत्यागात्तत्प्रियाप्रेमपाशबन्धस्खलद्गतिः ॥ २२२
तत्र तस्मै क्षणाद्दूतीं तां चेटीं राजकन्यका । हंसावली सा व्यसृजद्दत्त्वा संदेशमीप्सितम् ॥ २२३
साभ्युपेत्य तमाह स्म चेटी भीमभटं रहः । देव हंसावली राजसुता त्वामनुनाथति ॥ २२४
ह्रियमाणं स्मरौघेण दृष्ट्वा प्रणयिनं जनम् । इमं द्रुतमनादृत्य न युक्ता ते तटस्थता ॥ २२५
इति संप्राप्य दूतीतो दयितावचनामृतम् । लब्धजीवितहृष्टस्तां सोऽथ भीमभटोऽब्रवीत् ॥ २२६
ओघस्थो न तटस्थोऽहमिति वेत्ति न किं प्रिया । तद्वचस्तु करिष्यामि कामं लब्धावलम्बनः ॥ २२७
एत्य संभावयिष्यामि नक्तमन्तःपुरेऽद्य ताम् । विद्याच्छन्नं विशन्तं च नहि द्रक्ष्यति कोऽपि माम् ॥ २२८
इत्युक्ता तेन चेटी सा तुष्टा गत्वा शशंस तत् । हंसावल्यै ततः सापि तस्थौ तत्संगमोन्मुखी ॥ २२९
सोऽपि प्रदोषसमये दिव्याभरणभूषितः । गङ्गावितीर्णविद्याया आनुलोम्येन पाठतः ॥ २३०
अदृश्यीभूय गत्वा तत्तस्या अन्तःपुरोत्तमम् । समाविशद्भीमभटः प्राग्विविक्तीकृतं तया ॥ २३१
रतिप्रीतिकरे तत्र कालागुरुसुगन्धिनि । दशार्धवर्णविन्यस्तपुष्पप्रकरशोभिते ॥ २३२
कामोद्याननिभे कान्तां तां वहद्दिव्यसौरभाम् । सोऽपश्यद्द्राङ्क्षसद्विद्यावल्लीप्रसवसंनिभाम् ॥ २३३

प्रातिलोम्येन विद्यां च तां पठित्वा स दृश्यताम् । सहसा सुभगस्तस्या राजपुत्र्या गतोऽभवत् ॥ २३४
सा तं दृष्ट्वैव सानन्दपुलकोत्कम्पसाध्वसा । रणत्साभरणातोद्यैष्वनृत्यदिव तत्क्षणम् ॥ २३५
आसीच्च कन्यकाभावलज्जया विनतानना । कर्तव्यमिव पृच्छन्ती हृदयं तत्प्रवृत्तिकृत् ॥ २३६
मुग्धे प्रकाशितस्यापि ह्रिया किं चेतसोऽधुना । निगूहते न तद्वस्तु कथमेष तु गूह्यते ॥ २३७
पुलकोऽङ्गेषु किं चैतद्विदलत्संधि कञ्चुकम् । इत्यादिभिर्वचोभिस्तामन्यैश्च प्रणयक्रमैः ॥ २३८
विधाय सुमुखीं मुक्तलज्जां भीमभटोऽथ ताम् । गान्धर्वोद्वाहविधिना भार्यां हंसावलीं व्यधात् ॥ २३९
नीत्वा तया समं रात्रिं तन्मुखाब्जालिलीलया । कृच्छ्रात्तां नक्तमेष्यामीत्यामन्त्र्यागात्स्वमास्पदम् ॥२४०
तां च हंसावलीं तत्र प्रविष्टाः स्वमहत्तराः । प्रातरन्तःपुरेऽद्राक्षुर्युक्तां संभोगलक्षणैः ॥ २४१
लुलितालककेशान्तामार्द्रदन्तनखक्षताम् । साक्षात्स्मरशरश्रेणिव्रणव्याकुलितामिव ॥ २४२
गत्वा च राज्ञे तत्पित्रे ते शशंसुस्तथैव तत् । सोऽपि तत्र व्यधाद्गुप्तं नक्तं चारानवेक्षितुम् ॥ २४३
सोऽथ भीमभटो मित्रैः सहितश्च सुखं दिनम् । नीत्वा प्रदोषे भूयस्तत्प्रियान्तःपुरमागमत् ॥ २४४
अलक्षितप्रविष्टं तं तत्र विद्याप्रभावतः । दृष्ट्वा संभाव्य सिद्धं च चारास्ते निर्ययुस्ततः ॥ २४५
गत्वा च राज्ञे जगदुः सोऽपि तानेवमादिशत् । अदृश्यो यः प्रविष्टोऽत्र सुगुप्ते न स मानुषः ॥ २४६
तत्तमानयतेहैव यावत्पश्यामि किं त्विदम् । ब्रूत चापरुषं यूयमेव मद्वचनेन तम् ॥ २४७
प्रकटं प्रार्थिता मत्तः किं न मत्तनया त्वया । रहस्यं किं कृतं त्वादृग्गुणवान्हि वरः कुतः ॥ २४८
इत्युक्त्वा प्रेषिता राज्ञा गत्वा चारास्तथैव ते । द्वारस्था एव तद्वाक्यमाहुर्भीमभटाय तत् ॥ २४९
सोऽपि ज्ञातोऽस्मि राज्ञेति बुद्ध्वाप्यभ्यन्तरस्थितः । सुधीरो राजपुत्रस्तान्प्रसह्य प्रत्यभाषत ॥ २५०
मद्वाक्याद्ब्रूत राजानं प्रातरास्थानमेत्य ते । तत्त्वमावेदयिष्यामि रात्रिरन्धा हि संप्रति ॥ २५१
तच्छ्रुत्वा तैर्गतैस्तद्वदुक्तस्तूष्णीमभून्नृपः । प्रातर्भीमभटः सोऽथ ततोऽयासीत्सखीन्प्रति ॥ २५२
तैश्च साकं कृतोद्दामवेषो वीरैः स सप्तभिः । आस्थानमगमत्तस्य चन्द्रादित्यस्य भूपतेः ॥ २५३
तत्तेजोवीर्यसौन्दर्यदर्शिना तेन सत्कृते । निजोचितासनासीने तस्मिन्भीमभटे द्विजः ॥ २५४
स तत्सखा शङ्खदत्तो राजानं तमभाषत । राजन्नुग्रभटस्यायं राज्ञो राढापतेः सुतः ॥ २५५
अतर्क्यविद्यामाहात्म्याद्दुरतिक्रमविक्रमः । नाम्ना भीमभटो युष्मत्सुताहेतोरिहागतः ॥ २५६
तच्छ्रुत्वा रात्रिवृत्तान्तं स्मरन्योग्यमवेक्ष्य तम् । हन्त धन्याः स्म इत्युक्त्वा राजा श्लाघितवांस्ततः ॥२५७
प्रादाच्च रचितोद्वाहविभवप्रक्रियोऽथ ताम् । सुतां हंसावलीं भीमभटाय विभवोत्तरम् ॥ २५८
ततो भीमभटो भूरिहस्त्यश्वग्रामलाभवान् । हंसावल्या च लक्ष्म्या च सहासीत्तत्र निर्वृतः ॥ २५९
दिनैश्च तस्मै श्वशुरो लाटराज्यं समर्प्य तत् । चन्द्रादित्यः स वृद्धः सन्नपुत्रः प्राव्रजद्वनम् ॥ २६०
अथ भीमभटः प्राप्य तद्राज्यमशिवत्कृती । सम्यक्तैः सप्तभिर्वीरैः शङ्खदत्तादिभिः सह ॥ २६१
गतेष्वथ दिनेष्वत्र चारेभ्यो जातु सोऽशृणोत् । प्रयागमेत्य पितरं मृतमुग्रभटं नृपम् ॥ २६२
अभिषिक्तं च तेन स्वे राढाराज्ये मुमूर्षता । पुत्रं कनिष्ठं समरभटं तं नर्तकीसुतम् ॥ २६३
ततोऽनुशोच्य पितरं कृत्वा तस्यौर्ध्वदैहिकम् । तस्मै स दूतं समरभटाय प्राहिणोन्नृपः ॥ २६४
तातसिंहासने मूर्ख नर्तकीपुत्र का तव । योग्यता मम तत्स्वं हि लाटराज्येऽत्र सत्यपि ॥ २६५
अतस्त्वयाधिरोढव्यं न तस्मिन्निति तस्य च । संदिष्टवान्स लेखेन दायादस्यापकारिणः ॥ २६६
स च दूतो द्रुतं गत्वा लेखं तस्मै समर्पयत् । आवेदितात्मा समरभटायास्थानवर्तिने ॥ २६७
सोऽपि तं तादृशं भीमभटनामाङ्कमुद्धतम् । वाचयित्वैव समरभटः क्रुद्धोऽभ्यभाषत ॥ २६८
अयोग्य इति पित्रा यो देशान्निर्वासितः पुरा । तस्यैषा दुर्विनीतस्य युक्ता मिथ्याभिमानिता ॥ २६९
सिंहायते सृगालोऽपि स्वगुहागृहसंस्थितः । सिंहस्य दर्शनं प्राप्तो ज्ञायते स तु तादृशः ॥ २७०
इत्याशुद्रव्यं लेखेन संदिश्य च तथैव तत् । सोऽपि भीमभटाय स्वं प्रतिदूतं विसृष्टवान् ॥ २७१
प्रतिदूतोऽपि गत्वा स लाटदेशेश्वराय तम् । तस्मै भीमभटायादाल्लेखं क्षत्तृनिवेदितः ॥ २७२

सोऽथ भीमभटस्तस्मिंल्लेखे तत्रानुवाचिते। मुक्ताट्टहासो दायादप्रतिदूतं तमभ्यधात्॥ २७३
गच्छ रे दूत मद्वाक्याद्ब्रूहि तं नर्तकीसुतम्। अश्वग्रहे शङ्खदत्ताद्रक्षितोऽसि मया तदा॥ २७४
बालस्तातप्रियश्चेति क्षमिष्ये न पुनः पुनः। निश्चितं त्वां प्रहेष्यामि वत्सलस्यान्तिकं पितुः॥ २७५
सज्जो भव दिनैरेव जानीहि प्राप्तमत्र माम्। इत्युक्त्वा प्रेष्य दूतं तं यात्रां भीमभटो व्यधात्॥ २७६
तस्मिन्गजाद्रिमारूढे राजेन्दावुदयोज्ज्वले। क्षुभ्यन्नुदचलद्दृढनादः सैन्यमहाम्बुधिः॥ २७७
समापूर्यन्त चासंख्यैरुपसंख्यामुपस्थितैः। सामन्तै राजपुत्रैश्च प्रस्थितैः सबलैर्दिशः॥ २७८
साकम्पा संपतद्भूरिगजवाजिजवाकुला। भराद्विदलनत्रासादिव रौति स्म मेदिनी॥ २७९
एवं भीमभटो गत्वा स राढाभ्यर्णमाप्तवान्। कुर्वन्सेनारजोराजिमुषितार्कप्रभं नभः॥ २८०
तावच्च सोऽपि समरभटो बुद्ध्वा नृपोऽक्षमी। संनह्य सेनया तस्य निरगाद्योद्धुमग्रतः॥ २८१
मिलतः स्म च तौ सैन्यजलधी पूर्वपश्चिमौ। प्रावर्तत च शूराणामाहवप्रलयो महान्॥ २८२
सशब्दखड्गसंपातजन्मा तत्रानलो नभः। कुप्यत्कृतान्तदन्ताग्रदलनोत्थ इवावृणोत्॥ २८३
वहन्ति स्म च नाराचास्तीक्ष्णाग्रायतपक्ष्मलाः। वीरावलोकिनाकस्त्रीलोचनापातविभ्रमाः॥ २८४
ततो रेणुविताना सा सैन्यनिर्घोषवादिता। नृत्यत्कबन्धा व्यरुचत्सङ्ग्रामाङ्गणरङ्गभूः॥ २८५
करङ्कवाहिनी चात्र प्रमत्ता मुण्डमालिनी। अहरत्कालरात्रीव जन्तुचक्रमसृङ्नदी॥ २८६
क्षणाच्च शङ्खदत्तेन तेनाक्षक्षपणेन च। तैश्च चण्डभुजंगाद्यैर्बाहुयुद्धविशारदैः॥ २८७
समं महाबलैः शूरैर्दुर्मदैर्द्विरदैरिव। स तद्भीमभटोऽभाङ्क्षीत्परसैन्यं धनुर्धरः॥ २८८
भग्ने च सैन्ये समरभटः सोऽथ रथस्थितः। प्रधाव्यारभत क्रुद्धो रणाब्धौ मन्दरायितम्॥ २८९
ततो भीमभटस्तस्य वारणस्थोऽभिपत्य सः। धनुश्छित्त्वावधीद्बाणैश्चतुरोऽपि रथे हयान्॥ २९०
विरथोऽप्यथ धावित्वा तोमरेण गजोत्तमम्। हन्ति स्म कुम्भे समरभटो भीमभटस्य सः॥ २९१
स च तत्तोमरहतो गजस्तस्यापतद्भुवि। ततस्तौ विरथौ द्वावप्यभूतां पादचारिणौ॥ २९२
गृहीतचर्मखड्गौ च पदाती एव तौ तदा। द्वन्द्वयुद्धेन नृपती अयुध्येताममर्षणौ॥ २९३
विद्यावशाददृश्यत्वं कृत्वा शक्तोऽपि तद्वधे। धर्मापेक्षी न तं शत्रुं तथा भीमभटोऽवधीत्॥ २९४
प्रसह्य युध्यमानस्तु तस्य मूर्धानमच्छिनत्। खड्गेन खड्गयुद्धज्ञो नर्तकीतनयस्य सः॥ २९५
हते च तस्मिन्समरभटे सम्यक्ससैनिके। प्रवृत्ते साधुवादे च गगनात्सिद्धचारणैः॥ २९६
गते समाप्तिं सङ्ग्रामे बन्दिमागधसंस्तुतः। राढापुरीं भीमभटः प्राविशत्सखिभिः सह॥ २९७
चिरप्रवासोपयातो हतारिस्तत्र मातरम्। स राम इव कौशल्यां दर्शनोत्कामनन्दयत्॥ २९८
पौराभिनन्दितश्चाथ कृती सिंहासने पितुः। उपाविशत्ततसचिवैः पूज्यमानो गुणप्रियैः॥ २९९
संमान्य प्रकृतीः कृत्स्नास्ततश्च विहितोत्सवः। शुभेऽह्नि शङ्खदत्ताय लाटराज्यं स दत्तवान्॥ ३००
तं प्रेष्य लाटविषयं तद्देशजबलान्वितम्। तेभ्योऽक्षक्षपणादिभ्यो ददौ ग्रामान्वसूनि च॥ ३०१
तैर्युक्तोऽथ स तत्रासीत्प्रशासन्पैतृकं पदम्। लाटेन्द्रसुतया देव्या हंसावल्या तया सह॥ ३०२
क्रमाच्च जित्वा पृथिवीमाहृत्य नृपकन्यकाः। तत्संभोगैकसक्तोऽभूत्सोऽथ भीमभटो नृपः॥ ३०३
मन्त्रिषु न्यस्तभारश्च क्रीडन्नन्तःपुरैः सह। अभ्यन्तरान्न निरगात्पानादिव्यसनेन सः॥ ३०४
अथैकदा मुनिर्द्रष्टुं तमुत्तङ्को यदृच्छया। पूर्वशर्वसमादेशपाककाल इवागमत्॥ ३०५
द्वारं प्राप्ते मुनौ चास्मिन्द्वाःस्थेष्वावेदयत्सु च। राजा रागमदैश्वर्यदर्पान्धो न किलाशृणोत्॥ ३०६
ततः क्रुद्धो मुनिः सोऽस्मै राज्ञे शापमदादिमम्। मदान्ध राज्याद्भ्रष्टस्त्वं वन्यो हस्ती भविष्यसि॥ ३०७
तच्छ्रुत्वा स भयाद्भ्रष्टमदो निर्गत्य भूपतिः। दीनैः प्रासादयद्वाक्यैर्मुनिं तं चरणानतः॥ ३०८
ततः स शान्तकोपः सन्महर्षिस्तमभाषत। भविष्यसि द्विपस्तावद्राजन्न स्यात्तदन्यथा॥ ३०९
किं तु प्रचण्डशक्त्याख्यं नागशापावसादितम्। मृगाङ्कदत्तसचिवं चक्षुर्वैकल्यमागतम्॥ ३१०
समाश्वास्यातिथीभूतं यदा तस्मै प्रवक्ष्यसि। स्ववृत्तान्तं तदैतस्मान्मोक्षं प्राप्स्यसि शापतः॥ ३११

तत्र प्राग्गिरिशादिष्टं गन्धर्वत्वमवाप्स्यसि। स चातिथिस्ते चक्षुष्मानेव संपद्यते तदा॥ ३१२
इत्युक्त्वैव मुनिः प्रायादुत्तङ्कः स यथागतम्। सोऽपि भीमभटो हस्ती संपन्नो राज्यविच्युतः॥ ३१३
तमिमं मां गजीभूतं विद्धि भीमभटं सखे। स च प्रचण्डशक्तिस्त्वं जाने शापान्त एष मे॥ ३१४
एवमुक्त्वा गजाकारं त्यक्त्वा भीमभटोऽत्र सः। तत्क्षणं दिव्यविभवो गन्धर्वः समपद्यत॥ ३१५
प्रचण्डशक्तिश्चोत्पन्नलोचनालोकनोत्सवः। तत्कालमेव संजज्ञे पश्यन्गन्धर्वमत्र तम्॥ ३१६
तावच्च वल्लीजालान्तः स्थितः श्रुत्वा तयोः कथाम्। सहितोऽन्यैः स सचिवैः सुदृढोत्पन्ननिश्चयः॥ ३१७
मृगाङ्कदत्तः कालज्ञः प्रधाव्य रभसाद्रुतम्। प्रचण्डशक्तिं जग्राह कण्ठे तं निजमन्त्रिणम्॥ ३१८
सोऽप्यकाण्डसुधावर्षसिक्ताङ्ग इव वीक्ष्य तम्। प्रचण्डशक्तिः सहसा पादयोरग्रहीत्प्रभुम्॥ ३१९
ततस्तौ चिरविश्लिष्टसंश्लिष्टौ भृशदुःखितौ। स भीमभटगन्धर्वो रुदन्तौ पर्यसान्त्वयत्॥ ३२०
मृगाङ्कदत्तोऽपि स तं गन्धर्वं प्रणतोऽब्रवीत्। यदस्माभिरयं लब्धः सखा यच्चामुना पुनः॥ ३२१
चक्षुष्मत्त्वमवाप्तं तत्त्वन्माहात्म्यान्नमोऽस्तु ते। श्रुत्वैतत्सोऽपि गन्धर्वो राजपुत्रमुवाच तम्॥ ३२२
अचिरात्सचिवाञ्शेषांल्लब्ध्वा कृत्स्नानवाप्स्यसि। तां शशाङ्कवतीं भार्यां साम्राज्यं च महीतले॥ ३२३
तदधैर्यं न कार्यं ते कल्याणिन्साधयाम्यहम्। तदा च संनिधास्ये ते यदा त्वं मां स्मरिष्यसि॥ ३२४

इति स विगतशापः प्राप्तकल्याणतोषः प्रकटितसखिभावो राजपुत्रं तमुक्त्वा।
प्रसभमुदपतद्द्यां चारुकेयूरहारक्वणितमुखरिताशोऽनन्यगन्धर्वधुर्यः॥ ३२५

सोऽपि प्रचण्डशक्तिं प्राप्य वने तत्र मन्त्रिभिः सहितः।
अनयन्मृगाङ्कदत्तो जातधृतिर्नृपसुतस्तदहः॥ ३२६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके सप्तमस्तरङ्गः।

अष्टमस्तरङ्गः।

(वेतालपञ्चविंशतिका।)

जितं विघ्नजिता यस्य पुष्पवृष्टिरिवाम्बरात्। तारावली कराघातच्युता पतति नृत्यतः॥ १
ततोऽतिवाह्य रात्रिं तां प्रभाते काननात्ततः। प्रचण्डशक्तिप्रमुखैः प्रस्थितः सचिवैः सह॥ २
स शशाङ्कवतीहेतोः पुनरुज्जयिनीं प्रति। मृगाङ्कदत्तः प्रययौ चिन्वञ्शेषान्स्वमन्त्रिणः॥ ३
गच्छता ददृशे तेन मार्गे विक्रमकेसरी। मन्त्री पुंसातिविकृतेनोह्यमानो नभस्तले॥ ४
दर्श्यते चान्यमन्त्रिभ्यो यावत्तेन स संभ्रमात्। तावत्स मन्त्री गगनात्तत्समीपेऽवतीर्णवान्॥ ५
अवरुह्य च तस्याशु पुंसः स्कन्धादुपेत्य सः। मृगाङ्कदत्तं जग्राह पादयोः साश्रुलोचनः॥ ६
तेनाश्लिष्टश्च हृष्टेन तथा तन्मन्त्रिभिः क्रमात्। विससर्ज पुमांसं तं स्मृतोऽभ्येष्यसि मामिति॥ ७
ततो मृगाङ्कदत्तेन कौतुकादुपविश्य सः। पृष्टः स्वोदन्तमाचख्यौ वने विक्रमकेसरी॥ ८
तदा भवद्भ्यो विभ्रष्टो नागशापात्परिभ्रमन्। बहून्यहानि चिन्वानो युष्मानहमचिन्तयम्॥ ९
गच्छाम्युज्जयिनीं तत्र गन्तव्यं तैर्ध्रुवं यतः। एवं निश्चित्य च प्रायामहं तां नगरीं प्रति॥ १०
क्रमात्तन्निकटं प्राप्य ग्रामं ब्रह्मस्थलाभिधम्। वापीतटेऽहमेकस्मिन्वृक्षमूल उपाविशम्॥ ११
तत्रैत्य सर्पदंशार्तो वृद्धो मां ब्राह्मणोऽब्रवीत्। इत उत्तिष्ठ मा पुत्र मदीयां गतिमाप्स्यसि॥ १२
इहास्ति हि महासर्पो येन दष्टो रुजार्दितः। उद्यतोऽस्यां महावाप्यामेषोऽहं देहमुज्झितुम्॥ १३
इत्युक्तवन्तं कृपया देहत्यागान्निवार्य तम्। तत्राकार्षमहं विप्रं निर्विषं विषविद्यया॥ १४
ततः स विप्रः साकूतमुदन्तं कृत्स्नमादरात्। पृष्ट्वा मां प्रीतिमानेवं विदितार्थोऽभ्यभाषत॥ १५
प्राणास्त्वया मम प्रत्ता तत्प्रवीर गृहाण मे। वेतालसाधनं मन्त्रमिमं प्राप्तं मया पितुः॥ १६
त्वादृशामुपयुक्तोऽयं सिद्धिकृत्सत्त्वशालिनाम्। मादृशाः पुनरेतेन क्लीबाः किं नाम कुर्वते॥ १७
इत्युक्तस्तेन तमहं प्रत्यवोचं द्विजोत्तमम्। मृगाङ्कदत्तवियुतो वेतालैः किं करोम्यहम्॥ १८
तच्छ्रुत्वा स विहस्यैवं विप्रो मां पुनरब्रवीत्। किं न जानास्यभीष्टं यद्वेतालात्सर्वमाप्यते॥ १९

अपि विद्याधरैश्वर्यं वेतालस्य प्रसादतः । किं त्रिविक्रमसेनेन न प्राप्तं भूभुजा पुरा ॥ २०
तथा च कथयाम्येतां तदीयां ते कथां शृणु । प्रतिष्ठानाभिधानोऽस्ति देशो गोदावरीतटे ॥ २१
तत्र विक्रमसेनस्य पुत्रः शक्रपराक्रमः । प्राक्त्रिविक्रमसेनाख्यः ख्यातकीर्तिरभून्नृपः ॥ २२
तस्य प्रत्यहमास्थानगतस्योपेत्य भूपतेः । सेवार्थं क्षान्तिशीलाख्यो भिक्षुः फलमुपानयत् ॥ २३
सोऽपि राजा तदादाय फलमासन्नवर्तिनः । हस्ते ददौ प्रतिदिनं कोषागाराधिकारिणः ॥ २४
इत्थं गतेषु वर्षेषु दशस्वत्र किलैकदा । दत्त्वा राज्ञे फलं तस्मै भिक्षावास्थानतो गते ॥ २५
स राजा तत्फलं प्रादात्प्रविष्टायात्र दैवतः । क्रीडामर्कटपोताय हस्तभ्रष्टाय रक्षिणाम् ॥ २६
स मर्कटस्तदश्नाति यावत्तावत्फलात्ततः । विभिन्नमध्यान्निरगादनर्घं रत्नमुत्तमम् ॥ २७
तद्दृष्ट्वादाय पप्रच्छ तं भाण्डागारिकं नृपः । भिक्षूपनीतानि मया यानि नित्यं फलानि ते ॥ २८
हस्ते दत्तानि तानि क्व स्थापितानि सदा त्वया । तच्छ्रुत्वा तं स सभयः कोषाध्यक्षो व्यजिज्ञपत् ॥ २९
क्षिप्तानि तान्यनुद्धाट्य मया गञ्जे गवाक्षतः । यद्यादिशसि तद्देव तमुद्धाट्य गवेषये ॥ ३०
इत्यूचिवाननुमतो राज्ञा गत्वा क्षणेन सः । कोषाध्यक्षः समागत्य प्रभुं व्यज्ञापयत्पुनः ॥ ३१
शीर्णानि नात्र पश्यामि कोषे तानि फलान्यहम् । रत्नराशिं तु पश्यामि रश्मिज्वालाकुलं विभो ॥ ३२
तच्छ्रुत्वा तान्मणीन्दत्त्वा तुष्टोऽस्मै कोषरक्षिणे । राजान्येद्युरपृच्छत्तं भिक्षुं तं प्राग्वदागतम् ॥ ३३
भिक्षो धनव्ययेनैवं सेवसे मां किमन्वहम् । नेदानीं ते ग्रहीष्यामि फलं यावन्न वक्ष्यसि ॥ ३४
इत्युक्तवन्तं राजानं भिक्षुस्तं विजनेऽब्रवीत् । वीरसाचिव्यसापेक्षं मन्त्रसाधनमस्ति मे ॥ ३५
तत्र वीरेन्द्र साहाय्यं क्रियमाणं त्वयार्थये । तच्छ्रुत्वा प्रतिपेदे तत्तथेत्यस्य स भूपतिः ॥ ३६
ततः स श्रमणस्तुष्टो नृपं पुनरुवाच तम् । तर्हि कृष्णचतुर्दश्यामागामिन्यां निशागमे ॥ ३७
इतो महाश्मशानान्तर्वटस्याधः स्थितस्य मे । आगन्तव्यं त्वया देव प्रतिपालयतोऽन्तिकम् ॥ ३८
बाढमेवं करिष्यामीत्युक्ते तेन महीभुजा । स क्षान्तिशीलः श्रमणो हृष्टः स्वनिलयं ययौ ॥ ३९
अथ तां स महासत्त्वः प्राप्य कृष्णचतुर्दशीम् । प्रार्थनां प्रतिपन्नां तां भिक्षोस्तस्य नृपः स्मरन् ॥ ४०
प्रदोषे नीलवसनस्तमालकृतशेखरः । निर्ययौ राजधानीतः खड्गपाणिरलक्षितः ॥ ४१
ययौ च घोरत्निबिडध्वान्तत्रातमलीमसम् । चितानलोग्रनयनज्वालादारुणदर्शनम् ॥ ४२
असंख्यनरकङ्कालकपालास्थिविशङ्कटम् । दृश्यत्संनिहितोत्तालभूतवेतालवेष्टितम् ॥ ४३
भैरवस्यापरं रूपमिव गम्भीरभीषणम् । स्फूर्जन्महाशिवारावं श्मशानं तदविह्वलः ॥ ४४
विचित्य चात्र तं प्राप्य भिक्षुं वटतरोरधः । कुर्वाणं मण्डलन्यासमुपसृत्य जगाद सः ॥ ४५
एषोऽहमागतो भिक्षो ब्रूहि किं करवाणि ते । तच्छ्रुत्वा स नृपं दृष्ट्वा हृष्टो भिक्षुरुवाच तम् ॥ ४६
राजन्कृतः प्रसादश्चेत्तदितो दक्षिणामुखम् । गत्वा विदूरमेकाकी विद्यते शिंशपातरुः ॥ ४७
तस्मिन्नुल्लम्बितमृतः कोऽप्येकः पुरुषः स्थितः । तमिहानय गत्वा त्वं साहाय्यं कुरु वीर मे ॥ ४८
तच्छ्रुत्वैव तथेत्युक्त्वा स राजा सत्यसंगरः । दक्षिणां दिशमालम्ब्य प्रवीरः प्रययौ ततः ॥ ४९
आत्तदीप्तचितालातलक्षितेन पथात्र सः । गत्वा तमसि तं प्राप कथंचिच्छिंशपातरुम् ॥ ५०
तस्य स्कन्धे चिताधूमदग्धस्य क्रव्यगन्धिनः । सोऽपश्यल्लम्बमानं तं भूतस्येव शवं तरोः ॥ ५१
आरुह्य चात्र भूमौ तं च्छिन्नरज्जुमपातयत् । पतितश्चात्र सोऽकस्माच्चक्रन्द व्यथितो यथा ॥ ५२
ततोऽवरुह्य कृपया जीवाशङ्की स तस्य यत् । राजाङ्गं प्रामृशत्तेन सोऽट्टहासं व्यधाच्छवः ॥ ५३
ततः स राजा मत्त्वा तं वेतालाधिष्ठितं तदा । किं हससीहि गच्छाव इति यावदकम्पितः ॥ ५४
वक्ति तावन्न भूमौ सवेतालं शवमैक्षत । ऐक्षतात्रैव वृक्षे तु लम्बमानं स्थितं पुनः ॥ ५५
ततोऽधिरुह्य भूयोऽपि तमवातारयत्ततः । वज्रादपि हि वीराणां चित्तरत्नमखण्डितम् ॥ ५६
आरोप्य च सवेतालं स्कन्धे मौनेन तं शवम् । स त्रिविक्रमसेनोऽथ राजा गन्तुं प्रचक्रमे ॥ ५७
यान्तं च तं शवान्तःस्थो वेतालोंऽसस्थितोऽब्रवीत् । राजन्नध्वविनोदाय कथामाख्यामि ते शृणु ॥ ५८

( प्रथमो वेतालः । )

अस्ति वाराणसी नाम पुरारिवसतिः पुरी । स्थलीव कैलासगिरेर्या पुण्यजनसेविता ॥ ५९
भूरिवारिभृता शश्वदुपकण्ठनिवेशिनी । हारयष्टिरिवाभाति यस्याः स्वर्गतरङ्गिणी ॥ ६०
प्रतापानलनिर्दग्धविपक्षकुलकाननः । तस्यां प्रतापमुकुटो नाम राजाभवत्पुरा ॥ ६१
तस्याभूद्वज्रमुकुटस्तनयो रूपशौर्ययोः । कुर्वाणो दर्पदलनं स्मरस्यारिजनस्य च ॥ ६२
राजपुत्रस्य तस्यात्र मन्त्रिपुत्रो महामतिः । आसीद्बुद्धिशरीराख्यः शरीराभ्यधिकः सखा ॥ ६३
तेन सख्या सह क्रीडन्स कदाचिन्नृपात्मजः । जगाम दूरमध्वानं मृगयातिप्रसङ्गतः ॥ ६४
शौर्यश्रीचामराणीव सिंहानां मस्तकानि सः । छिन्दञ्शरैः सटालानि विवेशैकं महावनम् ॥ ६५
तत्रास्थाने स्मरस्येव पठत्कोकिलबन्दिनि । दत्तोपकारे तरुभिर्मञ्जरीचलचामरैः ॥ ६६
सोऽन्वितो मन्त्रिपुत्रेण तेनापश्यत्सरोवरम् । विचित्रकमलोत्पत्तिधामाम्बुधिमिवापरम् ॥ ६७
तस्मिंस्तदैव सरसि स्नानार्थं काचिदागता । तेन दिव्याकृतिः कन्या ददृशे सपरिच्छदा ॥ ६८
पूरयन्तीव लावण्यनिर्झरेण सरोवरम् । दृष्टिपातैः सृजन्तीव तत्रोत्पलवनं नवम् ॥ ६९
प्रत्याविशन्तीव मुखेनाम्बुजानि जितेन्दुना । सा जहार मनस्तस्य राजपुत्रस्य तत्क्षणम् ॥ ७०
सोऽप्यहार्षीत्तथा तस्या युवा दृष्ट्वा विलोचने । यथा नैक्षत सा कन्या लज्जां स्वामप्यलंकृतिम् ॥ ७१
यूनि पश्यति तस्मिन्सा केयं स्यादिति सानुगे । संज्ञां स्वदेशाद्याख्यातुं विलासच्छद्मनाकरोत् ॥ ७२
करोति स्मोत्पलं कर्णे गृहीत्वा पुष्पशेखरात् । चिरं च दन्तरचनां चकारादाय च व्यधात् ॥ ७३
पद्मं शिरसि साकूतं हृदये चादधे करम् । राजपुत्रश्च तस्यास्तां संज्ञां न ज्ञातवांस्तदा ॥ ७४
मन्त्रिपुत्रस्तु बुबुधे स सखा तस्य बुद्धिमान् । क्षणाच्च सा ययौ कन्या नीयमानानुगैस्ततः ॥ ७५
प्राप्य च स्वगृहं तस्थौ पर्यङ्केऽङ्गं निधाय सा । चित्तं तु निजसंज्ञार्थमास्थात्तस्मिन्नृपात्मजे ॥ ७६
सोऽपि राजसुतो भ्रष्टविद्यो विद्याधरो यथा । गत्वा स्वनगरीं कृच्छ्रां प्रापावस्थां तया विना ॥ ७७
सख्या च मन्त्रिपुत्रेण तेन पृष्टस्तदा रहः । शंसता तामदुष्प्रापां त्यक्तधैर्यो जगाद सः ॥ ७८
यस्या न नाम न ग्रामो नान्वयो वावबुध्यते । सा कथं प्राप्यते तन्मामाश्वासयसि किं मृषा ॥ ७९
इत्युक्तो राजपुत्रेण मन्त्रिपुत्रस्तमभ्यधात् । किं न दृष्टं त्वया तद्यत्संज्ञया सूचितं तया ॥ ८०
न्यस्तं यदुत्पलं कर्णे तेनैतत्ते तयोदितम् । कर्णोत्पलस्य राष्ट्रेऽहं निवसामि महीभृतः ॥ ८१
कृता यद्दन्तरचना तेनैतत्कथितं तया । तत्र जानीहि मां दन्तघाटकस्य सुतामिति ॥ ८२
पद्मावतीति नामोक्तं तयोत्तंसितपद्मया । त्वयि प्राणा इति प्रोक्तं हृदयार्पितहस्तया ॥ ८३
कलिङ्गदेशे ह्यस्त्यत्र ख्यातः कर्णोत्पलो नृपः । तस्य प्रसादवित्तोऽस्ति महान्यो दन्तघाटकः ॥ ८४
सङ्ग्रामवर्धनाख्यस्य तस्याप्यस्ति जगत्त्रये । रत्नं पद्मावती नाम कन्या प्राणाधिकप्रिया ॥ ८५
एतच्च लोकतो देव यथावद्विदितं मम । अतो ज्ञाता मया संज्ञा तस्या देशादिशंसिनी ॥ ८६
इत्युक्तो मन्त्रिपुत्रेण तेन राजसुतोऽथ सः । तुतोष तस्मै सुधिये लब्धोपायो जहर्ष च ॥ ८७
संमन्त्र्य च समं तेन स तद्युक्तः स्वमन्दिरात् । प्रियार्थी मृगयाव्याजात्पुनस्तामगमद्दिशम् ॥ ८८
अर्धमार्गे च वाताश्ववेगवञ्चितसैनिकः । तं मन्त्रिपुत्रैकयुतः कलिङ्गविषयं ययौ ॥ ८९
तत्र तौ प्राप्य नगरं कर्णोत्पलमहीभृतः । अन्विष्य दृष्ट्वा भवनं दन्तघाटस्य तस्य च ॥ ९०
तददूरे च वासार्थमेकस्या वृद्धयोषितः । गृहं प्राविशतां मन्त्रिपुत्रराजसुतावुभौ ॥ ९१
दत्ताम्बुयवसौ वाहौ गुप्तेऽवस्थाप्य चात्र सः । राजपुत्रे स्थिते वृद्धां मन्त्रिपुत्रो जगाद ताम् ॥ ९२
कच्चिद्वेत्स्यम्ब सङ्ग्रामवर्धनं दन्तघाटकम् । तच्छ्रुत्वा सा जरद्योषित्सश्रद्धा तमभाषत ॥ ९३
वेद्म्येव धात्री तस्यास्मि स्थापिता तेन चाधुना । पद्मावत्याः स्वदुहितुः पार्श्वे ज्येष्ठतरेत्यहम् ॥ ९४
किं त्वहं न सदा तत्र गच्छाम्युपहृताम्बरा । कुपुत्रः कितवो वस्त्रं दृष्ट्वा हि हरते मम ॥ ९५
एवमुक्तवतीं प्रीतः स्वोत्तरीयादिदानतः । संतोष्य सोऽत्र वृद्धां तां मन्त्रिपुत्रोऽब्रवीत्पुनः ॥ ९६

माता त्वं तद्वदामस्ते गुप्तं यत्तत्कुरुष्व नः। दन्तघाटसुतामेतां गत्वा पद्मावतीं वद ॥ ९७
सोऽत्रागतो राजपुत्रो दृष्टो यः सरसि त्वया। तेन चेह तवाख्यातुं प्रेषिता प्रणयादहम् ॥ ९८
तच्छ्रुत्वा सा तथेत्युक्त्वा वृद्धा दानवशीकृता। गत्वा पद्मावतीपार्श्वमाजगाम क्षणान्तरे ॥ ९९
पृष्टा जगाद तौ राजसुतमन्त्रिसुतौ च सा। युष्मदागमनं गत्वा गुप्तं तस्या मयोदितम् ॥ १००
तया श्रुत्वा च निर्भर्त्स्य पाणिभ्यामहमाहता। द्वाभ्यां कर्पूरलिप्ताभ्यामुभयोर्गण्डयोर्मुखे ॥ १०१
ततः परिभवोद्विग्ना रुदत्यहमिहागता। एतास्तदङ्गुलीमुद्राः पुत्रौ मे पश्यतं मुखे ॥ १०२
एवं तयोक्ते नैराश्यविषण्णं तं नृपात्मजम्। जगाद स महाप्राज्ञो मन्त्रिपुत्रो जनान्तिकम् ॥ १०३
मा गा विषादं रक्षन्त्या मन्त्रं निर्भर्त्स्य यत्तया। कर्पूरशुभ्रा वक्त्रेऽस्याः स्वाङ्गुल्यो दश पातिताः ॥ १०४
तदेतदुक्तं पक्षेऽस्मिञ्शुक्ले चन्द्रवतीरिमाः। रात्रीर्दश प्रतीक्षध्वं संगमानुचिता इति ॥ १०५
इत्याश्वास्य स तं राजसुतं मन्त्रिसुतस्ततः। विक्रीय गुप्तं हस्तस्थं काञ्चनं किंचिदापणे ॥ १०६
वृद्धया साधयामास महार्हं भोजनं तया। ततस्तौ बुभुजाते द्वौ तत्तया सह वृद्धया ॥ १०७
एवं नीत्वा दशाहानि जिज्ञासार्थं पुनः स ताम्। पद्मावत्यन्तिकं वृद्धां मन्त्रिपुत्रो विसृष्टवान् ॥ १०८
सापि मृष्टान्नपानादिलुब्धा तदनुरोधतः। गत्वा वासगृहं तस्या भूयोऽभ्येत्य जगाद तौ ॥ १०९
इतो गत्वाद्य तूष्णीमप्यहं तत्र स्थिता तया। युष्मत्कथापराधं तमुद्गिरन्त्या स्वयं पुनः ॥ ११०
सालक्तकाभिस्तिसृभिः कराङ्गुलिभिराहता। उरस्यस्मिन्नथैषाहमिहायाता तदन्तिकात् ॥ १११
तच्छ्रुत्वा राजपुत्रं तं स्वैरं मन्त्रिसुतोऽब्रवीत्। मा कार्षीरन्यथा शङ्कामस्या हि हृदये तया ॥ ११२
सालक्तकाङ्गुलीमुद्रात्रयं विन्यस्य युक्तितः। रजस्वला निशास्तिस्रः स्थिताहमिति सूचितम् ॥ ११३
एवमुक्त्वा नृपसुतं मन्त्रिपुत्रत्र्यहे गते। पद्मावत्यै पुनस्तस्यै वृद्धां तां प्रजिघाय सः ॥ ११४
सा गता मन्दिरं तस्यास्तया संमान्य भोजिता। प्रीत्या पानादिलीलाभिर्दिनं चात्र विनोदिता ॥ ११५
सायं च यावत्सा वृद्धा गृहमागन्तुमिच्छति। उदभूद्भयकृत्तावत्तत्र कोलाहलो बहिः ॥ ११६
हा हा भ्रष्टोऽयमालानाज्जनान्मथ्नन्प्रधावति। मत्तहस्तीति लोकस्य तत्राक्रन्दोऽथ शुश्रुवे ॥ ११७
ततः पद्मावती सा तां वृद्धामेवमभाषत। स्पष्टेन हस्तिरुद्धेन गन्तुं युक्तं न ते पथा ॥ ११८
तत्पीठिकां समारोप्य बद्धालम्बनरज्जुकाम्। बृहद्गवाक्षेणानेन त्वामत्र प्रक्षिपामहे ॥ ११९
गृहोद्याने ततो वृक्षमारुह्यामुं विलङ्घ्य च। प्राकारमवरुह्यान्यवृक्षेण स्वगृहं व्रज ॥ १२०
इत्युक्त्वा सा गवाक्षेण क्षेपयामास तत्र ताम्। वृद्धां चेटीभिरुद्याने रज्जुपीठिकया ततः ॥ १२१
साथ गत्वा यथोक्तेन पथा सर्वं शशंस तत्। यथावद्राजपुत्राय तस्मै मन्त्रिसुताय च ॥ १२२
ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत। सिद्धं तवेष्टं मार्गो हि युक्त्या ते दर्शितस्तया ॥ १२३
तद्गच्छाद्यैव तत्र त्वं प्रदोषेऽस्मिन्नुपागते। एतेनैव पथा तस्याः प्रियाया मन्दिरं विश ॥ १२४
इत्युक्तस्तेन तद्युक्तो राजपुत्रो ययौ स तत्। उद्यानं वृद्धयोक्तेन तेन प्राकारवर्त्मना ॥ १२५
तत्रापश्यच्च रज्जुं तां लम्बमानां सपीठिकाम्। मार्गोन्मुखाभिश्चेटीभिरुपरिष्टादधिष्ठिताम् ॥ १२६
आरूढस्तां च दृष्ट्वैव दासीभिस्ताभिराशु सः। रज्जूत्क्षिप्तो गवाक्षेण प्रविवेश प्रियान्तिकम् ॥ १२७
तस्मिन्प्रविष्टे स ययौ मन्त्रिपुत्रः स्वमास्पदम्। राजपुत्रस्तु तां पद्मावतीं तत्र ददर्श सः ॥ १२८
पूर्णामृतांशुवदनां प्रसरत्कान्तिचन्द्रिकाम्। कृष्णपक्षभयाद्गुप्तस्थितां राकानिशामिव ॥ १२९
सापि दृष्ट्वा तमुत्थाय चिरौत्सुक्योचितैस्ततः। कण्ठग्रहादिभिस्तैस्तैरुपचारैरमानयत् ॥ १३०
ततस्तया स गान्धर्वविधिनोढूढया सह। गुप्तं राजसुतस्तस्थौ पूर्णेच्छस्तत्र कान्तया ॥ १३१
स्थित्वा चाहानि कतिचिद्रात्रौ तामवदत्प्रियाम्। सखा मम सहायातो मन्त्रिपुत्र इह स्थितः ॥ १३२
स चात्र तिष्ठत्येकाकी त्वज्जयेष्ठतरिकागृहे। गत्वा संभाव्य तं तन्वि पुनरेष्यामि तेऽन्तिकम् ॥ १३३
तच्छ्रुत्वा तमवोचत्सा धूर्ता पद्मावती प्रियम्। हन्तार्यपुत्र पृच्छामि ताः संज्ञा मत्कृतास्त्वया ॥ १३४
ज्ञाता किं किमु वा तेन सख्या मन्त्रिसुतेन ते। एवमुक्तवतीमेतां राजपुत्रो जगाद सः ॥ १३५

न ज्ञातं तन्मया किंचिज्ज्ञात्वा सर्वं च तेन मे । आख्यातं मन्त्रिपुत्रेण दिव्यप्रज्ञानशालिना ॥ १३६
एतच्छ्रुत्वा विचिन्त्यैव भामिनी सा जगाद तम् । तद्युक्तं कृतं यन्मे चिरात्स कथितस्त्वया ॥ १३७
स मे भ्राता सखा यस्ते तस्य च प्रथमं मया । ताम्बूलादिसमाचारः कर्तव्यो हि सदा भवेत् ॥ १३८
इत्युक्तवत्यानुमतस्तया पूर्वपथेन सः । राजपुत्रोऽन्तिकं तस्य सख्युरागात्ततो निशि ॥ १३९
शशंस च कथामध्ये तत्तस्मै यत्तदाश्रयम् । संज्ञाविज्ञानकथनं कृतं तेन प्रियान्तिके ॥ १४०
मन्त्रिपुत्रस्तु सोऽयुक्तमिति न श्रद्दधेऽस्य तत् । तावच्च सा तयोस्तत्र विभाताभूद्विभावरी ॥ १४१
अथैतयोर्विधौ सांध्ये निवृत्ते कुर्वतोः कथाः । आगात्पक्वान्नताम्बूलहस्ता पद्मावतीसखी ॥ १४२
सा मन्त्रिपुत्रं कुशलं पृष्ट्वा दत्तोपचारिका । निषेद्धुं राजपुत्रस्य भोजनं तत्र युक्तितः ॥ १४३
कथान्तरे स्वामिनीं स्वां भोजनादौ तदागमम् । प्रतीक्षमाणामावेद्य क्षणाद्रुमं ततो ययौ ॥ १४४
ततस्तं मन्त्रिपुत्रः स राजपुत्रमभाषत । कौतुकं पश्य देवैकं दर्शयाम्यधुना तव ॥ १४५
इत्युक्त्वा भक्ष्यमेकं स पक्वान्नं दत्तवांस्ततः । सारमेयाय स च तत्खादित्वैव व्यपद्यत ॥ १४६
तद्दृष्ट्वा किमिदं चित्रमिति राजसुतोऽत्र सः । पप्रच्छ मन्त्रिपुत्रं तं स चैतं प्रत्यभाषत ॥ १४७
संज्ञाज्ञानेन धूर्तं मां विदित्वा हन्तुकामया । तया विषान्नं प्रहितं मम त्वदनुरक्तया ॥ १४८
नास्मिन्सति मदेकाग्रो राजपुत्रो भवेदयम् । एतद्वशश्च मुक्त्वा मां नगरीं स्वां व्रजेदिति ॥ १४९
तन्मुञ्च मन्युमेतस्यां बन्धुत्यागान्महात्मनः । कुर्यास्त्वं हरणे युक्तिं वक्ष्याम्यालोच्य यामहम् ॥ १५०
इत्युक्तवन्तं तं मन्त्रिसुतं राजसुतोऽत्र सः । सत्यं बुद्धिशरीरस्त्वमिति यावत्प्रशंसति ॥ १५१
अशङ्कितं बहिस्तावद्दुःखाकुलजनारवः । हा धिग्राज्ञः सुतो बालो विपन्न इति शुश्रुवे ॥ १५२
तदाकर्णनहृष्टोऽथ मन्त्रिपुत्रो नृपात्मजम् । जगाद हन्त गच्छाद्य पद्मावत्या गृहं निशि ॥ १५३
तत्र तां पाययेस्तावद्यावत्पानमदेन सा । निःसंज्ञा नष्टचेष्टा च गतजीवेव जायते ॥ १५४
ततस्तस्याः सनिद्रायाः शूलेनाङ्कं कटीतटे । दत्त्वाग्नितप्तेनादाय तदाभरणसंचयम् ॥ १५५
आगच्छेस्त्वं गवाक्षेण रज्जुलम्बविनिर्गतः । ततः परं यथा भद्रं भवेज्ज्ञास्याम्यहं तथा ॥ १५६
इत्युक्त्वा कारयित्वा च क्रोडवालनिभाश्रिकम् । मन्त्रिपुत्रो ददौ तस्मै त्रिशूलं राजसूनवे ॥ १५७
राजपुत्रः स हस्ते तत्कृत्वा कुटिलकर्कशम् । कालायसदृढं चित्तमिव कान्तावयस्ययोः ॥ १५८
तथेति पूर्ववद्रात्रावगात्पद्मावतीगृहम् । अविचार्यं प्रभूणां हि शुचेर्वाक्यं स्वमन्त्रिणः ॥ १५९
तत्र तां मद्यनिश्चेष्टां शूलेन जघनेऽङ्किताम् । हृतालंकरणां कृत्वा तस्यागात्सख्युरन्तिकम् ॥ १६०
दर्शिताभरणस्तस्मै शशंस च यथाकृतम् । ततः स मन्त्रिपुत्रोऽपि सिद्धं मेने मनीषितम् ॥ १६१
प्रातर्गत्वा श्मशानं च सोऽभूत्तापसवेषभृत् । स्वैरं राजसुतं तं च विदधे शिष्यरूपिणम् ॥ १६२
अब्रवीत्तं च गच्छैकमितोऽलंकरणादिमाम् । मुक्तावलीं समादाय त्वं विक्रेतुमिवापणे ॥ १६३
बहुमूल्यं वदेश्चास्या येनैतां नैव कश्चन । गृह्णीयाद्भ्राम्यमाणां च सर्वः कोऽपि विलोकयेत् ॥ १६४
गुरुणा मम विक्रेतुमियं दत्तेत्यनाकुलः । ब्रूयाश्च यदि गृह्णीयुरत्र त्वां पुररक्षिणः ॥ १६५
इति स प्रेषितस्तेन गत्वा राजसुतस्तदा । अतिष्ठदापणे भ्राम्यन्व्यक्तं मुक्तावलीं दधत् ॥ १६६
तथाभूतश्च जगृहे स दृष्ट्वा पुररक्षिभिः । दन्तघाटसुतामोषज्ञप्रेश्चौरगवेषिभिः ॥ १६७
निन्ये च नगराध्यक्षनिकटं तैः स तत्क्षणात् । स च तं तापसाकारं दृष्ट्वा पप्रच्छ सान्त्वतः ॥ १६८
कुतो मुक्तावलीयं ते भगवन्निह हारिता । दन्तघाटककन्याया हृतं ह्याभरणं निशि ॥ १६९
तच्छ्रुत्वा राजपुत्रस्तं सोऽवादीत्तापसाकृतिः । गुरुणा मम दत्तेयमेत्यासौ पृच्छ्यतामिति ॥ १७०
ततश्चोपेत्य तं नत्वा पप्रच्छ नगराधिपः । मुक्तावलीयं भगवन्कुतस्ते शिष्यहस्तगा ॥ १७१
श्रुत्वैतद्विजनं कृत्वा स धूर्तस्तमभाषत । अहं तपस्वी भ्राम्यामि सदारण्येष्वितस्ततः ॥ १७२
सोऽहं दैवादिह प्राप्तः श्मशानेऽत्र स्थितो निशि । अपश्यं योगिनीचक्रं समागतमितस्ततः ॥ १७३
तन्मध्ये चैकयानीय योगिन्या राजपुत्रकः । उद्घाटितहृदम्भोजो भैरवाय निवेदितः ॥ १७४

पानमत्ता च सा हर्तुं जपतो मेऽक्षमालिकाम्। प्रावर्तत महामाया विकारान्कुर्वती मुखे ॥ १७५
अतिप्रवृत्ता च मया क्रुद्धेन जघनस्थले। अङ्किता सा त्रिशूलेन मन्त्रप्रज्वालिताग्निणा ॥ १७६
हृता मुक्तावली चेयं तस्याः कण्ठान्मया तदा। सैषाद्य तापसानर्हा विक्रेया मम वर्तते ॥ १७७
एतच्छ्रुत्वा पुराध्यक्षो गत्वा भूपं व्यजिज्ञपत्। भूपोऽप्याकर्ण्य तत्तां च बुद्ध्वा तन्मौक्तिकावलीम् ॥ १७८
प्रेक्षणप्रेषितायातवृद्धाप्तवनितामुखात्। श्रुत्वा च दृश्यशूलाङ्कां जघने सत्यमेव ताम् ॥ १७९
ग्रस्तः सुतो मे डाकिन्या तयेत्युत्पन्ननिश्चयः। स्वयं तस्यान्तिकं गत्वा मन्त्रिपुत्रतपस्विनः ॥ १८०
पृष्ट्वा च निग्रहं तस्याः पद्मावत्याः स तद्गिरा। पितृभ्यां शोच्यमानायाः पुरान्निर्वासनं व्यधात् ॥ १८१
निर्वासिताटवीस्था सा विप्रापि न जहौ तनुम्। उपायं मन्त्रिपुत्रेण तं संभाव्य तथा कृतम् ॥ १८२
दिनान्ते तां च शोचन्तीमश्वारूढावुपेयतुः। त्यक्ततापसवेषौ तौ मन्त्रिपुत्रनृपात्मजौ ॥ १८३
आश्वास्यारोप्य तुरगे स्वराष्ट्रं निन्यतुश्च ताम्। तत्र तस्थौ तया साकं राजपुत्रः स निर्वृतः ॥ १८४
दन्तघाटस्त्वरण्ये तां क्रव्यादैर्भक्षितां सुताम्। मत्वा व्यपादि शोकेन भार्या चानुजगाम तम् ॥ १८५
इत्याख्याय स भूयस्तं वेतालो नृपमब्रवीत्। तन्मेऽत्र संशयं छिन्धि दंपत्योरेतयोर्वधात् ॥ १८६
मन्त्रिपुत्रस्य किं पापं राजपुत्रस्य किं नु वा। पद्मावत्याः किमथवा त्वं हि बुद्धिमतां वरः ॥ १८७
जानानश्च न चेद्राजन्मम तत्त्वं वदिष्यसि। तदेष शतधा मूर्धा निश्चितं ते स्फुटिष्यति ॥ १८८
इत्युक्तवन्तं वेतालं विजानञ्शापभीतितः। स त्रिविक्रमसेनस्तमेवं प्रत्यब्रवीन्नृपः ॥ १८९
योगेश्वर किमज्ञेयमेतन्नैषां हि पातकम्। त्रयाणामपि राज्ञस्तु पापं कर्णोत्पलस्य तत् ॥ १९०
वेतालोऽप्याह राज्ञः किं ते हि तत्कारिणस्त्रयः। काकाः किमपराध्यन्ति हंसैर्जग्धेषु शालिषु ॥ १९१
राजा ततोऽब्रवीन्नैनं न दुष्यन्ति त्रयोऽपि ते। मन्त्रिसूनोर्हि तत्तावत्प्रभुकार्यमपातकम् ॥ १९२
पद्मावतीराजपुत्रौ तौ हि कामशराग्निना। संतप्तावविचारार्हावदोषौ स्वार्थमुद्यतौ ॥ १९३
कर्णोत्पलस्तु राजा स नीतिशास्त्रेष्वशिक्षितः। चारैः प्रजास्वनन्विष्यंस्तत्त्वशुद्धिं निजास्वपि ॥ १९४
अजानन्धूर्तचरितानीङ्गिताद्यविचक्षणः। तथा तन्निर्विचारं यच्चक्रे तेन स पापभाक् ॥ १९५

इत्याकर्ण्य विमुक्तमौनमुदिते सम्यङ् नृपेणोत्तरे
स्कन्धात्तस्य स दार्ढ्यमाकलयितुं मायाबलात्तत्क्षणम्।
वेतालो नृकलेवरान्तरगतः क्वाप्यप्रतर्क्यो ययौ
निष्कम्पः स च भूपतिः पुनरमुं प्राप्तुं व्यधान्निश्चयम् ॥ १९६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बकेऽष्टमस्तरङ्गः।

---

## नवमस्तरङ्गः।

(द्वितीयो वेतालः।)

ततोऽत्र पुनरानेतुं तं वेतालमगान्नृपः। स त्रिविक्रमसेनस्तच्छिंशपापादपान्तिकम् ॥ १
प्राप्तोऽत्र वीक्षते यावच्चितालोकवशान्निशि। तावद्ददर्श तं भूमौ कूजन्तं पतितं शवम् ॥ २
अथ तं मृतदेहस्थं वेतालं स महीपतिः। आरोप्य स्कन्धमानेतुं तूष्णीं प्रववृते जवात् ॥ ३
ततः स्कन्धात्स वेतालो भूयस्तं नृपमब्रवीत्। राजन्महत्यनुचिते क्लेशेऽस्मिन्पतितो भवान् ॥ ४
अतस्तव विनोदाय कथयामि कथां शृणु। अस्त्यग्रहारः कालिन्दीकूले ब्रह्मस्थलाभिधः ॥ ५
अग्निस्वामीति तत्रासीद्ब्राह्मणो वेदपारगः। तस्यातिरूपा मन्दारवतीत्यजनि कन्यका ॥ ६
यां निर्माय नवानर्घलावण्यां नियतं विधिः। स्वर्गस्त्रीपूर्वनिर्माणं निजमेवाजुगुप्सत ॥ ७
तस्यां च यौवनस्थायामाययुः कान्यकुब्जतः। समसर्वगुणास्तत्र त्रयो ब्राह्मणपुत्रकाः ॥ ८
तेषां चात्मार्थमेकैकस्तत्पितुस्तामयाचत। अनिच्छन्दानमन्यस्मै तस्याः प्राणव्ययादपि ॥ ९
तत्पिता स तु तन्मध्यान्नैकस्मायपि तां ददौ। भीतोऽन्ययोर्वधात्तेन तस्थौ कन्यैव सा ततः ॥ १०

ते च त्रयोऽपि तद्वक्त्रचन्द्रैकासक्तदृष्टयः । चकोरव्रतमालम्ब्य तत्रैवासन्दिवानिशम् ॥ ११
अथाकस्मात्समुत्पन्नदाहज्वरवशेन सा । जगाम मन्दारवती कुमारी किल पञ्चताम् ॥ १२
ततस्तां विप्रपुत्रास्ते परासुं शोकविक्लवाः । कृतप्रसाधनां नीत्वा श्मशानं चक्रुरग्निसात् ॥ १३
एकश्च तेषां तत्रैव विधाय मठिकां ततः । कृततद्भस्मशय्यः सन्नास्तायाचितभैक्षभुक् ॥ १४
द्वितीयोऽस्थीन्युपादाय तस्या भागीरथीं ययौ । तृतीयस्तापसो भूत्वा भ्रान्तुं देशान्तराण्यगात् ॥ १५
स भ्राम्यंस्तापसः प्राप ग्रामं वक्रोलकाभिधम् । तत्रातिथिः सन्कस्यापि विप्रस्य प्राविशद्गृहम् ॥ १६
तत्पूजितः स यावच्च भोक्तुं तत्र प्रचक्रमे । तावदेकः शिशुस्तत्र प्रवृत्तोऽभूत्प्ररोदितुम् ॥ १७
स सान्त्व्यमानोऽपि यदा न व्यरंसीत्तदा क्रुधा । बाहावादाय गृहिणी ज्वलत्यग्नौ तमक्षिपत् ॥ १८
क्षिप्तमात्रः स मृद्वङ्गो भस्मीभावमवाप्तवान् । तद्दृष्ट्वा जातरोमाञ्चः सोऽब्रवीत्तापसोऽतिथिः ॥ १९
हा धिक्कष्टं प्रविष्टोऽस्मि ब्रह्मराक्षसवेश्मनि । तन्मूर्तं किल्बिषमिदं न भोक्ष्येऽन्नमिहाधुना ॥ २०
एवं वदन्तं तं सोऽत्र गृहस्थः प्राह पश्य मे । शक्तिं पठितसिद्धस्य मन्त्रस्य मृतजीवनीम् ॥ २१
इत्युक्त्वादाय तन्मन्त्रपुस्तिकामनुवाच्य च । तत्र भस्मनि चिक्षेप स धूलिमभिमन्त्रिताम् ॥ २२
तेनोदतिष्ठत्तद्रूप एव जीवन्स बालकः । ततः स निर्वृतस्तत्र भुक्तवान्विप्रतापसः ॥ २३
गृहस्थोऽपि स तां नागदन्तेऽवस्थाप्य पुस्तिकाम् । भुक्त्वा च शयनं भेजे रात्रौ तत्रैव तद्युतः ॥ २४
सुप्ते गृहपतौ तस्मिन्स्वैरमुत्थाय शङ्कितः । स प्रियाजीवितार्थी तां पुस्तिकां तापसोऽग्रहीत् ॥ २५
गृहीत्वैव च निर्गत्य ततो रात्रिदिनं व्रजन् । क्रमाच्छ्मशानं तत्प्राप यत्र दग्धास्य सा प्रिया ॥ २६
ददर्श चात्र तत्कालं तं द्वितीयमुपागतम् । यः स गङ्गाम्भसि क्षेप्तुं तदस्थीनि गतोऽभवत् ॥ २७
ततस्तं च तमाद्यं च तस्या भस्मनि शायिनम् । निबद्धमठिकं तत्र द्वावप्येतौ जगाद सः ॥ २८
मठिकापास्यतामेषा यावदुत्थापयामि ताम् । जीवन्तीं भस्मतः कान्तां मन्त्रशक्त्या कयाप्यहम् ॥ २९
इति तौ प्रेर्य निर्बन्धान्निर्लोठ्य मठिकां च सः । उद्घाट्य तापसो विप्रः पुस्तिकां तामवाचयत् ॥ ३०
अभिमन्त्र्य च मन्त्रेण धूलिं भस्मन्यवाक्षिपत् । उदतिष्ठच्च जीवन्ती सा मन्दारवती ततः ॥ ३१
वह्निं प्रविश्य निष्क्रान्तं वपुः पूर्वाधिकद्युति । तदा बभार सा कन्या काञ्चनेनेव निर्मितम् ॥ ३२
तादृशीं तां पुनर्जातां ते दृष्ट्वैव स्मरातुराः । प्राप्तुकामास्त्रयोऽप्येवमन्योन्यं कलहं व्यधुः ॥ ३३
एकोऽब्रवीदियं भार्या मम मन्त्रबलार्जिता । तीर्थप्रभावजा भार्या ममेयमिति चापरः ॥ ३४
रक्षित्वा भस्म तपसा जीवितेयं मयेह यत् । तदेषा मम भार्येति तृतीयोऽत्र जगाद सः ॥ ३५
विवादनिर्णये तेषां त्वं तावन्मे महीपते । निश्चयं ब्रूहि कस्यैषा कन्या भार्योपपद्यते ॥ ३६
विदलिष्यति मूर्धा ते यदि जानन्न वक्ष्यसि । इति वेतालतः श्रुत्वा तं स राजैवमभ्यधात् ॥ ३७
यः क्लेशमनुभूयापि मन्त्रेणैतामजीवयत् । पिता स तस्यास्तत्कार्यकरणान्न पुनः पतिः ॥ ३८
यश्चास्थीनि निनायास्य गङ्गायां स सुतो मतः । यस्तु तद्भस्मशय्यां तामाश्लिष्यासीत्तपश्चरन् ॥ ३९
श्मशान एव तत्प्रीत्या भर्ता तस्याः स उच्यते । कृतं तदनुरूपं हि तेन गाढानुरागिणा ॥ ४०

एवं नृपात्त्रिविक्रमसेनाच्छ्रुत्वैव मुक्तमौनात्सः ।
तस्य स्कन्धादगमद्वेतालोऽतर्कितः स्वपदम् ॥ ४१

राजाथ भिक्ष्वर्थसमुद्यतस्तं प्राप्तुं स भूयोऽपि मनो बबन्ध ।
प्राणात्ययेऽपि प्रतिपन्नमर्थं तिष्ठन्त्यनिर्वाह्य न धीरसत्त्वाः ॥ ४२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके नवमस्तरङ्गः ।

---

## दशमस्तरङ्गः ।

(तृतीयो वेतालः ।)

अथ भूयोऽपि वेतालमानेतुं नृपसत्तमः । स त्रिविक्रमसेनस्तमुपागाच्छिंशपातरुम् ॥ १
तत्रस्थमेतं संप्राप्य मृतदेहगतं पुनः । स्कन्धे गृहीत्वैवागन्तुं तूष्णीं प्रववृते ततः ॥ २

प्रयान्तं च तमाह स्म स वेतालोऽस्य पृष्ठगः। चित्रं नोद्विजसे राजन्निशि कुर्वन्गमागमम् ॥ ३
तद्खेदाय भूयस्ते वर्णयामि कथां शृणु। अस्ति पाटलिपुत्राख्यं ख्यातं भूमण्डले पुरम् ॥ ४
तत्रासीन्नृपतिः पूर्वं नाम्ना विक्रमकेसरी। गुणानामिव रत्नानामाश्रयं यं व्यधाद्विधिः ॥ ५
तत्र शापावतीर्णोऽभूद्दिव्यविज्ञानवाञ्शुकः। विदग्धचूडामणिरित्याख्यया सर्वशास्त्रवित् ॥ ६
तेनोपदिष्टां सदृशीं राजपुत्रीं नृपात्मजः। मागधीमुपयेमे स भार्यां चन्द्रप्रभाभिधाम् ॥ ७
तस्या अपि तथाभूता सर्वविज्ञानशालिनी। शारिका सोमिका नाम राजपुत्र्याः किलाभवत् ॥ ८
ते चैकपञ्जरस्थे द्वे तत्रास्तां शुकशारिके। सेवमाने स्वविज्ञानैर्दंपती तौ निजप्रभू ॥ ९
एकदा साभिलाषस्तां शारिकां सोऽब्रवीच्छुकः। एकशय्यासनाहारं सुभगे भज मामिति ॥ १०
नाहं पुरुषसंसर्गमिच्छामि पुरुषा यतः। दुष्टाः कृतघ्ना इति सा सारिका प्रत्युवाच तम् ॥ ११
न दुष्टाः पुरुषा दुष्टा नृशंसहृदयाः स्त्रियः। इति भूयः शुकेनोक्ते विवादोऽत्रालगत्तयोः ॥ १२
कृतदासत्वभार्यात्वपणौ तौ शकुनी मिथः। निश्चयायाथ सभ्यं तं राजपुत्रमुपेयतुः ॥ १३
स विवादपदं श्रुत्वा तयोरास्थानगः पितुः। कथं कृतघ्नाः पुरुषा ब्रूहीत्याह स्म शारिकाम् ॥ १४
ततः सा शृणुतेत्युक्त्वा निजपक्षप्रसिद्धये। पुंदोषाख्यायिनीमेतां शारिका[1]यत्कथाम् ॥ १५
अस्ति कामन्दिका नाम या महानगरी भुवि। अर्थदत्ताभिधानोऽस्ति वणिक्तस्यां महाधनः ॥ १६
धनदत्ताभिधानश्च पुत्रस्तस्योदपद्यत। पितर्युपरते सोऽपि बभूवोच्छृङ्खलो युवा ॥ १७
द्यूतादिसङ्गे धूर्ताश्च मिलित्वा तमपातयन्। कामं व्यसनवृक्षस्य मूलं दुर्जनसंगतिः ॥ १८
अचिराद्व्यसनक्षीणधनो दौर्गत्यलज्जया। सोऽथ त्यक्त्वा स्वदेशं तं भ्रान्तुं देशान्तराण्यगात् ॥ १९
गच्छंश्च चन्दनपुरं नाम स्थानमवाप्य सः। विवेश भोजनार्थी सन्नेकस्य वणिजो गृहम् ॥ २०
स वणिक्सुकुमारं तं दृष्ट्वा पृष्ट्वान्वयादिकम्। ज्ञात्वा कुलीनं सत्कृत्य स्वीचक्रे दैवयोगतः ॥ २१
ददौ च सधनां तस्मै नाम्ना रत्नावलीं सुताम्। ततः स धनदत्तोऽत्र तस्थौ श्वशुरवेश्मनि ॥ २२
दिनेष्वेव च यातेषु सुखविस्मृतदुर्गतिः। स्वदेशं गन्तुकामोऽभूत्प्राप्तार्थो व्यसनोन्मुखः ॥ २३
ततोऽनुमान्य कथमप्यवशं श्वशुरं शठः। तं दुहितैकसंतानं गृहीत्वा तामलंकृताम् ॥ २४
भार्यां रत्नावलीं युक्तामेकया वृद्धया स्त्रिया। स आत्मना तृतीयः सन्देशात्प्रस्थितवांस्ततः ॥ २५
क्रमात्प्राप्याटवीं दूरामुक्त्वा तस्करजां भियम्। गृहीत्वाभरणं तस्या भार्यायाः स्वीचकार सः ॥ २६
दृश्यतां द्यूतवेश्यादिकष्टव्यसनसङ्गिनाम्। हृदयं हा कृतघ्नानां पुंसां निस्त्रिंशकर्कशम् ॥ २७
सोऽथ पापोऽर्थहेतोस्तां भार्यां गुणवतीमपि। हन्तुं श्वभ्रे निचिक्षेप तया वृद्धस्त्रिया युताम् ॥ २८
क्षिप्त्वैव च गते तस्मिन्साथ वृद्धा व्यपद्यत। तद्भार्या तु लतागुल्मविघ्नया न व्यपादि सा ॥ २९
उत्तस्थौ च ततः श्वभ्रात्क्रोशन्ती करुणं शनैः। आलम्ब्य तृणगुल्मादि सशेषत्वात्किलायुषः ॥ ३०
आययौ विक्षताङ्गी च पृष्ट्वा मार्गं पदे पदे। यथागतेनैव पथा कृच्छ्रात्तत्सदनं पितुः ॥ ३१
तत्राकस्मात्तथाभूता प्राप्ता पृष्टा ससंभ्रमम्। मात्रा पित्रा च रुदती साध्वी सैवमभाषत ॥ ३२
मुषिताः स्म पथि स्तेनैर्नीतो बद्ध्वा च मत्पतिः। बद्ध्वा मृता निपत्यापि श्वभ्रे नाहं मृता पुनः ॥ ३३
अथागतेन केनापि पथिकेन कृपालुना। उद्धृताहं ततः श्वभ्रात्प्राप्तास्मीह च दैवतः ॥ ३४
एवमुक्तवती मात्रा पित्रा चाश्वासिता ततः। भर्तृचित्तैव सा तस्थौ तत्र रत्नावली सती ॥ ३५
याति काले च तद्भर्ता स स्वदेशगतः पुनः। द्यूतक्षपिततद्वित्तो धनदत्तो व्यचिन्तयत् ॥ ३६
आनयामि पुनर्गत्वा मार्गित्वा श्वशुराद्धनम्। गृहे स्थिता मे त्वत्पुत्रीत्यभिधास्ये च तत्र तम् ॥ ३७
एवं स हृदये ध्यात्वा प्रायाच्छ्वशुरवेश्म तत्। प्राप्तं च तत्र तं दूरात्स्वभार्या पश्यति स्म सा ॥ ३८
धावित्वा चापतत्तस्य सा पापस्यापि पादयोः। दुष्टेऽपि पत्यौ साध्वीनां नान्यथावृत्ति मानसम् ॥ ३९
भीताय च ततस्तस्मै तदशेषं न्यवेदयत्। यन्मृषा चौरपातादि पित्रोः प्राग्वर्णितं तया ॥ ४०

१. अस्मादग्रे किंचित्त्रुटितमिव भाति.

ततस्तया समं तत्र निर्भयः श्वाशुरे गृहे । प्रविष्टः श्वशुराभ्यां स हर्षाद्दृष्ट्वाभ्यनन्द्यत ॥ ४१
दिष्ट्या जीवन्नयं मुक्तश्चौरैरिति महोत्सवः । तेन तच्छ्वशुरेणाथ चक्रे मिलितबन्धुना ॥ ४२
ततः स धनदत्तोऽत्र भुञ्जानः श्वशुरश्रियम् । रत्नावल्या तया साकमासीत्पत्न्या यथासुखम् ॥ ४३
एकदा तत्र रात्रौ च स नृशंसश्चकार यत् । कथोपरोधतः शान्तमवाच्यमपि कथ्यते ॥ ४४
हत्वाङ्कसुप्तां भार्यां तां तदाभरणसंचयम् । अपहृत्य ततः प्रायात्स स्वदेशमलक्षितः ॥ ४५
ईदृशाः पुरुषाः पापा इति शारिकयोदिते । त्वमिदानीं वदेत्याह राजपुत्रस्तदा शुकम् ॥ ४६
ततो जगाद स शुको देव दुःसहसाहसाः । स्त्रियो दुश्चरिताः पापास्तथा च श्रूयतां कथा ॥ ४७
अस्ति हर्षवती नाम नगरी तत्र चाभवत् । अग्रणीर्धर्मदत्ताख्यो बहुकोटीश्वरो वणिक् ॥ ४८
वसुदत्ताभिधाना च रूपेऽनन्यसमा सुता । बभूव तस्य वणिजः प्राणेभ्योऽप्यधिकप्रिया ॥ ४९
सा च तेन समानाय रूपयौवनशालिने । दत्ता वराङ्गनानेत्रचकोरामृतरश्मये ॥ ५०
नाम्ना समुद्रदत्ताय वणिक्पुत्राय साधवे । नगर्यामार्यजुष्टायां ताम्रलिप्त्यां निवासिने ॥ ५१
कदाचित्सा स्वदेशस्थे पत्यौ स्वस्य पितुर्गृहे । स्थिता वणिक्सुता दूरात्कंचित्पुरुषमैक्षत ॥ ५२
तं युवानं सुकान्तं सा चपला मारमोहिता । गुप्तं सखीमुखानीतं भेजे प्रच्छन्नकामुकम् ॥ ५३
ततःप्रभृति तेनैव सह तत्र सदा रहः । रात्रौ रात्रावरंस्तासौ तदेकासक्तमानसा ॥ ५४
एकदा च स कौमारः पतिस्तस्याः स्वदेशतः । आजगामात्र तत्पित्रोः प्रमोद इव मूर्तिमान् ॥ ५५
सोत्सवे च दिने तस्मिन्सा नक्तं कृतमण्डना । मात्रानुप्रेषिता भेजे शय्यास्थापि न तं पतिम् ॥ ५६
प्रार्थिता तेन चालीकसुप्तं चक्रेऽन्यमानसा । पानमत्तोऽध्वखिन्नश्च सोऽपि जह्रेऽथ निद्रया ॥ ५७
ततश्च सुप्ते सर्वस्मिन्भुक्तपीते जने शनैः । संधिं भित्त्वा विवेशात्र चौरो वासगृहान्तरे ॥ ५८
तत्कालं तमपश्यन्ती साप्युत्थाय वणिक्सुता । स्वजारकृतसंकेता निरगान्निभृतं ततः ॥ ५९
तदालोक्य स चौरोऽत्र विघ्नितेच्छो व्यचिन्तयत् । येषामर्थे प्रविष्टोऽहं तैरेवाभरणैर्धृता ॥ ६०
निशीथे निर्गतैषा तद्वीक्षेऽहं सा क गच्छति । इत्याकलय्य निर्गत्य स चौरस्तां वणिक्सुताम् ॥ ६१
वसुदत्तामनु ययौ दत्तदृष्टिरलक्षितः । सापि पुष्पादिहस्तैकससंकेतसखीयुता ॥ ६२
गत्वा बाह्यं प्रविष्टाभूदुद्यानं नातिदूरगम् । तत्रापश्यच्च तं वृक्षे लम्बमानं स्वकामुकम् ॥ ६३
संकेतकागतं रात्रौ लब्ध्वा नगररक्षिभिः । उल्लम्बितं चौरबुद्ध्या पाशकण्ठं मृतं स्थितम् ॥ ६४
ततः सा विह्वलोद्भ्रान्ता हा हतास्मीति वादिनी । पपात भूमौ कृपणं विलपन्ती रुरोद च ॥ ६५
अवतार्याथ वृक्षात्तं गतासुं निजकामुकम् । उपवेश्याङ्गरागेण पुष्पैश्चालंचकार सा ॥ ६६
समालिङ्ग्य च निःसंज्ञं रागशोकान्धमानसा । उन्नमय्य मुखं यावत्तस्यार्ता परिचुम्बति ॥ ६७
तावत्स तस्याः सहसा निर्जीवः परपूरुषः । वेतालानुप्रविष्टः सन्दन्तैश्चिच्छेद नासिकाम् ॥ ६८
तेन सा विह्वला तस्मात्सव्यथापसृताप्यहो । किंस्विज्जीवेदिति हता पुनरेत्य तमैक्षत ॥ ६९
दृष्ट्वा च वीतवेतालं निश्चेष्टं मृतमेव तम् । सा भीता परिभूता च चचाल रुदती शनैः ॥ ७०
तावच्छन्नः स्थितः सोऽथ चौरः सर्वं व्यलोकयत् । अचिन्तयच्च किमिदं पापया कृतमेतया ॥ ७१
अहो बताशयः स्त्रीणां भीषणो घनतामसः । अन्धकूप इवागाधः पाताय गहनः परम् ॥ ७२
तदिदानीमियं किं नु कुर्यादिति विचिन्त्य सः । कौतुकाद्दूरतश्चौरो भूयोऽप्यनुससार ताम् ॥ ७३
सापि गत्वा प्रविश्यैव तत्सुप्तस्थितभर्तृकम् । गृहं तदा स्वकं प्रोच्चैः प्ररुदत्येवमब्रवीत् ॥ ७४
परित्रायध्वमेतेन दुष्टेन मम नासिका । छिन्ना निरपराधाया भर्तृरूपेण शत्रुणा ॥ ७५
श्रुत्वैतं मुहुराक्रन्दं तस्याः सर्वे ससंभ्रमम् । उदतिष्ठन्प्रबुध्यात्र पतिः परिजनः पिता ॥ ७६
एत्याथ तत्पिता दृष्ट्वा तामार्द्रच्छिन्ननासिकाम् । क्रुद्धस्तं बन्धयामास भार्याद्रोहीति तत्पतिम् ॥ ७७
स तु नैवाब्रवीत्किंचिद्बध्यमानोऽपि मूकवत् । विपर्यस्तेषु सर्वेषु शृण्वत्सु श्वशुरादिषु ॥ ७८
ततो ज्ञात्वैव तच्चौरे तस्मिन्नपसृते लघु । कोलाहलेन तस्यां च व्यतीतायां क्रमान्निशि ॥ ७९

स निन्ये वणिजा तेन श्वशुरेण वणिक्सुतः। राजान्तिकं तया सार्धं भार्यया छिन्ननासया॥ ८०
राजा च कृतविज्ञप्तिः स्वदारद्रोह्यसाविति। तस्यादिशद्वणिक्सूनोर्वधं न्यक्कृततद्वचाः॥ ८१
ततो वध्यभुवं तस्मिन्नीयमाने सडिण्डिमम्। उपागम्य स चौरोऽत्र बभाषे राजपूरुषान्॥ ८२
निष्कारणं न वध्योऽयं यथावृत्तं तु वेद्म्यहम्। मां प्रापयत राजाग्रं यावत्सर्वं वदाम्यतः॥ ८३
इत्युचिवान्स नीतस्तैर्नृपस्याग्रं वृताभयः। आ मूलाद्रात्रिवृत्तान्तं चौरः सर्वं न्यवेदयत्॥ ८४
अब्रवीच्च न चेद्देव मद्वाचि प्रत्ययस्तव। तत्सा नासा मुखे तस्य शवस्याद्यापि वीक्ष्यताम्॥ ८५
तच्छ्रुत्वा वीक्षितुं भृत्यान्प्रेष्य सत्यमवेत्य तत्। स राजा तं वणिक्पुत्रं मुक्तवान्वधनिग्रहात्॥ ८६
तां च कर्णावपि च्छित्त्वा दुष्टां देशान्निरस्तवान्। तद्भार्यां श्वशुरं चास्य तं सर्वस्वमदण्डयत्॥ ८७
चौरं च तं पुराध्यक्षं तुष्टश्चक्रे स भूपतिः। एवं स्त्रियो भवन्तीह निसर्गविषमाः शठाः॥ ८८
इत्युक्तवानेव शुको भूत्वा चित्ररथाभिधः। क्षीणेन्द्रशापो गन्धर्वो दिव्यरूपो दिवं ययौ॥ ८९
शारिका सापि तत्कालं भूत्वा स्वःस्त्री तिलोत्तमा। तथैव क्षीणतच्छापा जगाम सहसा दिवम्॥ ९०
विवादश्चाप्यनिर्णीतः सभायां सोऽभवत्तयोः। इत्याख्याय कथां भूयस्तं वेतालोऽब्रवीन्नृपम्॥ ९१
तद्भवान्वक्तु किं पापाः पुरुषाः किमुत स्त्रियः। अजल्पतो जानतस्ते शिरो यास्यति खण्डशः॥ ९२

एतन्निशम्य वचनं वेतालस्यांसवर्तिनस्तस्य।
स जगाद भूपतिस्तं योगेश्वर योषितः पापाः॥ ९३
पुरुषः कोऽपि हि तादृक्क्वापि कदाचिद्भवेद्दुराचारः।
प्रायः सर्वत्र सदा स्त्रियस्तु तादृग्विधा एव॥ ९४
इत्युक्तवतो नृपतेः प्राग्वत्स्कन्धात्स तस्य वेतालः।
नष्टोऽभूत्स च राजा जग्राह पुनस्तदानयनयत्नम्॥ ९५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके दशमस्तरङ्गः।

---

एकादशस्तरङ्गः।

( चतुर्थो वेतालः )

ततो गत्वा पुनस्तस्य निकटं शिंशपातरोः। स त्रिविक्रमसेनोऽत्र श्मशानं निशि भूपतिः॥ १
लब्ध्वा मुक्ताट्टहासं तं वेतालं नृशरीरगम्। निष्कम्पः स्कन्धमारोप्य तूष्णीमुदचलत्ततः॥ २
चलन्तं च तमंसस्थो वेतालः सोऽब्रवीत्पुनः। राजन्कुभिक्षोरेतस्य कृते कोऽयं तव श्रमः॥ ३
आयासे निष्फलेऽमुष्मिन्विवेको बत नास्ति ते। तदिमां शृणु मत्तस्त्वं कथां पथि विनोदिनीम्॥ ४
अस्ति शोभावती नाम सत्याख्या नगरी भुवि। तस्यां च शूद्रकाख्योऽभूद्भूपतिः प्राज्यविक्रमः॥ ५
यस्य जज्वाल जयिनः प्रतापज्वलनोऽनिशम्। बन्दीकृतारिललनाधूतचामरमारुतैः॥ ६
अलुप्तधर्मचरणस्फीता मन्थे वसुंधरा। राज्ञि यस्मिन्विसस्मार रामादीनपि भूपतीन्॥ ७
तं कदाचिन्महीपालं प्रियशूरमुपाययौ। सेवार्थं मालवादेको नाम्ना वीरवरो द्विजः॥ ८
यस्य धर्मवती नाम भार्या सत्त्ववरः सुतः। कन्या वीरवती चेति त्रयं गृहपरिच्छदः॥ ९
सेवापरिच्छदश्चान्यस्त्रयं कट्यां कृपाणिका। करे करतलैकत्र चारु चर्म परत्र च॥ १०
तावन्मात्रपरीवारो दीनारशतपञ्चकम्। प्रत्यहं प्रार्थयामास राज्ञस्तस्मात्स वृत्तये॥ ११
राजापि स तमाकारसूचितोदारपौरुषम्। वीक्ष्य तस्मै ददौ वृत्तिं शूद्रकस्तां यथेप्सिताम्॥ १२
अल्पे परिकरेऽप्येभिरियद्भिः स्वर्णरूपकैः। किमेष व्यसनं पुष्णात्यथ कंचन सद्व्ययम्॥ १३
इत्यन्वेष्टुं समाचारं कौतुकात्स महीपतिः। प्रच्छन्नान्स्थापयामास चारानस्यात्र पृष्ठतः॥ १४
स च वीरवरः प्रातः कृत्वा भूपस्य दर्शनम्। स्थित्वा च तस्य मध्याह्नं सिंहद्वारे धृतायुधः॥ १५
गत्वा स्ववृत्तिलब्धानां दीनाराणां शतं गृहे। भोजनार्थं स्वभार्याया हस्ते प्रादात्किलान्वहम्॥ १६

सवाङ्गरागताम्बूलं क्रीणाति स्म शतेन च। शतं स्नात्वा च पूजार्थं व्यधाद्विष्णोः शिवस्य च॥ १७
विप्रेभ्यः कृपणेभ्यश्च ददौ दानं शतद्वयम्। एवं विभेजे पञ्चापि तानि नित्यं शतान्यसौ॥ १८
ततः कृत्वाग्निकार्यादि भुक्त्वा गत्वैकको निशि। सिंहद्वारे पुनस्तस्थौ पाणौ करतलं दधत्॥ १९
एतां सततचर्यां च तस्य वीरवरस्य सः। राजा चारमुखाच्छ्रुत्वा तुतोष हृदि शूद्रकः॥ २०
निवारयामास च तांश्चारांस्तस्यानुमार्गगान्। मेने विशेषपूजार्हं पुरुषातिशयं च तम्॥ २१
अथ यातेषु दिवसेष्ववहेलावलङ्घिते। ग्रीष्मे वीरवरेणात्र सुप्रचण्डार्कतेजसि॥ २२
तदीर्ष्यात इवोद्भूतविद्युत्करतलं दधत्। धाराप्रहारी निनदन्नाजगाम घनागमः॥ २३
तदा च घोरमेघौघे प्रवर्षति दिवानिशम्। सिंहद्वारे तथैवासीत्सोऽत्र वीरवरोऽचलः॥ २४
तं च दृष्ट्वा दिवा राजा प्रासादामात्स शूद्रकः। निशि भूयस्तदारोहज्जिज्ञासुस्तस्य तां स्थितिम्॥ २५
जगाद च ततः को नु सिंहद्वारे स्थितोऽत्र भोः। तच्छ्रुत्वाहं स्थितोऽत्रेति सोऽपि वीरवरोऽब्रवीत्॥ २६
अहो सुदृढसत्त्वोऽयं भक्तो वीरवरो मयि। तदेष प्रापणीयो मेऽवश्यमेव महत्पदम्॥ २७
इति संचिन्त्य नृपतिः प्रासादादवतीर्य सः। शूद्रकः शयनं भेजे प्रविश्यान्तःपुरं ततः॥ २८
अन्येद्युश्च भृशं मेघे धारासारेण वर्षति। प्रदोषे गुप्तभवने काले तमसि जृम्भिते॥ २९
पुनः स राजा जिज्ञासुः प्रासादमधिरुह्य तम्। सिंहद्वारे स्थितः कोऽत्रेत्येकाकी प्राह तं स्फुटम्॥ ३०
अहं स्थित इति प्रोक्ते पुनर्वीरवरेण च। यावद्विस्मयते सोऽत्र राजा तद्धैर्यदर्शनात्॥ ३१
तावद्विदूरे शुश्राव सहसा रुदतीं स्त्रियम्। विषादविकलामेकां प्रलापकरुणस्वनम्॥ ३२
न मे राष्ट्रे पराभूतो न दरिद्रो न दुःखितः। कश्चिदस्ति तदेषा का रोदित्येकाकिनी निशि॥ ३३
इति चाचिन्तयच्छ्रुत्वा स जातकरुणो नृपः। आदिदेश च तं वीरवरमेकमधःस्थितम्॥ ३४
भो वीरवर शृण्वेषा दूरे स्त्री कापि रोदिति। कासौ रोदिति किं चेति त्वया गत्वा निरूप्यताम्॥ ३५
तच्छ्रुत्वा स तथेत्युक्त्वा गन्तुं वीरवरस्ततः। प्रावर्तत निबद्धासिधेनुः करतलाकरः॥ ३६
न च मेघान्धकारं तज्ज्वलद्विद्युद्विलोचनम्। स्थूलधाराशिलावर्षि रक्षोरूपमजीगणत्॥ ३७
प्रस्थितं वीक्ष्य तादृश्यां तस्यां रात्रौ तमेककम्। करुणाकौतुकाविष्टो राजा प्रासादपृष्ठतः॥ ३८
अवतीर्य गृहीतासिरेकाकी तस्य पृष्ठतः। सोऽपि प्रतस्थे तत्रैव शूद्रकोऽनुपलक्षितः॥ ३९
स च वीरवरो गत्वा रुदितानुसृतिक्रियः। बहिर्नगर्याः प्रापैकं सरस्तत्र ददर्श च॥ ४०
हा शूर हा कृपालो हा त्यागिन्शून्या त्वया कथम्। वत्स्यामीत्यादि रुदतीं तां स्त्रियं वारिमध्यगाम्॥ ४१
का त्वं रोदिषि किं चैवमित्यन्वक्प्राप्तभूपतिः। पप्रच्छ तां च साश्चर्यस्ततः साप्येवमभ्यधात्॥ ४२
भो वीरवर जानीहि वत्स मां पृथिवीमिमाम्। तस्या ममाधुना राजा शूद्रको धार्मिकः पतिः॥ ४३
तृतीये च दिने तस्य राज्ञो मृत्युर्भविष्यति। तादृशं च पतिं प्राप्स्याम्यहमन्यं नृपं कुतः॥ ४४
अतस्तमनुशोचामि दुःखितात्मानमेव च। एतच्छ्रुत्वा स तां त्रस्त इव वीरवरोऽब्रवीत्॥ ४५
हे देवि कश्चिदप्यस्ति कोऽप्युपायः स तादृशः। येनास्य न भवेन्मृत्युर्जगद्रक्षामणेः प्रभोः॥ ४६
इति तद्वचनं श्रुत्वा सा जगाद वसुंधरा। एकोऽस्त्युपायस्तं चैकः कर्तुं शक्तो भवानिति॥ ४७
ततो वीरवरोऽवादीत्तर्हि देवि वद द्रुतम्। यावत्तत्साधयाम्याशु कोऽर्थः प्राणैर्ममान्यथा॥ ४८
तच्छ्रुत्वोवाच वसुधा वीरः कोऽन्यस्त्वया समः। स्वामिभक्तस्तदेतस्य शर्मोपायमिमं शृणु॥ ४९
राज्ञा कृतप्रतिष्ठास्ति यैषा राजकुलान्तिके। उत्तमा चण्डिका देवी सांनिध्योत्कर्षशालिनी॥ ५०
तस्यै सत्त्ववरं पुत्रमुपहारीकरोषि चेत्। तन्नैष राजा म्रियते जीवत्यन्यत्समाशतम्॥ ५१
अद्यैव चैतद्भवता कृतं चेदस्ति तच्छिवम्। अन्यथास्य तृतीयेऽह्नि प्राप्ते नास्त्येव जीवितम्॥ ५२
इत्युक्तः स तया पृथ्व्या वीरो वीरवरस्तदा। यामि देवि करोम्येतदधुनैवेत्यभाषत॥ ५३
ततो भद्रं तवेत्युक्त्वा वसुधा सा तिरोदधे। तच्च सर्वं स शुश्राव गुप्तमन्वक्स्थितो नृपः॥ ५४
ततश्च गूढे जिज्ञासौ तस्मिन्राज्ञ्यनुगच्छति। शूद्रके त्वरितं गेहं निशि वीरवरो ययौ॥ ५५

तत्र पुत्रोपहारोऽस्य राजार्थे धरया यथा। उक्तस्तथाब्रवीत्पत्न्यै धर्मवत्यै विबोध्य सः॥ ५६
तच्छ्रुत्वा सा तमाह स्म नाथ कार्यं शिवं प्रभोः। तत्प्रबोध्य सुतस्यास्य शिशोर्वक्तुं भवानिति॥ ५७
ततः प्रबोध्य सुप्तं तं बालं सत्त्ववरं सुतम्। आख्याय तं च वृत्तान्तमेवं वीरवरोऽब्रवीत्॥ ५८
तत्पुत्र चण्डिकादेव्या उपहारीकृते त्वयि। राजा जीवत्यसौ नो चेत्तृतीयेऽह्नि विपद्यते॥ ५९
एतच्छ्रुत्वैव बालोऽपि यथार्थं नाम दर्शयन्। अक्षीबचित्तः पितरं तं स सत्त्ववरोऽब्रवीत्॥ ६०
कृतार्थोऽहं मम प्राणै राजा चेत्तात जीवति। भुक्तस्य हि तदन्नस्य दत्ता स्यान्निष्कृतिर्मया॥ ६१
तत्किं विलम्ब्यते नीत्वा भगवत्याः पुरोऽधुना। उपहारीकुरुध्वं मामस्तु शान्तिर्मया प्रभोः॥ ६२
इति सत्त्ववरेणोक्ते तेन वीरवरोऽत्र सः। साधु सत्यं प्रसूतोऽसि मत्तः पुत्रेत्यभाषत॥ ६३
एतत्सोऽन्वागतो राजा सर्वं श्रुत्वा बहिः स्थितः। अहो एषां समं सत्त्वं सर्वेषामित्यचिन्तयत्॥ ६४
ततो वीरवरः स्कन्धे कृत्वा सत्त्ववरं सुतम्। भार्या धर्मवती चास्य कन्यां वीरवतीमपि॥ ६५
उभौ तौ ययतुस्तस्यां रात्रौ तच्चण्डिकागृहम्। राजापि शूद्रकश्छन्नः पृष्ठतः स तयोर्ययौ॥ ६६
तत्र देव्याः पुरः स्कन्धात्सोऽथ पित्रावतारितः। देवीं सत्त्ववरो नत्वा धैर्यराशिर्व्यजिज्ञपत्॥ ६७
मम मूर्धोपहारेण राजा जीवतु शूद्रकः। अन्यद्वर्षशतं देवि कुर्याद्राज्यमकण्टकम्॥ ६८
एवमुक्तवतस्तस्य साधु साध्वित्युदीर्य सः। सूनोः सत्त्ववरस्याथ कृष्ट्वा करतलां शिशोः॥ ६९
छित्त्वा शिरश्चण्डिकायै देव्यै वीरवरो ददौ। मत्पुत्रेणोपहारेण राजा जीवत्विति ब्रुवन्॥ ७०
साधु कः स्वामिभक्तोऽन्यः समो वीरवर त्वया। येनैवमेकसत्पुत्रप्राणव्ययविधायिना॥ ७१
दत्तो जीवश्च राज्यं च शूद्रकस्यास्य भूपतेः। इत्यन्तरिक्षादुदगात्तत्क्षणं तत्र भारती॥ ७२
तच्च सर्वं नृपे तस्मिंश्छन्ने शृण्वति पश्यति। कन्या वीरवती सा तु बाला वीरवरात्मजा॥ ७३
उपेत्याश्लिष्य मूर्धानं तस्य भ्रातुर्हतस्य तम्। विलपन्त्युरुशोकान्धा हृत्स्फोटेन व्यपद्यत॥ ७४
ततो वीरवरं भार्या धर्मवत्येवमब्रवीत्। राज्ञस्तावत्कृतं श्रेयस्तदिदानीं वदामि ते॥ ७५
निर्ज्ञाना यत्र बालापि भ्रातृशोकादियं मृता। नष्टेऽपत्यद्वयेऽप्यस्मिंस्तत्र किं जीवितेन मे॥ ७६
प्रागेव राज्ञः श्रेयोऽर्थं मूढया स्वशिरो मया। देव्यै नोपहृतं तस्माद्देह्यनुज्ञां ममाधुना॥ ७७
प्रविशाम्यनलं तावदात्तापत्यकलेवरा। इत्याग्रहाद्वदन्तीं तां सोऽथ वीरवरोऽब्रवीत्॥ ७८
एवं कुरुष्व भद्रं ते का हि संप्रति ते रतिः। अपत्यदुःखैकमये जीवितव्ये मनस्विनि॥ ७९
किं न दत्तो मयैवात्मेत्येषा मा भूच्च ते व्यथा। दद्यां किं नाहमात्मानमन्यसाध्यं भवेद्यदि॥ ८०
तत्प्रतीक्षस्व यावत्ते चितामत्र करोम्यहम्। अमीभिर्दारुभिर्देवीक्षेत्रनिर्माणसंभृतैः॥ ८१
इत्युक्त्वा दारुभिस्तैः स कृत्वा वीरवरश्चिताम्। दीपाग्नेर्ज्वालयामास न्यस्तापत्यशवद्वयाम्॥ ८२
ततो धर्मवती पत्नी पतित्वा सास्य पादयोः। प्रणम्य देवीं चण्डीं तां व्यजिज्ञपदपांसुला॥ ८३
जन्मान्तरेऽप्ययं भूयादार्यपुत्रः पतिर्मम। एतत्प्रभोस्तु राज्ञोऽस्तु मद्देहेनामुना शिवम्॥ ८४
इत्युदीर्यैव सा साध्वी तस्मिन्नम्भोवहेलया। ज्वालाकलापजटिले निपपात चितानले॥ ८५
ततश्च चिन्तयामास वीरो वीरवरोऽत्र सः। निष्पन्नं राजकार्यं मे वाग्दिव्या श्रुद्रता यथा॥ ८६
भुक्तस्य चान्नपिण्डस्य जातोऽहमनृणः प्रभोः। तदिदानीं ममैकस्य केयं जीवितगृध्नुता॥ ८७
भरणीयं प्रियं कृत्स्नं व्ययीकृत्य कुटुम्बकम्। जीवयन्नेकमात्मानं मादृशः को हि शोभते॥ ८८
तत्किमात्मोपहारेणाप्येतां प्रीणामि नाम्बिकाम्। इत्यालोच्य स देवीं तां स्तुत्या प्रागुपतस्थिवान्॥ ८९

जय महिषासुरमारिणि दारिणि रुरुदानवस्य शूलकरे।
जय विबुधोत्सवकारिणि धारिणि भुवनत्रयस्य मातृवरे॥ ९०
जय जगदर्चितचरणे शरणे निःश्रेयसस्य भक्तानाम्।
जय धृतभास्करकिरणे हरणे दुरितान्धकारधृन्दानाम्॥ ९१
जय कालि जय कपालिनि जय कङ्कालिनि शिवे नमस्तेऽस्तु।
शूद्रकनृपतेरधुना प्रसीद मन्मस्तकोपहारेण॥ ९२

इत्युत्थाय देव्यां स तस्यां वीरवरः पुनः । सद्यः करतलाघातेनोत्तमाङ्गं स्वमच्छिनत् ॥ ९३
तदालोक्याखिलं तत्र च्छन्नस्थः शूद्रको नृपः । साकुलश्च सदुःखश्च साश्चर्यश्च व्यचिन्तयत् ॥ ९४
अहो किमप्यनेनैतदन्यत्रादृष्टमश्रुतम् । साधुना सकुटुम्बेन दुष्करं मत्कृते कृतम् ॥ ९५
विचित्रेऽप्यत्र संसारे धीरः स्यादीदृशः कुतः । अख्यापयन्प्रभोरर्थे परोक्षं यो ददात्यसून् ॥ ९६
एतस्य चोपकारस्य न कुर्यां सदृशं यदि । तन्मे का प्रभुता किं च जीवितव्यं पशोरिव ॥ ९७
इति संचिन्त्य नृपतिः खड्गमाकृष्य कोपतः । उपेत्य शूद्रको देवीं तां प्रवीरो व्यजिज्ञपत् ॥ ९८
सततानुप्रपन्नस्य भगवत्यधुनामुना । मम मूर्धोपहारेण सुप्रीता कुर्वनुग्रहम् ॥ ९९
अयं वीरवरो विप्रो नामानुगुणचेष्टितः । मदर्थमुज्झितप्राणः सकुटुम्बोऽपि जीवतु ॥ १००
इत्युदीर्यासिना राजा शिरश्छेत्तुं स शूद्रकः । यावत्प्रवर्तते तावदुदभूद्भारती दिवः ॥ १०१
मा साहसं कृथाः स्तुष्टा सत्त्वेनानेन ते ह्यहम् । प्रत्युज्जीवतु सापत्यदारो वीरवरो द्विजः ॥ १०२
इत्युक्त्वा व्यरमद्वाक्सा स चोत्तस्थौ सपुत्रकः । साकं दुहित्रा पत्न्या च जीवन्वीरवरोऽक्षतः ॥ १०३
तद्विलोक्याद्भुतं राजा छन्नो भूत्वा पुनश्च सः । पश्यन्नतृप्तस्तामासीद्दृष्ट्या हर्षाश्रुपूर्णया ॥ १०४
सोऽपि वीरवरो दृष्ट्वा सुप्तोत्थित इवाशु तम् । पुत्रदारं तथात्मानमभूद्विभ्रान्तमानसः ॥ १०५
पप्रच्छ च पृथङ्नामग्राहं दारसुतान्स तान् । भस्मीभूताः कथं यूयं जीवन्तः पुनरुत्थिताः ॥ १०६
मयापि स्वशिरश्छिन्नं जीवाम्येव च किं न्विदम् । किं विभ्रमोऽयमाहोस्वित्सुस्पष्टो देव्यनुग्रहः ॥ १०७
एवं वदन्स तैरूचे दारापत्यैरलक्षितः । देव्यनुग्रह एवायं जीवामो यदमी इति ॥ १०८
ततः स तत्तथा मत्वा नत्वा वीरवरोऽम्बिकाम् । आदाय पुत्रदारांस्तान्सिद्धकार्यो गृहं ययौ ॥ १०९
तत्र प्रवेश्य पुत्रं तं भार्यां दुहितरं च ताम् । सिंहद्वारमगाद्राज्ञो रात्रौ तस्यां स पूर्ववत् ॥ ११०
राजा स शूद्रकोऽप्येतद्दृष्ट्वा सर्वमलक्षितः । गत्वारुरोह स्वावासप्रासादं तं पुनस्तदा ॥ १११
व्याहरच्च स्थितः कोऽत्र सिंहद्वारीति पृष्टतः । ततो वीरवरोऽवादीत्सैष तिष्ठाम्यहं प्रभो ॥ ११२
देवादेशाद्गतश्चाहमभूवं तां स्त्रियं प्रति । राक्षसीव च सा क्वापि दृष्टनष्टैव मे गता ॥ ११३
एतच्छ्रुत्वा वचस्तस्य राजा वीरवरस्य सः । सुतरां विस्मयाविष्टो दृष्टोदन्तो व्यचिन्तयत् ॥ ११४
अहो समुद्रगम्भीरधीरचित्ता मनस्विनः । कृत्वाप्यनन्यसामान्यमुल्लेखं नोद्गिरन्ति ये ॥[1] ११५
इत्याद्याकलयंस्तूष्णीं प्रासादादवरुह्य सः । प्रविश्यान्तःपुरं राजा रात्रिशेषं निनाय तम् ॥ ११६
प्रातश्चास्थानसमये दर्शनोपगतस्थिते । तस्मिन्वीरवरे प्रीतस्तथा कृत्स्नं स भूपतिः ॥ ११७
तदीयं रात्रिवृत्तान्तं मन्त्रिभ्यस्समवर्णयत् । यथा बभूवुराश्चर्यमोहिता इव तेऽखिलाः ॥ ११८
ददौ तस्मै सपुत्राय प्रीत्या वीरवराय च । लाटदेशे ततो राज्यं स कर्णाटयुते नृपः ॥ ११९
ततोऽत्र तुल्यविभवावन्योन्यस्योपकारिणौ । आसातां तौ सुखं वीरवरशूद्रकभूपती ॥ १२०
इत्याख्याय कथामेतां वेतालोऽत्यद्भुतां तदा । तं त्रिविक्रमसेनं स राजानमवदत्पुनः ॥ १२१
तद्ब्रूहि राजन्नेतेषु वीरः सर्वेषु कोऽधिकः । पूर्व एव स शापस्ते यदि जानन्न वक्ष्यसि ॥ १२२
एतच्छ्रुत्वा स भूपालो वेतालं प्रत्युवाच तम् । एतेषु शूद्रको राजा प्रवीरः सोऽखिलेष्विति ॥ १२३
ततोऽब्रवीत्स वेतालो राजन्वीरवरो न किम् । सोऽधिको यस्य तुल्योऽस्यां पृथ्व्यामेव न जायते ॥ १२४
तत्पत्नी नाधिका किं वा स्त्रीभूता यान्वमन्यत । तथोपहारपश्चुतां सूनोः प्रत्यक्षदर्शिनी ॥ १२५
स वा सत्त्ववरो नात्र तत्पुत्रोऽभ्यधिकः कथम् । बालस्यापि सतो यस्य सत्त्वोत्कर्षः स तादृशः ॥ १२६
तत्कस्माच्छूद्रकं भूपमेभ्यस्त्वं भाषसेऽधिकम् । इत्युक्तवन्तं वेतालं स जगाद पुनर्नृपः ॥ १२७
मैवं वीरवरस्तावत्स तादृक्कुलपुत्रकः । तस्य प्राणैः सुतैर्दारैः स्वामिसंरक्षणं व्रतम् ॥ १२८
तत्पत्नी सापि कुलजा साध्वी पत्येकदेवता । भर्तृवर्त्मानुसारेण तस्या धर्मोऽस्तु कोऽपरः ॥ १२९

---

१ अस्मादग्रे 'सत्त्वभ्रंशो ह्ययशसे केवलं न त्वपैति तम्' इति पुस्तकान्तरेऽधिकमस्ति.

ताभ्यां जातस्तु तद्रूप एव सत्त्ववरोऽपि सः। यादृशास्तन्तवः कामं तादृशो जायते पटः॥ १३०
येषां प्राणैस्तु भृत्यानां नृपैरात्माभिरक्ष्यते। तेषामर्थे त्यजन्देहं शूद्रकोऽत्र विशिष्यते॥ १३१

इत्याकर्ण्य वचः स तस्य नृपतेरंसादसंलक्षितो
वेतालः सहसा ययौ निजपदं भूयोऽपि तन्मायया।
राजाप्युच्चलितो बभूव पुनरप्यानेतुमेतं पथा
पूर्वेणैव सुनिश्चितः पितृवने तस्मिन्स तस्यां निशि॥ १३२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बक एकादशस्तरङ्गः।

---

द्वादशस्तरङ्गः।

(पञ्चमो वेतालः।)

ततस्तस्य पुनर्गत्वा शिंशपाशाखिनोऽन्तिकम्। तथैवोल्लम्बमानं तं दृष्ट्वा नरशरीरगम्॥ १
वेतालमवतार्यैव कृत्वास्मै बहु वैकृतम्। स त्रिविक्रमसेनो द्रागगन्तुं प्रववृते ततः॥ २
आगच्छन्तं च तं तूष्णीं वेतालः पूर्ववत्पथि। रात्रौ महाश्मशानेऽत्र स्कन्धस्थो व्याजहार सः॥ ३
राजन्नभिनिविष्टोऽसि कष्टेऽत्यन्तप्रियोऽसि च। तत्ते चेतोविनोदाय वर्णयामि कथां शृणु॥ ४
उज्जयिन्यामभूद्विप्रः पुण्यसेनस्य भूपतेः। अनुजीवी प्रियोऽमात्यो हरिस्वामीति सद्गुणः॥ ५
तस्यात्मनोऽनुरूपायां भार्यायां गृहमेधिनः। गुणवान्सदृशः पुत्रो देवस्वामीत्यजायत॥ ६
तद्वच्चानन्यसामान्यरूपलावण्यविश्रुता। कन्या सोमप्रभा नाम तस्यान्वर्थोदपद्यत॥ ७
सा प्रदेया सती कन्या रूपोत्कर्षाभिमानिनी। मातुर्मुखेन पितरं भ्रातरं च जगाद तम्॥ ८
शूरस्य ज्ञानिनो वाहं देया विज्ञानिनोऽपि वा। अन्यस्मै नास्मि दातव्या कार्यं मज्जीवितेन चेत्॥ ९
तच्छ्रुत्वा तादृशं तस्याश्चिन्वन्नेकतमं वरम्। तत्पिता स हरिस्वामी यावच्चिन्तां वहत्यलम्॥ १०
तावद्व्यसर्जि राज्ञा स पुण्यसेनेन दूतया। संध्यर्थं विग्रहायातदाक्षिणात्यनृपान्तिकम्॥ ११
कृतकार्यश्च तत्रासावेकेनाभ्येत्य तां सुताम्। याचितोऽभूद्द्विजाग्र्येण श्रुततद्रूपसंपदा॥ १२
विज्ञानिनो ज्ञानिनो वा शूराद्वा नापरं पतिम्। मत्पुत्रीच्छति तत्तेषां मध्यात्कथय को भवान्॥ १३
इत्युक्तस्तेन भार्यार्थी स हरिस्वामिना द्विजः। अहं जानामि विज्ञानमिति तं प्रत्यभाषत॥ १४
तर्हि तद्दर्शयस्वेति पुनरुक्तश्च तेन सः। विज्ञानी कल्पयामास स्वशक्त्या सुचरं रथम्॥ १५
मायायन्त्ररथे तत्र तं हरिस्वामिनं क्षणात्। आरोप्य नीत्वा स्वर्गादींल्लोकांस्तस्मायदर्शयत्॥ १६
आनिनाय च तुष्टं तं तत्रैव कटकं पुनः। दाक्षिणात्यस्य नृपतेर्यत्रायातः स कार्यतः॥ १७
ततः सोऽस्मै हरिस्वामी प्रतिशुश्राव तां सुताम्। विज्ञानिने विवाहं च निश्चिकायाह्नि सप्तमे॥ १८
तत्कालमुज्जयिन्यामप्यन्येनैत्य द्विजन्मना। देवस्वामी स तत्पुत्रः स्वसारं तामयाच्यत॥ १९
ज्ञानिविज्ञानिशूरेभ्यो नान्यमिच्छति सा पतिम्। इति तेनापि सोऽप्युक्तः शूरमात्मानमभ्यधात्॥ २०
ततो दर्शितशस्त्रास्त्रश्रिये तस्मै द्विजोऽनुजाम्। देवस्वामी स शूराय दातुं तां प्रत्यपद्यत॥ २१
सप्तमेऽह्नि च तत्रैव विवाहं गणकोक्तितः। तस्यापि सोऽभ्यधान्मातुः परोक्षं कृतनिश्चयः॥ २२
तन्मातापि हरिस्वामिभार्या तत्कालमेव सा। केनाप्येत्य तृतीयेन सुतां तां याचिता पृथक्॥ २३
ज्ञानी शूरोऽथ विज्ञानी भर्तास्मद्दुहितुर्मतः। इत्युक्तश्च तया मातरहं ज्ञातीति सोऽभ्यधात्॥ २४
पृष्ट्वा भूतं भविष्यच्च तस्मै तां ज्ञानिने सुताम्। प्रतिजज्ञे प्रदातुं साप्यह्नि तत्रैव सप्तमे॥ २५
अन्येद्युश्चागतः सोऽत्र हरिस्वामी यथाकृतम्। पत्न्यै पुत्राय चाचख्यौ तं कन्यादाननिश्चयम्॥ २६
तौ च तं स्वकृतं तस्मै भिन्नं भिन्नमवोचताम्। सोऽपि तेनाकुलो जज्ञे वरत्रयनिमन्त्रणात्॥ २७
अथोद्वाहदिने तस्मिन्हरिस्वामिगृहे वराः। आययुर्ज्ञानिविज्ञानिशूरास्तत्र त्रयोऽपि ते॥ २८
तत्कालं चात्र सा चित्रं कन्या सोमप्रभा वधूः। अशङ्कितं गता क्वापि न विचित्याप्यलभ्यत॥ २९

ततोऽब्रवीद्धरिस्वामी ज्ञानिनं तं ससंभ्रमः । ज्ञानिन्निदानीं ब्रूह्याशु दुहिता मे क्व सा गता ॥ ३०
तच्छ्रुत्वा सोऽवदज्ज्ञानी राक्षसेनापहृत्य सा । नीता विन्ध्याटवीं धूमशिखेन वसतिं निजाम् ॥ ३१
इत्युक्तो ज्ञानिना भीतो हरिस्वामी जगाद सः । हा धिक्कथं सा प्राप्येत विवाहश्चापि हा कथम् ॥ ३२
श्रुत्वैतत्प्राह विज्ञानी धीरो भव नयामि वः । तत्राधुनैव यत्रैष ज्ञानी वदति तां स्थिताम् ॥ ३३
इत्युक्त्वा तत्क्षणं कृत्वा रथं सर्वास्त्रसंयुतम् । तत्रारोप्य हरिस्वामिज्ञानिशूरान्खगामिनि ॥ ३४
तान्स संप्रापयामास क्षणाद्विन्ध्याटवीभुवि । ज्ञानिना तां समाख्यातां वसतिं तत्र रक्षसः ॥ ३५
तत्र तं राक्षसं क्रुद्धं ज्ञातवृत्तान्तनिर्गतम् । शूरोऽथ योधयामास हरिस्वामिपुरस्कृतः ॥ ३६
तदाश्चर्यमभूद्युद्धं तयोर्मानुषरक्षसोः । चित्रास्त्रयोधिनोः स्त्र्यर्थं रामरावणयोरिव ॥ ३७
क्षणेन च स सङ्ग्रामदुर्मदस्यापि रक्षसः । अर्धचन्द्रेण बाणेन शूरस्तस्याच्छिनच्छिरः ॥ ३८
हते रक्षसि तां सोमप्रभामाप्तां तदास्पदात् । आदाय विज्ञानिरथेनाजग्मुस्ते ततोऽखिलाः ॥ ३९
हरिस्वामिगृहं प्राप्य तेषां लग्नेऽप्युपस्थिते । ज्ञानिविज्ञानिशूराणां विवाद उदभून्महान् ॥ ४०
ज्ञानी जगाद नाहं चेज्जानीयां तदियं कथम् । प्राप्येत कन्या गूढस्था देया मह्यमसावितः ॥ ४१
विज्ञानी त्ववदन्नाहं कुर्यां चेद्व्योमगं रथम् । गमागमौ कथं स्यातां देवानामिव वः क्षणात् ॥ ४२
कथं स्याद्वारथं युद्धं रथिना रक्षसा सह । तस्मान्मह्यमियं देया लग्नो ह्येष मयार्जितः ॥ ४३
शूरोऽप्युवाच हन्यां चेन्नाहं तं राक्षसं रणे । तद्युवाभ्यां कृते यत्नेऽप्येतां कन्यां क आनयेत् ॥ ४४
तन्मह्यमेषा दातव्येत्येवं तेषु विवादिषु । हरिस्वामी क्षणं तूष्णीमासीदुद्भ्रान्तमानसः ॥ ४५
तत्कस्मै सात्र देयेति राजन्वदतु मे भवान् । न वदिष्यसि जानंश्चेत्तत्ते मूर्धा स्फुटिष्यति ॥ ४६
इति वेतालतस्तस्माच्छ्रुत्वा मौनं विहाय च । स त्रिविक्रमसेनस्तमुवाचैवं महीपतिः ॥ ४७
शूराय सा प्रदातव्या येन प्राणपणोद्यमात् । अर्जिता बाहुवीर्येण हत्वा तं युधि राक्षसम् ॥ ४८
ज्ञानिविज्ञानिनौ त्वस्य धात्रा कर्मकरौ कृतौ । सदा गणकतक्षाणौ परोपकरणे न किम् ॥ ४९

इत्युक्तं मनुजपतेर्निशम्य तस्य स्कन्धाग्रात्सपदि स पूर्ववज्जगाम ।
वेतालो निजपदमेव सोऽपि राजानुद्वेगः पुनरपि तं प्रति प्रतस्थे ॥ ५०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वादशस्तरङ्गः ।

---

त्रयोदशस्तरङ्गः ।

( षष्ठो वेतालः । )

ततो गत्वा पुनस्तस्मात्प्राप्य तं शिंशपातरोः । वेतालं प्राग्वदादाय स्कन्धे मौनेन भूपतिः ॥ १
स त्रिविक्रमसेनोऽत्र यावदागच्छति द्रुतम् । तावत्पथि स वेतालो भूयोऽप्येवमुवाच तम् ॥ २
राजन्सुधीः सुसत्त्वश्च भवांस्तेन प्रियोऽसि मे । अतो विनोदिनीं वच्मि कथां प्रश्नं च मे शृणु ॥ ३
आसीद्राजा यशःकेतुरिति ख्यातो महीतले । तस्य शोभावती नाम राजधान्यभवत्पुरी ॥ ४
तस्यामभून्नगर्यां च गौर्यायतनमुत्तमम् । तस्य दक्षिणतश्चासीद्गौरीतीर्थाभिधं सरः ॥ ५
तस्याषाढचतुर्दश्यां शुक्लायां प्रतिवत्सरम् । यात्रायां स्नातुमेति स्म नानादिग्भ्यो महाजनः ॥ ६
एकदा च तिथौ तस्यां स्नातुमत्राययौ युवा । रजको धवलो नाम ग्रामाद्ब्रह्मस्थलाभिधात् ॥ ७
सोऽपश्यद्रजकस्यात्र तीर्थे स्नानागतां सुताम् । कन्यां शुद्धपटाख्यस्य नाम्ना मदनसुन्दरीम् ॥ ८
इन्दोर्लावण्यहारिण्या तया स हृतमानसः । अन्विष्य तन्नामकुले कामार्तोऽथ गृहं ययौ ॥ ९
तत्रानवस्थितस्तिष्ठन्निराहारस्तया विना । पृष्टो मात्रार्तया तस्यै तच्छशंस मनोगतम् ॥ १०
सा गत्वा विमलाख्याय तत्स्वभर्त्रे न्यवेदयत् । सोऽप्यागत्य तथावस्थं दृष्ट्वा तं सुतमभ्यधात् ॥ ११
किं विषीदसि पुत्रैवमदुष्प्राप्येऽपि वाञ्छिते । स हि मद्याचितः शुद्धपटो दास्यति ते सुताम् ॥ १२

---

१ 'तमेवमब्रवीत्तावत्स वेतालोंऽसपृष्ठगः' इति पुस्तकान्तरपाठः.

अन्यूना हि वयं तस्मात्कुलेनार्थेन कर्मणा । तं वेद्म्यहं स मां वेत्ति तेनैतन्मे न दुष्करम् ॥ १३
इत्याश्वास्य स तं पुत्रमाहारादौ प्रवर्त्य च । तद्युक्तो विमलोऽन्येद्युर्ययौ शुद्धपटास्पदम् ॥ १४
ययाचे चात्र पुत्रस्य तस्यार्थे धवलस्य सः । कन्यां तस्मात्स चास्मै तां प्रतिशुश्राव सादरम् ॥ १५
लग्नं निश्चित्य चान्येद्युस्तां स शुद्धपटः सुताम् । धवलाय ददौ तस्मै तुल्यां मदनसुन्दरीम् ॥ १६
कृतोद्वाहश्च स तया साकं दर्शनसक्तया । भार्यया स्वपितुर्गेहं जगाम धवलः कृती ॥ १७
सुखस्थितस्य तस्याथ कदाचिच्छ्वशुरात्मजः । तस्या मदनसुन्दर्या भ्राता तत्रागतोऽभवत् ॥ १८
स कृतप्रश्रयः सर्वैः स्वस्राश्लिष्याभिनन्दितः । संबन्धिपृष्टकुशलो विश्रान्तश्च जगाद तान् ॥ १९
अहं मदनसुन्दर्या जामातुश्च निमन्त्रणे । तातेन प्रेषितो यस्माद्देवीपूजोत्सवोऽस्ति नः ॥ २०
श्रद्धाय चैतत्तद्वाक्यं यथार्हैः पानभोजनैः । ते संबन्ध्यादयः सर्वे तदहस्तमुपाचरन् ॥ २१
प्रातर्मदनसुन्दर्या श्वशुर्येण च तेन सः । सहितो धवलः प्रायाद्गृहं तच्छ्वाशुरं प्रति ॥ २२
प्राप्य शोभावतीं तां च पुरीमात्मतृतीयकः । ददर्श निकटं प्राप्य स गौर्यायतनं महत् ॥ २३
निजगाद च तौ भार्याश्वशुर्यौ श्रद्धया ततः । एतमेतां भगवतीं पश्यामो देवतामिह ॥ २४
तच्छ्रुत्वा स श्वशुर्यस्तं निषेधन्प्रत्यभाषत । इयन्तो रिक्तहस्ताः किं पश्यामो देवतामिति ॥ २५
अहं तावद्व्रजाम्येको युवामत्रैव तिष्ठतम् । इत्युक्त्वा धवलो द्रष्टुं देवीं तां स ततो ययौ ॥ २६
प्रविश्यायतनं तस्याः प्रणम्य च विभाव्य च । तामष्टादशदोर्दण्डखण्डितोद्दण्डदानवाम् ॥ २७
पादपद्मतलाक्षिप्तमहिषासुरमर्दिनीम् । स विधिप्रेरणोत्पन्नबुद्धिरेवमचिन्तयत् ॥ २८
जीवोपहारैर्विविधैरिमां देवीं जनोऽर्चति । अहं तु सिद्धये किं नैतां प्रीणाम्यात्मोपहारतः ॥ २९
इति ध्यात्वैव तद्गर्भगृहादादाय निर्जनात् । खड्गं सांयात्रिकैः कैश्चिद्देव्याः प्राक्प्राभृतीकृतम् ॥ ३०
बद्ध्वा शिरोरुहैर्घण्टाशृङ्खलायां निजं शिरः । चिच्छेदैतेन खड्गेन तच्छिन्नं चापतद्भुवि ॥ ३१
चिरं यावत्स नायाति तावद्गत्वा तमीक्षितुम् । तत्रैव देवीभवने तच्छ्वशुर्यो विवेश सः ॥ ३२
सोऽपि दृष्ट्वा समुत्कृत्तमूर्धानं भगिनीपतिम् । व्यामोहितस्तथैव स्वं शिरस्तेनासिनाच्छिनत् ॥ ३३
सोऽपि यावन्न नायाति तावदुद्भ्रान्तमानसा । तद्देवीभवनं सापि ययौ मदनसुन्दरी ॥ ३४
प्रविश्य दृष्ट्वैव पतिं भ्रातरं च तथागतौ । हा किमेतद्धतास्मीति विलपन्त्यपतद्भुवि ॥ ३५
क्षणाच्चोत्थाय शोचन्ती तावकाण्डहताबुभौ । किं ममाप्यधुनानेन जीवितेनेत्यचिन्तयत् ॥ ३६
व्यजिज्ञपच्च देवीं तां देहत्यागोन्मुखी सती । देवि सौभाग्यचारित्रविधानैकाधिदेवते ॥ ३७
अध्यासितशरीरार्धे भर्तुर्मारिरिपोरपि । अशेषललनालोकशरण्ये दुःखहारिणि ॥ ३८
हृतावेकपदे कस्माद्भर्ता भ्राता च मे त्वया । न युक्तमेतन्मयि ते नित्यभक्ता ह्यहं त्वयि ॥ ३९
तन्मे श्रितायाः शरणं शृण्वेकं कृपणं वचः । एतां तावत्त्यजाम्यत्र दौर्भाग्योपहतां तनुम् ॥ ४०
जनिष्ये देवि भूयस्तु यत्र कुत्रापि जन्मनि । तत्रैतावेव भूयास्तां द्वौ भर्तृभ्रातरौ मम ॥ ४१
इति संस्तुत्य विज्ञप्य देवीं नत्वा च तां पुनः । पाशं विरचयामास लतयाशोकपादपे ॥ ४२
तत्रार्पयति यावच्च पाशे कण्ठं वितत्य सा । तावत्तत्रोच्चचारैवं भारती गगनाङ्गणात् ॥ ४३
मा कृथाः साहसं पुत्रि बालाया अपि तेऽमुना । सत्त्वोत्कर्षेण तुष्टास्मि पाशमेतं परित्यज ॥ ४४
संश्लेषय शिरः स्वं स्वं भर्तृभ्रातृकबन्धयोः । उत्तिष्ठतां ते जीवन्तावेतौ द्वावपि मद्वरात् ॥ ४५
एतच्छ्रुत्वैव संत्यज्य पाशं हर्षादुपेत्य सा । अविभाव्यातिरभसाद्भ्रान्ता मदनसुन्दरी ॥ ४६
बाला भर्तृशिरो भ्रातृदेहेन समयोजयत् । भर्तृदेहेन च भ्रातृशिरो विधिनियोगतः ॥ ४७
ततोऽक्षताङ्गौ जीवन्तावुभावुत्तस्थतुश्च तौ । शिरोविनिमयाज्जातसंकरौ काययोर्मिथः ॥ ४८
अथान्योन्योदितस्वस्वयथावृत्तान्ततोषिणः । प्रणम्य देवीं शर्वाणीं यथेष्टं ते ययुस्त्रयः ॥ ४९
यान्ती च दृष्ट्वा स्वकृतं शिरोविनिमयं तयोः । विग्ना किंकार्यतामूढा साभून्मदनसुन्दरी ॥ ५०
**तद्ब्रूहि राजन्को भर्ता तस्याः संकीर्णयोस्तयोः । पूर्वोक्तः स्यात्स शापस्ते जानानो न ब्रवीषि चेत् ॥** ५१

इत्याकर्ण्य कथाप्रश्नं राजा वेतालतस्ततः । स त्रिविक्रमसेनोऽत्र तमेवं प्रत्यभाषत ॥ ५२

यत्संस्थं तत्पतिशिरः सैष तस्याः पतिस्तयोः । प्रधानं च शिरोऽङ्गेषु प्रत्यभिज्ञा च तद्गता ॥ ५३

इत्युक्तवतो नृपतेस्तस्यांसात्पुनरतर्कितः स ययौ ।
वेतालः स च राजा जगाम भूयस्तमानेतुम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रयोदशस्तरङ्गः ।

---

## चतुर्दशस्तरङ्गः ।

### ( सप्तमो वेतालः । )

ततो गत्वा पुनः प्राप्य वेतालं शिंशपातरोः । स त्रिविक्रमसेनस्तं स्कन्धे जग्राह भूपतिः ॥ १

गृहीत्वा प्रस्थितं तं च वेतालः सोऽब्रवीत्पथि । राजञ्श्रमविनोदार्थं कथामाख्यामि ते शृणु ॥ २

अस्तीह ताम्रलिप्तीति पुरी पूर्वाम्बुधेस्तटे । चण्डसेनाभिधानश्च राजा तस्यामभूत्पुरि ॥ ३

पराङ्मुखः परस्त्रीषु यो न सङ्ग्रामभूमिषु । हर्ता च शत्रुलक्ष्मीणां न परद्रव्यसंपदाम् ॥ ४

तस्यैकदा दाक्षिणात्यो राजपुत्रो जनप्रियः । आययौ सत्त्वशीलाख्यः सिंहद्वारेऽत्र भूपतेः ॥ ५

तत्र चात्मानमावेद्य नैर्धन्यात्तं नृपं प्रति । कर्पटं पाटयामास राजपुत्रैः सहापरैः ॥ ६

ततः कार्पटिको भूत्वा बहून्यब्दानि तत्र सः । तस्थौ कुर्वन्सदा सेवां नैव प्राप फलं नृपात् ॥ ७

यदि राजान्वये जन्म निर्धनत्वं किमीदृशम् । निर्धनत्वेऽपि किं धात्रा कृतेयं मे महेच्छता ॥ ८

अयं हि सेवमानं मामेवं क्लिष्टपरिच्छदम् । चिरं क्षुधावसीदन्तं राजा नाद्यापि वीक्षते ॥ ९

इति यावच्च स ध्यायत्यत्र कार्पटिकस्ततः । तावदाखेटकार्थं स निरगादेकदा नृपः ॥ १०

तस्मिन्कार्पटिके धावत्यग्रे लगुडवाहिनि । जगाम चाश्वपादातयुतः सोऽथ मृगाटवीम् ॥ ११

कृताखेटश्च तत्रारान्महान्तं मत्तसूकरम् । अनुधावन्क्षणात्प्रापदतिदूरं वनान्तरम् ॥ १२

तत्र पर्णतृणच्छन्नमार्गे हारितसूकरः । श्रान्तो महावने सोऽथ राजा दिङ्मोहमाययौ ॥ १३

एकः कार्पटिकश्चाथ स तं वाताश्वपृष्ठगम् । प्राणानपेक्षोऽनुययौ पदातिः क्षुत्तृषार्दितः ॥ १४

तं च दृष्ट्वा तथाभूतमन्वायातं स भूपतिः । सस्नेहमवदत्कच्चिद्वेत्सि मार्गं यथागतम् ॥ १५

तदाकर्ण्याञ्जलिं बद्ध्वा स तं कार्पटिकोऽभ्यधात् । वेद्मि किं च क्षणं तावदिह विश्राम्यतु प्रभुः ॥ १६

नुवधूमेखलामध्यमणिरेष हि संप्रति । देदीप्यते स्फुरद्रश्मिशिखाजालोऽब्जिनीपतिः ॥ १७

एतच्छ्रुत्वा स राजा तं सोपरोधमभाषत । तर्हि क्वापीह पानीयं भवता प्रेक्ष्यतामिति ॥ १८

तथेत्यारुह्य स ततस्तुङ्गं कार्पटिकस्तरुम् । नदीं दृष्ट्वावरुह्याथ नृपं तत्र निनाय तम् ॥ १९

तद्वाहं च विपर्याणीकृतं कृतविवर्तनम् । दत्ताम्बुशष्पकवलं विदधे विगतश्रमम् ॥ २०

कृतस्नानाय राज्ञे च प्रोन्मुच्य वसनाञ्चलात् । प्रक्षाल्योपानयत्तस्मै हृद्यान्यामलकानि सः ॥ २१

एतानि कुत इत्येतं पृच्छन्तं स च भूपतिम् । एवं व्यजिज्ञपज्जानुस्थितः सामलकाञ्जलिः ॥ २२

एतद्वृत्तिरहं नित्यं व्यतीतदशवत्सरः । चराम्याराधयन्देवमनेकान्तमुनिव्रतम् ॥ २३

तच्छ्रुत्वा सत्यनामा त्वं सत्त्वशीलः किमुच्यते । इत्युक्त्वा स कृपाक्रान्तो ह्रीतश्चाचिन्तयन्नृपः ॥ २४

धिङ् नृपान्क्लिष्टमक्लिष्टं ये भृत्येषु न जानते । धिक्च तं परिवारं यो न ज्ञापयति तांस्तथा ॥ २५

इति संचिन्त्य जग्राह स राजामलकद्वयम् । हस्तात्कार्पटिकस्याथ कथंचिदनुबध्नतः ॥ २६

भुक्त्वा च तन्निपीयाम्बु विशश्रामात्र स क्षणम् । जग्धामलकसंपीतजलकार्पटिकान्वितः ॥ २७

ततः सज्जीकृतं तेन वाहं कार्पटिकेन सः । आरुह्याग्रेसरे तस्मिन्नेव मार्गप्रदर्शिनि ॥ २८

पश्चाद्व्यागमनारूढे हयस्याभ्यर्थितेऽप्यलम् । ययौ स राजा स्वपुरीं पथि प्राप्तात्मसैनिकः ॥ २९

---

१ अस्मादग्रे पुस्तकान्तरे 'यस्त्वं कथमिहायात इति प्राहाथ सोऽब्रवीत् । देवास्मि दाक्षिणात्योऽहं राजपुत्रोऽनुगस्तव ॥ एतच्छ्रुत्वा स राजा तं सोपरोधमभाषत । सस्नेहं चापि कच्चित्त्वं वेत्सि······ ॥' इत्यधिकमस्ति.

तत्र प्रख्याप्य तद्भक्तिं वसुभिर्विषयैश्च तम् । अपूरयत्कार्पटिकं न चामन्यत निष्कृतिम् ॥ ३०
ततः कृतार्थः पार्श्वेऽस्य चण्डसिंहस्य भूपतेः । मुक्तकार्पटिकाचारः सत्त्वशीलः स तस्थिवान् ॥ ३१
एकदा तेन राज्ञा च स सिंहलपतेः सुताम् । याचितुं सिंहलद्वीपमात्मार्थं प्रेषितोऽभवत् ॥ ३२
तत्राब्धिवर्त्मना गच्छन्नर्चिताभीष्टदेवतः । आरुरोह प्रवहणं राजादिष्टैः सह द्विजैः ॥ ३३
गते तस्मिन्प्रवहणे मध्यभागमशङ्कितम् । उत्तस्थौ जलधेस्तस्माद्ध्वजो जनितविस्मयः ॥ ३४
अभ्रंलिहाग्रः सुमहाञ्जाम्बूनदविनिर्मितः । विचित्रवर्णविचलद्वैजयन्तीविराजितः ॥ ३५
तत्कालं चात्र सहसा समुन्नम्य घनावली । भृशं वर्षितुमारेभे ववौ तीव्रश्च मारुतः ॥ ३६
तैर्वर्षवातैः स बलादाकृष्याधोरणैरिव । आसज्यत ध्वजस्तम्भे तस्मिन्प्रवहणद्विपः ॥ ३७
तावच्च स ध्वजस्तस्मिन्वारिधौ वीचिविप्लुते । वहनेन समं तेन प्रावर्तत निमज्जितुम् ॥ ३८
ततो द्विजास्ते तत्रस्थाश्चण्डसिंहं स्वभूपतिम् । उद्दिश्योद्घोषयामासुरब्रह्मण्यं भयाकुलाः ॥ ३९
तदाकर्ण्यासहिष्णुश्च स्वामिभक्तेरनुध्वजम् । स सत्त्वशीलो निस्त्रिंशहस्तो बद्धोत्तरीयकः ॥ ४०
आत्मानमक्षिपत्तत्र निरपेक्षो महोदधौ । उदधेः कारणाशङ्की वीरः प्रतिविधित्सया ॥ ४१
मग्ने च तस्मिन्वातोर्मिदूरोत्क्षिप्तमभज्यत । वहनं तच्च तत्स्थाश्च निपेतुर्यादसां मुखे ॥ ४२
स च मग्नोऽम्बुधौ तत्र सत्त्वशीलो निरीक्षते । यावत्तावद्ददर्शात्र पुरीं दिव्यां न वारिधिम् ॥ ४३
तस्मिन्मणिमयस्तम्भैर्भास्वरे हेममन्दिरे । सद्रत्नबद्धसोपानवापीकोद्यानशोभिनि ॥ ४४
नानामणिशिलाभित्तिरत्नचित्रोच्छ्रितध्वजम् । कात्यायनीदेवगृहं मेरुप्रोन्नतमैक्षत ॥ ४५
तत्र प्रणम्य देवीं तां स्तुत्वाभ्यर्च्य तदग्रतः । इन्द्रजालं किमेतत्स्यादित्याश्चर्यादुपाविशत् ॥ ४६
तावच्च देव्यग्रगतप्रभामण्डलकान्तरात् । अकस्मान्निरगात्कन्या दिव्योद्घाट्य कवाटकम् ॥ ४७
इन्दीवराक्षी फुल्लाब्जवदना कुसुमस्मिता । मृणालनालमृद्वङ्गी जङ्गमेव सरोजिनी ॥ ४८
स्त्रीसहस्रपरीवारा देवीगर्भगृहं च सा । विवेश सत्त्वशीलस्य हृदयं च ततः समम् ॥ ४९
निरगात्कृतपूजा च देवीगर्भगृहात्ततः । न पुनः सत्त्वशीलस्य हृदयात्सा कथंचन ॥ ५०
प्राविशत्सा च तत्रैव प्रभामण्डलकान्तरे । सत्त्वशीलोऽप्यसौ तस्याः पश्चात्तत्र प्रविष्टवान् ॥ ५१
प्रविश्य च ददर्शान्तरन्यदेवोत्तमं पुरम् । संकेतोद्यानमिव यत्सर्वासां भोगसंपदाम् ॥ ५२
तत्रान्तर्मणिपर्यङ्कनिषण्णां तां विलोक्य सः । कन्यामुपेत्य तत्पार्श्वे सत्त्वशील उपाविशत् ॥ ५३
आसीच्च तन्मुखासक्तलोचनो लिखितो यथा । अङ्गैः सोत्कम्पपुलकैर्वदन्नालिङ्गनोत्कताम् ॥ ५४
दृष्ट्वा च तं स्मराविष्टं चेटीनामत्र सा मुखम् । अद्राक्षीत्ताश्च तत्कालमिङ्गितज्ञास्तमब्रुवन् ॥ ५५
अतिथिस्त्वमिह प्राप्तस्तदस्मत्स्वामिनीकृतम् । भजस्वातिथ्यमुत्तिष्ठ स्नाहि भुङ्क्ष्व ततः परम् ॥ ५६
तच्छ्रुत्वा सोऽवलम्ब्याशां कथमप्युत्थितस्ततः । ययौ प्रदर्शितां ताभिरेकामुद्यानवापिकाम् ॥ ५७
तस्यां निमग्नश्चोत्तस्थौ ताम्रलिप्त्यां स तत्क्षणात् । चण्डसिंहनृपोद्यानवापीमध्यात्ससंभ्रमः ॥ ५८
तत्र प्राप्तमकस्माच्च वीक्ष्यात्मानमचिन्तयत् । अहो किमेतत्क्वोद्यानमिदं दिव्यं क्व तत्पुरम् ॥ ५९
तत्रामृतासारसमं क्व तत्तस्याश्च दर्शनम् । क्व चानन्तरमेवेदं तद्विश्लेषमहाविषम् ॥ ६०
स्वप्नश्च नायं सुस्पष्टो विनिद्रोऽनुभवो हि मे । ध्रुवं पातालकन्याभिस्ताभिर्मूढोऽस्मि वञ्चितः ॥ ६१
इति ध्यायन्विना तां स कन्यामुन्मादवानिव । उद्याने तत्र बभ्राम कामार्तो विललाप च ॥ ६२
तदवस्थं च तं दृष्ट्वा पिशङ्गैः पुष्परेणुभिः । वातोद्धूतैः परीताङ्गं विप्रयोगानलैरिव ॥ ६३
उद्यानपाला गत्वैव चण्डसिंहमहीभृतम् । व्यजिज्ञपन्स चोद्भ्रान्तः स्वयमेत्य ददर्श तम् ॥ ६४
सान्त्वयित्वा च पप्रच्छ किमिदं ब्रूहि नः सखे । क्व प्रस्थितस्त्वं क्व प्राप्तः क्वास्तः क्व पतितः शरः ॥ ६५
तच्छ्रुत्वा स स्ववृत्तान्तं तस्मै सर्वं शशंस तम् । सत्त्वशीलो नृपतये सोऽप्यथैवमचिन्तयत् ॥ ६६
हन्त वीरोऽपि मत्पुण्यैः कामेनैष विडम्बितः । आनृण्यं गन्तुमेतस्य लब्धो ह्यवसरो मया ॥ ६७
इत्यन्तश्चिन्तयित्वा स वीरो राजा जगाद तम् । तर्हि मुञ्च मुधा शोकमहं त्वां प्रापयामि ताम् ॥ ६८

नीत्वा तेनैव मार्गेण प्रियामसुरकन्यकाम् । इति चाश्वासयामास तं स स्नानादिना नृपः ॥ ६९
अन्येद्युर्मन्त्रिविन्यस्तराज्यस्तेन समं च सः । प्रायात्प्रवहणारूढस्तद्दर्शितपथोऽम्बुधिम् ॥ ७०
प्राप्य तन्मध्यभागं च दृष्ट्वा तं प्राग्वदुत्थितम् । सपताकं ध्वजं सत्त्वशीलस्तं नृपमभ्यधात् ॥ ७१
सोऽयमभ्युत्थितो दिव्यप्रभावोऽत्र महाध्वजः । मयि मग्नेऽत्र मङ्क्तव्यं देवेनैतमनुध्वजम् ॥ ७२
इत्युक्त्वा निकटं प्राप्य ध्वजस्यास्य निमज्जतः । मार्गे स सत्त्वशीलोऽसौ पूर्वमात्मानमक्षिपत् ॥ ७३
ततो राजापि चिक्षेप तत्रात्मानं तथैव सः । अन्तर्मग्नौ च तौ क्षिप्रं तद्दिव्यं प्रापतुः पुरम् ॥ ७४
तत्र दृष्ट्वा स साश्चर्यो राजा देवीं प्रणम्य ताम् । पार्वतीं सत्त्वशीलेन सहितः समुपाविशत् ॥ ७५
तावच्च निरगात्तत्र सा सखीजनसंगता । रूपिणीव प्रभा कन्या प्रभामण्डलकात्ततः ॥ ७६
इयं सा सुमुखीत्युक्ते सत्त्वशीलेन तां नृपः । दृष्ट्वा युक्तमभिष्वङ्गं तस्य तस्याममन्यत ॥ ७७
सापि तं वीक्ष्य राजानं शुभशारीरलक्षणम् । पुरुषातिशयोऽपूर्वः कोऽयं स्यादित्यचिन्तयत् ॥ ७८
विवेश चाम्बिकाधाम पूजायै सा नृपोऽपि सः । जगामोद्यानमादाय सत्त्वशीलमवज्ञया ॥ ७९
क्षणाच्च कृतपूजा सा निरगाद्दैत्यकन्यका । याचित्वा सत्पतिप्राप्तिं देव्या गर्भगृहान्तरात् ॥ ८०
निर्गत्य सा जगादैकां सखीं सखि गवेष्यताम् । योऽसाविह मया दृष्टो महात्मा क्व स तिष्ठति ॥ ८१
आतिथ्यं गृह्यतामेत्य प्रसादः क्रियतां त्वया । इति चैषोऽर्थ्यतां पूज्यः पुमान्कोऽप्युत्तमो ह्यसौ ॥ ८२
एवं सखी तयोक्ता सा विचित्योद्यानवर्तिने । स्वस्वामिनीनिदेशं तं प्रह्वा तस्मै न्यवेदयत् ॥ ८३
तच्छ्रुत्वा स नृपो वीरः सावहेलमुवाच ताम् । एषैवातिथ्यमस्माकमन्यत्किमुपयुज्यते ॥ ८४
एतच्छ्रुत्वा तया गत्वा सख्या सा श्राविता तदा । मेने मान्यमुदारं तं सर्वथा दैत्यकन्यका ॥ ८५
ततश्चाकृष्यमाणेव धैर्यपाशेन तेन सा । नृपेण मानुषायोग्येऽप्यातिथ्ये निःस्पृहात्मना ॥ ८६
फलार्थं पार्वतीसेवापरिपाकसमर्पितम् । मत्वा तत्स्वयमुद्यानं विवेशासुरपुत्रिका ॥ ८७
विचित्रशकुनालापैर्वाताञ्चितलताभुजैः । विकीर्णकुसुमैराराह्वन्यमानेव पादपैः ॥ ८८
उपगम्य च सा तत्र यथावत्प्रश्रयानता । आतिथ्यग्रहणार्थं तं प्रार्थयामास पार्थिवम् ॥ ८९
ततः स सत्त्वशीलं तमुद्दिश्योवाच तां नृपः । अनेन कथितां देवीमिहाहं द्रष्टुमागतः ॥ ९०
गौरीं ध्वजपथप्राप्यपरमाद्भुतकेतनाम् । सा दृष्टा तदनु त्वं च कान्यातिथ्यार्थिताऽत्र नः ॥ ९१
तच्छ्रुत्वा साब्रवीत्कन्या कौतुकात्तर्हि वीक्षितुम् । आगम्यतां द्वितीयं मे पुरं त्रिजगदद्भुतम् ॥ ९२
एवमुक्तवतीं तां च स विहस्य नृपोऽब्रवीत् । तदप्यनेनैवोक्तं मे यत्र सा स्नानवापिका ॥ ९३
ततः सा कन्यकावादीद्देव मा स्मैवमादिश । न विडम्बनशीलाहं का वा पूज्ये विडम्बना ॥ ९४
अहं हि सत्त्वोत्कर्षेण युष्माकं किंकरीकृता । तन्मम प्रार्थनाभङ्गं नैवैवं कर्तुमर्हथ ॥ ९५
एतच्छ्रुत्वा तथेत्युक्त्वा सत्त्वशीलसखः स तत् । प्रभामण्डलकोपान्तं ययौ राजा तया सह ॥ ९६
अपावृतकवाटे च तस्मिन्नन्तस्तथैव सः । प्रवेशितो ददर्शास्यास्तद्दिव्यमपरं पुरम् ॥ ९७
नित्यसंनद्धसर्वर्तु सदापुष्पफलद्रुमम् । मेरुपृष्ठमिवाशेषं निर्मितं रत्नकाञ्चनैः ॥ ९८
रत्नासने महार्हे तं राजानमुपवेश्य सा । यथोचितोपनीतार्घ्या दैत्यराजसुताब्रवीत् ॥ ९९
कन्याहमसुरेन्द्रस्य कालनेमेर्महात्मनः । चक्रायुधेन च स मे स्वर्गतिं प्रापितः पिता ॥ १००
विश्वकर्मकृतं चेदं पैतृकं मे पुरद्वयम् । न जरात्र न मृत्युश्च बाधते सर्वकामदे ॥ १०१
इदानीं च पितात्वं मे सपुराहं वशे तव । इत्यर्पितात्मसर्वस्वां तामुवाच स भूपतिः ॥ १०२
यद्येवं तत्सुते ह्यस्मै मया दत्तास्यनिन्दिते । सत्त्वशीलाय वीराय सुहृदे बान्धवाय च ॥ १०३
एवं देवीप्रसादेन मूर्तेनेव नृपेण सा । उक्ता गुणज्ञा विनता तत्तथेत्यन्वमन्यत ॥ १०४
ततः कृतार्थं तं तस्याः कृतपाणिग्रहं नृपः । दत्तासुरपुरैश्वर्यं सत्त्वशीलमुवाच सः ॥ १०५
भुक्तयोरामलकयोस्तयोरेकं मया तव । संशोधितमसंशुद्धादृणी तेऽहं द्वितीयतः ॥ १०६
इति प्रणतमुक्त्वा तं दैत्यपुत्रीं जगाद ताम् । मार्गो मे दर्श्यतां येन स्वपुरीं प्राप्नुयामिति ॥ १०७

ततोऽपराजितं नाम खड्गं भक्ष्यं फलं च सा । एकं जरामृत्युहरं तस्मै दैत्यसुता ददौ ॥ १०८
ताभ्यां युक्तस्तयोक्तायां वाण्यां मग्नः स्वदेशतः । उत्थाय सर्वसंसिद्धकामोऽभूत्स क्रमान्नृपः ॥ १०९
सत्त्वशीलोऽपि दैत्यस्त्रीपुरराज्यं शशास सः । तद्ब्रूहि कोऽब्धिपतने द्वयोः सत्त्वाधिकोऽनयोः ॥ ११०
इति श्रुत्वा तथा प्रश्नं वेतालाच्छापभीतितः । स त्रिविक्रमसेनस्तं भूपतिः प्रत्यभाषत ॥ १११
एतयोः सत्त्वशीलोऽत्र स मे सत्त्वाधिको मतः । स ह्यविज्ञाततत्त्वार्थो निरास्थः पतितोऽम्बुधौ ॥ ११२
राजा तु तत्त्वं विज्ञाय विवेशाम्भोधिमास्थया । दैत्यकन्यां च नावाञ्छदसाध्या स्पृहयेति सः ॥ ११३

इति तस्याकर्ण्य वचो निरस्तमौनस्य भूपतेः स्कन्धात् ।
स जगाम पूर्ववत्तं वेतालः शिंशपातरुं स्वपदम् ॥ ११४
राजापि तथैव स तं पुनरप्यानेतुमनुजगाम जवात् ।
प्रारब्धे ह्यसमाप्ते कार्ये शिथिलीभवन्ति किं सुधियः ॥ ११५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुर्दशस्तरङ्गः ।

---

पञ्चदशस्तरङ्गः ।
( अष्टमो वेतालः । )

गत्वा तां शिंशपां भूयो वेतालं प्राप्य भूमिपः । तं त्रिविक्रमसेनोऽत्र स्कन्धे कृत्वोच्चचाल सः ॥ १
प्रयान्तं स पुनस्तं च वेतालं स्कन्धतोऽब्रवीत् । श्रमविस्मृतये राजन्मत्तः प्रश्नमिमं शृणु ॥ २
अङ्गदेशेऽग्रहारोऽस्ति महान्वृक्षघटाभिधः । विष्णुस्वामीति तत्रासीद्द्विजो यज्वा महाधनः ॥ ३
तस्य च स्वानुरूपायां पत्न्यां जाताः क्रमात्त्रयः । बभूवुस्तरुणाः पुत्रा दिव्यवैदग्ध्यशालिनः ॥ ४
ते पित्रा प्रेषितास्तेन कूर्महेतोः कदाचन । प्रारब्धयज्ञेन ययुस्ते त्रयो भ्रातरोऽम्बुधिम् ॥ ५
प्राप्य कूर्मं ततो ज्यायान्कनिष्ठौ तावभाषत । गृह्णातु युवयोरेकः कूर्मं क्रतुकृते पितुः ॥ ६
अहमेतं न शक्नोमि ग्रहीतुं विस्रपिच्छलम् । इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठौ ताववोचताम् ॥ ७
तवात्र विचिकित्सा चेन्नावयोरपि सा कथम् । तच्छ्रुत्वा सोऽब्रवीज्ज्येष्ठो गृह्णीतं गच्छतं युवाम् ॥ ८
पितुर्यज्ञक्रियालोपो भवेद्युष्मत्कृतोऽन्यथा । ततो नरकपातः स्याद्युवयोस्तस्य च ध्रुवम् ॥ ९
इत्युक्तावनुजौ तेन तौ विहस्य तमूचतुः । धर्मं वेत्स्यावयोरेव समानमपि नात्मनः ॥ १०
ततो ज्येष्ठोऽब्रवीत्किं मे जानीथो नैव चङ्गताम् । अहं भोजनचङ्गोऽस्मि नार्हः स्प्रष्टुं जुगुप्सितम् ॥ ११
एतत्तस्य वचः श्रुत्वा भ्रातरं मध्यमोऽब्रवीम् । अहं तर्ह्यधिकश्चङ्गो नारीचङ्गो विचक्षणः ॥ १२
मध्यमेनैवमुक्ते तु ज्यायान्पुनरुवाच सः । कूर्मं गृह्णातु तर्ह्येष कनीयानावयोरिति ॥ १३
ततः स भ्रुकुटिं कृत्वा कनीयानप्युवाच तौ । हे मूर्खौ तूलिकाचङ्गश्चङ्गोऽहं हि विशेषतः ॥ १४
एवं ते कलहासक्तास्त्रयोऽपि भ्रातरो मिथः । निर्णयायाभिमानैकग्रस्ताः कूर्मं विहाय तम् ॥ १५
राज्ञः प्रसेनजिन्नाम्नस्तत्प्रदेशभुवोऽन्तिकम् । नगरं सहसा जग्मुर्विटङ्कपुरनामकम् ॥ १६
तत्र प्रतीहारमुखेनावेद्यान्तः प्रविश्य च । नृपं विज्ञापयामासुः स्ववृत्तान्तं तथैव ते ॥ १७
तिष्ठतेहैव यावद्वः परीक्षिष्ये क्रमादहम् । इत्युक्तास्तेन राज्ञा च तस्थुस्तत्र तथेति ते ॥ १८
स्वाहारकाले चानाय्य तेभ्यः सोऽग्रासनं नृपः । राजार्हं दापयामास षड्रसं स्वादुभोजनम् ॥ १९
भुञ्जानेषु च सर्वेषु तदैको बुभुजे न सः । विप्रो भोजनचङ्गोऽत्र जुगुप्साकूणिताननः ॥ २०
कथं न भोजनं भुङ्क्षे ब्रह्मन्स्वादु सुगन्ध्यपि । इति राज्ञा स्वयं पृष्टः शनैर्विप्रो जगाद सः ॥ २१
शवधूमदुरामोदः शालिभक्तेऽत्र विद्यते । तेन नाहमिदं भोक्तुमुत्सहे स्वाद्वपि प्रभो ॥ २२
इत्युक्ते तेन सर्वेऽपि तत्राघ्राय नृपाज्ञया । ऊचुः कलमशाल्यन्नमदोषं तत्सुगन्धि च ॥ २३
स तु भोजनचङ्गस्तन्नाभ्रात्पिहितनासिकः । ततः स राजा संचिन्त्य यावदन्विष्यति क्रमात् ॥ २४
तावन्नियोगिजनतस्तदन्नं बुबुधे तथा । ग्रामश्मशाननिकटक्षेत्रसंभवशालिजम् ॥ २५

ततोऽतिविस्मितस्तुष्टः स राजा तमभाषत । सत्यं भोजनचङ्गस्त्वं तदन्यद्भुज्यतामिति ॥ २६
कृताहारश्च स नृपो विप्रान्वासगृहेषु तान् । विसृज्यानाययामास स्वामेकां गणिकोत्तमाम् ॥ २७
तां च तस्मै द्वितीयस्मै प्राहिणोत्कृतमण्डनाम् । विप्राय नारीचङ्गाय सायं सर्वाङ्गसुन्दरीम् ॥ २८
सा च वासगृहं तस्य राजभृत्यान्विता ययौ । राकानिशेव पूर्णेन्दुमुखी कंदर्पदीपिनी ॥ २९
प्रविष्टायां च तस्यां स प्रभाभासितवेश्मनि । उत्पन्नमूर्च्छः संरुद्धनासाग्रो वामपाणिना ॥ ३०
नारीचङ्गोऽब्रवीद्राजभृत्यान्निष्कास्यतामिति । न चेन्मृतोऽहं निर्याति गन्धोऽस्याश्छागलो यतः ॥ ३१
इत्युक्तास्तेन निन्युस्ते विग्नां तां राजपूरुषाः । राज्ञोऽन्तिकं वारवधूं वृत्तान्तं जगदुश्च तम् ॥ ३२
राजाप्यानाय्य तत्कालं नारीचङ्गमुवाच तम् । येयं श्रीखण्डकर्पूरकालागुरुमदोत्तमैः ॥ ३३
कृतप्रसाधना दिक्षु प्रसरच्चारुसौरभा । तस्या वारविलासिन्या गन्धः स्याच्छागलः कुतः ॥ ३४
इत्युक्तोऽपि स राज्ञा तन्नारीचङ्गस्तदा न यत् । प्रतिपेदे तदा राजा विचारपतितोऽभवत् ॥ ३५
पृच्छंश्च युक्त्या बुबुधे तामजक्षीरवर्धिताम् । तन्मुखादेव बालत्वे मातृधात्रीवियोगतः ॥ ३६
ततोऽतिविस्मितस्तस्य नारीचङ्गस्य चङ्गताम् । प्रशंसन्नृपतिस्तस्मै तृतीयाय द्विजन्मने ॥ ३७
तद्रसात्तूलिकाचङ्गायाशु शय्यामदापयत् । पर्यङ्कोपरि विन्यस्तसप्तसंख्याकतूलिकाम् ॥ ३८
तस्यां च तूलिकाचङ्गो महार्हे वासवेश्मनि । सुष्वाप धौतसुश्लक्ष्णपटप्रच्छदवाससि ॥ ३९
यामार्ध एव च गते स रात्रौ शयनात्ततः । उत्तस्थौ पाण्यवष्टब्धपार्श्वः क्रन्दन्व्यथार्दितः ॥ ४०
ददृशे तस्य पार्श्वे च तत्रत्यै राजपूरुषैः । गाढलग्नस्य बालस्य मुद्रेव कुटिलारुणा ॥ ४१
गत्वा च तैस्तदाख्यातं राज्ञे राजाप्युवाच तान् । तूलिकानां तले किंचिन्मा स्यात्तद्वीक्ष्यतामिति ॥ ४२
गत्वेक्षन्ते च ते यावदेकैकं तूलिकातलम् । तावत्सर्वतलादापुर्बालं पर्यङ्कपृष्ठतः ॥ ४३
नीत्वा चादर्शयन्राज्ञे सोऽप्यानीतस्य वीक्ष्य तत् । तद्रूपं तूलिकाचङ्गस्याङ्गं राजा विसिस्मिये ॥ ४४
सप्तभ्यस्तूलिकाभ्योऽस्य बालो लग्नस्तनौ कथम् । इति चित्रीयमाणस्तां राजा रात्रिं निनाय सः ॥ ४५
प्रातश्चाद्भुतवैदग्ध्यसौकुमार्या अमी इति । तेभ्यस्त्रिभ्योऽपि चङ्गेभ्यो हेमलक्षत्रयं ददौ ॥ ४६
ततस्ते सुखितास्तत्र तस्थुर्विस्मृतकच्छपाः । पितुर्विघ्नितयज्ञार्थफलोपार्जितपातकाः ॥ ४७

इत्याख्याय कथाद्भुतमंसनिषण्णः पुनः स वेतालः ।
पप्रच्छ तं त्रिविक्रमसेनं पृथ्वीपतिं प्रश्नम् ॥ ४८
राजन्विचिन्त्य शापं पूर्वोक्तं ब्रूहि मे त्वमेतेषाम् ।
भोजननारीशय्याचङ्गानां कोऽधिकश्चङ्गः ॥ ४९
तच्छ्रुत्वैव स धीमान्वेतालं प्रत्युवाच तं नृपतिः ।
अहमेषां निष्कैतवमधिकं जानामि तूलिकाचङ्गम् ॥ ५०
यस्याङ्गे प्रत्यक्षं बालप्रतिबिम्बमुद्गतं दृष्टम् ।
इतराभ्यां हि भवेत्तत्पूर्वं ज्ञात्वन्यतोऽवगतम् ॥ ५१
इति तस्योक्तवतोऽसाद्वेतालो भूपतेर्ययौ प्राग्वत् ।
सोऽपि तथैव च राजा तमन्वयासीदनिर्विण्णः ॥ ५२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चदशस्तरङ्गः ।

## षोडशस्तरङ्गः ।

### ( नवमो वेतालः । )

ततो गत्वा पुनस्तस्माच्छिंशपापादपान्नृपः । स त्रिविक्रमसेनस्तं स्कन्धे वेतालमग्रहीत् ॥ १
प्रस्थितश्च ततस्तेन वेतालेनाभ्यधायि सः । राजन्क राज्यं क्वैतस्मिञ्श्मशाने भ्रमणं निशि ॥ २
किमेतन्नेक्षसे भूतसंकुलं रात्रिभीषणम् । चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननम् ॥ ३
कष्टं कीदृग्ग्रहोऽयं ते भिक्षोस्तस्यानुरोधतः । तदिमं शृणु तावन्मे प्रश्नं मार्गविनोदनम् ॥ ४

अवन्तिष्वस्ति नगरी युगादौ देवनिर्मिता। शैवी तनुरिवोद्दामभोगिभूतिविभूषिता॥ ५
पद्मावती भोगवती या हिरण्यवतीति च। कृतादिषु त्रिषु ख्याता कलावुज्जयिनीति च॥ ६
तस्यां च वीरदेवाख्यो राजाभूद्भूभृतां वरः। तस्य पद्मरतिर्नाम महादेवी बभूव च॥ ७
सोऽथ राजा तया साकं गत्वा मन्दाकिनीतटे। हरमाराधयामास तपसा पुत्रकाम्यया॥ ८
चिरं तपःस्थितश्चात्र परितुष्टेश्वरोदिताम्। कृतस्नानार्चनविधिः शुश्रावेमां गिरं दिवः॥ ९
राजन्नुत्पत्स्यते पुत्रः शूरस्तव कुलोद्भवः। कन्या चानन्यसामान्यलावण्यन्यक्कृताप्सराः॥ १०
श्रुत्वैतां नाभसीं वाणीं सिद्धाभीष्टः स भूपतिः। वीरदेवः स्वनगरीमाययौ महिषीसखः॥ ११
तत्रास्य शूरदेवाख्ये जाते प्रथममात्मजे। तस्यां पद्मरतौ देव्यां क्रमादजनि कन्यका॥ १२
अनङ्गस्यापि रूपेण रतिमुत्पादयेदियम्। इत्यनङ्गरतिर्नाम्ना पित्रा तेन व्यधायि सा॥ १३
वृद्धिं गतायास्तस्याश्च स पिता सदृशं वरम्। प्रेप्सुरानाययत्पृथ्व्यां पटेषु लिखितान्नृपान्॥ १४
तेष्वेकोऽपि न यत्तस्य तत्तुल्यः प्रत्यभासत। तेन राजा स वात्सल्यात्तां सुतां प्रत्यभाषत॥ १५
अहं तावन्न पश्यामि सदृशं पुत्रि ते वरम्। तत्कुरुष्व नृपान्सर्वान्मेलयित्वा स्वयंवरम्॥ १६
एतत्पितृवचः श्रुत्वा राजपुत्री जगाद सा। तात स्वयंवरं कर्तुं ह्रेपणान्नाहमुत्सहे॥ १७
किं त्वेकं वेत्ति योऽपूर्वं विज्ञानं स्वाकृतिर्युवा। तस्मै त्वयाहं दातव्या नार्थोऽन्येनाधिकेन मे॥ १८
इत्यनङ्गरतेस्तस्याः श्रुत्वा स्वदुहितुर्वचः। तादृशं तद्वरं यावदन्विष्यति स भूपतिः॥ १९
तावत्तल्लोकतो बुद्ध्वा चत्वारस्तमुपाययुः। वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणापथात्॥ २०
ते राज्ञा पूजितास्तस्मै स्वं स्वं विज्ञानमेकशः। शशंसुः संनिधौ तस्या राजपुत्र्यास्तदर्थिनः॥ २१
एको जगाद शूद्रोऽहमाख्यया पञ्चपट्टिकः। पञ्चाग्र्यवस्त्रयुग्मानि करोम्येकोऽहमन्वहम्॥ २२
तेभ्य एकं प्रयच्छामि देवायैकं द्विजन्मने। एकं च परिगृह्णामि वाससोरात्मनः कृते॥ २३
एकं ददामि भार्यायै यदि सा भवतीह मे। एकं विक्रीय चाहारपानादि विदधाम्यहम्॥ २४
एवंविज्ञानिनेऽनङ्गरतिर्मे दीयतामिति। इत्येकेनोदिते तेन द्वितीयः पुरुषोऽब्रवीत्॥ २५
भाषाज्ञो नाम वैश्योऽहं सर्वेषां मृगपक्षिणाम्। रुतं वेद्मि तदेषा मे राजपुत्री प्रदीयताम्॥ २६
एवमुक्ते द्वितीयेन तृतीयः प्रोक्तवांस्ततः। अहं खड्गधरो नाम दोःशाली क्षत्रियो नृप॥ २७
न खड्गविद्याविज्ञाने प्रतिमल्लोऽस्ति मे क्षितौ। तदेषा तनया राजंस्त्वया मह्यं वितीर्यताम्॥ २८
इत्युक्ते तु तृतीयेन चतुर्थ इदमभ्यधात्। विप्रोऽहं जीवदत्ताख्यो विज्ञानं च ममेदृशम्॥ २९
जन्तून्मृतानप्यानीय दर्शयाम्याशु जीवतः। तद्वीरचर्यासिद्धं मां पतिमेषा प्रपद्यताम्॥ ३०
एवं वक्तॄन्स तान्पश्यन्दिव्यवेषाकृतीन्नृपः। वीरदेवः सुतायुक्तो दोलारूढ इवाभवत्॥ ३१
इत्याख्याय कथामेतां वेतालः पृष्टवान्नृपम्। स त्रिविक्रमसेनं तं दत्तपूर्वोक्तशापभीः॥ ३२
तद्भवान्वक्तु तावन्मे कस्मै देया विशांपते। तेषां चतुर्णां मध्यात्सा कन्यानङ्गरतिर्भवेत्॥ ३३
एतच्छ्रुत्वा स राजा तं वेतालं प्रत्यभाषत। मौनं त्याजयति प्रायः कालक्षेपाय मां भवान्॥ ३४
अन्यथा गहनः कोऽयं प्रश्नो योगेश्वरोच्यताम्। शूद्राय हि कुविन्दाय क्षत्रिया दीयते कथम्॥ ३५
वैश्यायापि कथं देया क्षत्रिया यच्च तद्गतम्। मृगादिभाषाविज्ञानं कार्ये तत्कोपयुज्यते॥ ३६
योऽपि विप्रस्तृतीयोऽत्र तेनापि पतितेन किम्। स्वकर्मप्रच्युतेनेन्द्रजालिना वीरमानिना॥ ३७
तस्मात्तस्मै क्षत्रियाय चतुर्थाय समाय सा। देया खड्गधरायैव स्वविद्यावीर्यशालिने॥ ३८

एतत्तस्य वचो निशम्य नृपतेरंसस्थलात्पूर्वव-
द्वेतालः स जगाम योगबलतः स्वस्थानमेवाशु तत्।
भूपालोऽपि स तं तथैव पुनरप्यानेतुमन्वगर्यया-
वुत्साहैकघने हि वीरहृदये नाप्नोति खेदोऽन्तरम्॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षोडशस्तरङ्गः।

सप्तदशस्तरङ्गः ।

( दशमो वेतालः । )

स त्रिविक्रमसेनोऽथ गत्वा तं शिंशपातरोः । राजा जग्राह वेतालं पुनरंसे चचाल च ॥ १
प्रयान्तं च तमाह स्म वेतालः सोंऽसपृष्ठगः । श्रान्तोऽसि राजंस्तदिमां शृणु श्रमहरां कथाम् ॥ २
अभूत्सकलभूपालमस्तकन्यस्तशासनः । वीरबाहुरिति ख्यातो नाम्ना पार्थिवसत्तमः ॥ ३
तस्यानङ्गपुरं नाम बभूव नगरोत्तमम् । तत्रासीदर्थदत्ताख्यः सार्थवाहो महाधनः ॥ ४
तस्यासीद्धनदत्ताख्यज्येष्ठपुत्रकनीयसी । सुता मदनसेनेति कन्यारत्नं वणिक्पतेः ॥ ५
तामेकदा निजोद्याने क्रीडन्तीं ससखीजनाम् । ददर्श धर्मदत्ताख्यो भ्रातृमित्रं वणिक्सुतः ॥ ६
स तामालोक्य लावण्यरसनिर्भरनिर्झराम् । आलक्ष्य कुचकुम्भाग्रां वलित्रयतरङ्गिताम् ॥ ७
यौवनद्विरदस्येव क्रीडामज्जनवापिकाम् । सद्योऽभूत्स्मरबाणौघसंतापहृतचेतनः ॥ ८
अहो धाराधिरूढेन रूपेण द्योतितामुना । इयं मे मानसं भेत्तुं भल्ली मारेण निर्मिता ॥ ९
इत्यादि यावद्ध्यायन्स निर्वर्णयति तां चिरम् । तावत्तस्यातिचक्राम चक्राह्वस्येव वासरः ॥ १०
ततो मदनसेना सा विवेश स्वगृहान्तरम् । चित्तं च धर्मदत्तस्य तदनालोकनव्यथा ॥ ११
तददर्शनदुःखाग्निसंतापेनेव च ज्वलन् । लोहितो निपपाताशु भास्वानप्यपराम्बुधौ ॥ १२
तां विज्ञायैव सुमुखीं नक्तमभ्यन्तरे गताम् । उदियाय शनैश्चन्द्रस्तन्मुखाब्जविनिर्जितः ॥ १३
तावद्गत्वा गृहं तां स धर्मदत्तोऽनुचिन्तयन् । तस्थौ निपत्य शयने चन्द्रपादाहतो लुठन् ॥ १४
यत्नेन पृच्छ्यमानोऽपि सखिभिर्बन्धुभिस्तथा । न किंचित्कथयामास स्मरग्रहविमोहितः ॥ १५
निशि कृच्छ्राच्च संप्राप्तनिद्रः स्वप्ने तथैव ताम् । पश्यन्ननुनयन्कान्तां किं किं चक्रे न सोत्सुकः ॥ १६
प्रातः प्रबुद्धो गत्वा च ददर्शैकाकिनीं रहः । सखीं प्रतीक्षमाणां तां तत्रोद्यानस्थितां पुनः ॥ १७
उपेत्य च परिष्वङ्गलालसः प्रेमपेशलैः । तामुपच्छन्दयामास वचोभिश्चरणानतः ॥ १८
कन्याहं परदाराश्च न तवास्मीह सांप्रतम् । पित्रा समुद्रदत्ताय दत्ताहं वणिजे यतः ॥ १९
दिनैः कतिपयैरेव विवाहो भविता च मे । तद्गच्छ तूष्णीं मा कश्चित्पश्येद्दोषो भवेत्ततः ॥ २०
इत्युक्तः स तयात्यर्थं धर्मदत्तो जगाद ताम् । यदस्तु मे न जीवेयं विना हि भवतीमहम् ॥ २१
तच्छ्रुत्वा सा वणिक्कन्या बलात्कारभयाकुला । तमुवाच विवाहो मे तावत्संपद्यतामिह ॥ २२
कन्यादानफलं तातः प्राप्नोतु चिरकाङ्क्षितम् । ततोऽहं त्वामुपैष्यामि निश्चितं प्रणयार्जिता ॥ २३
श्रुत्वैतत्सोऽब्रवीन्नेष्टा ह्यन्यपूर्वा मम प्रिया । परभुक्ते हि कमले किमलेर्जायते रतिः ॥ २४
इत्युक्ता तेन सावादीत्कृतोद्वाहैव तर्ह्यहम् । पूर्वं त्वामुपयास्यामि ततोऽभ्येष्यामि तं पतिम् ॥ २५
एवमुक्तवतीं तस्मिन्नोज्झति प्रत्ययं विना । वणिक्पुत्रे सशपथं सत्यवाचं बबन्ध सा ॥ २६
ततस्तेनोज्झिता विग्ना सा विवेश स्वमन्दिरम् । प्राप्ते च लग्नदिवसे निर्वृत्तोद्वाहमङ्गला ॥ २७
गत्वा पतिगृहं नीत्वा सोत्सवेन च तद्दिनम् । सा पत्या सममध्यास्त शयनीयगृहं निशि ॥ २८
तत्र शय्यानिषण्णापि न तस्य प्रत्यपद्यत । पत्युः समुद्रदत्तस्य परिष्वङ्गमसंमुखी ॥ २९
तेनानुनीयमानापि यदुदश्रुर्बभूव सा । तत्स नाभिमतोऽस्म्यस्या नूनमित्यकरोद्धृदि ॥ ३०
जगाद चानभिमतो यद्यहं तव सुन्दरि । तन्मे नार्थस्त्वया गच्छ यः प्रियस्तव तं प्रति ॥ ३१
तच्छ्रुत्वा सा नतमुखी शनैरेवमुवाच तम् । त्वं मे प्राणाधिकः प्रेयान्विज्ञप्तिं किं तु मे शृणु ॥ ३२
अनुतिष्ठ सहर्षं च प्रयच्छ च ममाभयम् । कुरुष्व शपथं यावदार्यपुत्र वदामि ते ॥ ३३
एवमुक्तवती कृच्छ्रात्तथा तेन कृते पुनः । सलज्जं सविषादं च सभयं च जगाद सा ॥ ३४
एकाकिनीं गृहोद्याने दृष्ट्वा मामेकदा युवा । अरुणद्धर्मदत्ताख्यः सखा भ्रातुः स्मरातुरः ॥ ३५
रक्षन्त्या सपरीवादं कन्यादानफलं पितुः । मया हठप्रवृत्तस्य तस्य वाक्संयमः कृतः ॥ ३६
पूर्वं कृतविवाहा त्वामुपैष्यामि ततः प्रियम् । तन्मे सत्यवचः पालयमनुमन्यस्व तत्प्रभो ॥ ३७

यावत्तन्निकटं गत्वा क्षणेनोपैमि तेऽन्तिकम्। नहि शक्नोम्यतिक्रान्तुं सत्यमाबाल्यसेवितम्॥ ३८
इति तस्या वचोवज्रपातेन सहसा हतः। समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत्॥ ३९
अहो धिगन्यरक्तेयं गन्तव्यं ध्रुवमेतया। तत्सत्यं हन्मि किं यातु कोऽस्याः परिणयग्रहः॥ ४०
इत्यालोच्यानुमेने तां यथेष्टगमनाय सः। साप्युत्थाय ततस्तस्मान्निर्ययौ पतिवेश्मनः॥ ४१
तावदत्रोदयाद्रीन्द्रहर्म्याग्रं हिमदीधितिः। आरुरोह कराक्रान्तहसत्पूर्वदिगङ्गनः॥ ४२
ततस्तमःस्वप्याश्लिष्य स्थितेष्वद्रिदरीप्रियाः। सेव्यमानेषु भृङ्गेष्वप्यपरं कुमुदाकरम्॥ ४३
यान्ती मदनसेना सा मार्गे दृष्ट्वैकका निशि। चौरेणाधाव्य केनापि रुरुधे वसनाञ्चले॥ ४४
का त्वं ब्रूहि क्व यासीति तेनोक्ता बिभ्यती च सा। उवाच किं तवानेन मुञ्च कार्यमिहास्ति मे॥ ४५
ततश्चौरोऽब्रवीन्मत्तश्चौरात्त्वं मुच्यसे कथम्। तच्छ्रुत्वा सावदत्तं च गृहाणाभरणानि मे॥ ४६
अथ चौरोऽभ्यधान्मुग्धे किमेभिरुपलैर्मम। चन्द्रकान्ताननां तार्क्ष्यरत्नासितशिरोरुहाम्॥ ४७
वज्रमध्यां सुवर्णाङ्गीं पद्मरागाङ्घ्रिहारिणीम्। जगदाभरणं नैव मोक्ष्यामि भवतीमहम्॥ ४८
इत्युक्ता तेन चौरेण विवशा सा वणिक्सुता। आख्याय निजवृत्तान्तमेवं प्रार्थयते स्म तम्॥ ४९
क्षमस्व मे क्षणं यावत्कृत्वा सत्यानुपालनम्। इहस्थस्यैव ते पार्श्वमागमिष्यामि सत्वरम्॥ ५०
नाहमुल्लङ्घयिष्यामि भद्र सत्यामिमां गिरम्। श्रुत्वैतत्सत्यसंधां तां मत्वा चौरो मुमोच सः॥ ५१
तस्थौ प्रतीक्षमाणश्च तत्रैव स तदागमम्। सापि तस्यान्तिकं धर्मदत्तस्य वणिजो ययौ॥ ५२
स चाभीष्टामपि प्राप्तां तथा तां विजने स्थिताम्। दृष्ट्वा पृष्ट्वा यथावृत्तं विचिन्त्य क्षणमब्रवीत्॥ ५३
सत्येन तव तुष्टोऽस्मि किं त्वया मे परस्त्रिया। यावत्त्वां नेक्षते कश्चित्तावद्गच्छ यथागतम्॥ ५४
इति तेन परित्यक्ता सा तथेत्याययौ ततः। चौरस्य निकटं तस्य प्रतिपालयतः पथि॥ ५५
ब्रूहि कस्तेऽत्र वृत्तान्तो गताया इति पृच्छते। तस्मै सा तेन वणिजा यथा मुक्ता तथाब्रवीत्॥ ५६
ततः स चौरोऽवादीत्तां यद्येवं तन्मयाप्यसि। विमुक्ता सत्यतुष्टेन गृहं साभरणा व्रज॥ ५७
एवं तेनापि सा त्यक्ता रक्षिता चानुयायिना। अलुप्तशीला मुदिता पत्युरेवाययौ गृहम्॥ ५८
तत्र गुप्तं प्रविष्टा सा प्रहृष्टोपागता सती। दृष्ट्वा पृष्टवते तस्मै पत्ये सर्वमवर्णयत्॥ ५९
सोऽप्यलुप्तमुखच्छायां तामसंभोगलक्षणाम्। संभाव्याभग्नचारित्रां सत्यलाभरतां सतीम्॥ ६०
अदृष्टमनसं भार्यामभिनन्द्य कुलोचितम्। तस्थौ समुद्रदत्तोऽथ तया सह यथासुखम्॥ ६१

इति तत्र कथामुक्त्वा पितृवनभूमौ तदा स वेतालः।
वदति स्म तं त्रिविक्रमसेनं वसुधाधिपं भूयः॥ ६२
तद्ब्रूहि चौरवणिजामेषां मध्यान्नरेन्द्र कस्त्यागी।
जानन्यदि न वदिष्यसि विदलिष्यति ते शिरः शतधा॥ ६३
तच्छ्रुत्वा स महीपतिरुज्झितमौनस्तमाह वेतालम्।
एषां चौरस्त्यागी न पुनर्वणिजावुभावपि तौ॥ ६४
यो हि पतिस्तामजहादत्याज्यां तादृशीं विवाह्यापि।
कुलजः सोऽन्यासक्तां भार्यां जानन्कथं वहतु॥ ६५
योऽप्यपरः स भयात्तामत्याक्षीत्कालजीर्णसंवेगः।
विदितार्थो भर्तास्याः प्रातर्ब्रूयान्नृपायेति॥ ६६
चौरस्तु गुप्तचारी निरपेक्षः पापकर्मकृत्प्राप्तम्।
स्त्रीरत्नं यदमुञ्चत्साभरणं तेन स त्यागी॥ ६७

एतच्छ्रुत्वैवांसतस्तस्य राज्ञो वेतालोऽगात्पूर्ववत्स्वं पदं सः।
राजा भूयोऽप्यत्र संप्राप्तुमेतं प्रायादेवाखण्डितोद्दामधैर्यः॥ ६८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके सप्तदशस्तरङ्गः।

अष्टादशस्तरङ्गः ।

( एकादशो वेतालः । )

ततो गत्वा पुनः प्राप्य शिंशपातोऽग्रहीन्नृपः । स त्रिविक्रमसेनोंऽसे वेतालं तं चचाल च ॥ १
आयान्तं च तमंसस्थो वेतालः सोऽब्रवीन्नृपम् । राजन्विचित्रामेकां ते वर्णयामि कथां शृणु ॥ २
उज्जयिन्यामभूत्पूर्वं नाम्ना धर्मध्वजो नृपः । तिस्रस्तस्याभवन्भार्या राजपुत्र्योऽतिवल्लभाः ॥ ३
एका तास्विन्दुलेखेति तारावल्यपरा तथा । नाम्ना मृगाङ्कवत्यन्या निःसामान्यवपुर्गुणाः ॥ ४
ताभिः स विहरन्राजा राज्ञीभिस्तिसृभिः सह । आसांचक्रे कृती तत्र जिताशेषरिपुः सुखम् ॥ ५
एकदा तत्र संप्राप्ते वसन्तसमयोत्सवे । प्रियाभिः सहितस्ताभिरुद्यानं क्रीडितुं ययौ ॥ ६
तत्रालिमालामौर्वीकाः पश्यन्पुष्पानता लताः । चापयष्टीरनङ्गस्य मधुना सज्जिता इव ॥ ७
शृण्वंश्च तद्द्रुमाग्रस्थकोकिलोदीरितां गिरम् । संभोगैकरसस्याज्ञामिव मानसजन्मनः ॥ ८
सिषेवेऽन्तःपुरैः साकं स राजा वासवोपमः । पानं मदस्य कंदर्पजीवितस्यापि जीवितम् ॥ ९
तन्निःश्वाससुगन्धीनि तद्बिम्बौष्ठरुचीनि च । प्रियापीतावशेषाणि पिबन्रेमे मधूनि सः ॥ १०
तत्र तस्येन्दुलेखाया राज्ञः केलिकचग्रहात् । तस्याः पपात कर्णाग्रादुत्सङ्गे त्वङ्गदुत्पलम् ॥ ११
तेनोरुपृष्ठे सहसा क्षते जातेभिघातजे । अभिजाता महादेवी हाहेत्युक्त्वा मुमूर्च्छ सा ॥ १२
तद्दृष्ट्वा विह्वलेनार्त्या राज्ञा परिजनेन च । समाश्वास्यत राज्ञी सा शनैः शीताम्बुमारुतैः ॥ १३
ततो नीत्वा स राजा तां राजधानीं भिषक्कृतैः । प्रियामुपाचरद्दिव्यैरामुक्तव्रणपट्टिकाम् ॥ १४
रात्रौ च सुस्थितां दृष्ट्वा तां स राजा द्वितीयया । तारावल्या सहारोहच्चन्द्रप्रासादमीश्वरः ॥ १५
तत्र तस्याङ्कसुप्ताया राज्ञस्तस्या हिमत्विषः । करा जालपथैः पेतुरङ्गे चलितवाससि ॥ १६
ततः क्षणात्प्रबुद्धा सा हा दग्धास्मीति वादिनी । शयनात्सहसोत्तस्थौ तदङ्गपरिमर्शिनी ॥ १७
किमेतदिति संभ्रान्तः प्रबुद्धोऽथ ददर्श सः । उत्थाय राजा विस्फोटानङ्गे तस्या विनिर्गतान् ॥ १८
पृच्छन्तं सा च तं प्राह राज्ञी तारावली तदा । नग्नाङ्गे पतितैरिन्दोः करैरेतत्कृतं मम ॥ १९
इत्युक्तवत्याः क्रन्दन्त्याः सार्तिराह्वयति स्म सः । तस्याः परिजनं राजा विह्वलाकुलधावितम् ॥ २०
तेनास्याः कारयामास सजलैर्नलिनीदलैः । शय्यामदापयच्चाङ्गे श्रीखण्डार्द्रविलेपनम् ॥ २१
तावद्बुद्ध्वा तृतीयास्य सा मृगाङ्कवती प्रिया । तत्पार्श्वमागन्तुमना निर्ययौ निजमन्दिरात् ॥ २२
निर्गता साश्रृणोत्क्वापि गृहे धान्यावघातजम् । निःशब्दायां निशि व्यक्तं विदूरे मुसलध्वनिम् ॥ २३
श्रुत्वैव हा मृतास्मीति ब्रुवाणा धुन्वती करौ । उपाविशद्व्यथाक्रान्ता मार्गे सा मृगलोचना ॥ २४
ततः प्रतिनिवृत्यैव नीत्वा परिजनेन सा । स्वमेवान्तःपुरं बाला रुदती शयनेऽपतत् ॥ २५
ददर्श तत्र तस्याश्च चिन्वन्साश्रुः परिच्छदः । आलीनभ्रमरौ पद्माविव हस्तौ किणाङ्कितौ ॥ २६
गत्वा च सोऽब्रवीद्राज्ञे राजाप्यागत्य विह्वलः । किमेतदिति पप्रच्छ सोऽथ धर्मध्वजः प्रियाम् ॥ २७
सापि प्रदर्श्य हस्तौ तमित्युवाच रुजान्विता । श्रुते मुसलशब्दे मे जातावेतौ किणाङ्कितौ ॥ २८
ततः स दाहशमनं दापयामास हस्तयोः । तस्याश्चन्दनलेपादि राजाद्भुतविषादवान् ॥ २९
एकस्या उत्पलेनापि पतता क्षतमाहितम् । द्वितीयस्याः पुनर्दग्धमङ्गं शशिकरैरपि ॥ ३०
एतस्यास्तु तृतीयस्याः श्रुतेनापि विनिर्गताः । कष्टं मुसलशब्देन हस्तयोरीदृशाः किणाः ॥ ३१
अहो युगपदेतासां प्रेयसीनां ममाधुना । गुणोऽप्यत्यभिजातत्वं जातो दोषाय दैवतः ॥ ३२
इति चिन्तयतस्तस्य भ्रमतोऽन्तःपुरेषु च । त्रियामा शतयामेव कृच्छ्रात्सा नृपतेर्ययौ ॥ ३३
प्रातश्च स भिषक्छल्यहर्तृभिः सह संव्यधात् । तथा यथाभूदचिरात्स्वस्थान्तःपुरनिर्वृतः ॥ ३४
एवमेतां कथामुक्त्वा वेतालोऽत्यद्भुतां तदा । स त्रिविक्रमसेनं तं पप्रच्छांसस्थितो नृपम् ॥ ३५
अभिजाततरैतासु राजन्राज्ञीषु का वद । पूर्वोक्तः सोऽस्तु शापस्ते जानन्यदि न जल्पसि ॥ ३६

तच्छ्रुत्वा सोऽब्रवीद्राजा सुकुमारतरात्र सा। अस्पृष्टे मुसले यस्याः शब्देनैवोद्गताः किणाः ॥ ३७
उत्पलेन्दुकरैः स्पर्शे वृत्ते त्वितरयोर्द्वयोः। संजाता व्रणविस्फोटास्तेन तस्या न ते समे ॥ ३८
इति तस्योक्तवतोऽसाद्राज्ञो भूयो जगाम स स्वपदम्।
वेतालः स च राजा तथैव तं सुदृढनिश्चयोऽनुययौ ॥ ३९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बकेऽष्टादशस्तरङ्गः।

---

एकोनविंशस्तरङ्गः।
(द्वादशो वेतालः।)

स त्रिविक्रमसेनोऽथ पुनस्तं शिंशपातरुम्। गत्वा प्राप्य च वेतालं राजा स्कन्धे चकार तम् ॥ १
प्रतस्थे च तमादाय तूष्णीमेव स पूर्ववत्। ततो भूयस्तमाह स्म वेतालः सोंऽसपृष्ठतः ॥ २
राजन्नेवमनुद्विग्नः पर्याप्तमसि मे प्रियः। तदेतां शृण्वखेदाय हृद्यामाख्यामि ते कथाम् ॥ ३
अङ्गदेशे यशःकेतुरिति राजाभवत्पुरा। क्षमामाश्रितोऽङ्गशुध्यर्थमदग्धोऽन्य इव स्मरः ॥ ४
बाहुवीर्यजिताशेषवैरिवर्गस्य तस्य च। दीर्घदर्शीत्यभून्मन्त्री शक्रस्येव बृहस्पतिः ॥ ५
तस्मिन्मन्त्रिणि विन्यस्य राज्यं स हतकण्टकम्। शनैः सुखैकसक्तोऽभूद्वयोरूपमदान्नृपः ॥ ६
तस्थावन्तःपुरे शश्वन्नास्थाने प्रमदास्पदे। शुश्राव रक्तिमद्गीतं वचनं न हितैषिणाम् ॥ ७
रज्यति स्म च निश्चिन्तो जालवातायनेषु सः। न पुना राजकार्येषु बहुच्छिद्रेषु जात्वपि ॥ ८
दीर्घदर्शी तु तद्राज्यचिन्ताभारं समुद्वहन्। अतिष्ठत्स महामन्त्री दिवानिशमतन्द्रितः ॥ ९
नाममात्रे कृतधृतिं प्रक्षिप्य व्यसने नृपम्। मन्त्री राज्ञः श्रियं भुङ्क्ते दीर्घदर्शीह सांप्रतम् ॥ १०
इत्युत्पन्ने महत्यत्र जनवादेऽथ गेहिनीम्। स्वैरं मेधाविनीं नाम दीर्घदर्शी जगाद सः ॥ ११
प्रिये राज्ञि सुखासक्ते तद्भारं वहतोऽपि मे। राज्यं भक्षितमेतेनेत्युत्पन्नमयशो जने ॥ १२
लोकवादश्च मिथ्यापि महतामिह दोषकृत्। तत्याज किं न रामोऽपि जनवादेन जानकीम् ॥ १३
तदत्र किं मया कार्यमित्युक्ते तेन मन्त्रिणा। भार्या मेधाविनी धीरा सान्वर्था तमभाषत ॥ १४
तीर्थयात्रापदेशेन युक्त्यापृच्छच महीपतिम्। कंचित्कालं विदेशं ते गन्तुं युक्तं महामते ॥ १५
एवं ते निःस्पृहस्यैष जनवादो निवर्त्स्यति। त्वय्यस्थिते ततो राज्यमुद्वक्ष्यति नृपः स्वयम् ॥ १६
ततश्चास्य शनैरेतद्व्यसनं हानिमेष्यति। आगतस्यात्र निर्गर्हा भवित्री मन्त्रिता च ते ॥ १७
इत्युक्तो भार्यया गत्वा दीर्घदर्शी तथेति सः। कथाप्रसङ्गे तं भूपं यशःकेतुं व्यजिज्ञपत् ॥ १८
अनुजानीहि मां राजन्दिवसान्कांश्चिदप्यहम्। व्रजामि तीर्थयात्रायै धर्मो हि प्रेप्सितः स मे ॥ १९
तच्छ्रुत्वा सोऽब्रवीद्राजा मैवं तीर्थैर्विना परः। दानादिः किं न धर्मोऽस्ति स्वर्ग्यस्ते स्वगृहेष्वपि ॥ २०
अथावोचत्स मन्त्री तमर्थशुद्ध्यादि मृग्यते। दानादौ नित्यशुद्धानि तीर्थानि नृपते पुनः ॥ २१
यावच्च यौवनं राजंस्तावद्गम्यानि धीमता। अविश्वास्ये शरीरे हि संगमस्तैः कुतोऽन्यदा ॥ २२
इति तस्मिन्वदत्येव राज्ञि चैवं निषेधति। प्रविश्यात्र प्रतीहारो राजानं तं व्यजिज्ञपत् ॥ २३
देव व्योमसरोमध्यमंशुमाली विगाहते। तदुत्तिष्ठत सैषा वः स्नानवेलातिवर्तते ॥ २४
श्रुत्वैतत्सहसा स्नातुमुदतिष्ठन्महीपतिः। यात्रोन्मुखः स मन्त्री च तं प्रणम्य गृहं ययौ ॥ २५
तत्रावस्थाप्य भार्यां तामनुयात्रानिवारिताम्। स प्रतस्थे ततो युक्त्या स्वभृत्यैरप्यतर्कितः ॥ २६
एकाकी च भ्रमंस्तांस्तान्देशांस्तीर्थानि च व्रजन्। स प्राप पुण्ड्रविषयं दीर्घदर्शी सुनिश्चयः ॥ २७
तत्र पत्तन एकस्मिन्नदूरेऽब्धेः प्रविश्य सः। एकं देवकुलं शैवं तत्प्राङ्गण उपाविशत् ॥ २८
तत्रार्ककरसंतापक्लान्तं दूराध्वधूसरम्। ददर्श निधिदत्ताख्यो वणिग्देवार्चनागतः ॥ २९
स तं तथाविधं दृष्ट्वा सोपवीतं सुलक्षणम्। संभाव्य चोत्तमं विप्रमातिथेयोऽनयद्गृहम् ॥ ३०
तत्र चापूजयत्स्नानभोजनाद्यैस्तमुत्तमैः। कः कुतस्त्वं क्व यासीति विश्रान्तं च स पृष्टवान् ॥ ३१
दीर्घदर्शीति विप्रोऽहमङ्गदेशादिहागतः। तीर्थयात्रार्थमित्येव गाम्भीर्यात्सोऽभ्युवाच तम् ॥ ३२

ततः स निधिदत्तोऽपि तं जगाद महावणिक् । सुवर्णद्वीपगमनायोद्यतोऽहं वणिज्यया ॥ ३३
तत्त्वं तिष्ठेह मद्गेहे यावदेष्याम्यहं ततः । तीर्थयात्रापरिश्रान्तो विश्रान्तो ह्यथ यास्यसि ॥ ३४
तच्छ्रुत्वा सोऽब्रवीद्दीर्घदर्शी तर्हि ममेह किम् । त्वयैव सह यास्यामि सार्थवाह यथासुखम् ॥ ३५
एवमस्त्विति तेनोक्ते साधुना सोऽथ तद्गृहे । चिरादवाप्तशयनो निशां मन्त्री निनाय ताम् ॥ ३६
अन्येद्युरथ तेनैव वणिजा सह वारिधिम् । गत्वारुरोह तद्भाण्डपूर्णं प्रवहणं च सः ॥ ३७
तेन गच्छन्प्रवहणेनाब्धिमद्भुतभीषणम् । विलोकयन्स संप्राप स्वर्णद्वीपं क्रमेण तत् ॥ ३८
क्व मन्त्रिमुख्यता चास्य क्व वाध्वोल्लङ्घिताम्बुधिः । अयशोभीरवः किं न कुर्वते बत साधवः ॥ ३९
तत्र द्वीपे समं तेन कंचित्कालमुवास सः । वणिजा निधिदत्तेन कुर्वता क्रयविक्रयौ ॥ ४०
आगच्छंश्च ततोऽकस्मात्तद्युक्तो वहनस्थितः । कल्पवृक्षं ददर्शाब्धावूर्मेः पश्चात्समुत्थितम् ॥ ४१
प्रवालशाखासुभगैः स्कन्धैर्जाम्बूनदोज्ज्वलैः । फलैर्मणिमयैः कान्तैः कुसुमैश्चोपशोभितम् ॥ ४२
तस्य स्कन्धे च सद्रत्नपर्यङ्कोत्सङ्गवर्तिनीम् । कन्यामत्यद्भुताकारकमनीयामवैक्षत ॥ ४३
अहो किमेतदित्येवं यावद्ध्यायति स क्षणम् । तावत्सा वीणिनी कन्या गातुमेवं प्रचक्रमे ॥ ४४

यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते ।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः ॥ ४५

इत्युद्गाय क्षणात्तस्मिन्नम्भोधौ दिव्यकन्यका । सकल्पद्रुमपर्यङ्कशय्यात्रैव ममज्ज सा ॥ ४६
किमप्यपूर्वमद्येदं मया दृष्टमिहाद्भुतम् । क्वाब्धिः क्व दृष्टनष्टोऽत्र गायद्दिव्याङ्गनस्तरुः ॥ ४७
यदि वा वन्द्य एषोऽब्धिराकरः शश्वदीदृशाम् । लक्ष्मीन्दुपारिजाताद्या नास्मात्ते ते किमुद्गताः ॥ ४८
इति तं चिन्तयन्तं च तत्क्षणं दीर्घदर्शिनम् । विलोक्य विस्मयाविष्टं कर्णधारादयोऽब्रुवन् ॥ ४९
एवमेषा सदैवेह दृश्यते वरकन्यका । निमज्जति च तत्कालं तवैतद्दर्शनं नवम् ॥ ५०
इत्युक्तस्तैः समं तेन निधिदत्तेन स क्रमात् । मन्त्री चित्रीयमाणोऽब्धेस्तीरं पोतगतोऽभ्यगात् ॥ ५१
तत्रोत्तारितभाण्डेन तेनैव वणिजा सह । जगाम हृष्टभृत्येन सोत्सवं सोऽथ तद्गृहम् ॥ ५२
स्थित्वा नातिचिरं तत्र निधिदत्तमुवाच तम् । सार्थवाह भवद्गेहे विश्रान्तोऽहं चिरं सुखम् ॥ ५३
इदानीं गन्तुमिच्छामि स्वदेशं भद्रमस्तु ते । इत्युक्त्वा तमनिच्छन्तमप्यामन्त्र्य वणिक्पतिम् ॥ ५४
दीर्घदर्शी स सत्त्वैकसहायः प्रस्थितस्ततः । क्रमोल्लङ्घितदूराध्वा प्रापाङ्गविषयं निजम् ॥ ५५
तत्र तं ददृशुश्चारा बहिर्नगरमागतम् । ये यशःकेतुना राज्ञा प्राङ्न्यस्तास्तद्गवेषणे ॥ ५६
तैश्च गत्वा स विज्ञप्तश्चारै राजा तमभ्यगात् । स्वयं निर्गत्य नगरात्तद्विश्लेषसुदुःखितः ॥ ५७
उपेत्य च परिष्वङ्गपूर्वं तमभिनन्द्य सः । निनायाभ्यन्तरं भूपश्चिराध्वक्षाममधूसरम् ॥ ५८
त्यक्त्वास्मान्किं त्वया नीतं न परं बत मानसम् । यावच्छरीरमप्येतन्निःस्नेहपरुषां दशाम् ॥ ५९
किं वा भगवतो वेत्ति भवितव्यस्य को गतिम् । यदकस्मात्तवैषाभूत्तीर्थादिगमने मतिः ॥ ६०
तद्ब्रूहि के त्वया भ्रान्ता देशा दृष्टं च किं नवम् । इति तत्र च तं राजा स जगाद स्वमन्त्रिणम् ॥ ६१
ततः सुवर्णद्वीपान्तं सोऽध्वानं वर्णयन्क्रमात् । अब्धावुद्गमिनीं तस्मै तां दृष्टां दिव्यकन्यकाम् ॥ ६२
गायन्तीं त्रिजगत्सारभूतां कल्पतरुस्थिताम् । यथावत्कथयामास दीर्घदर्शी महीभृते ॥ ६३
स तां श्रुत्वैव च नृपस्तथा स्मरवशोऽभवत् । यथा तया विना मेने निष्फले राज्यजीविते ॥ ६४
जगाद च तमेकान्ते नीत्वा स्वसचिवं तदा । द्रष्टव्यासौ मयावश्यं जीवितं नास्ति मेऽन्यथा ॥ ६५
यामि त्वदुक्तेन पथा प्रणम्य भवितव्यताम् । निवारणीयो नाहं ते नानुगम्यश्च सर्वथा ॥ ६६
गुप्तमेको हि यास्यामि राज्यं रक्ष्यं तु मे त्वया । मद्वचो मान्यथा कार्षीः शापितोऽसि ममासुभिः ॥ ६७
इत्युक्त्वा तत्प्रतिवचो निरस्य विससर्ज तम् । मन्त्रिणं स्वगृहं राजा चिरोत्कं स्वजनं प्रति ॥ ६८
तत्रानल्पोत्सवेऽप्यासीद्दीर्घदर्शी सुदुर्मनाः । स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः ॥ ६९
अन्येद्युश्च स तद्न्यस्तन्यस्तराज्यभरो नृपः । यशःकेतुस्ततः प्रायान्निशि तापसवेषभृत् ॥ ७०

गच्छंश्च कुशनाभाख्यं मुनिं मार्गे ददर्श सः। सोऽत्र तं तापसाकल्पं प्रणतं मुनिरादिशत्॥ ७१
लक्ष्मीदत्तेन वणिजा सह पोतेन वारिधौ। गत्वा प्राप्स्यसि तामिष्टां कन्यां व्रज निराकुलः॥ ७२
इति तद्वचसा प्रीतस्तं प्रणम्य स पार्थिवः। गच्छन्देशान्नदीरद्रीन्क्रान्त्वा तं प्रापदम्बुधिम्॥ ७३
सुतारशङ्खधवलैर्वीचीभ्रूभिर्विकस्वरैः। वीक्षमाणमिवावर्तनेत्रैरातिथ्यसंभ्रमात्॥ ७४
तत्तीरे वणिजा तेन मुनिप्रोक्तेन संगतिः। लक्ष्मीदत्तेन जज्ञेऽस्य स्वर्णद्वीपं यियासुना॥ ७५
तेनैव सह चक्राङ्कपादमुद्रादिदर्शनात्। प्रह्वेणारुह्य वहनं प्रतस्थे सोऽम्बुधौ नृपः॥ ७६
मध्यमब्धेश्च संप्राप्ते वहने वारिमध्यतः। उदगात्कल्पविटपिस्कन्धस्था सात्र कन्यका॥ ७७
यावत्पश्यति तां राजा चकोर इव चन्द्रिकाम्। तावत्सा गायति स्मैवं वल्लकीवाद्यसुन्दरम्॥ ७८

यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः॥ ७९
तस्माद्यत्र यथा यद्भवितव्यं यस्य दैवयोगेन।
तत्र तथा तत्प्राप्त्यै विवशोऽसौ नीयतेऽत्र न भ्रान्तिः॥ ८०

इति सूचितभव्यार्थां गायन्तीं तां विभावयन्। निःस्पन्दः स क्षणं तस्थौ राजा स्मरशराहतः॥ ८१
रत्नाकर नमः सत्यमगाधहृदयाय ते। येन त्वयैतां प्रच्छाद्य विप्रलब्धो हरिः श्रिया॥ ८२
तत्सुरैरप्यलभ्यान्तं सपक्षक्ष्माभृदाश्रयम्। शरणं त्वां प्रपन्नोऽहमिष्टसिद्धिं विधत्स्व मे॥ ८३
एवं यावत्समुद्रं तं स नतः स्तौति भूमिपः। तावत्सा कन्यका तत्र निममज्ज सपादपा॥ ८४
तद्दृष्ट्वैवानुमार्गेऽस्याः स राजात्मानमक्षिपत्। वारिधावत्र कामाग्निसंतापस्येव शान्तये॥ ८५
तद्वीक्ष्याशङ्कितं मत्वा विनष्टं तं स सज्जनः। लक्ष्मीदत्तो वणिग्दुःखाद्देहत्यागोद्यतोऽभवत्॥ ८६
मा कार्षीः साहसं नास्ति मग्नस्यास्याम्बुधौ भयम्। एष राजा यशःकेतुर्नाम्ना तापसवेषभृत्॥ ८७
एतत्कन्यार्थमायातः पूर्वभार्येयमस्य च। एतां प्राप्य पुनश्चासावङ्गराज्यं समेष्यति॥ ८८
इत्यथाश्वासितो वाचा तत्कालं गगनोत्थया। सार्थवाहो यथाकामं स जगामेष्टसिद्धये॥ ८९
स राजापि यशःकेतुर्निमग्नोऽन्तर्महोदधौ। अकस्मान्नगरं दिव्यमपश्यज्जातविस्मयः॥ ९०
भास्वन्मणिमयस्तम्भैः काञ्चनोज्ज्वलभित्तिभिः। विराजमानं प्रासादैर्मुक्ताजालगवाक्षकैः॥ ९१
नानारत्नशिलापट्टबद्धसोपानवापिकैः। कामदैः कल्पवृक्षाढ्यैरुद्यानैरुपशोभितम्॥ ९२
समृद्धेऽपि पुरे तत्र निर्जनेऽथ गृहं गृहम्। अनुप्रविश्य न यदा तां ददर्श प्रियां क्वचित्॥ ९३
तदा विचिन्वन्दृष्ट्वैकमुत्तुङ्गं मणिमन्दिरम्। आरुह्य द्वारमुद्घाट्य प्रविवेश स भूपतिः॥ ९४
प्रविश्य चान्तः सद्रत्नपर्यङ्कस्थितमेककम्। वस्त्राच्छादितसर्वाङ्गं शयानं कंचिदैक्षत॥ ९५
किं स्यात्सैवेति सोत्कण्ठमुद्घाटयति तन्मुखम्। यावत्तावदपश्यत्तां स्वेप्सितामेव सोऽङ्गनाम्॥ ९६
स्रस्तनीलांशुकध्वान्तहसन्मुखशशिश्रियम्। ज्योत्स्नावदातां पातालगतामिव दिवा निशाम्॥ ९७
तद्दर्शनेन चास्याभूदवस्था कापि सा तदा। ग्रीष्मर्तौ मरुपान्थस्य सरित्संदर्शनेन या॥ ९८
साप्युन्मीलितचक्षुस्तं कल्याणाकृतिलक्षणम्। वीक्ष्याकस्मात्तथाप्राप्तं संभ्रमाच्छयनं जहौ॥ ९९
कृतातिथ्या नतमुखी पूजयन्तीव पादयोः। फुल्लेक्षणोत्पलन्यासैः शनैरेतमुवाच च॥ १००
को भवान्किमगम्यं च प्रविष्टोऽसि रसातलम्। राजचिह्नाङ्कितततनोः किं च ते तापसव्रतम्॥ १०१
इत्यादिश महाभाग प्रसादो यदि ते मयि। एवं तस्या वचः श्रुत्वा स राजा प्रत्युवाच ताम्॥ १०२
अङ्गराजो यशःकेतुरिति नाम्नास्मि सुन्दरि। आप्तादन्वहदृश्यां च त्वामश्रौषमिहाम्बुधौ॥ १०३
ततस्त्वदर्थे कृत्वेमं वेषं राज्यं विमुच्य च। आगत्यैष प्रविष्टोऽहमनुमार्गेण तेऽम्बुधिम्॥ १०४
तन्मे कथय कासि त्वमित्युक्ते तेन चाथ सा। सलज्जा सानुरागा च सानन्दा चैवमभ्यधात्॥ १०५
मृगाङ्कसेन इत्यस्ति श्रीमान्विद्याधराधिपः। मां मृगाङ्कवतीं नाम्ना विद्धि तस्य सुतामिमाम्॥ १०६
स मामस्मिन्स्वनगरे विमुच्यैकाकिनीं पिता। न जाने हेतुना केन गतः क्वापि सपौरकः॥ १०७

तेनाहं शून्यवसतेर्निर्विण्णोन्मज्ज्य वारिधेः । यन्त्रकल्पद्रुमारूढा गायामि भवितव्यताम् ॥ १०८
एवमुक्तवती तेन स्मरता तन्मुनेर्वचः । तथारज्यत सा राज्ञा वचोभिः प्रेमपेशलैः ॥ १०९
यथानुरागविवशा भार्यात्वं तस्य तत्क्षणम् । अङ्गीचकार वीरस्य समयं त्वेकमभ्यधात् ॥ ११०
शुक्लकृष्णचतुर्दश्यामष्टम्यां चार्यपुत्र ते । प्रतिमासमनायत्ता चतुरो दिवसानहम् ॥ १११
यत्र क्वापि दिनेष्वेषु गच्छन्ती चास्मि न त्वया । प्रष्टव्या न निषेद्धव्या कारणं ह्यत्र विद्यते ॥ ११२
एवं तामुक्तसमयां स राजा दिव्यकन्यकाम् । तथेत्युक्त्वैव गान्धर्वविधिना परिणीतवान् ॥ ११३
भेजे ततश्च संभोगसुखं तत्र तया सह । यथाभूदन्य एवास्या मान्मथो मण्डनक्रमः ॥ ११४
केशेषु स्रस्तमाल्येषु कचग्रहनखावली । बिम्बाधरेऽथ निष्पीतनीरागे दशनक्षतिः ॥ ११५
कुचयोः करजश्रेणिर्भिन्नमाणिक्यमालयोः । लुप्ताङ्गरागेष्वङ्गेषु गाढालिङ्गनरागिता ॥ ११६
इति तद्दिव्यसंभोगसुखावस्थितमत्र तम् । सा मृगाङ्कवती भार्या भूपं प्राहेदमेकदा ॥ ११७
त्वमिहैव प्रतीक्षेथा कार्यार्थं क्वापि याम्यहम् । अद्य सैषा हि संप्राप्ता मम कृष्णचतुर्दशी ॥ ११८
इहस्थस्त्वार्यपुत्रामुं मा स्म गाः स्फाटिकं गृहम् । मात्र वाप्यां निपतितो भूलोकं त्वं गमिष्यसि ॥ ११९
इत्युक्त्वा सा तमामन्त्र्य ययौ तस्मात्पुराद्बहिः । राजापि प्राप्तखड्गस्तां छन्नो जिज्ञासुरन्वगात् ॥ १२०
तत्रापश्यत्तमःश्यामं व्यात्तवक्त्रबिलं च सः । साकारमिव पातालमायान्तं राक्षसं नृपः ॥ १२१
स राक्षसो निपत्यैव मुक्तघोररवस्तदा । तां मृगाङ्कवतीं वक्त्रे निक्षिप्यैव निगीर्णवान् ॥ १२२
तद्दृष्ट्वैवातिकोपेन सहसा स ज्वलन्निव । निर्मोकमुक्तभुजगश्यामलेन महासिना ॥ १२३
कोषाकृष्टेन धावित्वा राजसिंहोऽभिधावतः । चिच्छेद रक्षसस्तस्य संदष्टौष्ठपुटं शिरः ॥ १२४
रक्षःकबन्धवान्तेन राज्ञस्तस्यास्रवारिणा । क्रोधजोऽथ शशामाग्निर्न तु कान्तावियोगजः ॥ १२५
ततो मोहनिशान्धेऽस्मिन्विनष्टगतिके नृपे । अकस्मान्मेघमलिनस्याङ्गं भित्त्वैव रक्षसः ॥ १२६
तस्योद्द्योतितदिक्चक्रा चन्द्रमूर्तिरिवामला । सा मृगाङ्कवती जीवन्त्यक्षताङ्गी विनिर्ययौ ॥ १२७
तां तथा संकटोत्तीर्णां दृष्ट्वा कान्तां ससंभ्रमम् । एह्येहीति वदन्राजा प्रधाव्यैवालिलिङ्ग सः ॥ १२८
प्रिये किमेतत्स्वप्नोऽयमुत मायेति तेन सा । पृष्टा नृपेण संस्मृत्य विद्याधर्येवमब्रवीत् ॥ १२९
शृण्वार्यपुत्र न स्वप्नो न मायेयमयं पुनः । विद्याधरेन्द्रात्स्वपितुः शापोऽभूदीदृशो मम ॥ १३०
बहुपुत्रोऽपि स हि मे पिता पूर्वं वसन्निह । मया विनातिवात्सल्यान्नाहारमकरोत्सदा ॥ १३१
अहं च सर्वदा शर्वपूजासक्तेह निर्जने । चतुर्दश्योरथाष्टम्योरागच्छं पक्षयोर्द्वयोः ॥ १३२
एकदा च चतुर्दश्यामिहागत्य रसान्मम । चिरं गौरीं समर्चन्त्या दैवादवसितं दिनम् ॥ १३३
तदहर्मत्प्रतीक्षः सन्क्षुधितोऽपि स मत्पिता । नाभुङ्क्त नापिबत्किंचिदासीत्क्रुद्धस्तु मां प्रति ॥ १३४
ततो रात्रावुपेतां मां सापराधामधोमुखीम् । भवितव्यबलग्रस्तमत्स्नेहः शपति स्म सः ॥ १३५
यथा त्वदवलेपेन ग्रस्तोऽद्याहमयं क्षुधा । मासि मासि तथाष्टम्योश्चतुर्दश्योश्च केवलम् ॥ १३६
हरार्चनरसाद्यान्तीमत्रैव त्वां बहिः पुरे । नाम्ना कृतान्तसंत्रासो राक्षसो निगरिष्यति ॥ १३७
भित्त्वा भित्त्वास्य हृदयं जीवन्ती च निरेष्यसि । न स्मरिष्यसि शापं च न तां निगरणव्यथाम् ॥ १३८
स्थास्यस्येकाकिनी चात्रेत्युक्तशापवचाः शनैः । सोऽनुनीतो मया ध्यात्वा शापान्तं मेऽब्रवीत्पिता ॥ १३९
भर्ता भूत्वा यशःकेतुनामाङ्गनृपतिर्यदा । राक्षसेन निगीर्णां त्वां दृष्ट्वा तं निहनिष्यति ॥ १४०
तदा त्वं मोक्ष्यसे शापाद्धृदयात्तस्य निर्गता । संस्मरिष्यसि शापादि विद्याः सर्वास्तथा निजाः ॥ १४१
इत्यादिश्य स शापान्तं त्यक्त्वा मामेककामिह । निषधाद्रिं गतस्तातो भूलोकं सपरिच्छदः ॥ १४२
अहं तथा चरन्ती च शापमोहादिहावसम् । क्षीणश्चैष स शापो मे जाता सर्वत्र च स्मृतिः ॥ १४३
तत्तातपार्श्वमधुना निषधाद्रिं व्रजाम्यहम् । शापान्ते स्वां गतिं याम इत्येष समयो हि नः ॥ १४४
त्वमिहास्स्व स्वराष्ट्रं वा व्रज स्वातन्त्र्यमत्र ते । एवं तयोक्ते स नृपो दुःखितोऽर्थयते स्म ताम् ॥ १४५
सप्ताहानि न गन्तव्यं प्रसीद सुमुखि त्वया । क्षिपावस्तावदौत्सुक्यमुद्याने क्रीडनैरिह ॥ १४६

त्वं गच्छाथ पितुः स्थानं यास्याम्यहमपि स्वकम् । एतत्तद्वचनं मुग्धा तथेत्यङ्गीचकार सा ॥ १४७
ततोऽत्र रेमे स तया सहोद्यानेषु कान्तया । सजलोत्पलनेत्रासु वापीषु षडहं नृपः ॥ १४८
मा स्म यातं विहायास्मानिति पूत्कुर्वतीष्विव । उत्क्षिप्तवीचिहस्तासु हंससारसनिःस्वनैः ॥ १४९
सप्तमेऽह्नि स युक्त्या तां प्रियां तत्रानयद्गृहे । भूलोकप्रापिणी यत्र सा यन्त्रद्वारवापिका ॥ १५०
तत्र कण्ठे गृहीत्वा तां तस्यां वाप्यां निपत्य सः । उत्तस्थौ स्वपुरोद्यानवापीमध्यात्तया सह ॥ १५१
तत्र कान्तासखं प्राप्तं तं दृष्ट्वोद्यानपालकाः । हृष्टास्तन्मन्त्रिणे गत्वा जगदुर्दीर्घदर्शिने ॥ १५२
सोऽप्येत्य पादपतितस्तमानीतेप्सिताङ्गनम् । दृष्ट्वा प्रावेशयन्मन्त्री सपौरोऽभ्यन्तरं नृपम् ॥ १५३
अहो सैषा कथं प्राप्ता राज्ञा दिव्याङ्गनामुना । व्योम्नीव विद्युदिव या क्षणदृश्या मयेक्षिता ॥ १५४
यद्यस्य लिखितं धात्रा ललाटाक्षरपङ्क्तिषु । तदवश्यमसंभाव्यमपि तस्योपतिष्ठते ॥ १५५
इत्यत्र मन्त्रिमुख्येऽस्मिन्ध्यायत्यन्यजनेऽपि च । दिव्यस्त्रीप्राप्तिसाश्चर्यं राजागमनसोत्सवे ॥ १५६
सा मृगाङ्कवती दृष्ट्वा तं स्वदेशागतं नृपम् । इयेष पूर्णसप्ताहा यातुं वैद्याधरीं गतिम् ॥ १५७
नाविरासीच्च विद्यास्याः स्मृताप्युत्पतनी तदा । ततः सा मुषितेवात्र विषादमगमत्परम् ॥ १५८
किमकस्माद्विषण्णेव दृश्यसे वद मे प्रिये । इत्युक्ता तेन राज्ञा सा विद्याधर्येवमब्रवीत् ॥ १५९
स्थिताहं शापमुक्तापि त्वत्स्नेहाद्यदियच्चिरम् । तेन विद्या मम भ्रष्टा नष्टा दिव्या च सा गतिः ॥ १६०
तच्छ्रुत्वा हन्त सिद्धेयं मम विद्याधरीति सः । राजा ततो यशःकेतुः पूर्णं चक्रे महोत्सवम् ॥ १६१
तद्दृष्ट्वा दीर्घदर्शी स मन्त्री गत्वा गृहं निशि । शयनीयगतोऽकस्माद्धृत्स्फोटेन व्यपद्यत ॥ १६२
ततोऽनुभूय तच्छोकं धृतराज्यभरः स्वयम् । यशःकेतुश्चिरं तस्थौ स मृगाङ्कवतीयुतः ॥ १६३

इत्येतां कथयित्वा मार्गे तस्मै कथां स वेतालः ।
अवदत्पुनस्त्रिविक्रमसेनं नृपतिं तमंसगतः ॥ १६४
तद्ब्रूहि भूपते ते संपन्ने स्वामिनस्तथाभ्युदये ।
हृदयं सपदि स्फुटितं तस्य महामन्त्रिणः किमिति ॥ १६५
दिव्यस्त्री न मया किं प्राप्तेति शुचास्फुटद्धृदयम् ।
किं वा राज्यमभीप्सो राजागमजेन दुःखेन ॥ १६६
एतच्च यदि न वक्ष्यसि मह्यं जानन्नपीह तद्राजन् ।
धर्मश्च तव विनङ्क्ष्यति यास्यति दलशश्च झटिति शिरः ॥ १६७
श्रुत्वेति तु त्रिविक्रमसेनो राजा जगाद वेतालम् ।
नैतत्तस्मिन्द्वयमपि शुभचरिते युज्यते हि मन्त्रिवरे ॥ १६८
किं तु स्त्रीमात्ररसादुपेक्षितं येन भूभुजा राज्यम् ।
तस्याधुना तु दिव्यस्त्रीरक्तस्यात्र का वार्ता ॥ १६९
तन्मे कष्टेऽपि कृते प्रत्युत दोषो बताधिकीभूतः ।
इति तस्य विभावयतो हृदयं तन्मन्त्रिणः स्फुटितम् ॥ १७०

इत्युक्ते नरपतिना पुनः स मायी वेतालो निजपदमेव तज्जगाम ।
राजापि प्रसभमवाप्तुमन्वधावद्भूयोऽपि द्रुतमथ तं स धीरचेताः ॥ १७१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके एकोनविंशस्तरङ्गः ।

विंशस्तरङ्गः ।

( त्रयोदशो वेतालः )

अथ गत्वा पुनः प्राप्य शिंशपातस्ततो नृपः । स त्रिविक्रमसेनस्तं स्कन्धे वेतालमाददे ॥ १
आयान्तं च स वेतालो भूयस्तं नृपमब्रवीत् । राजञ्शृणु कथामेकां संक्षिप्तां वर्णयामि ते ॥ २

अस्ति वाराणसी नाम पुरी हरनिवासभूः । देवस्वामीति तत्रासीतिन्मान्यो नरपतेर्द्विजः ॥ ३
महाधनस्य तस्यैको हरिस्वामीत्यभूत्सुतः । तस्य भार्या च लावण्यवतीत्यत्युत्तमाभवत् ॥ ४
तिलोत्तमादिनाकस्त्रीनिर्माणे प्राप्तकौशलः । अनर्घरूपलावण्यां मन्ये यां निर्ममे विधिः ॥ ५
तया स कान्तया साकं हरिस्वामी कदाचन । रतिश्रान्तो ययौ निद्रां हर्म्ये चन्द्रांशुशीतले ॥ ६
तत्कालं तेन मार्गेण कामचारी विहायसा । आगान्मदनवेगाख्यो विद्याधरकुमारकः ॥ ७
स तत्र लावण्यवतीं पत्युः पार्श्वे ददर्श ताम् । सुप्तां रतिक्लमस्रस्तवस्त्रव्यक्ताङ्गसौष्ठवाम् ॥ ८
तद्रूपहृतचित्तः सन्मदनान्धः स तत्क्षणम् । सुप्तामेव निपत्यैतां गृहीत्वा नभसा ययौ ॥ ९
क्षणात्प्रबुद्धोऽथ युवा हरिस्वामी स तत्पतिः । प्राणेश्वरीमपश्यंस्तामुदतिष्ठत्ससंभ्रमः ॥ १०
अहो किमेतत्क गता कुपिता सा नु किं मयि । छन्ना जिज्ञासितुं किं मे चित्तं परिहसत्युत ॥ ११
इत्यनेकविकल्पौघव्याकुलस्तामितस्ततः । हर्म्यप्रासादवलभीष्वन्विष्यन्सोऽभ्रमन्निशि ॥ १२
आगृहोद्यानतश्चिन्वन्नयत्न प्राप कुतोऽपि ताम् । तत्स शोकाग्निसंतप्तो विललापाश्रुगद्गदम् ॥ १३
हा चन्द्रबिम्बवदने हा ज्योत्स्नागौरि हा प्रिये । रात्र्या तुल्यगुणद्वेषात्किं नु सोढासि नानया ॥ १४
त्वया कान्त्या जितो बिभ्यदिव चन्दनशीतलैः । करैरसुखयद्यो मां सोऽयमिन्दुस्त्वया विना ॥ १५
लब्धान्तर इवेदानीं तैरेव तुदति प्रिये । प्रज्वलद्भिरिवाङ्गारैर्विषदिग्धैरिवाशुगैः ॥ १६
इत्यादि क्रन्दतस्तस्य सा हरिस्वामिनस्तदा । कृच्छ्राद्व्यतीयाय निशा न पुनर्विरहव्यथा ॥ १७
प्रातर्बिभेद विश्वस्य करैः संतमसं रविः । भेत्तुं न चक्षमे तस्य मोहान्धतमसं पुनः ॥ १८
विलब्ध इव चक्राह्वैस्तस्य तीर्णनिशैस्तदा । भेजे शतगुणीभावं करुणाक्रन्दितध्वनिः ॥ १९
स्वजनैः सान्त्व्यमानोऽपि वियोगानलदीपितः । न च लेभे द्विजयुवा धृतिं तां प्रेयसीं विना ॥ २०
इह स्थितमिह स्नातं कृतमत्र प्रसाधनम् । विहृतं च तयात्रेति ययौ त्वित इतो रुदन् ॥ २१
मृता तावन्न सा तत्किमात्मैवं हन्यते त्वया । अवश्यं तामवाप्नोसि जीवञ्जातु कुतश्चन ॥ २२
तद्धैर्यमवलम्बस्व तां गवेषय च प्रियाम् । अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः ॥ २३
इति बन्धुसुहृद्वाक्यैर्बोधितः सोऽथ कृच्छ्रतः । दिनैः कैश्चिद्धरिस्वामी बबन्ध धृतिमास्थया ॥ २४
अचिन्तयच्च सर्वस्वं कृत्वा ब्राह्मणसादहम् । भ्रमामि तावत्तीर्थानि क्षपयाम्यघसंचयम् ॥ २५
पापक्षयाद्धि तां जातु प्रियां भ्राम्यन्नवाप्नुयाम् । इत्यालोच्य यथावस्थं स्नानाद्युत्थाय सोऽकरोत् ॥ २६
अन्येद्युश्च विचित्रान्नपानं सत्रे द्विजन्मनाम् । चकारावारितं किं च ददौ धनमशेषतः ॥ २७
ब्राह्मण्यमात्रवित्तस्य निर्गत्यैव स्वदेशतः । प्रियाप्राप्तीच्छया सोऽथ तीर्थानि भ्रमितुं ययौ ॥ २८
भ्राम्यतश्च जगामास्य भीमो ग्रीष्मर्तुकेसरी । प्रचण्डादित्यवदनो दीप्ततद्रश्मिकेसरः ॥ २९
प्रियाविरहसंतप्तपान्थनिःश्वासमारुतैः । न्यस्तोष्माण इवात्युष्णा वान्ति स्म च समीरणाः ॥ ३०
शुष्यद्विदीर्णपङ्काश्च हृदयैः स्फुटितैरिव । जलाशया ददृशिरे घर्मलुप्ताम्बुसंपदः ॥ ३१
चीरीचीत्कारमुखरास्तापम्लानदलाधराः । मधुश्रीविरहान्मार्गेष्वरुदन्निव पादपाः ॥ ३२
तस्मिन्कालेऽर्कतापेन वियोगेन क्षुधा तृषा । नित्याध्वना च स क्लान्तो विरूक्षक्षामधूसरः ॥ ३३
भोजनार्थी हरिस्वामी प्राप ग्रामं क्वचिद्भ्रमन् । पद्मनाभाभिधानस्य गृहं विप्रस्य सत्रिणः ॥ ३४
तत्र दृष्ट्वा स भुञ्जानान्विप्रानभ्यन्तरे बहून् । द्वारशाखां समालम्ब्य तस्थौ निःशब्दनिश्चलः ॥ ३५
तथास्थितं तमालोक्य सत्रिणस्तस्य गेहिनी । पद्मनाभस्य संजातदया साध्वी व्यचिन्तयत् ॥ ३६
अहो क्षुन्नाम गुर्व्येषा न कुर्यात्कस्य लाघवम् । यदेवमयमन्नार्थी कोऽप्यास्ते द्वार्यधोमुखः ॥ ३७
दूराध्वाभ्यागतः स्नातस्तावत्क्षीणेन्द्रियः क्षुधा । तदेष चान्नदानस्य पात्रमित्यवधार्य सा ॥ ३८
परमान्नभृतं साध्वी तस्मै सघृतशर्करम् । पात्रमुत्क्षिप्य पाणिभ्यामानीय प्रश्रिता ददौ ॥ ३९
जगाद चैतं भुङ्क्ष्वैतद्गत्वा वापीतटे क्वचित् । इदं स्थानं समुच्छिष्टं भुञ्जानैर्ब्राह्मणैर्वृतम् ॥ ४०
तथेति सोऽन्नपात्रं तद्गृहीत्वा नातिदूरतः । गत्वा स्थापितवान्वाप्यास्तटे वटतरोरधः ॥ ४१

प्रक्षाल्य पाणिपादं च वाप्यामाचम्य चात्र सः । यावद्भक्षयितुं तुष्टः परमान्नमुपैति तत् ॥ ४२
तावद्गृहीत्वा कृष्णाहिं चञ्च्वा पादयुगेन च । श्येनः कुतश्चिदागत्य तरौ तस्मिन्नुपाविशत् ॥ ४३
तेन तस्योह्यमानस्य सर्पस्याक्रम्य पक्षिणा । उत्क्रान्तजीवितस्यास्याद्विषलाला विनिर्ययौ ॥ ४४
सा तत्राधःस्थिते तस्मिन्नन्नपात्रेऽपतत्तदा । तच्चादृष्ट्वा हरिस्वामी स एत्यान्नमभुङ्क्त तत् ॥ ४५
क्षुधार्तस्य तदा तस्य मृष्टान्नं तत्क्षणेन तत् । कृत्स्नं भुक्तवतस्तीव्रा प्रोदभूद्विषवेदना ॥ ४६
अहो विधौ विपर्यस्ते न विपर्यस्यतीह किम् । यद्विषीभूतमन्नं मे सक्षीरघृतशर्करम् ॥ ४७
इति जल्पन्विषार्तः स हरिस्वामी परिस्खलन् । गत्वा तां सत्रिणस्तस्य विप्रस्योवाच गेहिनीम् ॥ ४८
त्वद्दत्ताद्विषमन्नान्मे जातं तद्विषमत्रिणम् । कंचिन्ममानय क्षिप्रं ब्रह्महत्यान्यथास्ति ते ॥ ४९
इत्युक्त्वैव स तां साध्वीं किमेतदिति विह्वलाम् । हरिस्वामी परावृत्तनेत्रः प्राणैर्व्ययुज्यत ॥ ५०
ततः सा तेन निर्दोषाप्यातिथेय्यपि सत्रिणा । भार्या निष्कासिता गेहान्मिथ्यातिथिवधक्रुधा ॥ ५१
साप्युत्पन्नमृषावद्या सुशुभादपि कर्मणः । जातावमाना तपसे साध्वी तीर्थमशिश्रियत् ॥ ५२
कस्य विप्रवधः सोऽस्तु सर्पश्येनान्नदेष्विति । तदाभूद्धर्मराजाग्रे वादो नासीत्तु निर्णयः ॥ ५३
तत्त्रिविक्रमसेन त्वं राजन्ब्रूहि ममाधुना । कस्य सा ब्रह्महत्येति पूर्वः शापः स तेऽन्यथा ॥ ५४
इति वेतालतः श्रुत्वा राजा शापनियन्त्रितः । स त्रिविक्रमसेनस्तं मुक्तमौनोऽब्रवीदिदम् ॥ ५५
तस्य तत्पातकं तावत्सर्पस्य यदि वास्य कः । विवशस्यापराधोऽस्ति भक्ष्यमाणस्य शत्रुणा ॥ ५६
अथ श्येनस्य तेनापि किं दुष्टं क्षुधितात्मना । अकस्मात्प्राप्तमानीय भक्ष्यं भक्षयता निजम् ॥ ५७
दंपत्योरन्नदात्रोर्वा तयोरेकस्य वा कुतः । अभाव्यदोषौ धर्मैकप्रवृत्तौ तावुभौ यतः ॥ ५८
तदहं तस्य मन्ये सा ब्रह्महत्या जडात्मनः । अविचार्यैव यो ब्रूयादेषामेकतमस्य ताम् ॥ ५९

इत्युक्तवतोऽस्य नृपस्यांसाद्भूयोऽप्यगात्स वेतालः ।
निजपदमेव नृपोऽपि स पुनरपि धीरस्तमन्वगादेव ॥ ६०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके विंशस्तरङ्गः ।

## एकविंशस्तरङ्गः ।

### ( चतुर्दशो वेतालः । )

स त्रिविक्रमसेनोऽथ गत्वा तं शिंशपातरोः । भूयोऽप्यासाद्य वेतालं स्कन्धे जग्राह भूपतिः ॥ १
प्रस्थितं च तमुर्वीशं स वेतालोऽभ्यधात्पुनः । राजञ्श्रान्तोऽसि तच्चित्रां कथामाख्यामि ते शृणु ॥ २
अस्त्ययोध्येति नगरी राजधानी बभूव या । रक्षःकुलकृतान्तस्य रामरूपस्य शार्ङ्गिणः ॥ ३
तस्यां राजाभवद्वीरकेतुर्नाम ररक्ष यः । क्षोणीमिमां महाबाहुः प्राकारो नगरीमिव ॥ ४
तस्मिन्महीपतावस्यां पुर्यामेको महावणिक् । रत्नदत्ताभिधानोऽभूद्वणिङ्निवहनायकः ॥ ५
नन्दयन्त्यभिधानायां पत्न्यां तस्योदपद्यत । सुता रत्नवती नाम देवताराधनार्जिता ॥ ६
सा च तस्य पितुर्वेश्मन्यवर्धत मनस्विनी । रूपलावण्यविनयैः सहैव सहजैर्गुणैः ॥ ७
यौवनस्थां च तां तस्माद्रत्नदत्तान्न केवलम् । महान्तो वणिजो यावद्राजानोऽपि ययाचिरे ॥ ८
सा तु पुंद्वेषिणी नैच्छद्भर्तारमपि वासवम् । प्राणत्यागोद्यता सेहे न विवाहकथामपि ॥ ९
तेन तस्याः पिता तूष्णीं तस्थौ वात्सल्यदुःस्थितः । स च प्रवादोऽयोध्यायां तस्यां सर्वत्र पप्रथे ॥ १०
अत्रान्तरे सदा चौरैर्मुष्यमाणाः किलाखिलाः । संभूयात्र नृपं पौरा वीरकेतुं व्यजिज्ञपन् ॥ ११
नित्यं मुष्यामहे चौरै रात्रौ रात्राविह प्रभो । लक्ष्यन्ते ते च नास्माभिस्तद्देवो वेत्तु यत्परम् ॥ १२
इति पौरैः स विज्ञप्तो राजा तामभितः पुरीम् । तस्करान्वेषणे छन्नानादिशद्रात्रिरक्षकान् ॥ १३
तेऽपि प्रापुर्नयच्चौरान्पुरी सामुष्यतैव च । तदैकदा स्वयं राजा निशि स्वैरं विनिर्ययौ ॥ १४
एकाकी चात्तशस्त्रोऽत्र भ्रमन्सोऽपश्यदेकतः । एकं प्राकारपृष्ठेन यान्तं कमपि पूरुषम् ॥ १५

निःशब्दपदविन्यासविचित्रगतिकौशलम् । सशङ्कलोलनयनं पश्यन्तं पृष्ठतो मुहुः ॥ १६
अयं स नूनं चौरो मे मुष्णात्येकचरः पुरीम् । इति मत्वैव निकटं स तस्योपययौ नृपः ॥ १७
ततः स चौरो दृष्ट्वा तं नृपं कोऽसीत्यभाषत । चौरोऽहमिति राजा तं चौरं प्रत्यब्रवीत्स तम् ॥ १८
सोऽथ चौरोऽभ्यधाद्धृष्टा तर्हि तुल्योऽसि मे सुहृत् । तदेहि मद्गृहं तावन्मित्राचारं करोमि ते ॥ १९
तच्छ्रुत्वा स तथेत्युक्त्वा तेनैव सह भूपतिः । ययौ वनान्तर्धरणीखातान्तर्वर्ति तद्गृहम् ॥ २०
अशेषभोगभोगाढ्यं भास्वद्दीपप्रकाशितम् । नवीनमिव पातालं बलिराजानधिष्ठितम् ॥ २१
तत्र प्रविष्टे तस्मिंश्च कृतासनपरिग्रहे । राज्ञि सोऽभ्यन्तरगृहं प्रविवेशाथ तस्करः ॥ २२
तत्क्षणं च तमेत्यैका दासी तत्रावदन्नृपम् । महाभाग प्रविष्टस्त्वमिह मृत्युमुखे कथम् ॥ २३
एकचौरो ह्यसौ पापं निर्गत्यातः करिष्यति । ध्रुवं विश्वासघातीति तदितस्त्वरितं व्रज ॥ २४
इत्युक्तः स तया राजा निर्गत्यैव ततो द्रुतम् । गत्वा स्वराजधानीं च निशि सैन्यान्यसज्जयत् ॥ २५
संनद्धसैन्यश्चागत्य दस्योस्तस्य रुरोध तत् । भूगृहद्वारविवरं रसत्तूर्याकुलैर्बलैः ॥ २६
ततो रुद्धे गृहे वृत्तं प्रतिभेदमवेत्य सः । मरणे निश्चितश्चौरः शूरो युद्धाय निर्ययौ ॥ २७
निर्गतश्च रणे चक्रे पराक्रमममानुषम् । करांश्चकर्त करिणां जङ्घाश्चिच्छेद वाजिनाम् ॥ २८
जहार च शिरांस्येको भटानां खड्गचर्मभृत् । ततस्तं क्षपितानीकमभ्यधावत्स्वयं नृपः ॥ २९
स तस्य खड्गविद्याज्ञो राजा करणयुक्तितः । हस्ताज्जहार निस्त्रिंशमथ तां क्षुरिकामपि ॥ ३०
अशस्त्रं मुक्तशस्त्रोऽथ बाहुयुद्धेन तं नृपः । चौरं निहत्य धरणौ सजीवग्राहमग्रहीत् ॥ ३१
निनाय तं च संयम्य सधनं नगरीं निजाम् । प्रातश्चाज्ञापयत्तस्य शूलारोपणनिग्रहम् ॥ ३२
नीयमानं च तं वध्यभूमिं चौरं सडिण्डिमम् । ददर्श सा रत्नवती वणिक्कन्यात्र हर्म्यतः ॥ ३३
व्रणितं धूलिलिप्ताङ्गमप्येतं मारमोहिता । दृष्ट्वैव गत्वा पितरं रत्नदत्तमुवाच सा ॥ ३४
वधाय नीयते योऽयमेष भर्ता वृतो मया । तन्नृपाद्रक्ष तातैनं न चेदेनमनु म्रिये ॥ ३५
तच्छ्रुत्वा तां पितावादीत्किमिदं पुत्रि भाषसे । या त्वं नेच्छसि भूपालमपि भर्तॄनभीप्सतः ॥ ३६[1]
सा पापं तस्करमिमं वाञ्छस्यापद्गतं कथम् । इत्यादि पित्रा प्रोक्तापि निश्चयान्न चचाल सा ॥ ३७
ततः स तत्पिता गत्वा तस्य चौरस्य सत्वरम् । सर्वस्वेनापि राजानं वधान्मोक्षमयाचत ॥ ३८
राजा तु तं न तत्याज हेमकोटिशतैरपि । स्वशरीरपणानीतं चौरं सर्वापहारिणम् ॥ ३९
ततः पितर्युपायाते विमुखे सा वणिक्सुता । अनुमर्तुं कृतस्नाना वार्यमाणापि बन्धुभिः ॥ ४०
आरुह्य शिबिकां तस्य दस्योर्वध्यभुवं ययौ । अन्वीयमाना रुदता पित्रा मात्रा जनेन च ॥ ४१
तावच्च वधकैः सोऽत्र चौरः शूलेऽधिरोपितः । तां ददर्श गलत्प्राणस्तथा सज्ञातिमागताम् ॥ ४२
जनाच्छ्रुत्वा च वृत्तान्तमश्रु मुक्त्वा क्षणं ततः । हसन्स चौरः किमपि प्राणाञ्शूलगतो जहौ ॥ ४३
ततोऽवतारितं शूलात्सा तच्चौरकलेवरम् । आदाय चारुरोहात्र चितां साध्वी वणिक्सुता ॥ ४४
तत्क्षणं च श्मशानेऽत्र भैरवः कृतसंनिधिः । अदृश्यो भगवानेवं तामुवाचान्तरिक्षतः ॥ ४५
अस्मिन्स्वयंवरपतावेवं भक्त्या तवानया । तुष्टोऽस्मि तद्वरं मत्तः प्रार्थयस्व पतिव्रते ॥ ४६
तच्छ्रुत्वैव वरं देवादेवं वव्रे प्रणम्य सा । नाथ पुत्रशतं भूयादपुत्रस्यापि मत्पितुः ॥ ४७
येनानन्यसुतो नैष प्राणाञ्जह्यान्मया विना । इति प्रोक्तवतीमेनां साध्वीं देवोऽब्रवीत्पुनः ॥ ४८
पितुः पुत्रशतं तेऽस्तु वरमन्यं वृणीष्व च । त्वादृशी दृढसत्त्वा हि नैतावन्मात्रमर्हति ॥ ४९
तदाकर्ण्याथ सावादीत्प्रसन्नो मयि चेत्प्रभुः । तज्जीवत्वेष भर्ता मे धार्मिकश्च सदास्त्विति ॥ ५०
एवमस्त्वक्षतो जीवन्नुत्तिष्ठत्वेष ते पतिः । धार्मिकश्चास्तु राजास्य वीरकेतुश्च तुष्यतु ॥ ५१
इत्युक्तवत्यनालक्ष्यमूर्तौ शर्वे नभःस्थिते । उत्तस्थावक्षताङ्गोऽत्र चौरो जीवंस्तदैव सः ॥ ५२
ततो विस्मितहृष्टः सन्रत्नदत्तः सुतां वणिक् । आदाय तां रत्नवतीं चौरं जामातरं च तम् ॥ ५३

---

१. 'या त्वं पूर्वं गुणैर्युक्तान्वरान्पञ्चशरोपमान् । नैषीः साद्य कथं चौरपतिं निन्दितमिच्छसि ॥' इति पुस्तकान्तरपाठः.

प्रहृष्टैर्बान्धवैः साकं प्रविश्य निजमन्दिरम्। लब्धपुत्रवरश्चक्रे स्वानन्दोचितमुत्सवम् ॥ ५४

ज्ञातवृत्तान्ततुष्टश्च तदैवानाय्य तं नृपः। एकवीरं वीरकेतुश्चौरं सेनापतिं व्यधात् ॥ ५५

चौर्यान्निवृत्तोऽथ स तां परिणीय वणिक्सुताम्। एकवीरः सुखं तस्थौ मार्गस्थो राजसंमतः ॥ ५६

इति कथयित्वा स कथां वेतालो दत्तपूर्वशापभयम्।
अंसस्थितस्त्रिविक्रमसेनं पप्रच्छ तं क्षितिपम् ॥ ५७

राजन्ब्रूहि सपितृकामुपस्थितां तां वणिक्सुतां दृष्ट्वा।
चौरेण शूलपृष्ठे रुदितं हसितं च किं तेन ॥ ५८

अथ राजा प्रत्यवदद्रुदितं चौरेण दुःखतस्तेन।
नास्यानृण्यमकारणबन्धोर्यातोऽस्मि वणिज इति ॥ ५९

आश्चर्यतश्च हसितं किमियं कन्या नृपान्वरान्हित्वा।
मय्यस्मिन्ननुरक्ता स्त्रीचित्तमहो विचित्रमिति ॥ ६०

इत्युक्तवाक्यस्य महीभृतोऽसान्मायी स्वशक्त्यैव तदा जगाम।
स्वं धाम वेतालवरः स राजाप्येतं पुनः पूर्ववदन्वगच्छत् ॥ ६१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके एकविंशस्तरङ्गः।

---

द्वाविंशस्तरङ्गः।

(पञ्चदशो वेतालः।)

ततो गत्वा पुनः प्राप्य वेतालं शिंशपातरोः। स त्रिविक्रमसेनस्तमादायोदचलत्पुनः ॥ १

आयान्तं तं च राजानं स वेतालोऽसपृष्ठगः। जगाद भूयोऽप्येतां ते राजन्वच्मि कथां शृणु ॥ २

अभून्नेपालविषये नाम्ना शिवपुरं पुरम्। यथार्थनामा तत्रासीद्यशःकेतुः पुरा नृपः ॥ ३

स मन्त्रिणि न्यस्य भरं प्रज्ञासागरसंज्ञके। चन्द्रप्रभाख्यया देव्या सार्धं भोगानसेवत ॥ ४

कालेन तस्यां देव्यां च तस्याजायत कन्यका। राज्ञः शशिप्रभा नाम जगन्नेत्रशशिप्रभा ॥ ५

क्रमेण यौवनस्था सा मधुमासे कदाचन। ययौ यात्रोत्सवं द्रष्टुमुद्यानं सपरिच्छदा ॥ ६

तत्रैकदेशेऽपश्यत्तां कुसुमावचयोद्यताम्। उत्क्षिप्तबाहुलतिकालक्षितैकपयोधराम् ॥ ७

प्रसूनवृन्तविगलत्संदंशकरशोभिनीम्। आढ्यपुत्रो मनःस्वामी नाम यात्रागतो द्विजः ॥ ८

स तया दृष्टया सद्यो हृतस्य मनसो युवा। मनःस्वाम्यपि नैवाभूत्स्वामी मदनमोहितः ॥ ९

मार्गणानां कृते किंस्विद्रतिरेषा मनोभुवः। वसन्तसंभृतानीह पुष्पाण्युच्चिनुते स्वयम् ॥ १०

किं वार्चयितुकामेयं माधवं वनदेवता। इति संचिन्तयन्तं तं साप्यपश्यन्नृपात्मजा ॥ ११

दृष्टमात्रे च सा तस्मिन्साङ्गे नव इव स्मरे। न पुष्पाणि न चाङ्गानि सोत्का नात्मानमस्मरत् ॥ १२

इत्यन्योन्यनवप्रेमसरसौ यावदत्र तौ। तिष्ठतस्तावदुदभूद्धाहाहेति महारवः ॥ १३

किमेतदिति चोत्क्षिप्तकंधरं पश्यतोस्तयोः। आयादत्रोपलब्धान्यगजगन्धोत्थया रुषा ॥ १४

भग्नालानो विनिर्गत्य मत्तो मार्गद्रुमान्रुजन्। पतिताधोरणो धावँल्लम्बमानाङ्कुशः करी ॥ १५

ततः परिजने त्रस्तविद्रुते तां ससंभ्रमम्। राजपुत्रीं प्रधाव्यैव दोर्भ्यामुत्क्षिप्य चैककाम् ॥ १६

अङ्गैः किंचित्कृताश्लेषां भयप्रेमत्रपाकुलाम्। निनाय स मनःस्वामी सुदूरं गजगोचरात् ॥ १७

अथागतैः परिजनैः स्तुवद्भिस्तं द्विजोत्तमम्। मुहुर्विवृत्य पश्यन्ती सा निन्ये निजमन्दिरम् ॥ १८

तत्र तस्थौ तमेवार्ता स्मरन्ती प्राणदायिनम्। स्मराग्निपुटपाकेन पच्यमाना दिवानिशम् ॥ १९

सोऽप्युद्यानान्मनःस्वामी तदा तस्मादनुव्रजन्। स्वान्तःपुरप्रविष्टां तां दृष्ट्वा सोत्को व्यचिन्तयत् ॥ २०

नैतां विनाधुना स्थातुं जीवितुं वाहमुत्सहे। तन्मे श्रीमूलदेवोऽत्र धूर्तः सिद्धो गुरुर्गतिः ॥ २१

इति संचिन्त्य कथमप्यस्मिन्नवसिते दिने। प्रातर्ययौ गुरोस्तस्य मूलदेवस्य सोऽन्तिकम् ॥ २२

ददर्श तं च मित्रेण शशिना नित्यसंगतम् । सिद्धमायाद्भुतपथं सशरीरमिवाम्बरम् ॥ २३
न्यवेदयच्च तत्तस्मै प्रणम्य स्वमनीषितम् । सोऽपि साधयितुं तस्य प्रतिपेदे विहस्य तत् ॥ २४
ततः स योगगुलिकां क्षिप्त्वा धूर्तपतिर्मुखे । मूलदेवो व्यधाद्वृद्धब्राह्मणाकृतिमात्मनः ॥ २५
द्वितीयां गुलिकां दत्त्वा मुखक्षेप्यां चकार च । सुकान्तकन्यकारूपं तं मनःस्वामिनं द्विजम् ॥ २६
तद्रूपं तं समादाय गत्वा धूर्ताधिपोऽथ सः । तत्पियाजनकं भूपमास्थाने तं व्यजिज्ञपत् ॥ २७
राजन्नेकोऽस्ति मे पुत्रः कन्या दूराच्च तत्कृते । मयैषा याचितानीता स च क्वापि गतोऽधुना ॥ २८
तमन्वेष्टुमहं यामि तदेषा रक्ष्यतां त्वया । आनयामि सुतं यावत्त्वं हि विश्वस्य रक्षिता ॥ २९
तच्छ्रुत्वा शापभीत्या च प्रतिपद्य स भूपतिः । सुतामानाययामास यशःकेतुः शशिप्रभाम् ॥ ३०
जगाद चैतां पुत्रीमां कन्यां रक्षेः स्वमन्दिरे । स्वपार्श्वे एव चाहारं शय्यां चास्याः प्रकल्पयेः ॥ ३१
इति पित्रोक्तया निन्ये कन्यारूपस्तथेति सः । अन्तःपुरं मनःस्वामी राजपुत्र्या तया निजम् ॥ ३२
यथारुचि ततो याते मूलदेवे द्विजाकृतौ । कन्यारूपः स तत्रासीन्मनःस्वामी प्रियान्तिके ॥ ३३
दिनैश्च तां सखीप्रीतिविस्रम्भं सम्यगागताम् । एकदा विरहक्षामां शयनीयलुठत्तनुम् ॥ ३४
रात्रौ रहो राजसुतामासन्नशयनस्थितः । कन्यारूपप्रतिच्छन्नो मनःस्वामी स पृष्टवान् ॥ ३५
सखि किं पाण्डुरच्छाया क्षीयमाणा दिने दिने । कान्तपक्षवियुक्तेव दुःखितासि शशिप्रभे ॥ ३६
ब्रूहि मे को ह्यविश्वासः स्निग्धमुग्धे सखीजने । इदानीं नैव भोक्ष्येऽहं न वदिष्यसि चेन्मम ॥ ३७
तच्छ्रुत्वा सा विनिःश्वस्य शनै राजसुताब्रवीत् । किं मे त्वय्यप्यविश्वासः श‍ृणु तत्सखि वच्मि ते ॥ ३८
एकदाहं मधूद्यानयात्रां द्रष्टुं गताभवम् । तत्रापश्यं च सुभगं कंचिद्ब्राह्मणपुत्रकम् ॥ ३९
हिममुक्तेन्दुसश्रीकं दर्शनोद्दीपितस्मरम् । मधुमासमिवालोकक्रीडालंकृतकाननम् ॥ ४०
चकोरायितुमेते च प्रवृत्ते यावदुन्मुखे । तन्मुखेन्दुद्युतिसुधापायिनी मे विलोचने ॥ ४१
तावत्स्रवन्मदजलस्तत्राकस्मान्निरर्गलः । अकालकालमेघाभो गर्जन्नागान्महागजः ॥ ४२
तत्संभ्रमात्परिजने नष्टेऽहं भयविह्वला । उत्क्षिप्य विप्रपुत्रेण नीता तेनैव दूरतः ॥ ४३
श्रीखण्डेनानुलिप्तेव सिक्तेव सुधया तथा । अहं तदङ्गस्पर्शेन न जाने कां दशामगाम् ॥ ४४
क्षणाच्च परिवारेण मिलितेनावशा ततः । इहानीतास्मि निक्षिप्ता स्वर्गादिव भुवस्तले ॥ ४५
तदाप्रभृति संकल्पैस्तैस्तैः कल्पितसंगमम् । पश्यामि तं प्रबुद्धापि पार्श्वस्थं प्राणदं पतिम् ॥ ४६
सुप्ता स्वप्ने च कुर्वाणं चाटून्यालोकयामि तम् । त्याजयन्तं हठाल्लज्जां चुम्बनालिङ्गनादिभिः ॥ ४७
न च प्राप्नोम्यभव्या तन्नामाद्यज्ञानमोहिता । तदेवं मां दहत्येष प्राणेशविरहानलः ॥ ४८
इति वाक्सुधया तस्याः पूर्णस्वश्रवणोदरः । सानन्दः स मनःस्वामी विप्रकन्यावपुर्धरः ॥ ४९
कृतार्थमानी मत्वा तं कालमात्मप्रकाशने । स्वरूपं प्रकटीचक्रे निष्कृष्य गुलिकां मुखात् ॥ ५०
जगाद च विलोलाक्षि सोऽहमेवैष यस्त्वया । उद्याने दर्शनक्रीतो नीतो निर्व्याजदासताम् ॥ ५१
त्वत्संस्तवक्षणभ्रंशात्क्लेशं तं चाप्तवानहम् । यस्यैष परिणामो मे कन्यारूपग्रहोऽभवत् ॥ ५२
तस्मात्सफलयैतां मे विसोढां विरहव्यथाम् । आत्मनश्च न तन्वङ्गि क्षमतेऽतःपरं स्मरः ॥ ५३
एवं वदन्तं सहसा प्राणेशं तं विलोक्य सा । आसीद्राजसुता क्षिप्रं स्नेहाश्चर्यत्रपाकुला ॥ ५४
अथात्यौत्सुक्यनिर्वृत्तगान्धर्वोद्वाहयोस्तयोः । प्रेम्णस्तस्य मतो यादृक्तादृशोऽभूत्तदोत्सवः ॥ ५५
ततः सोऽत्र मनःस्वामी कृती तस्थौ द्विरूपभृत् । दिवा सगुलिकः कन्या रात्रावगुलिकः पुमान् ॥ ५६
गतेष्वथ दिनेष्वत्र यशःकेतोर्महीपतेः । मृगाङ्कदत्तसंज्ञेन श्वशुर्येण निजा सुता ॥ ५७
दत्ता मृगाङ्कदत्ताख्या महार्हविभवोत्तरा । द्विजातये महामन्त्रिप्रज्ञासागरसूनवे ॥ ५८
तस्मिन्मातुलपुत्र्याः सा राजपुत्री शशिप्रभा । विवाहे मातुलगृहं तज्जगाम निमन्त्रिता ॥ ५९
तया सह ययौ सोऽपि कन्यकापरिवारगा । विप्रपुत्रो मनःस्वामी कान्तकन्यास्वरूपधृत् ॥ ६०
तत्र तं कन्यकारूपधरं मन्त्रिसुतोऽथ सः । दृष्ट्वा किल स्मरव्याधगाढबाणाहतोऽभवत् ॥ ६१

ततो मुषितचित्तः संस्तया कपटकन्यया। ययौ मन्त्रिसुतः शून्यं स्वगृहं स्ववधूसखः॥ ६२
तत्र तन्मुखलावण्यध्यानासक्तो जगाम सः। तीव्ररागमहाव्यालदष्टो मोहमशङ्कितम्॥ ६३
किमेतदिति संभ्रान्ते जने तत्रोत्सवोज्झिते। तमुपागाद्द्रुतं बुद्ध्वा स प्रज्ञासागरः पिता॥ ६४
तेन चाश्वास्यमानोऽपि पित्रा मोहात्प्रबुध्य सः। प्रलपन्निव सोन्मादमुज्जगार मनोगतम्॥ ६५
अस्वाधीनं च तन्मत्वा तत्पितर्यतिविह्वले। तस्मिन्राजापि तद्बुद्ध्वा तत्रैव समुपाययौ॥ ६६
स तं दृष्ट्वा झटित्येव गाढाभिष्वङ्गतो गतम्। सप्तमीं मदनावस्थां जगाद प्रकृतीर्नृपः॥ ६७
कथं ब्राह्मणनिक्षेपः कन्या सास्मै प्रदीयते। तया विना च नियतं पश्चिमामेत्यसौ दशाम्॥ ६८
अस्मिन्नष्टे पितास्यैष मम मन्त्री विनङ्क्ष्यति। एतन्नाशे राज्यनाशस्तदिह ब्रूत का गतिः॥ ६९
इत्युक्तास्तेन राज्ञा ताः सर्वाः प्रकृतयोऽब्रुवन्। राज्ञो धर्मं निजं प्राहुः प्रजानां धर्मरक्षणम्॥ ७०
मूलं तस्य विदुर्मन्त्रं स च मन्त्रिष्ववस्थितः। मन्त्रिनाशे मूलनाशाद्रक्ष्या धर्मक्षतिर्ध्रुवम्॥ ७१
पापं च स्याद्द्विजस्यास्य ससूनोर्मन्त्रिणो वधात्। तस्माद्रक्ष्योऽयमासन्नोऽवश्यं ते धर्मविप्लवः॥ ७२
दातव्या मन्त्रिपुत्राय विप्रन्यस्ता कुमारिका। कालान्तरागते विप्रे क्रुद्धे प्रतिविधास्यते॥ ७३
एवमुक्तः प्रकृतिभिस्तथेति प्रत्यपद्यत। स राजा मन्त्रिपुत्राय दातुं तां कूटकन्यकाम्॥ ७४
आनीतश्च स निश्चित्य लग्नं राजसुतागृहात्। कन्यारूपो मनःस्वामी तं जगाद महीपतिम्॥ ७५
अन्येनान्यार्थमानीतामन्यस्मै मां ददासि चेत्। कामं तदस्तु राजा त्वं धर्माधर्मौ तवाद्य तौ॥ ७६
अहं विवाहमिच्छामि समयेनेदृशेन तु। एकशय्यां न नेतव्या पत्या तावदहं हठात्॥ ७७
यावत्तीर्थानि षण्मासान्परिभ्रम्य स नागतः। एवं न चेत्कृत्तजिह्वां दन्तैर्जानीहि मां मृताम्॥ ७८
इत्युक्ते समये तेन यूना कन्यावपुर्भृता। राज्ञा स बोधितः प्राप निर्वृतिं मन्त्रिपुत्रकः॥ ७९
तथेति प्रतिपद्यैतत्कृत्वोद्वाहं किलाशु तम्। एकस्मिन्स्थापयित्वा च वासके ते सुरक्षिते॥ ८०
तां मृगाङ्कवतीमाद्यां वधूं कूटवधूं च ताम्। जगाम तीर्थयात्रायै मूढः कान्ताप्रियेच्छया॥ ८१
स चोवास मनःस्वामी स्त्रीरूपोऽत्र तया सह। मृगाङ्कवत्येकगृहे समानशयनासनः॥ ८२
तथा स्थितं कदाचित्तं सा मृगाङ्कवती निशि। शय्यागृहे रहोऽवादीद्बहिःसुप्ते परिच्छदे॥ ८३
कथां कांचित्सखि ख्याहि निद्रा नास्ति हि मे सखि। तच्छ्रुत्वाकथयत्सोऽस्यै स्त्रीरूपस्तां कथां युवा॥ ८४
यत्रेलाख्यस्य राजर्षेः सूर्यवंशभुवः पुरा। प्राप्तस्य गौरीशापेन स्त्रीत्वं विश्वैकमोहनम्॥ ८५
अन्योन्यदर्शनप्रीत्या देवोद्यानवनान्तरे। अभूद्बुधेन संयोगः समभूच्च पुरूरवाः॥ ८६
तां कथां कथयित्वा च धूर्तः पुनरुवाच सः। तदेवं देवतादेशान्मन्त्रौषधवशेन वा॥ ८७
पुरुषः स्त्री कदाचित्स्यात्स्त्री वा जातु पुमान्भवेत्। भवन्ति चैवं संयोगाः कामजा महतामपि॥ ८८
श्रुत्वैतत्तरुणी मुग्धा विवाहप्रोषितानुका। सा मृगाङ्कवती स्माह विश्वस्ता सहवासतः॥ ८९
श्रुत्वैतां मे कथामेतदङ्गं सिमिसिमायते। हृदयं सीदतीवेदं तदेतत्सखि किं वद॥ ९०
तच्छ्रुत्वा सोऽङ्गनारूपो विप्रः पुनरुवाच ताम्। एतानि कामचिह्नानि नन्वपूर्वाणि ते सखि॥ ९१
मयैतान्यनुभूतानि निगूहे नह्यहं तव। इति तेनोदितावादीत्सा मृगाङ्कवती शनैः॥ ९२
सखि प्राणसमा त्वं मे तत्कालज्ञा न वच्मि किम्। अपि पुंसः प्रवेशः स्यादुपायेन हि केनचित्॥ ९३
एवमुक्तवतीमेतां स च लब्धाशयस्तदा। प्राह धूर्तपतेः शिष्यो यद्येवं तद्वदामि ते॥ ९४
वैष्णवोऽस्ति प्रसादो मे येनाहं स्वेच्छया निशि। पुरुषः स्यां तदेषोऽद्य भवामि त्वत्कृते पुमान्॥ ९५
इत्युक्त्वा स मनःस्वामी निष्कृष्य गुलिकां मुखात्। यौवनोद्दाममात्मानं तस्यै कान्तमदर्शयत्॥ ९६
ततः कथितविस्रम्भः सर्वस्वगतयन्त्रणः। कालोचितरसः कोऽपि तयोरासीद्रतोत्सवः॥ ९७
अथ तत्र तया साकं स मन्त्रिसुतभार्यया। तस्थौ द्विजो दिवा नारी रात्रौ च पुरुषो भवन्॥ ९८
आसन्नागमनं तं च बुद्ध्वा मन्त्रिसुतं दिनैः। तामादाय निशि स्वैरं पलाय्य स ययौ ततः॥ ९९
एतस्मिंश्च कथासंधौ मूलदेवः स तद्गुरुः। बुद्ध्वा तदखिलं भूत्वा भूयो वृद्धद्विजाकृतिः॥ १००

शशिनानुगतः सख्या तरुणद्विजरूपिणा। आगत्य तं यशःकेतुं प्रह्वो राजानमब्रवीत्॥ १०१
आनीतोऽयं मया पुत्रो देहि मे तां स्नुषामिति। ततः संमन्त्र्य स नृपः शापभीतस्तमभ्यधात्॥ १०२
ब्रह्मन्न जाने क्व गता सा स्नुषा ते क्षमस्व तत्। अपराधात्सुतस्यार्थे ददामि स्वसुतां तव॥ १०३
इत्युक्त्वा धूर्तराजं तं कृतकक्रोधनिष्ठुरम्। विब्रुवाणं जरद्विप्ररूपं प्रार्थ्य स भूपतिः॥ १०४
तत्सख्ये कृततत्पुत्रव्यपदेशाय तां ददौ। तनयां शशिने तस्मै यथाविधि शशिप्रभाम्॥ १०५
ततः स मूलदेवस्तौ यथाभूतौ वधूवरौ। आदाय स्वास्पदं प्रायाद्राजार्थेष्वकृतस्पृहः॥ १०६
तत्र तस्मिंश्च मिलिते मनःस्वामिन्यभून्महान्। विवादो मूलदेवाग्रे शशिनस्तस्य चोभयोः॥ १०७
मनःस्वाम्यब्रवीदेषा दीयतां मे शशिप्रभा। कन्यैव हि मयोढा प्रागसौ गुर्वनुग्रहात्॥ १०८
शशी जगाद कोऽस्यास्त्वं मूर्ख दारा इयं मम। अग्निसाक्षिकमेषा हि पित्रा मे प्रतिपादिता॥ १०९
एवं मायाबलप्राप्तराजपुत्रीनिमित्ततः। विवादासक्तयोर्नासीत्परिच्छेदस्तयोर्द्वयोः॥ ११०
तद्राजंस्त्वं मम ब्रूहि तावत्कस्योपपद्यते। भार्या सा संशयं छिन्धि पूर्वोक्तः समयोऽस्ति ते॥ १११
इति वेतालतः श्रुत्वा तस्मात्स्कन्धाग्रवर्तिनः। स त्रिविक्रमसेनस्तं नृपतिः प्रत्यभाषत॥ ११२
मन्ये शशिन एवासौ भार्या न्याय्या नृपात्मजा। यस्मै प्रदत्ता प्रकटं पित्रा धर्म्येण वर्त्मना॥ ११३
मनःस्वामी तु तां भेजे चौर्याद्गान्धर्वधर्मतः। चौरस्य तु परस्वेषु स्वत्वं न्याय्यं न जातुचित्॥ ११४

इति तस्य वचो निशम्य राज्ञो वेतालः स ययौ पुनस्तदेव।
सहसैव तदंसतः स्वधाम क्षितिपः सोऽपि तमन्वियाय तूर्णम्॥ ११५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वाविंशस्तरङ्गः।

---

त्रयोविंशस्तरङ्गः।

( षोडशो वेतालः। )

अथ गत्वा पुनः स्कन्धे वेतालं शिंशपाद्रुमात्। स त्रिविक्रमसेनस्तमादायोदचलत्ततः॥ १
आगच्छन्तं च तं भूपं स वेतालोऽब्रवीत्पुनः। राजञ्शृणु कथामेकामुदारां कथयामि ते॥ २
अस्तीह हिमवान्नाम नगेन्द्रः सर्वरत्नभूः। यो गौरीगङ्गयोस्तुल्यः प्रभवो हरकान्तयोः॥ ३
शूरासंस्पृष्टपृष्ठश्च यो मध्ये कुलभूभृताम्। अभिमानोन्नतः सत्यं गीयते भुवनत्रये॥ ४
तस्यास्ति सानुन्यन्वर्थं तत्काञ्चनपुरं पुरम्। न्यासीकृतमिवार्केण रश्मिवृन्दं विभाति यत्॥ ५
जीमूतकेतुरित्यासीत्तस्मिन्पुरवरे पुरा। विद्याधरेश्वरः श्रीमान्मेराविव शतक्रतुः॥ ६
तस्यासीत्स्वगृहोद्याने कल्पवृक्षोऽन्वयागतः। यथार्थनामा प्रथितो यो मनोरथदायकः॥ ७
तं प्रार्थ्य देवतात्मानं स राजा तत्प्रसादतः। प्राप जातिस्मरं पुत्रं बोधिसत्त्वांशसंभवम्॥ ८
दानवीरं महासत्त्वं सर्वभूतानुकम्पिनम्। गुरुशुश्रूषणपरं नाम्ना जीमूतवाहनम्॥ ९
संप्राप्तयौवनं तं च यौवराज्येऽभिषिक्तवान्। तनयं प्रेरितः सद्भिस्तद्गुणैः सचिवैश्च सः॥ १०
यौवराज्यस्थितश्चैष जातु जीमूतवाहनः। हितैषिभिरुपागत्य जगदे पितृमन्त्रिभिः॥ ११
देव कल्पतरुर्योऽयमस्ति वः सर्वकामदः। अधृष्यः सर्वभूतानां सैष पूज्यः सदा तव॥ १२
नास्मिन्सति हि शक्रोऽपि बाधेतास्मान्कुतोऽपरः। एतच्छ्रुत्वा स जीमूतवाहनोऽन्तरचिन्तयत्॥ १३
अहो बतेदृशमिमं संप्राप्यामरपादपम्। नासादितं किमप्यस्मात्पूर्वैर्नस्तादृशं फलम्॥ १४
केवलं कैश्चिदप्यर्थैरर्थितैः कृपणोचितैः। आत्मा चैष महात्मा च नीतौ द्वावपि लाघवम्॥ १५
तदहं साधयिष्यामि काममस्मान्मनोगतम्। इति निश्चित्य स ययौ महासत्त्वोऽन्तिकं पितुः॥ १६
तत्र संविहिताशेषशुश्रूषापरितोषितम्। सुखासीनं तमेकान्ते पितरं स व्यजिज्ञपत्॥ १७
तात त्वमेव जानासि यदेतस्मिन्भवाम्बुधौ। आशरीरमिदं सर्वं वीचिविभ्रमचञ्चलम्॥ १८
विशेषेणाचिरस्थायिप्रकाशप्रविलायिनी। संध्या विद्युच्च लक्ष्मीश्च दृष्टा कुत्र कदा स्थिरा॥ १९

एकः परोपकारस्तु संसारेऽस्मिन्ननश्वरः। यो धर्मयशसी सूते युगान्तशतसाक्षिणी ॥ २०
तत्ताव क्षणिकेष्वेषु भोगेष्वस्माभिरीदृशः। एष कल्पतरुः कस्य कृते मोघोऽभिरक्ष्यते ॥ २१
यैर्वा मम ममेत्येवमाग्रहेणैष रक्षितः। पूर्वैस्ते कुत्र कुत्रायं तेषां कस्यैष कोऽस्य वा ॥ २२
तस्मात्परोपकारैकफलसिद्ध्यै त्वदाज्ञया। तातैनं विनियुञ्जेऽहं कामदं कल्पपादपम् ॥ २३
एवमस्त्विति पित्रा च दत्तानुज्ञोऽथ तेन सः। जीमूतवाहनो गत्वा कल्पद्रुममुवाच तम् ॥ २४
अभीष्टाः पूरिताः कामाः पूर्वेषां देव नस्त्वया। तन्ममैकमिमं काममनन्यं परिपूरय ॥ २५
अदरिद्रां यथा पृथ्वीमिमां द्रक्ष्ये तथा कुरु। भद्रं ते व्रज दत्तोऽसि लोकायार्थार्थिने मया ॥ २६
इत्युक्तवति जीमूतवाहने रचिताञ्जलौ। त्यक्तस्त्वयैष जातोऽस्मीत्युदभूद्वाक्तरोस्ततः ॥ २७
क्षणाच्चोत्पत्य स दिवं कल्पवृक्षस्तथा वसु। ववर्ष भुवि नैवासीत्कोऽप्यस्यां दुर्गतो यथा ॥ २८
ततस्तस्य तया तीव्रसर्वसत्त्वानुकम्पया। जीमूतवाहनस्यात्र त्रैलोक्ये पप्रथे यशः ॥ २९
तेन तद्गोत्रजाः सर्वे मात्सर्यादसहिष्णवः। तं लोकसात्कृतार्तिघ्नकल्पवृक्षविनाकृतम् ॥ ३०
जेयं सपितृकं मत्वा संभूय कृतनिश्चयाः। युद्धाय समनह्यन्त तद्राज्यापजिहीर्षया ॥ ३१
तद्दृष्ट्वा प्राह पितरं स्वं स जीमूतवाहनः। तात कस्यापरस्यास्ति शक्तिस्त्वयि धृतायुधे ॥ ३२
किं त्वस्य पापकस्यार्थे शरीरस्य विनाशिनः। हत्वा बन्धूनकृपणो राज्यं को नाम वाञ्छति ॥ ३३
तत्किं राज्येन नः कार्यं गत्वान्यत्र क्वचिद्वयम्। धर्ममेव चरिष्यामो लोकद्वयसुखावहम् ॥ ३४
मोदन्तां कृपणा एते दायादा राज्यलोलुपाः। इत्युक्तवन्तं जीमूतकेतुस्तं स पिताब्रवीत् ॥ ३५
अहं त्वदर्थमिच्छामि राज्यं पुत्र त्वमेव चेत्। तज्जहासि कृपाविष्टस्तन्मे वृद्धस्य तेन किम् ॥ ३६
एवं कृताभ्यनुज्ञेन पित्रा मात्रा च सोऽन्वितः। मलयाद्रिमगात्त्यक्तराज्यो जीमूतवाहनः ॥ ३७
तत्र चन्दनसंछन्नवहन्निर्झरकन्दरे। शुश्रूषमाणः पितरं स तस्थौ कल्पिताश्रमः ॥ ३८
मित्रं चास्यात्र संपेदे मित्रावसुरिति श्रुतः। विश्वावसोः सुतः सिद्धराजस्यैतन्निवासिनः ॥ ३९
एकदा चात्र स भ्राम्यन्निवेशोपवनस्थितम्। द्रष्टुमायतनं देव्या गौर्या जीमूतवाहनः ॥ ४०
तत्रोपवीणयन्तीं च ददर्श वरकन्यकाम्। सखीजनान्वितां शैलतनयाराधनोद्यताम् ॥ ४१
आकर्ण्यमानसंगीतमञ्जुवीणारवां मृगैः। दृष्टलोचनलावण्यलज्जितैरिव निश्चलैः ॥ ४२
दधता तारकं कृष्णमर्जुनेन स्वचक्षुषा। पाण्डवीयामिव चमूं कर्णमूलं विविक्षतीम् ॥ ४३
परस्परविमर्देन मुखेन्दोरिव दर्शनम्। अतृप्ताविव वाञ्छन्तौ बिभ्रतीं संमुखौ स्तनौ ॥ ४४
धातुर्घटयतो मुष्टिग्रहेणेव निपीडिते। वलीमग्नाङ्गुलीमुद्रे मध्ये क्षाममनोरमाम् ॥ ४५
दृष्टया च तया सद्यः सोऽभूज्जीमूतवाहनः। तन्व्या मुषितचित्तोऽन्तर्दृष्टिमार्गप्रविष्टया ॥ ४६
सापि तं भूषितोद्यानं दृष्ट्वोत्कण्ठाविकारदम्। कामाङ्गदाहवैराग्याद्वनं मधुमिवाश्रितम् ॥ ४७
तथानुरागविवशा भेजे कन्या विहस्तताम्। यथा सखीव वीणास्या व्याकुलालापतां ययौ ॥ ४८
ततः स पप्रच्छ सखीं तस्या जीमूतवाहनः। किं धन्यं नाम सख्यास्ते को वंशोऽलंकृतोऽनया ॥ ४९
तच्छ्रुत्वा सा सखी प्राह नाम्ना मलयवत्यसौ। मित्रावसुस्वसा सिद्धराजविश्वावसोः सुता ॥ ५०
एवमुक्त्वा सहृदया सा तं जीमूतवाहनम्। नामान्वयौ च पृष्ट्वास्य मुनिपुत्रं सहागतम् ॥ ५१
तां ब्रवीति स्म मलयवतीं स्मितमिताक्षरम्। सखि विद्याधरेन्द्रस्य नास्यातिथ्यं करोषि किम् ॥ ५२
जगत्पूज्योऽतिथिर्ह्येष प्राप्त इत्युदिते तया। साभूद्विद्याधरसुता तूष्णीं लज्जानतानना ॥ ५३
लज्जावतीयं मत्तोऽर्घ्यं गृह्यतामिति वादिनी। एकाथ तत्सखी तस्मै सार्घ्यां मालामुपानयत् ॥ ५४
स चादायैव जीमूतवाहनः प्रेमनिर्भरः। कण्ठे मलयवत्यास्तां मालां तस्याः समर्पयत् ॥ ५५
सापि तिर्यक्प्रसृतया पश्यन्ती स्निग्धया दृशा। नीलोत्पलमयीं मालामिव तस्मिन्न्यवेशयत् ॥ ५६
इत्यन्योन्यकृताशब्दस्वयंवरविशेषयोः। तयोरेत्य जगादैका चेटी तां सिद्धकन्यकाम् ॥ ५७
जननी राजपुत्रि त्वां स्मरत्यागच्छ माचिरम्। तच्छ्रुत्वाकृष्य कामेषुकीलितामिव कृच्छ्रतः ॥ ५८

सोत्कां प्रियमुखादृष्टिं कथंचित्सा ययौ गृहम् । जीमूतवाहनोऽप्यागात्तद्गतात्मा स्वमाश्रमम् ॥ ५९
साथ स्वां जननीं दृष्ट्वा प्राणेशविरहातुरा । गत्वा मलयवत्याशु पपात शयनीयके ॥ ६०
अथान्तर्गतकामाग्निधूमेनेवाविलेक्षणा । अश्रुधारां प्रमुञ्चन्ती संतापकथिताङ्गका ॥ ६१
सखीभिश्चन्दनैर्लिप्ता वीजिता चाब्जिनीदलैः । रतिं न भेजे शयने नाङ्के सख्या न भूतले ॥ ६२
गतेऽथ वासरे क्वापि रक्तया सह संध्यया । हसत्प्राचीमुखं चन्द्रे समाक्रम्य च चुम्बति ॥ ६३
स्मरेण प्रेर्यमाणापि दूतीसंप्रेषणादि सा । लज्जया नाशकत्कर्तुं जीवितस्पृहयोज्झिता ॥ ६४
निनाय च निशामिन्दुविषमामब्जिनीव ताम् । बद्धमोहालिपटले हृदि संकोचमेत्य सा ॥ ६५
तावच्च तद्वियोगार्तः सोऽपि जीमूतवाहनः । शयनस्थोऽपि पतितो हस्ते कुसुमधन्वनः ॥ ६६
नूतनोद्भिन्नरागोऽपि प्रोन्मिषत्पाण्डुरच्छविः । ह्रीमूकोऽपि वदन्पीडां कामजामनयन्निशाम् ॥ ६७
प्रातश्चात्युत्सुको भूयस्तद्गौर्यायतनं ययौ । यत्र दृष्टाभवत्तेन सा सिद्धाधिपपुत्रिका ॥ ६८
तत्र तेन स मित्रेण मुनिपुत्रेण पृष्ठतः । आगत्याश्वास्यते यावन्मदनानलविह्वलः ॥ ६९
तावत्तत्रैव साप्यागान्निर्गत्यैकैव निर्जने । गुप्तं मलयवत्यात्मत्यागाय विरहासहा ॥ ७०
अलक्षयन्ती कान्तं स्वं पादपान्तरितं च सा । उदश्रुलोचना बाला देवीं गौरीं व्यजिज्ञपत् ॥ ७१
त्वद्भक्त्या देवि संवृत्तो नास्मिञ्जन्मनि चेन्मम । जीमूतवाहनो भर्ता तद्भूयात्सोऽन्यजन्मनि ॥ ७२
इत्युक्त्वा रचयामास स्वोत्तरीयेण तत्क्षणम् । अशोकतरुशाखायां पाशं सा गिरिजाग्रतः ॥ ७३
हा नाथ विश्वविख्यातकरुणेनापि न त्वया । कथमस्मि परित्राता देव जीमूतवाहन ॥ ७४
एवमुक्त्वा गले यावत्सा तं पाशं नियच्छति । उच्चचार दिवस्तावद्भारती देव्युदीरिता ॥ ७५
पुत्रि मा साहसं कार्षीश्चक्रवर्ती पतिस्तव । विद्याधरेन्द्रो जीमूतवाहनो हि भविष्यति ॥ ७६
इत्युक्तवत्यां देव्यां स श्रुत्वैव सवयस्यकः । जीमूतवाहनो हृष्टां प्रियामुपजगाम ताम् ॥ ७७
सैष देव्या वरः पश्य वितीर्णः सत्य एव ते । इति जल्पति बालां तां तन्मित्रे मुनिपुत्रके ॥ ७८
जीमूतवाहनस्तत्तद्ब्रुवन्प्रणयपेशलम् । स्वहस्तेनैव तं तस्याः कण्ठात्पाशमपानयत् ॥ ७९
ततोऽकस्मात्सुधावर्षमिव मन्वानयोस्तयोः । भुवं मलयवत्यां च लिखन्त्यां ह्रीतया दृशा ॥ ८०
चिन्वानागत्य सहसा सखी हृष्टा जगाद ताम् । सखि कल्याणिनी दिष्ट्या वर्धसेऽभीष्टसिद्धितः ॥ ८१
अद्यैव हि महाराजस्तव विश्वावसुः पिता । कुमारमित्रावसुना विज्ञप्तः संनिधौ मम ॥ ८२
इहागतो जगन्मान्यस्तात कल्पतरुप्रदः । विद्याधरेन्द्रतनयो योऽयं जीमूतवाहनः ॥ ८३
अतिथित्वात्स नः पूज्यो वरश्चान्यो न तादृशः । तस्मान्मलयवत्यासौ कन्यारत्नेन पूज्यताम् ॥ ८४
तथेति श्रद्धिते राज्ञा भ्राता मित्रावसुः स ते । तादर्थ्येन महाभागस्यास्याश्रमपदं गतः ॥ ८५
जाने सद्यश्च भावी ते विवाहस्तत्स्वमन्दिरम् । आयाहि यातु चैषोऽपि महाभागः स्वमास्पदम् ॥ ८६
इत्युक्ता सा तया सख्या राजपुत्री शनैस्ततः । ययुः सहर्षा सोत्का च मुहुर्वलितकंधरा ॥ ८७
जीमूतवाहनोऽप्याशु गत्वा स्वाश्रममागतात् । मित्रावसोर्यथाभीष्टं कार्यं श्रुत्वाभिनन्द्य च ॥ ८८
जातिस्मरः समाचख्यौ तस्मै स्वं पूर्वजन्म सः । यत्र मित्रं स तस्यासीत्सा च भार्यैव तत्स्वसा ॥ ८९
ततो मित्रावसुः प्रीतस्तत्पित्रोः परितुष्यतोः । आवेद्य गत्वा पितरौ कृतार्थः स्वावनन्दयत् ॥ ९०
निनाय च तदैव स्वान्गृहाञ्जीमूतवाहनम् । चक्रे चोत्सवसंभारं स्वसिद्ध्युचितवैभवम् ॥ ९१
तस्मिन्नेव च धन्येऽह्नि तस्य विद्याधरप्रभोः । स्वसुर्मलयवत्याश्च विवाहं समपादयत् ॥ ९२
ततो नवोढया सार्कं तया जीमूतवाहनः । तस्थौ मलयवत्या स तत्र सिद्धमनोरथः ॥ ९३
एकदा कौतुकाच्चात्र स मित्रावसुना सह । मलयाद्रौ भ्रमन्नब्धेर्वेलावनमुपेयिवान् ॥ ९४
तत्रास्थिराशीन्सुबहून्दृष्ट्वा मित्रावसुं स तम् । केषामेतेऽस्थिसंघाताः प्राणिनामिति पृष्टवान् ॥ ९५
ततो मित्रावसुः श्यालस्तं कारुणिकमब्रवीत् । शृणु वृत्तान्तमत्रेमं संक्षेपाद्वर्णयामि ते ॥ ९६
नागमाता पुरा कद्रूर्विनतां तार्क्ष्यमातरम् । निनाय किल दासत्वं सत्याजपणनिर्जिताम् ॥ ९७

तेन वैरेण गरुडस्तामुन्मोच्यापि मातरम्। बली भक्षयितुं नागान्कद्रूपुत्रान्प्रचक्रमे॥ ९८
सदा प्रविश्य पातालं सोऽथ कांश्चिज्जघास तान्। कांश्चिन्ममर्द केचित्तु स्वयं त्रासाद्विपेदिरे॥ ९९
तद्दृष्ट्वैकपदे सर्वक्षयमाशङ्क्य नागराट्। वासुकिः प्रार्थनापूर्वं तार्क्ष्यस्य समयं व्यधात्॥ १००
एकमेकमहं नागमाहारार्थं खगेन्द्र ते। प्रत्यहं प्रेषयाम्यत्र पुलिने दक्षिणोदधेः॥ १०१
त्वया तु न प्रवेष्टव्यं पातालेऽस्मिन्कथंचन। को हि स्वार्थो विनष्टेषु नागेष्वेकपदे तव॥ १०२
इत्युक्ते नागराजेन समयं प्रत्यपद्यत। स्वार्थदर्शी तथेत्येव गरुडो गुरुविक्रमः॥ १०३
तदाप्रभृति चैकैकं नागं भुङ्क्ते दिने दिने। वासुकिप्रेषितं सोऽत्र खगेन्द्रः पुलिनेऽम्बुधेः॥ १०४
अतस्तद्भक्ष्यमाणानां नागानामस्थिसंचयाः। एतेऽत्र गिरिशृङ्गाभा वृद्धिं कालक्रमाद्गताः॥ १०५
इति मित्रावसोर्वक्त्रात्सान्तर्दुःखो निशम्य सः। निजगाद दयाधैर्यनिधिर्जीमूतवाहनः॥ १०६
शोच्यः स वासुकी राजा यः स्वहस्तेन विद्विषे। उपहारीकरोति स्वाः प्रजाः क्लीबो दिने दिने॥ १०७
धृताननसहस्रः सन्नेकेनाप्याननेन सः। मामादौ भुङ्क्ष्व तार्क्ष्येति भाषितुं नाशकत्कथम्॥ १०८
कथं चाभ्यर्थयामास निःसत्त्वः स्वकुलक्षयम्। तार्क्ष्यं नागाङ्गनाक्रन्दनित्याकर्णननिर्घृणः॥ १०९
तार्क्ष्योऽपि काश्यपिर्वीरः कृष्णाधिष्ठानपावनः। ईदृशं कुरुते पापमहो मोहस्य गाढता॥ ११०
इत्युक्त्वा स महासत्त्वो हृदि चक्रे मनोरथम्। अप्यसारेण देहेन सारमत्राप्नुयामहम्॥ १११
एकस्याप्यद्य नागस्य कुर्यां जीवितरक्षणम्। अबान्धवस्य भीतस्य दत्त्वात्मानं गरुत्मते॥ ११२
इति संचिन्तयत्येव तस्मिञ्जीमूतवाहने। मित्रावसोः पितुः पार्श्वात्क्षत्ताह्वानार्थमाययौ॥ ११३
व्रज त्वमहमेष्यामि पश्चादिति ततश्च तम्। मित्रावसुं स जीमूतवाहनो व्यसृजद्गृहम्॥ ११४
गते तस्मिन्स चात्रैको वाञ्छितार्थोन्मुखो भ्रमन्। कृपालुरशृणोद्दूरात्करुणं रुदितध्वनिम्॥ ११५
गत्वा ददर्श चोत्तुङ्गशिलातलसमीपगम्। युवानमेकं पुरुषं दुःखितं सुन्दराकृतिम्॥ ११६
पुंसा राजभटेनेव त्यक्तमानीय तत्क्षणम्। निवर्तयन्तं रुदतीं वृद्धां सानुनयं स्त्रियम्॥ ११७
कोऽयं स्यादिति यावच्च जिज्ञासुः सोऽत्र तिष्ठति। करुणाकुलितश्छन्नः शृण्वञ्जीमूतवाहनः॥ ११८
तावत्सा तत्र वृद्धा स्त्री दुःखभारातिपीडिता। प्रावर्तत युवानं तं दृष्ट्वा दृष्ट्वानुशोचितुम्॥ ११९
हा शङ्खचूड हा दुःखशतसंप्राप्त हा गुणिन्। कुलैकतन्तो हा पुत्र क्व त्वां द्रक्ष्याम्यहं पुनः॥ १२०
वत्स त्वन्मुखचन्द्रेऽस्मिन्गतेऽस्तं स पिता तव। शोकान्धकारपतितः कथं वृद्धो भविष्यति॥ १२१
अथार्ककरसंस्पर्शादङ्गं दूयेत यत्तव। कथं शक्ष्यति तत्सोढुं तार्क्ष्यभक्षणजां रुजम्॥ १२२
विस्तीर्णे नागलोकेऽपि धात्रा नागाधिपेन च। लब्धस्त्वं किमभव्याया विचित्यैकसुतो मम॥ १२३
इति तां विलपन्तीं च स युवा तनयोऽब्रवीत्। दुःखार्तमपि मामम्ब किं दुःखयसि हा भृशम्॥ १२४
निवर्तस्व गृहानेष प्रणामः पश्चिमस्तव। इहागमनवेला हि भवेज्जातु गरुत्मतः॥ १२५
तच्छ्रुत्वा हा हतास्मीह को मे पास्यति पुत्रकम्। इति चक्रन्द सा वृद्धा दिक्षु क्षिप्तार्तलोचना॥ १२६
तावच्च बोधिसत्त्वांशः स तज्जीमूतवाहनः। श्रुत्वा दृष्ट्वा च कृपया गाढाक्रान्तो व्यचिन्तयत्॥ १२७
हन्तायं शङ्खचूडाख्यो नागो वासुकिना बत। आहारहेतोस्तार्क्ष्यस्य तपस्वी प्रेषितोऽधुना॥ १२८
इयं चैतस्य जननी स्नेहेनेहान्वगागता। एतदेकसुता वृद्धा दुःखदीनप्रलापिनी॥ १२९
तदेनमेकमार्तं चेद्देहेनैकान्तनाशिना। रक्षामि नामुना नागं तन्मे धिग्जन्म निष्फलम्॥ १३०
इत्यालोच्योपगम्यैव मुदा जीमूतवाहनः। वृद्धामुवाच तां मातः पुत्रं रक्षाम्यहं तव॥ १३१
तच्छ्रुत्वा भावितभया वृद्धा गरुडशङ्किनी। संत्रस्ता तार्क्ष्य मां भुङ्क्ष्व मां भुङ्क्ष्वेति जगाद सा॥ १३२
शङ्खचूडस्ततोऽवादीन्नैष तार्क्ष्योऽम्ब मा त्रसीः। कायं चन्द्र इवाह्लादी क्व स तार्क्ष्यो भयंकरः॥ १३३
इत्युक्ते शङ्खचूडेन प्राह जीमूतवाहनः। विद्याधरोऽहमायातो रक्षितुं सुतमम्ब ते॥ १३४
दास्यामि हि शरीरं स्वं वस्त्रच्छन्नं गरुत्मते। क्षुधिताय प्रयाहि त्वमादायैनं सुतं गृहम्॥ १३५
तच्छ्रुत्वा साब्रवीद्वृद्धा मैवं त्वं ह्यधिको मम। पुत्रो यस्येदृशे काले कृपास्मास्वियमीदृशी॥ १३६

एतच्छ्रुत्वा स जीमूतवाहनः पुनरब्रवीत् । न मे मनोरथस्यास्य भङ्गं कर्तुमिहार्हथ ॥ १३७
इत्यादेवं ब्रुवाणं च शङ्खचूडो जगाद तम् । दर्शितैव महासत्त्व त्वया सत्यं कृपालुता ॥ १३८
नत्वहं त्वच्छरीरेण रक्ष्यामि स्वशरीरकम् । रत्नव्ययेन पाषाणं को हि रक्षितुमर्हति ॥ १३९
मादृशैस्तु जगत्पूर्णं स्वात्ममात्रानुकम्पिभिः । अनुकम्प्यं जगद्येषां विरलास्ते भवादृशाः ॥ १४०
न चाहं मलिनीकर्तुं शङ्खपालकुलं शुचि । कलङ्क इव तीक्ष्णांशुबिम्बं शक्ष्यामि सन्मते ॥ १४१
इति तं प्रतिषिध्यैव शङ्खचूडः स्वमातरम् । जगादाम्ब निवर्तस्व कान्ताराद्दुर्गमादितः ॥ १४२
न पश्यसि किमत्रैतन्नागासृक्कर्दमोक्षितम् । कृतान्तलीलापर्यङ्करौद्रं वध्यशिलातलम् ॥ १४३
अहं चाब्धितटे गत्वा नत्वा गोकर्णमीश्वरम् । आगच्छामि द्रुतं यावन्नायाति गरुडोऽत्र सः ॥ १४४
इत्युक्त्वा कृपणाक्रन्दां प्रणम्यापृच्छ्य मातरम् । स गोकर्णप्रणामार्थं शङ्खचूडो ययौ ततः ॥ १४५
अस्मिंश्चेदन्तरे प्राप्तस्तार्क्ष्यः सिद्धो ममेप्सितः । परार्थ इति जीमूतवाहनोऽप्यकरोद्धृदि ॥ १४६
तावदासन्नपक्षीन्द्रपक्षानिलचलांस्तरून् । विलोक्यात्र स मामेति निवारणपरानिव ॥ १४७
मत्वा गरुडवेलां च प्राप्तां जीमूतवाहनः । परार्थप्राणदो वध्यशिलामध्यारुरोह ताम् ॥ १४८
पवनाघूर्णिते चाब्धौ स्फुरद्रत्नप्रभादृशा । तं सत्त्वातिशयं तस्य पश्यतीव सविस्मयम् ॥ १४९
आगत्याच्छादितनभा निपत्यैतच्छिलातलात् । चञ्च्वा गरुत्मानाहत्य महासत्त्वं जहार तम् ॥ १५०
लुतासृग्धारमुत्खातशिरोरत्नं च तं जवात् । नीत्वा भक्षयितुं शृङ्गे मलयाद्रेः प्रचक्रमे ॥ १५१
एवमेव परार्थाय देहः स्यात्प्रतिजन्म मे । मा भूतां स्वर्गमोक्षौ तु परोपकृतिवर्जितौ ॥ १५२
इति ताक्ष्यार्द्यमानस्य तस्यानुध्यायतस्तदा । विद्याधरेन्दोरपतत्पुष्पवृष्टिर्नभस्तलात् ॥ १५३
अत्रान्तरे स तद्रक्तधारास्रवशिरोमणिः । तस्या मलयवत्याश्च तत्पत्न्याः प्रापतत्पुरः ॥ १५४
सा तद्दृष्ट्वा परिज्ञाय चूडारत्नं सुविह्वला । अन्तिकस्था श्वशुरयोस्ताभ्यां साश्रुरदर्शयत् ॥ १५५
तौ च जायापती सूनोः शिरोरत्नं विलोक्य तम् । किमेतदिति संभ्रान्तौ सहसैव बभूवतुः ॥ १५६
ततः स्वविद्यानुध्यानाद्यथावृत्तमवेत्य तत् । राजा जीमूतकेतुः सा राज्ञी कनकवत्यपि ॥ १५७
वध्वा मलयवत्या तौ प्रावर्तेतां सह द्रुतम् । गन्तुं तत्रैव तौ यत्र तार्क्ष्यजीमूतवाहनौ ॥ १५८
तावत्स शङ्खचूडोऽत्र नत्वा गोकर्णमागतः । ददर्श रुधिरार्द्रं तद्विग्नो वध्यशिलातलम् ॥ १५९
हा हतोऽस्मि महापापो ध्रुवं तेन महात्मना । आत्मा गरुत्मते दत्तो मत्कृते सुकृपालुना ॥ १६०
तदन्विष्यामि नीतः स क्षणेऽस्मिन्काहिवैरिणा । मज्जेयं नायशःपङ्के जीवन्तं चेत्तमाप्नुयाम् ॥ १६१
इत्युदश्रुर्वदन्सोऽथ साधुर्दृष्ट्वा निरन्तराम् । पतितां भुवि तद्रक्तधारामनुसरन्ययौ ॥ १६२
अत्रान्तरे भक्षयंस्तं दृष्ट्वा जीमूतवाहनम् । हृष्टं विरम्य गरुडश्चिन्तयामास तत्क्षणम् ॥ १६३
अहो अपूर्वः कोऽप्येष भक्ष्यमाणोऽपि यो मया । प्रहृष्यति महासत्त्वो न तु प्राणैर्वियुज्यते ॥ १६४
बिभर्ति लुप्तशेषे च गात्रे रोमाञ्चकञ्चुकम् । किं चोपकारिणीवास्य मयि दृष्टिः प्रसीदति ॥ १६५
तन्नैष नागः कोऽप्येष साधुः पृच्छामि नाद्म्यमुम् । इति तार्क्ष्यं विमृशन्तं प्राह जीमूतवाहनः ॥ १६६
पक्षीन्द्र किं निवृत्तोऽसि नहि मे मांसशोणितम् । देहे नास्ति न चाद्यापि परितृप्तोऽसि भुङ्क्ष्व तत् ॥ १६७
एतच्छ्रुत्वातिसाश्चर्यस्तं पप्रच्छ स पक्षिराट् । नागो नैवासि तद्ब्रूहि महात्मन्को भवानिति ॥ १६८
नाग एवास्मि कोऽयं ते प्रश्नः प्रकृतमाचर । प्रस्तुतार्थविरुद्धं हि कोऽभिदध्यादबालिशः ॥ १६९
एवं प्रतिवदत्येव तार्क्ष्यं जीमूतवाहने । प्राप्तः स शङ्खचूडोऽत्र दूरादेवाभ्यभाषत ॥ १७०
मा मा कृथा महापापं साहसं विनतात्मज । कोऽयं भ्रमस्ते नह्येष नागो नागोऽहमेष ते ॥ १७१
इत्युक्त्वा द्रुतमागत्य मध्ये स्थित्वा तयोर्द्वयोः । दृष्ट्वा च तार्क्ष्यं विभ्रान्तं शङ्खचूडोऽब्रवीत्पुनः ॥ १७२
किं भ्राम्यसि फणाः किं मे जिह्वे द्वे च न पश्यसि । विद्याधरस्य किं चास्य सौम्यां पश्यसि नाकृतिम् ॥ १७३
शङ्खचूडे वदत्येवं भार्या च पितरौ च तौ । जीमूतवाहनस्यात्र सर्वे सत्वरमाययुः ॥ १७४
विलुप्ताङ्गं च तं दृष्ट्वा पितरौ तस्य तत्क्षणम् । चक्रन्दतुस्तौ हा पुत्र हा हा जीमूतवाहन ॥ १७५

हा कारुणिक हा वत्स परार्थप्रत्तजीवित । हा कथं वैनतेयेदमविमृश्य कृतं त्वया ॥ १७६
एतच्छ्रुत्वैव तार्क्ष्योऽत्र सोऽनुतप्तो व्यचिन्तयत् । हा कथं बोधिसत्त्वांशः संमोहाद्भक्षितो मया ॥ १७७
जीमूतवाहनः सोऽयं परार्थप्राणदायकः । यस्य भ्रमति कृत्स्नेऽस्मिंस्त्रैलोक्ये कीर्तिघोषणा ॥ १७८
तन्मे मृतेऽस्मिन्पापस्य प्राप्तमग्निप्रवेशनम् । अधर्मविषवृक्षस्य पच्यते स्वादु किं फलम् ॥ १७९
इति चिन्ताकुले तार्क्ष्ये दृष्ट्वा बन्धून्निपत्य सः । व्रणव्यथायां पञ्चत्वं प्राप जीमूतवाहनः ॥ १८०
ततो विलपतोस्तत्र तत्पित्रोः शोकदीनयोः । उत्क्रुश्य मुहुरात्मानं शङ्खचूडे च निन्दति ॥ १८१
भार्या मलयवत्यस्य नभो दृष्ट्वाश्रुगद्गदम् । पूर्वप्रसन्नां वरदामित्युपालभताम्बिकाम् ॥ १८२
विद्याधराधिपो भाविचक्रवर्ती पतिस्तव । भवितेत्यहमादिष्टा देवि गौरि तदा त्वया ॥ १८३
तन्मिथ्यावादिनी जाता त्वमप्यसि कथं मयि । इत्युक्तवत्यां तस्यां सा गौरी प्रत्यक्षतामगात् ॥ १८४
न मे मिथ्या वचः पुत्रीत्युक्त्वा सा स्वकमण्डलोः । अमृतेनाशु जीमूतवाहनं सिञ्चति स्म तम् ॥ १८५
तेन सोऽक्षतसर्वाङ्गः पूर्वाधिकेतरद्युतिः । जीवन्सद्यः समुत्तस्थौ कृती जीमूतवाहनः ॥ १८६
उत्थितं प्रणतं तं च सर्वेषु प्रणमत्सु सा । उवाच देवी तुष्टास्मि देहदानेन तेऽमुना ॥ १८७
तदेषा त्वाभिषिञ्चामि पुत्रात्मीयेन पाणिना । विद्याधराणामाकल्पं चक्रवर्तिपदेऽधुना ॥ १८८
एवं वदन्ती जीमूतवाहनं कलशाम्बुधिः । तमभ्यषिञ्चच्छर्वाणी पूजिता च तिरोदधे ॥ १८९
निपेतुश्चात्र तत्कालं दिव्याः कुसुमवृष्टयः । नदन्ति स्म च सानन्दं देवदुन्दुभयो दिवि ॥ १९०
अथोवाच स तं प्रह्वस्तार्क्ष्यो जीमूतवाहनम् । चक्रवर्तिन्नहं प्रीतः पुरुषातिशये त्वयि ॥ १९१
अपूर्वोदारमतिना त्रिजगत्कौतुकावहम् । ब्रह्माण्डभित्तिलिखितं येन चित्रमिदं कृतम् ॥ १९२
तन्मां प्रशाधि मत्तश्च वृणुष्वाभीप्सितं वरम् । इत्युक्तवन्तं गरुडं महासत्त्वो जगाद सः ॥ १९३
न भक्ष्याः सानुतापेन भूत्वा नागाः पुनस्त्वया । तेऽप्यस्थिशेषा जीवन्तु ये त्वया पूर्वभक्षिताः ॥ १९४
एवमस्तु न भोक्ष्येऽहं नागाञ्शान्तमतः परम् । प्राग्ये च भुक्तास्ते जीवन्त्विति तार्क्ष्योऽप्युवाच सः ॥ १९५
ततोऽस्थिशेषा येऽप्यासन्नागास्तत्पूर्वभक्षिताः । तेऽपि सर्वे समुत्तस्थुस्तद्वरामृतजीविताः ॥ १९६
सुरैर्नागैर्मुनिगणैः सानन्दैर्मिलितैरथ । स लोकत्रितयाभिख्यामुवाह मलयाचलः ॥ १९७
तत्कालं तं च जीमूतवाहनोदन्तमद्भुतम् । गौर्याः प्रसादाद्विविदुः सर्वे विद्याधरेश्वराः ॥ १९८

आगत्य ते च चरणावनता हिमाद्रिं निन्युः क्षणान्मुदितबन्धुसुहृत्समेतम् ।
तं पार्वतीस्वकरक्लृप्तमहाभिषेकं सच्चक्रवर्तिनमथ प्रतिमुक्ततार्क्ष्यम् ॥ १९९

तत्र स पित्रा मात्रा मित्रावसुना च मलयवत्या च ।
निजगृहगतागतेन च संयुक्तः शङ्खचूडेन ॥ २००
लोकोत्तरचरिताद्भुतसिद्धां जीमूतवाहनः सुचिरम् ।
अभजत रत्नोपचितां विद्याधरचक्रवर्तिधुरम् ॥ २०१
इत्यत्युदारसरसामाख्याय कथां तदा स वेतालः ।
पुनरेव तं त्रिविक्रमसेनं पप्रच्छ राजानम् ॥ २०२
तद्ब्रूहि शङ्खचूडः किं वा जीमूतवाहनोऽभ्यधिकः ।
सत्त्वेन तयोरुभयोः पूर्वोक्तश्चात्र समयस्ते ॥ २०३
इत्यस्माद्वेतालाच्छ्रुत्वा मौनं विहाय शापभयात् ।
तमुवाच स त्रिविक्रमसेनो नृपतिर्निरुद्वेगः ॥ २०४
बहुजन्मसिद्धमेतच्चित्रं जीमूतवाहनस्य कियत् ।
श्लाघ्यः स शङ्खचूडो मरणोत्तीर्णोऽपि यो रिपवे ॥ २०५
अन्यप्रत्तात्मानं प्राप्य सुदूरं गताय तार्क्ष्याय ।
पश्चाद्धावन्गत्वा स्वं देहमुपानयत्प्रसभम् ॥ २०६

एतन्निशम्यैव नृपस्य तस्य वाक्यं स वेतालवरो जगाम ।
पुनः स्वधामैव तदंसपृष्ठान्नृपोऽपि तं सोऽनुययौ तथैव ॥ २०७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रयोविंशस्तरङ्गः ।

---

चतुर्विंशस्तरङ्गः ।

( सप्तदशो वेतालः । )

ततो गत्वा पुनस्तस्मात्स राजा शिंशपातरोः । तं त्रिविक्रमसेनोंऽसे वीरो वेतालमग्रहीत् ॥ १
प्रस्थितं च ततस्तं स वेतालः स्कन्धतोऽब्रवीत् । राजञ्श्रमविनोदाय शृण्विमां वच्मि ते कथाम् ॥ २
अखण्डधर्ममर्यादं गङ्गाकूले कृतास्पदम् । कलेरगम्यं कनकपुरं नाम्नाभवत्पुरम ॥ ३
तस्मिन्यशोधनाख्योऽभूदन्वर्थो वसुधाधिपः । ररक्ष विप्लवाम्भोधेर्यो वेलाद्रिरिव क्षितिम् ॥ ४
जगदाह्लादकश्चण्डप्रतापोऽखण्डमण्डलः । विधिना यश्च चन्द्रार्कावेकीकृत्येव निर्ममे ॥ ५
मौर्ख्यं परपरीवादे न शास्त्रार्थे दरिद्रता । दोषे न कोषदण्डाभ्यां यस्यासीच्च महीपतेः ॥ ६
पापभीरुर्यशोलुब्धः षण्ढः परपुरंध्रिषु । यः शौर्यौदार्यशृङ्गारमयो जनतया जगे ॥ ७
तस्य राज्ञः पुरे तस्मिन्नभूदेको महावणिक् । उन्मादिनीति ख्याता च कन्या तस्याभवत्सुता ॥ ८
यो यस्तां हि ददर्शात्र स स तद्रूपसंपदा । उन्माद्यति स्म मदनस्यापि मोहनशक्तया ॥ ९
तस्यां च यौवनस्थायां स गत्वा तत्पिता वणिक् । यशोधनं तं राजानं नीतिवेदी व्यजिज्ञपत् ॥ १०
त्रैलोक्यरत्नभूता मे प्रदेयास्ति सुता प्रभो । तामनावेद्य देवस्य नान्यस्मै दातुमुत्सहे ॥ ११
देवोऽपि सर्वरत्नानां प्रभुः कृत्स्नेऽपि भूतले । तत्स्वीकृत्यानुगृह्णातु देवस्तां प्रतिमुच्य वा ॥ १२
इत्याकर्ण्य वणिग्वाक्यं स राजा ब्राह्मणान्निजान् । सादरं व्यसृजत्तस्याः सौलक्षण्यमवेक्षितुम् ॥ १३
ते गत्वा ब्राह्मणा दृष्ट्वा तां त्रैलोक्यैकसुन्दरीम् । सद्यः क्षोभं ययुः क्षिप्राल्लब्ध्वा धैर्यमचिन्तयन् ॥ १४
इमां प्राप्नोति चेद्राजा तद्राष्ट्रमवसीदति । एतन्मोहितचित्तो हि किं स राज्यमवेक्षते ॥ १५
तस्मात्सुलक्षणेत्येषा नाख्येया क्षितिपाय नः । इत्येव मन्त्रं संमन्त्र्य राज्ञस्ते जग्मुरन्तिकम् ॥ १६
कुलक्षणा सा देवेति तमूचुश्चात्र ते मृषा । तेन राजा स नैवैतां स्वीचकार वणिक्सुताम् ॥ १७
ततस्तदाज्ञया तां स कन्यामुन्मादिनीं पिता । वणिग्बलधराख्याय तत्सेनापतये ददौ ॥ १८
अथ सा तद्गृहे तस्थौ भर्त्रा तेन समं सुखम् । कुलक्षणेत्यहं राज्ञा त्यक्तेत्यात्तविमानना ॥ १९
याति काले च जात्वत्र हत्वा हेमन्तहस्तिनम् । फुल्लकुन्दलतादन्तं मथिताम्बुजिनीवनम् ॥ २०
आजगाम लसत्पुष्पमञ्जरीकेसरावलिः । चूताङ्कुरनखः क्रीडन्कानने मधुकेसरी ॥ २१
तत्कालं चात्र नगरे तं वसन्तमहोत्सवम् । स राजा निर्ययौ द्रष्टुं गजारूढो यशोधनः ॥ २२
तद्रूपालोकसंभाव्यविप्लवाः कुलयोषितः । अपसारयितुं दत्तं तदा चोद्घोपडिण्डिमम् ॥ २३
सा श्रुत्वोन्मादिनी तस्मै राज्ञे स्वगृहहर्म्यतः । आत्मानं दर्शयामास परित्यागावमानतः ॥ २४
स च तां चक्षुभे दृष्ट्वा राजा ज्वालामिवोद्गताम् । संधुक्षितस्य कामाग्नेर्मधुना मलयानिलैः ॥ २५
निर्वर्णयंश्च तद्रूपं जैत्रमस्त्रं मनोभुवः । गाढं प्रविष्टं हृदये क्षणान्मोहमुपाययौ ॥ २६
भृत्यैराश्वासितश्चात्र राजधानीं प्रविश्य सः । पृष्टेभ्यो बुबुधे तेभ्यस्तां प्रागुपनतोज्झिताम् ॥ २७
ततो निर्वास्य देशात्तांस्तत्कुलक्षणवादिनः । विप्राननुदिनं दध्यौ तामेवोत्कः स भूपतिः ॥ २८
अहो जडात्मा निर्लज्जश्चन्द्रो नित्यमुदेति यत् । जगन्नेत्रोत्सवे तस्या निष्कलङ्के मुखे सति ॥ २९
कठोरौ हेमकलशौ गजकुम्भौ च कर्कशौ । लभेते नोपमामस्याः स्तनयोः पीनतुङ्गयोः ॥ ३०
काञ्चीनक्षत्रमालाङ्कं तत्तस्या जघनस्थलम् । कं न कंदर्पमातङ्गमस्तकाभं विलोभयेत् ॥ ३१
इति तां चिन्तयन्नन्तः क्षीयते स्म दिने दिने । कामाग्निपुटपाकेन पच्यमानः स भूपतिः ॥ ३२
ह्रिया निगूहमानश्च पृच्छद्भ्यो बाह्यलक्षणैः । कृच्छ्राच्छशंस चाप्तेभ्यः स्वपीडाकारणं स तत् ॥ ३३

अलं संतप्य भजसे स्वाधीनां तर्हि किं न ताम् । इत्युक्तस्तैश्च नैवैतदनुमेने स धार्मिकः ॥ ३४
ततो बलधरो बुद्ध्वा स सेनापतिरेत्य तम् । प्रभुमभ्यर्थयामास सद्भक्तश्चरणानतः ॥ ३५
दासस्त्री तव दास्येव सा देव न पराङ्गना । स्वयं चाहं प्रयच्छामि तद्भार्यां स्वीकुरुष्व मे ॥ ३६
अथवा तां त्यजामीह देव देवकुले ततः । न दोषो ग्रहणे तस्यास्तव देवकुलस्त्रियः ॥ ३७
इति स्वसेनापतिना निर्बन्धेन स पार्थिवः । तेनानुनाथ्यमानोऽपि सान्तःकोपमुवाच तम् ॥ ३८
राजा भूत्वा कथं कुर्यामधर्ममहमीदृशम् । मय्युल्लङ्घितमर्यादे को हि तिष्ठेत्स्ववर्त्मनि ॥ ३९
भक्तोऽपि च भवान्पापे नियोजयति मां कथम् । परलोकमहादुःखहेतौ क्षणसुखावहे ॥ ४०
न क्षमिष्ये च ते धर्म्यान्दारान्यदि विहास्यसि । सहते मादृशः को हि तादृशं धर्मविप्लवम् ॥ ४१
तद्वरं मृत्युरित्युक्त्वा स राजा निषिषेध तम् । त्यजन्त्युत्तमसत्त्वा हि प्राणानपि न सत्पथम् ॥ ४२
तथैवार्थयमानांश्च पौरजानपदानपि । मिलितान्स निराचक्रे राजा सुदृढनिश्चयः ॥ ४३
ततः क्रमेण तेनैव स्मरज्वरभरोष्मणा । प्रक्षीणदेहः प्रययौ स यशःशेषतां नृपः ॥ ४४
सेनापतिश्चासहिष्णुस्तं तथा प्रमयं प्रभोः । सोऽग्निं विवेश भक्तानामनिर्वाच्यं हि चेष्टितम् ॥ ४५
इत्याख्यातकथाश्चर्यो वेतालोंऽसस्थितस्तदा । स त्रिविक्रमसेनं तं भूयः पप्रच्छ पार्थिवम् ॥ ४६
तदेतयोः को नृपते सेनापतिमहीभृतोः । सत्त्वेनाभ्यधिको ब्रूहि पूर्वोक्तः समयश्च ते ॥ ४७
इति वेतालतः श्रुत्वा मुक्तमौनः स तं नृपः । प्रत्युवाच द्वयो राजा सत्त्ववानधिकस्तयोः ॥ ४८
तदाकर्ण्यैव वेतालः साक्षेपस्तमभाषत । सेनापतिः कथं नात्र राजन्नभ्यधिको वद ॥ ४९
यस्तथा स्वामिने भक्त्या स्वभार्यां तां तथाविधाम् । सुचिरज्ञाततद्भोगसुखास्वादोऽप्युपानयत् ॥ ५०
आत्मानं चाग्निसाच्चक्रे तस्मिन्पञ्चत्वमागते । अनास्वादिततद्भोगस्तत्कान्तां तु जहौ नृपः ॥ ५१
वेतालेनैवमुक्तस्तु विहस्य स नृपोऽब्रवीत् । यद्यप्येवं तथाप्येतत्किं चित्रं कुलपुत्रकः ॥ ५२
सेनापतिः स भक्त्या यत्स्वाम्यर्थे तत्तथाकरोत् । प्राणैरपि हि भृत्यानां स्वामिसंरक्षणं व्रतम् ॥ ५३
राजानस्तु मदाध्माता गजा इव निरङ्कुशाः । छिन्दन्ति धर्ममर्यादाशृङ्खलां विषयोन्मुखाः ॥ ५४
तेषां ह्युद्रिक्तचित्तानामभिषेकाम्बुभिः समम् । विवेको विगलत्योघेनोह्यमान इवाखिलः ॥ ५५
क्षिप्यन्त इव चोद्धूय चलच्चामरमारुतैः । वृद्धोपदिष्टशास्त्रार्थरजोमशकमक्षिकाः ॥ ५६
आतपत्रेण सत्यं च सूर्यालोको निवार्यते । विभूतिवात्योपहता दृष्टिर्मार्गं च नेक्षते ॥ ५७
ते ते च विपदं प्राप्ता मारमोहितचेतसः । जगद्विजयिनोऽपीह राजानो नहुषादयः ॥ ५८
एष राजा पुनः पृथ्व्यामेकच्छत्रोऽपि यत्तया । उन्मादिन्या चपलया लक्ष्म्येव न विमोहितः ॥ ५९
प्राणानपि स धर्मात्मा तत्याज न पुनः पदम् । अमार्गे निदधे धीरस्तेनासौ मेऽधिको मतः ॥ ६०

इत्याकर्ण्य नृपस्य तस्य वचनं भूयस्तदंसस्थला-
द्वेतालः सहसा स्वमेव स पदं मायाप्रभावाद्ययौ ।
राजाप्यन्वसरत्तथैव स पुनः संप्राप्तुमेतं जवा-
दारब्धे हि सुदुष्करेऽपि महतां मध्ये विरामः कुतः ॥ ६१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुर्विंशस्तरङ्गः ।

---

पञ्चविंशस्तरङ्गः ।

( अष्टादशो वेतालः । )

ततः पितृवने तस्मिन्क्रव्यभक्षिभिरावृते । ज्वालाविलोलरसनैर्भूतैरिव चिताग्निभिः ॥ १
गत्वैव तस्यामक्षोभ्यः क्षपायां शिंशपातरुम् । स त्रिविक्रमसेनस्तमाससाद पुनर्नृपः ॥ २
तत्रापश्यच्च वेतालविकृतान्सदृशाकृतीन् । उल्लम्बमानान्सुबहून्प्रेतकायानशङ्कितम् ॥ ३
अहो किमेतत्किंवान्यन्मायी कालं क्षिपत्ययम् । वेतलो मे न वेद्म्येषां ग्राह्यं येनेह भूयसाम् ॥ ४

असिद्धार्थस्य चेद्रात्रिरियं मम गमिष्यति । ततो वह्निं प्रवेक्ष्यामि न सहिष्ये तु हास्यताम् ॥ ५
इति चिन्तयतस्तस्य राज्ञो विज्ञाय निश्चयम् । सत्त्वतुष्टः स वेतालः स्वमायां संजहार ताम् ॥ ६
ततो दृष्ट्वैकमेवात्र वेतालं नृकलेवरे । अवतीर्य गृहीत्वांसे स प्रतस्थे पुनर्नृपः ॥ ७
प्रक्रामन्तं च तं भूयः स वेतालोऽभ्यभाषत । राजन्नोद्विजसे चित्रं तदिमां मे कथां शृणु ॥ ८
अस्ति गौरीतपःक्लेशवृतेन त्रिपुरारिणा । असामान्यगुणोत्कर्षलुब्धेनेव स्वयं वृता ॥ ९
भोगवत्यमरावत्योस्तृतीयोज्जयिनी पुरी । उदारसुकृतप्राप्यनानाभोगोपबृंहिता ॥ १०
यस्यां स्तब्धत्वकार्कश्ये कुचेषु वरयोषिताम् । तासामेव भ्रुवोर्भङ्गो लोचनेषु च चापलम् ॥ ११
तमो निशासु वक्रत्वं यस्यां कविवरोक्तिषु । मदो दन्तिषु जाड्यं च मुक्तामलयजेन्दुषु ॥ १२
तस्यां चन्द्रप्रभाख्यस्य राज्ञोऽमात्यो बहुश्रुतः । देवस्वामीत्यभूद्विप्रो भूरियज्ञो महाधनः ॥ १३
तस्य कालेन तनयश्चन्द्रस्वामीत्यजायत । सोऽधीतविद्योऽपि युवा द्यूतैकव्यसनोऽभवत् ॥ १४
एकदा च द्विजसुतश्चन्द्रस्वामी स कांचन । द्यूतकारमहाठिण्ठां द्यूतेन क्रीडितुं ययौ ॥ १५
आश्लिष्यामः कमत्रेति विपद्भिरिव वीक्षितुम् । विक्षिप्तैः कृष्णशाराभैर्नेत्रैरक्षैर्निरन्तराम् ॥ १६
कः सोऽस्ति न श्रियं यस्य हराम्यप्यलकापतेः । इतीव तन्वतीं नादान्द्यूतकृत्कलहस्वनैः ॥ १७
तां प्रविश्य क्रमाद्दीव्यन्नक्षैः स कितवैः सह । वस्त्रादि हारयित्वापि धनमन्यदहारयत् ॥ १८
मृग्यमाणं च यत्नादात्स तद्धनमसंभवि । तदवष्टभ्य सभ्येन लगुडैः पर्यताड्यत ॥ १९
लगुडाहतसर्वाङ्गः पाषाणमिव निश्चलम् । कृत्वा मृतमिवात्मानं तस्थौ विप्रसुतोऽथ सः ॥ २०
तथैव दिवसान्द्वित्रांस्तत्र तस्मिन्नवस्थिते । क्रुद्धः स सभ्यष्ठिण्ठायां कितवान्स्वानभाषत ॥ २१
श्रितानेनाश्मता तावत्तदेतं क्षिपत क्वचित् । नीत्वान्धकूपे निःसत्त्वं धनं दास्याम्यहं तु वः ॥ २२
इत्युक्तास्तेन कितवास्तं चन्द्रस्वामिनं ततः । अरण्यं निन्युरुत्क्षिप्य दूरं कूपगवेषिणः ॥ २३
तत्रैको वृद्धकितवस्तानन्यानेवमभ्यधात् । मृतोऽयं प्रायशस्तत्किं कूपे क्षिप्तेन नोऽमुना ॥ २४
तदिहैवैनमुज्झित्वा वक्ष्यामः कूप उज्झितम् । इति ते तद्वचः सर्वे तथेति प्रतिपेदिरे ॥ २५
ततस्त्यक्त्वा गतेष्वेषु कितवेषु स उत्थितः । चन्द्रस्वामी विवेशात्र शून्यमेकं शिवालयम् ॥ २६
तत्र किंचित्समाश्वस्य चिन्तयामास दुःखितः । विश्वस्तो मायया कष्टं मुषितः कितवैरहम् ॥ २७
तदीदृशः क्व गच्छामि नाग्नोपहतपांसुलः । पिता बन्धुः सुहृद्वापि दृष्ट्वा किं हि वदेन्मम ॥ २८
तत्संप्रति स्थितोऽस्मीह नक्तं च क्षुत्प्रशान्तये । पश्यामि निर्गत्य कथं यतिष्ये भोजनं प्रति ॥ २९
इत्यालोचयतस्तस्य क्लान्तस्यानम्बरस्य च । मन्दीकृतातपोऽस्ताद्रिं रविस्त्यक्ताम्बरो ययौ ॥ ३०
तावच्च भूतिदिग्धाङ्गस्तत्रायाति स्म तापसः । महाव्रती जटाशूलधरो हर इवापरः ॥ ३१
स चन्द्रस्वामिनं दृष्ट्वा कोऽसीति परिपृच्छ्य च । श्रुत्वा तस्माच्च वृत्तान्तं प्रह्वं तं तापसोऽब्रवीत् ॥ ३२
त्वं ममेहाश्रमं प्राप्तः क्षुत्क्लान्तोऽचिन्तितोऽतिथिः । तदुत्तिष्ठ कृतस्नानो भिक्षाभागं ममाहर ॥ ३३
इत्युक्तो व्रतिना सोऽथ चन्द्रस्वामी जगाद तम् । विप्रोऽहं भगवन्भोक्ष्ये भिक्षाभागं कथं तव ॥ ३४
तच्छ्रुत्वा स व्रती सिद्धः प्रविश्य मठिकां निजाम् । इष्टसंपादिनीं विद्यां सस्मारातिथिवल्लभः ॥ ३५
संस्मृतोपस्थितां तां च किं करोमीति वादिनीम् । अमुष्यातिथ्यमतिथेः कुरुष्वेति शशास ताम् ॥ ३६
तथेत्युक्ते तया तत्र सोद्यानं साङ्गनाजनम् । पुरं सौवर्णमुत्पन्नं चन्द्रस्वामी ददर्श सः ॥ ३७
विस्मितं च तमभ्येत्य तस्माद्वाराङ्गनाः पुरात् । ऊचुरुत्तिष्ठ भद्रैहि स्नाहि भुङ्क्ष्व त्यज श्रमम् ॥ ३८
इत्युक्त्वाभ्यन्तरं नीत्वा स्नापयित्वानुलिप्य च । ताभिः स दत्तसद्वस्त्रो निन्येऽन्यद्वासकोत्तमम् ॥ ३९
तत्रान्तः स ददर्शैकां प्रधानयुवतिं युवा । सर्वाङ्गसुन्दरीं धात्रा कौतुकादिव निर्मिताम् ॥ ४०
तया स सोत्कयोत्थाय स्वासनार्धोपवेशितः । बुभुजे दिव्यमाहारं तयैवात्र समं ततः ॥ ४१
भुक्तपक्वफलस्वादुताम्बूलः स्वरसेन च । पर्यङ्कशयने भेजे तत्संभोगसुखं निशि ॥ ४२
प्रातः प्रबुद्धश्चापश्यत्तदेवात्र शिवायलम् । नापि दिव्याङ्गनां नापि पुरं तच्च परिच्छदम् ॥ ४३

ततः स विप्रो निर्यातं मठिकातः स्मितानमम्। पृष्टरात्रिसुखं प्रातस्तापसं तं व्यजिज्ञपत् ॥ ४४
त्वत्प्रसादादहं रात्रावुषितो भगवन्सुखम्। किं तु यास्यन्ति मे प्राणास्तया दिव्यस्त्रिया विना ॥ ४५
तच्छ्रुत्वा स तपस्वी तं हसन्कारुणिकोऽब्रवीत्। इहैवास्स्व पुनर्नक्तं भविष्यति तथैव ते ॥ ४६
इत्युक्ते व्रतिना तेन तद्युक्त्यैव प्रतिक्षपम्। चन्द्रस्वाम्यत्र सोऽभुङ्क्त भोगांस्तांस्तत्प्रसादतः ॥ ४७
बुद्ध्वा च तं शनैर्विद्याप्रभावं विधिचोदितः। एकदा तापसेन्द्रं तं स प्रसाद्यान्वयाचत ॥ ४८
सत्यं कृपा चेद्भगवन्मयि ते शरणागते। तदेतां देहि मे विद्यां यत्प्रभावोऽयमीदृशः ॥ ४९
इति ब्रुवाणं निर्बन्धात्तं प्रत्याह स तापसः। असाध्या तव विद्येयं साध्यतेऽन्तर्जले ह्यसौ ॥ ५०
तत्र चैषा सृजत्याशु जपतः साधकस्य तत्। मायाजालं विमोहाय येन सिद्धिं न सोऽश्नुते ॥ ५१
स हि तत्र पुनर्जातं बालमात्मानमीक्षते। ततो युवानमुद्व्यूढदारं जातात्मजं तथा ॥ ५२
सुहृन्मेऽयमयं शत्रुरिति मिथ्या स मुह्यति। न च स्मरति जन्मेदं न विद्यासाधने क्रियाम् ॥ ५३
यस्तु त्रिरष्टवर्षः सन्गुरुविद्याप्रबोधितः। जन्म स्मृत्वा विदित्वा तद्धीरो मायाविजृम्भितम् ॥ ५४
तद्वशोऽप्यत्र कुरुते तथैवाग्निप्रवेशनम्। परमार्थं जलोत्तीर्णः सिद्धविद्यः स पश्यति ॥ ५५
अन्यस्य न परं विद्या शिष्यस्यैषा हि सिद्ध्यति। अस्थानार्पणतो यावद्गुरोरपि विनश्यति ॥ ५६
मत्सिद्ध्यैव फले सिद्धे किं ग्रहेणामुना तव। मत्सिद्धिहान्या मा जातु तवैतदपि नङ्क्ष्यति ॥ ५७
एवं तपस्विनोक्तेऽपि चन्द्रस्वामी ग्रहेण सः। शिक्ष्यामि सर्वं मा भूद्भश्चिन्तात्रेति तमब्रवीत् ॥ ५८
ततोऽस्मै प्रतिपेदे तां विद्यां दातुं स तापसः। बताश्रितानुरोधेन किं न कुर्वन्ति साधवः ॥ ५९
ततो नीत्वा नदीतीरं स तं स्माह महाव्रती। वत्स विद्यां जपन्मायां यदा द्रक्ष्यसि तां तदा ॥ ६०
मायाग्निमेव प्रविशेर्विद्यया बोधितो मया। अहं च तावत्स्थास्यामि तवेहैव नदीतटे ॥ ६१
इत्युक्त्वाध्यापयामास तमाचान्तं शुचिं शुचिः। स चन्द्रस्वामिनं विद्यां सम्यक्तां व्रतिनां वरः ॥ ६२
ततस्तीरे स्थिते तस्मिन्गुरौ मूर्ध्ना प्रणम्य तम्। चन्द्रस्वामी स रभसान्नदीमवततार ताम् ॥ ६३
तस्यामन्तर्जले विद्यां तां जपन्सहसैव सः। तन्मायामोहितो मिथ्या सर्वं विस्मृत्य जन्म तत् ॥ ६४
वीक्षते यावदन्यस्यामुत्पन्नः स्वात्मना पुरि। पुत्रो विप्रस्य कस्यापि बुद्धिं स शनकैर्गतः ॥ ६५
कृतोपनयनोऽधीतविद्यो दारानवाप्य च। तद्दुःखसुखसंमूढः संपूर्णोऽपत्यवान्क्रमात् ॥ ६६
ततश्चात्र सुतस्नेहस्वीकृतस्तत्तदाचरत्। स्थितो बद्धरतिः सार्धं पितृभ्यां बन्धुभिस्तथा ॥ ६७
एवं जन्मान्तरं मिथ्या तस्यानुभवतोऽत्र सः। काले प्रबोधिनीं विद्यां गुरुः प्रायुङ्क्त तापसः ॥ ६८
स तद्विद्याप्रयोगेण सद्यस्तेन प्रबोधितः। स्मृत्वात्मानं गुरुं तं च मायाजालमवेत्य तत् ॥ ६९
उद्यतोऽग्निप्रवेशाय दिव्यासाध्यफलाप्तये। पर्यवारि निषेधद्भिर्वृद्धाप्तगुरुबन्धुभिः ॥ ७०
बहुधा बोध्यमानोऽपि तैर्दिव्यसुखलोलुपः। स सज्जितचितं प्रायान्नदीतीरं सबान्धवः ॥ ७१
दृष्ट्वात्र वृद्धौ पितरौ भार्यां च मरणोद्यताम्। क्रन्दन्ति बालापत्यानि सोऽथ मोहादचिन्तयत् ॥ ७२
कष्टं म्रियन्ते स्वजनाः सर्वे मे विशतोऽनलम्। न च जानामि किं सत्यं गुरोस्तद्वचनं न वा ॥ ७३
तत्किं नु प्रविशाम्यग्निमुत न प्रविशामि किम्। अथवा तत्कथं मिथ्या स्यात्संवादि गुरोर्वचः ॥ ७४
तद्विशाम्यनलं काममित्यन्तः प्रविमृश्य सः। अग्निप्रवेशं विदधे चन्द्रस्वामी किल द्विजः ॥ ७५
अनुभूतहिमस्पर्शो वह्नेश्च स सविस्मयः। शान्तमायो नदीतीरादुत्थायोपययौ तटम् ॥ ७६
तत्र स्थितं च दृष्ट्वा तं गुरुं नत्वा च पादयोः। पृच्छन्तं चाग्निशैत्यान्तं स्वमुदन्तमबोधयत् ॥ ७७
ततस्तं स गुरुः प्राह वत्स शङ्के कृतस्त्वया। अपचारोऽत्र शीतस्ते कथं जातोऽग्निरन्यथा ॥ ७८
अदृष्टमेतदेतस्या विद्यायाः साधने यतः। एतद्गुरोर्वचः श्रुत्वा चन्द्रस्वामी जगाद सः ॥ ७९
नापचारो मया कश्चिद्विहितो भगवन्निति। ततः स तद्गुरुर्विद्यां जिज्ञासुस्तां समस्मरत् ॥ ८०
न च साविरभूत्तस्य न तच्छिष्यस्य तस्य वा। नष्टविद्यावथोभौ तौ विषण्णौ जग्मतुस्ततः ॥ ८१

इत्याख्याय कथामथ वेतालः पृष्टवान्स तं भूयः।
पृथ्वीपतिं त्रिविक्रमसेनं समयं निगद्य पूर्वोक्तम् ॥ ८२

राजन्संशयमेतं छिन्द्धि मम ब्रूहि हेतुना केन ।
विहितेऽपि यथोद्दिष्टे कर्मणि विद्योभयोस्तयोर्नष्टा ॥ ८३

एतत्स वेतालवचो निशम्य तं प्रत्यवोचन्मनुजेन्द्रवीरः ।
जाने भवान्मे क्षिपतीह कालं योगेश्वरैवं तदपि ब्रवीमि ॥ ८४

न दुष्करेणापि हि कर्मणैव शुद्धेन सिद्धिः पुरुषस्य लभ्या ।
यावन्न निष्कम्प्य विकल्पशुद्धं धीरं मनो निर्मलसत्त्ववृत्ति ॥ ८५

तस्यात्र मन्दस्य तु विप्रयूनश्चित्तं प्रबुध्यापि विकल्पते स्म ।
विद्या न सा तेन गतास्य सिद्धिरस्थानदानाच्च गुरोर्विनष्टा ॥ ८६

इति तस्य नृपस्य सृष्टवाचो बत वेतालवरोऽसतः स भूयः ।
निजमेव पदं ययावलक्ष्यो नृपतिस्तं च तथैव सोऽन्वयासीत् ॥ ८७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चविंशस्तरङ्गः ।

---

## षड्विंशस्तरङ्गः ।

### ( एकोनविंशो वेतालः )

अथ गत्वा पुनः स्कन्धे वेतालं शिंशपाद्रुमात् । स त्रिविक्रमसेनस्तं गृहीत्वोदचलन्नृपः ॥ १
आगच्छन्तं च तं भूयो वेतालः सोऽभ्यभाषत । राजञ्शृणु कथामेकां हृद्यां ते कथयाम्यहम् ॥ २
अस्ति वक्रोलकं नाम पुरं सुरपुरोपमम् । तस्मिन्सूर्यप्रभाख्योऽभूद्राजा जम्भारिसंनिभः ॥ ३
सौकर्योद्यतया मूर्त्या दत्तानन्दो वसुंधराम् । इमां हरिरिवोद्धृत्य यो बभार चिरं भुजे ॥ ४
धूमासङ्गेऽश्रुसंपातः शृङ्गारे मारसंकथाः । द्वाःस्थेषु हेमदण्डाश्च राष्ट्रे यस्याभवन्प्रभोः ॥ ५
सर्वसंपत्समृद्धस्य तस्यैकाभूदनिर्वृतिः । नोदपद्यत यत्पुत्रो बहुष्वन्तःपुरेष्वपि ॥ ६
एतस्मिंश्च कथासंधौ ताम्रलिप्त्यां महापुरि । बभूव धनपालाख्यो धुर्यो धनवतां वणिक् ॥ ७
तस्य चाजायतैकैव नाम्ना धनवती सुता । विद्याधरी च्युता शापात्सौन्दर्येणैव सूचिता ॥ ८
तस्यां च यौवनस्थायां स वणिक्पञ्चतां ययौ । तद्धनं राजसानाथ्यादाक्रान्तमथ गोत्रजैः ॥ ९
ततो हिरण्यवत्याख्या वणिजस्तस्य गेहिनी । आदाय रत्नाभरणं निजमप्रकटस्थितम् ॥ १०
धनवत्या तया साकं स्वदुहित्रा निशामुखे । पलाय्य दायादभयाद्गृहाद्गुप्तं विनिर्ययौ ॥ ११
ध्वान्तेन बहिरन्तश्च सा दुःखेनान्धकारिता । कृच्छ्राद्बहिःपुरं प्रायात्सुताहस्तावलम्बिनी ॥ १२
तत्र संतमसे यान्ती विधियोगादलक्षितम् । अंसेनाताडयच्चौरं शूलाग्रारोपितस्थितम् ॥ १३
स सजीवस्तदंसाग्रघट्टनाधिकपीडितः । आः क्षते क्षारमेतन्मे क्षिप्तं केनेत्यभाषत ॥ १४
ततस्तत्रैव सा कोऽसीत्यपृच्छत्तं वणिग्वधूः । प्रत्युवाच ततश्चौरश्चौरोऽहमिह सूचितः ॥ १५
शूले पापस्य चाद्यापि नोत्क्रामन्ति ममासवः । तदार्ये त्वं मम ब्रूहि कासि क्वैवं प्रयासि च ॥ १६
तच्छ्रुत्वा तं वणिग्भार्या यावत्स्वोदन्तमाह सा । तावत्तिलकितं प्राच्या मुखमुद्भासितेन्दुना ॥ १७
ततो दिक्षु प्रकाशासु स चौरस्तां वणिक्सुताम् । दृष्ट्वा धनवतीं कन्यां तन्मातरमुवाच ताम् ॥ १८
शृणु मे प्रार्थनामेकां सहस्रं काञ्चनस्य ते । ददामि तदिमां मह्यं स्वसुतां देहि कन्यकाम् ॥ १९
किमेतया तवेत्युक्तो हसन्त्याथ तयात्र सः । पुनश्चौरोऽब्रवीन्नास्ति पुत्रो मम गतायुषः ॥ २०
न चापुत्रोऽश्नुते लोकांस्तदेषा यं मदाज्ञया । कुत्रचिज्जनयेत्पुत्रं क्षेत्रजः स भवेन्मम ॥ २१
इत्येतां प्रार्थये त्वं तु तद्विधत्स्व ममेप्सितम् । तच्छ्रुत्वा सा वणिग्योषिल्लोभात्तत्प्रत्यपद्यत ॥ २२
आनीय च कुतोऽप्यम्बु पाणौ चौरस्य तस्य सा । एषा सुता मया तुभ्यं कन्या दत्तेत्यपातयत् ॥ २३
सोऽपि तद्दुहितुर्दत्तयथोक्ताज्ञो जगाद ताम् । गच्छामुष्य वटस्याधः खात्वा स्वर्णं गृहाण तत् ॥ २४
गतासोर्दाहयित्वा मे देहं युक्त्या विसृज्य च । अस्थीनि तीर्थे ससुता गच्छेर्वक्रोलकं पुरम् ॥ २५

तत्र सूर्यप्रभे राज्ञि सौराज्यसुखिते जने । निरुपद्रवनिश्चिन्ता स्थास्यसि त्वं यथेच्छसि ॥ २६
इत्युक्त्वा तृषितः पीत्वा तयैवोपहृतं जलम् । शूलव्यथव्यथोत्क्रान्तजीवश्चौरो बभूव सः ॥ २७
ततो गत्वा वणिक्स्त्री सा स्वर्णं वटतरोस्तलात् । गृहीत्वा ससुता गुप्तमगाद्भर्तुसुहृद्गृहम् ॥ २८
तत्र स्थित्वा च युक्त्या तद्दाहयित्वा कलेवरम् । चौरस्य तस्य तीर्थेऽस्थिक्षेपादिकमकारयत् ॥ २९
अन्येद्युश्चात्तगुप्तार्थी ततो निर्गत्य सात्मजा । प्रयान्ती क्रमशः प्राप सा वक्रोलकं पुरम् ॥ ३०
तत्रैकं वसुदत्ताख्याद्गृहं क्रीत्वा वणिग्वरात् । तस्मिन्नुवास सुतया धनवत्या तया सह ॥ ३१
तदा च तत्रोपाध्यायो विष्णुस्वामीत्यभूत्पुरे । मनःस्वामीति तस्यासीच्छिष्यो विप्रोऽतिरूपवान् ॥ ३२
विद्याभिजनयुक्तोऽपि स यौवनवशीकृतः । तत्र हंसावलीं नाम वाञ्छति स्म विलासिनीम् ॥ ३३
सा च सौवर्णदीनारशतपञ्चकमग्रहीत् । भाटिं तस्य च तन्नाभूद्व्यपीदत्तेन सोऽन्वहम् ॥ ३४
एकदा च तमद्राक्षीत्तादृशं सा वणिक्सुता । क्षामाभिरामवपुषं धनवत्यत्र हर्म्यतः ॥ ३५
तद्रूपहृतचित्ता च भर्तुश्चौरस्य तस्य सा । स्मृत्वानुज्ञां समीपस्थां युक्त्यावोचत्स्वमातरम् ॥ ३६
अम्ब विप्रसुतस्यास्य पश्यैते रूपयौवने । कीदृशे बत विश्वस्य नयनामृतवर्षिणी ॥ ३७
एतच्छ्रुत्वैव तस्मिंस्तां बद्धभावामवेत्य च । तन्माता सा वणिग्भार्या मनस्येवमचिन्तयत् ॥ ३८
मद्दुहित्रानया तावद्वरणीयः सुताप्तये । कश्चिद्भर्त्राज्ञया तस्मादेष एवार्थ्यते न किम् ॥ ३९
इत्याकलय्य व्यसृजत्तत्संदिश्य मनीषितम् । रहस्यधारिणीं चेटीं तमानेतुं सुताकृते ॥ ४०
सा गत्वा विजने नीत्वा चेटी तस्मै शशंस तत् । स च श्रुत्वा द्विजयुवा व्यसनी तामभाषत ॥ ४१
यदि हंसावलीहेतोर्दीनारशतपञ्चकम् । सौवर्णं दीयते मह्यं तदेकामेमि यामिनीम् ॥ ४२
इति तेनोक्तया चेट्या तया गत्वा तथैव सा । उक्ता वणिक्स्त्री तस्मै तत्तद्धस्ते प्राहिणोद्धनम् ॥ ४३
तद्गृहीत्वा मनःस्वामी तत्पुत्र्या वासकं ययौ । तस्याः स तन्निसृष्टाया धनवत्याः सचेटिकः ॥ ४४
तत्र तां विततोत्कण्ठां कान्तां भूषितभूतलाम् । स चकोर इव ज्योत्स्नां ददर्श च जहर्ष च ॥ ४५
तया समं च नीत्वा तां रात्रिं संभोगलीलया । निर्गत्य स ततो गुप्तं ययौ प्रातर्यथागतम् ॥ ४६
सापि तस्माद्धनवती सगर्भाभूद्वणिक्सुता । काले च सुषुवे पुत्रं लक्षणानुमितायतिम् ॥ ४७
परितुष्टां तदा तां च सुतोत्पत्त्या समातृकाम् । आदिदेश हरः स्वप्ने दर्शितस्ववपुर्निशि ॥ ४८
युक्तं हेमसहस्रेण नीत्वा बालमुपस्यमुम् । सूर्यप्रभनृपस्येह मञ्चस्थं द्वारि मुञ्चतम् ॥ ४९
एवं स्यात्क्षेममित्युक्ता शूलिना सा वणिक्सुता । तन्माता च प्रबुद्ध्यैतं स्वप्नमन्योन्यमूचतुः ॥ ५०
नीत्वा च तं तत्यजतुर्भगवत्प्रत्ययाच्छिशुम् । राज्ञः सूर्यप्रभस्यास्य सिंहद्वारे सहेमकम् ॥ ५१
तावच्च तमपि स्वप्ने सुतचिन्तातुरं सदा । तत्र सूर्यप्रभं भूपमादिदेश वृषध्वजः ॥ ५२
उत्तिष्ठ राजन्बालस्ते सिंहद्वारे सकाञ्चनः । केनापि स्थापितो भव्यो मञ्चकस्थं गृहाण तम् ॥ ५३
इत्युक्तः शंभुना प्रातः प्रबुद्धोऽपि तथैव सः । द्वाःस्थैः प्रविश्य विज्ञप्तो निर्ययौ नृपतिः स्वयम् ॥ ५४
दृष्ट्वा च सिंहद्वारे तं बालं सकनकोत्करम् । रेखाच्छत्रध्वजाद्यङ्कपाणिपादं शुभाकृतिम् ॥ ५५
दत्तो ममोचितः पुत्रः शंभुनायमिति ब्रुवन् । स्वयं गृहीत्वा बाहुभ्यां राजधानीं विवेश सः ॥ ५६
चकार चोत्सवं तावदसंख्यातं ददद्वसु । दरिद्रशब्दस्यैकस्य यावदासीन्निरर्थता ॥ ५७
नृत्तवाद्यादिभिर्नीत्वा द्वादशाहं ततः स तम् । पुत्रं चन्द्रप्रभं नाम्ना चक्रे सूर्यप्रभो नृपः ॥ ५८
ववृधे राजपुत्रोऽत्र सोऽथ चन्द्रप्रभः क्रमात् । वपुषेव गुणौघेनाप्याश्रितानन्ददायिना ॥ ५९
शनैर्युवा च संजज्ञे शौर्यौदार्यश्रुतादिभिः । आवर्जितप्रकृतिकः क्ष्माभारोद्वहनक्षमः ॥ ६०
तादृशं च ततो दृष्ट्वा तं स सूर्यप्रभः पिता । राज्येऽभिषिच्यैव कृती वृद्धो वाराणसीं ययौ ॥ ६१
पृथ्वीं शासति तस्मिंश्च तनये नयशालिनि । स राजा तत्र तत्याज चरंस्तीव्रतपस्तनुम् ॥ ६२
बुद्ध्वा पितृविपत्तिं तामनुशोच्य कृतक्रियः । सोऽथ चन्द्रप्रभो राजा सचिवान्धार्मिकोऽब्रवीत् ॥ ६३
तातस्य तावत्केनाहमनृणो भवितुं क्षमः । तथाप्येकां स्वहस्तेन ददाम्येतस्य निष्कृतिम् ॥ ६४
नीत्वा क्षिपामि गङ्गायामस्थीन्यस्य यथाविधि । गत्वा सर्वपितृभ्यश्च गयां पिण्डं ददाम्यहम् ॥ ६५

प्रसङ्गात्तीर्थयात्रां च करोम्यापूर्वसागरम् । इत्युक्तवन्तं राजानं मन्त्रिणस्तं व्यजिज्ञपन् ॥ ६६
न देव युज्यते कर्तुमेतद्राज्ञः कथंचन । नहि राज्यं बहुच्छिद्रं क्षणं तिष्ठत्यरक्षितम् ॥ ६७
तदेषा परहस्तेन कार्या ते पितृपक्रिया । स्वधर्मपालनादन्या तीर्थयात्रा च का तव ॥ ६८
बह्वपायं क्व पान्थत्वं नित्यगुप्ताः क्व पार्थिवाः । इति मन्त्रिवचः श्रुत्वा राजा चन्द्रप्रभोऽब्रवीत् ॥ ६९
अलं विकल्पैः पित्रर्थे गन्तव्यं निश्चितं मया । द्रष्टव्यानि च तीर्थानि यावन्मे क्षमते वयः ॥ ७०
पश्चात्को वेत्ति किं भावि शरीरे क्षणनश्वरे । राज्यं चागमनं यावद्रक्ष्यं युष्माभिरेव मे ॥ ७१
श्रुत्वैतं निश्चयं राज्ञस्तूष्णीमासत मन्त्रिणः । ततः प्रयाणसंभारं सज्जीचक्रे स भूपतिः ॥ ७२
अथाह्नि स शुभे स्नातो हुताग्निः पूजितद्विजः । सुयुक्तं रथमास्थाय प्रयतः शान्तवेषभृत् ॥ ७३
सामन्तान्राजपुत्रांश्च पौराञ्जनपदानपि । निवर्त्यानिच्छतः कृच्छ्रादासीमान्तानुयायिनः ॥ ७४
ब्राह्मणैर्वाहनारूढैः समं स सपुरोहितः । प्रतस्थे सचिवन्यस्तराज्यश्चन्द्रप्रभो नृपः ॥ ७५
विचित्रवेषभाषादिविलोकनविनोदितः । पश्यन्नानाविधान्देशान्क्रमात्प्राप च जाह्नवीम् ॥ ७६
ददर्श तां च जन्तूनां जलकल्लोलपङ्क्तिभिः । त्रिदिवारोहसोपानपद्धतिं सृजतीमिव ॥ ७७
हिमवत्प्रभवां शंभोः कृतक्रीडाकचग्रहाम् । बिभ्रतीं चाम्बिकालीलां देवर्षिगणवन्दिताम् ॥ ७८
रथावतीर्णस्तस्यां च कृतस्नानो यथाविधि । चिक्षेपास्थीनि भूपस्य तस्य सूर्यप्रभस्य सः ॥ ७९
दत्तदानः कृतश्राद्धो रथारूढस्ततोऽपि च । प्रस्थितः क्रमशः प्राप प्रयागमृषिसंस्तुतम् ॥ ८०
यत्रार्चिरादिधूमादिमार्गाविव समागतौ । गङ्गायमुनयोर्वाहौ भातः सुगतये नृणाम् ॥ ८१
तत्रोपोष्य कृतस्नानदानश्राद्धादिसत्क्रियः । वाराणसीं जगामाथ स चन्द्रप्रभभूपतिः ॥ ८२
एत मोक्षं प्रयातेति वदन्त्यामिव दूरतः । वाताक्षिप्तसमुत्क्षिप्तैः सुरसद्मध्वजांशुकैः ॥ ८३
तस्यां दिनान्युपोष्य त्रीण्यभ्यर्च्याथ वृषध्वजम् । भोगैर्निजोचितैस्तैस्तैः प्रययौ स गयां प्रति ॥ ८४
ततः फलौघनमितैर्मञ्जुगुञ्जद्विहङ्गमैः । पदे पदे सप्रणामं स्तूयमान इवाङ्घ्रिपैः ॥ ८५
विक्षिप्तवन्यकुसुमैरर्च्यमान इवानिलैः । नानारण्यान्यतिक्रम्य पुण्यं प्राप गयाशिरः ॥ ८६
विधाय तत्र च श्राद्धं विधिवद्भूरिदक्षिणम् । चन्द्रप्रभः स राजात्र धर्मारण्यमुपेयिवान् ॥ ८७
गयाकूपेऽस्य ददतः पितुः पिण्डं तदन्तरात् । समुत्तस्थुस्तमादातुं त्रयो मानुषपाणयः ॥ ८८
तद्दृष्ट्वैव स विभ्रान्तः किमेतदिति पार्थिवः । कस्मिन्हस्ते क्षिपे पिण्डमित्यपृच्छन्निजान्द्विजान् ॥ ८९
ते तमूचुरयं तावदेकश्चौरस्य निश्चितम् । हस्तो लोहमयः शङ्कुर्यस्मिन्देवैष दृश्यते ॥ ९०
द्वितीयो ब्राह्मणस्यायं करो धृतपवित्रकः । राज्ञः पाणिस्तृतीयोऽयं साङ्गुलीयः सुलक्षणः ॥ ९१
तन्न विद्मः क्व पिण्डोऽयं निक्षेप्यः किमिदं भवेत् । इत्युक्तस्तैर्द्विजैः सोऽत्र राजा लेभे न निश्चयम् ॥ ९२
इत्याख्याय कथाश्चर्यं वेतालोंऽसस्थितस्तदा । स त्रिविक्रमसेनं तं जगाद नृपतिं पुनः ॥ ९३
तत्कस्य हस्ते देयः स्यात्स पिण्ड इति वक्तु मे । भवांस्तावत्स एवात्र प्राक्तनः समयश्च ते ॥ ९४
इति वेतालतः श्रुत्वा मुक्तमौनः स भूपतिः । तं त्रिविक्रमसेनोऽत्र धर्मज्ञः प्रत्यभाषत ॥ ९५
चौरस्य हस्ते दातव्यः स पिण्डः क्षेत्रजो यतः । चन्द्रप्रभः स नृपतिः पुत्रस्तस्यैव नान्ययोः ॥ ९६
विप्रस्य जनकस्यापि स हि पुत्रो न बुध्यते । विक्रीतो हि धनेनात्मा तामेकां तेन यामिनीम् ॥ ९७
राज्ञः सूर्यप्रभस्यापि संस्कारादानवर्धनैः । भवेत्स पुत्रो न स्याच्चेत्स्वधनं तस्य तत्कृते ॥ ९८
शिशोस्तस्य हि शीर्षान्ते मञ्चस्थस्यैव हेम यत् । न्यस्तमासीत्तदेवास्य मूल्यं संवर्धनादिके ॥ ९९
तस्माद्धस्तोदकप्राप्ता तन्माता यस्य येन सा । आज्ञा तज्जनने दत्ता यस्य तन्निखिलं धनम् ॥ १००
तस्य स क्षेत्रजः पुत्रश्चौरस्यैव महीपतिः । पिण्डस्तस्यैव हस्ते च देयस्तेनेति मे मतिः ॥ १०१

इत्युक्तवतो नृपतेस्तस्यांसात्स्वपदमेव वेतालः ।
प्रययौ स च त्रिविक्रमसेनो राजा तमन्वयाद्भूयः ॥ १०२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षड्विंशस्तरङ्गः ।

सप्तविंशस्तरङ्गः ।

( विंशो वेतालः । )

ततो गत्वा गृहीत्वांसे वेतालं शिंशपातरोः । स त्रिविक्रमसेनस्तमुच्चचाल पुनर्नृपः ॥ १
मौनेन प्रस्थितं तं च वेतालोऽसादुवाच सः । राजन्कस्तेऽनुबन्धोऽयं गच्छ रात्रिसुखं भज ॥ २
न युक्तं तव नेतुं मां कुभिक्षोस्तस्य गोचरम् । ग्रहो वा तत्र चेदस्तु कथामेकामिमां शृणु ॥ ३
अस्ति स्वरेखानुत्क्रान्तवर्णभेदव्यवस्थिति । नगरं चित्रकूटाख्यं बिभ्राणं सत्यनामताम् ॥ ४
तत्रामृतरसासारवर्षी प्रणयिचक्षुषाम् । चन्द्रावलोक इत्यासीद्राजा राजशिखामणिः ॥ ५
आलानं शौर्यकरिणस्त्यागस्योत्पत्तिकेतनम् । विलासवेश्म रूपस्य शशंसुर्यं विचक्षणाः ॥ ६
सतीषु सर्वसंपत्सु यन्न प्राप निजोचिताम् । भार्यां सैका परं चिन्ता यूनस्तस्याभवद्धृदि ॥ ७
एकदा च तदुद्वेगविनोदाय महाटवीम् । जगामाश्वीयसहितो मृगयायै स भूपतिः ॥ ८
तत्र सूकरवृन्दानि भिन्दन्बाणैर्निरन्तरैः । श्यामलाम्बररोचिष्णुस्तमांसीव रविः करैः ॥ ९
शाययञ्शरशय्यासु सिंहान्समरदुर्मदान् । मूर्धजैर्धवलैर्भीष्मानर्जुनाधिकविक्रमः ॥ १०
विपक्षीकृत्य शरभान्पातयन्पर्वतोपमान् । दम्भोलिकर्कशप्रासपातैर्जम्भारिविक्रमः ॥ ११
रसाद्विविक्षुः स नृपो वनाभ्यन्तरमेककः । तीव्रपार्ष्णिप्रहारेण प्रेरयामास वाजिनम् ॥ १२
स वाजी तेन च कशाघातेनोत्तेजितो भृशम् । पार्ष्णिघातेन विषमं समं चागणयन्क्षणात् ॥ १३
वनान्तरं ततोऽनैषीद्वाताधिकजवो नृपम् । मोहितेन्द्रियवृत्तिं तं व्यतीत्य दशयोजनीम् ॥ १४
तत्र तस्मिन्स्थिते वाहे राजा दिङ्मोहमेत्य सः । भ्रमञ्श्रान्तो ददर्शैकमारात्सुविपुलं सरः ॥ १५
मारुतेनाभिमुख्येन नमितोन्नमितैर्मुहुः । इत एहीति हस्ताभैः संज्ञां कुर्वदिवाम्बुजैः ॥ १६
तत्र गत्वा च तुरगं विपर्याणोपवर्तितम् । स्नातपीतं तरुच्छायबद्धं दत्ततृणोत्करम् ॥ १७
कृत्वा स्वयं कृतस्नानः पीताम्बुर्गलितश्रमः । रम्येषु तत्प्रदेशेषु ददौ दृष्टिमितस्ततः ॥ १८
एकत्र चाशोकतरोरधस्तान्मुनिकन्यकाम् । आमुक्तपुष्पाभरणां वल्कलांशुकशोभिनीम् ॥ १९
मुग्धबद्धजटाजूटसविशेषमनोरमाम् । सखीद्वितीयामाश्चर्यरूपां राजा ददर्श सः ॥ २०
अचिन्तयच्च पुष्पेषोः पतितः शरगोचरे । केयं स्यात्सरसि स्नातुं सावित्री किंस्विदागता ॥ २१
किं हरस्याङ्कविभ्रष्टा गौरी भूयः श्रिता तपः । अहन्यस्तंगतस्येन्दोः कान्तिः किं वा धृतव्रता ॥ २२
तदेतामुपसृत्येह शनैरुपलभे वरम् । इत्यालोच्य ययौ तस्याः कन्यायाः सोऽन्तिकं नृपः ॥ २३
सापि दृष्ट्वा तमायान्तं तद्रूपाकुलितेक्षणा । पूर्वप्रारब्धपुष्पस्रक्सन्नहस्ता व्यचिन्तयत् ॥ २४
कोऽयमीदृगरण्येऽस्मिन्सिद्धो विद्याधरो नु किम् । यतास्य रूपं विश्वस्य कृतार्थीकरणं दृशोः ॥ २५
एवं वितर्क्य पश्यन्ती तिर्यक्तं त्रपया ततः । उत्थाय सोरुस्तम्भापि गन्तुं प्रावर्ततैव सा ॥ २६
अथोपेत्य स राजा तामेवं नागरिकोऽब्रवीत् । आस्तां प्रथमदृष्टस्य दर्शनैकफलार्थिनः ॥ २७
जनस्य दूरायातस्य सुन्दरि स्वागतादिकम् । कोऽयं त्वाश्रमिणां धर्मो यदेतस्मात्पलाय्यते ॥ २८
इत्युक्ते भूभुजा तस्याः सखी तद्वद्विचक्षणा । तत्रोपवेश्य नृपतेश्चकारातिथ्यसत्क्रियाम् ॥ २९
अथ सप्रणयं राजा तां स पप्रच्छ सोत्सुकः । भद्रे कः पुण्यवान्वंशस्त्वत्सख्यालंकृतोऽनया ॥ ३०
कानि श्रोत्रामृतस्यन्दीन्यस्या नामाक्षराणि च । किं चैवमनया पुष्पसुकुमारमिदं वपुः ॥ ३१
तापसोचितया वृत्त्या विजनेऽस्मिन्कदर्थ्यते । इति राज्ञो वचः श्रुत्वा तत्सखी प्रत्युवाच सा ॥ ३२
एषा महर्षेः कण्वस्य दुहिता वर्धिताश्रमे । मेनकासंभवा कन्या नाम्ना चेन्दीवरप्रभा ॥ ३३
इहास्मिन्सरसि स्नातुमागतानुज्ञया पितुः । इतोऽत्र नातिदूरेऽस्ति तस्यैतत्पितुराश्रमः ॥ ३४
इत्युक्तः स तया हृष्टो राजारुह्य तुरङ्गमम् । याचितुं तां सुतां तस्य कण्वर्षेराश्रमं ययौ ॥ ३५
विवेश च विनीतस्तं बहिः स्थापितवाहनः । जटावल्कलिभिः पूर्णं पादपैरिव तापसैः ॥ ३६
तन्मध्ये च तमद्राक्षीदृषिभिः परिवारितम् । तेजसाह्लादनं कण्वमुनिं चन्द्रमिव ग्रहैः ॥ ३७

उपेत्य पादयोस्तं च ववन्दे सोऽपि तं मुनिः। कल्पितातिथ्यविश्रान्तं ज्ञानी क्षिप्रादभाषत ॥ ३८
वत्स चन्द्रावलोकैतच्छृणु यद्ब्रवीमि ते हितम्। जानासि यादृक्संसारे प्राणिनां मृत्युतो भयम् ॥ ३९
तन्निष्कारणमेवैतान्वराकान्हंसि किं मृगान्। शस्त्रं हि भीतरक्षार्थं धात्रा क्षत्रस्य निर्मितम् ॥ ४०
तत्प्रजा रक्ष धर्मेण समुन्मूलय कण्टकान्। हस्त्यश्वाद्यादियोग्याभिश्चललक्ष्यादि साधय ॥ ४१
भुङ्क्ष्व राज्यसुखं देहि धनं दिक्षु यशः किर। कृतान्तक्रीडितं हिंस्रं मृगयाव्यसनं त्यज ॥ ४२
हन्तुर्वध्यस्य चान्यस्य यत्र तुल्या प्रमादिता। किं तेन बह्वनर्थेन पाण्डोर्वृत्तं न किं श्रुतम् ॥ ४३
एतत्कण्वमुनेर्वाक्यं श्रुत्वा समभिनन्द्य च। राजा चन्द्रावलोकस्तमर्थज्ञः प्रत्यभाषत ॥ ४४
अनुशिष्टोऽस्मि भगवन्कृतो मेऽनुग्रहः परः। मृगयाया निवृत्तोऽहं प्राणिनः सन्तु निर्भयाः ॥ ४५
तच्छ्रुत्वोवाच स मुनिस्तुष्टोऽहममुना तव। प्राणिष्वभयदानेन तद्वृणीष्वेप्सितं वरम् ॥ ४६
इत्युक्तस्तेन मुनिना कालज्ञः स नृपोऽभ्यधात्। तुष्टोऽसि चेत्सुतां देहि मह्यमिन्दीवरप्रभाम् ॥ ४७
इत्यर्थितवते सोऽस्मै राज्ञे स्नानगतां मुनिः। अप्सरःसंभवां कन्यां तां ददावनुरूपिकाम् ॥ ४८
ततः कृतविवाहस्तां मुनिभार्याप्रसाधिताम्। कृतानुयात्रामुद्बाष्पैस्तापसैरा निजाश्रमात् ॥ ४९
इन्दीवरप्रभां भार्यामादायारुह्य वाजिनम्। चन्द्रावलोकस्तरसा प्रतस्थे स ततो नृपः ॥ ५०
गच्छतश्चास्य विततं दृष्ट्वा तद्दिनचेष्टितम्। रविः खिन्न इवास्ताद्रिमस्तके समुपाविशत् ॥ ५१
ददृशे मृगनेत्रा च क्रमादुद्रिक्तमन्मथा। ध्वान्तनीलपटच्छन्नरूपा रात्र्यभिसारिका ॥ ५२
तस्मिन्काले पथि प्राप स राजाश्वत्थपादपम्। सज्जनाशयसुस्वच्छवापीजलतटस्थितम् ॥ ५३
शाखापत्रौघसंछन्नशाद्वलश्यामलस्थलम्। दृष्ट्वा च तं वसामीह रात्रिमित्यकरोद्धृदि ॥ ५४
ततोऽवतीर्य तुरगाद्दत्त्वा तस्मै तृणोदकम्। विश्रम्य पुलिने वाप्या उपयुक्ताम्बुमारुतः ॥ ५५
मुनिपुत्रिकया सार्धं तया तस्य तरोस्तले। प्रियया पुष्पशय्यायां संविवेश स भूपतिः ॥ ५६
तत्क्षणं च समाक्रम्य तिमिरांशुकहारिणा। सरागमाननं प्राच्याश्चुचुम्बे शशलक्ष्मणा ॥ ५७
विरेजुश्चन्द्रकिरणैः समाश्लिष्य प्रसारिताः। वीतमानावकाशाश्चाशेषा वितमसो दिशः ॥ ५८
अत्रान्तरे लतागुल्मविवरप्रसृतैः करैः। ऐन्दवै रत्नदीपाभैस्तरुमूले विभासिते ॥ ५९
सोऽपि राजा सिषेवे तामाश्लिष्येन्दीवरप्रभाम्। नवसंगमसोत्कण्ठसरसं सुरतोत्सवम् ॥ ६०
विस्रंसयामास शनैर्नीवीं तस्यास्त्रपामिव। अखण्डयच्च दशनैर्मुग्धभावमिवाधरम् ॥ ६१
रचयामास कुचयोर्यौवनद्विपकुम्भयोः। करजक्षतसद्रत्ननवनक्षत्रमालिकाम् ॥ ६२
मुखं कपोलौ नयने मुहुः परिचुचुम्ब च। लावण्यामृतनिःष्यन्दमापिबन्निव सर्वतः ॥ ६३
इत्थं निधुवनक्रीडासुखेन स तया सह। निनाय कान्तया तत्र राजा क्षणमिव क्षपाम् ॥ ६४
प्रातश्च मुक्तशयनः सांध्यस्यानन्तरं विधेः। स्वसैन्यावाप्तये यातुमुन्मुखोऽभूद्वधूसखः ॥ ६५
तावच्च नक्तं लुप्ताब्जखण्डशोभं निशापतिम्। भियेवास्ताद्रिकुहरप्रलीनं ध्वस्ततेजसम् ॥ ६६
हन्तुकाम इव क्रोधादाताम्रतररोचिषि। प्रसारितकरोत्क्षिप्तमण्डलाग्रे विवस्वति ॥ ६७
अकस्मादाजगामात्र विद्युत्पिङ्गशिरोरुहः। कज्जलश्यामलः कालमेघाभो ब्रह्मराक्षसः ॥ ६८
अन्त्रमालाकृतोत्तंसः केशयज्ञोपवीतभृत्। खादन्नरशिरोमांसं कपालेन पिबन्नसृक् ॥ ६९
सोऽट्टहासं विमुच्योग्रं मुखेनाग्निं वमन्क्रुधा। दंष्ट्राकरालो राजानं भर्त्सयन्निजगाद तम् ॥ ७०
पाप ज्वालामुखं नाम विद्धि मां ब्रह्मराक्षसम्। निवासश्चैष मेऽश्वत्थो देवैरपि न लङ्घ्यते[1] ॥ ७१
सोऽयं त्वया समाक्रम्य परिभुक्तः स्त्रिया सह। रात्रिचर्यागतस्याद्य तद्भुङ्क्ष्वाविनयात्फलम् ॥ ७२
एषोऽहं ते दुराचार कामोपहतचेतसः। उत्पाट्य हृदयं भोक्ष्ये पास्याम्येव च शोणितम् ॥ ७३
तच्छ्रुत्वैव तथा घोरं तमवध्यमवेक्ष्य च[1] त्रस्ताङ्गनः सविनयं भयात्प्रत्यब्रवीन्नृपः ॥ ७४
अजानतापराद्धं यन्मया ते तत्क्षमस्व मे[1]। तवाहमाश्रमे ह्यस्मिन्नतिथिः शरणाश्रितः ॥ ७५

१ योग्या अभ्यासः.

दास्यामि चेप्सितं तुभ्यमानीय पुरुषं पशुम् । येन ते भविता तृप्तिस्तत्प्रसीद क्रुधं त्यज ॥ ७६
इति राज्ञो वचः श्रुत्वा शान्तः स ब्रह्मराक्षसः । अस्तु को दोष इत्यन्तर्विचिन्त्यैवमभाषत ॥ ७७
यः सप्तवर्षदेश्योऽपि महासत्त्वो विवेकवान् । त्वदर्थे स्वेच्छयात्मानं दद्याद्ब्राह्मणपुत्रकः ॥ ७८
हन्यमानं च यं माता हस्तयोः पादयोः पिता । अवष्टभ्यातिसुदृढं संनिवेश्य महीतले ॥ ७९
तादृशं पुरुषं मह्यमुपहारीकरोषि चेत् । स्वयं खड्गप्रहारेण हत्वा सप्तदिनान्तरे ॥ ८०
तत्ते क्षमिष्ये न्यक्कारमन्यथा तु महीपते । सद्यो विनाशयिष्यामि त्वामहं सपरिच्छदम् ॥ ८१
श्रुत्वैतत्स भयाद्राजा प्रतिपेदे तथेति तत् । तिरोबभूव च ब्रह्मराक्षसः सोऽपि तत्क्षणम् ॥ ८२
अथ चन्द्रावलोकोऽसौ राजा सेन्दीवरप्रभः । हयारूढस्ततः प्रायात्सैन्यं चिन्वन्सुदुर्मनाः ॥ ८३
अहो अहं मृगयया मदनेन च मोहितः । गतः पाण्डुरिवाकाण्डे विनाशं बत बालिशः ॥ ८४
प्राप्यते ह्युपहारोऽस्य राक्षसस्तादृशः कुतः । तन्निजं नगरं तावद्यामि पश्यामि भावि किम् ॥ ८५
इति ध्यायन्स च प्राप स्वसैन्यं चिन्वदागतम् । तद्युक्तश्च सदारः स्वं चित्रकूटमगात्पुरम् ॥ ८६
तत्र तस्योचितां भार्याप्राप्तिं वीक्ष्य कृतोत्सवे । राष्ट्रेऽन्तर्गतदुःखस्य दिनशेषो जगाम सः ॥ ८७
द्वितीयेऽह्नि रहः सर्वं स्ववृत्तान्तं शशंस सः । मन्त्रिभ्यस्तेषु चैकस्तं मन्त्री सुमतिरब्रवीत् ॥ ८८
विषादो देव ते मा भूदुपहारं हि तादृशम् । आनेष्याम्यहमन्विष्य बह्वाश्चर्या हि मेदिनी ॥ ८९
एवमाश्वास्य राजानं स सौवर्णीमकारयत् । मन्त्री सप्ताब्ददेशीयबालकप्रतिमां द्रुतम् ॥ ९०
रत्नैरलंकृतां तां च कृत्वा कर्णीरथार्पिताम् । भ्रामयामास नगरग्रामघोषेष्वितस्ततः ॥ ९१
यः सप्तवर्षदेशीयः स्वेच्छया विप्रपुत्रकः । ददाति सर्वसत्त्वार्थमात्मानं ब्रह्मरक्षसे ॥ ९२
उपहाराय सत्त्वस्थो मातापित्रोरनुज्ञया । हन्यमानश्च यस्ताभ्यां हस्तपादे प्रगृह्यते ॥ ९३
तस्मै ग्रामशतोपेतां हेमरत्नमयीमिमाम् । ददाति प्रतिमां राजा पित्रोरुपचिकीर्षवे ॥ ९४
इति च भ्राम्यमाणायास्तस्याः प्रतिकृतेः शिशोः । पटहोद्घोषणां मन्त्री सोऽग्रेऽजस्रमदापयत् ॥ ९५
तावच्छ्रुत्वा तदेकस्मिन्नग्रहारे द्विजार्भकः । कोऽपि सप्ताब्ददेशीयोऽप्यतिधीरोऽद्भुताकृतिः ॥ ९६
पूर्वाभ्यासेन बाल्येऽपि सदा परहिते रतः । प्रजापुण्यपरीपाक इव साकारतां गतः ॥ ९७
उवाचोद्घोषकानेत्य युष्मदर्थे ददाम्यहम् । आत्मानं पितरौ गत्वा बोधयित्वाभ्युपैमि च ॥ ९८
इत्यूचिवांस्तान्मुदितान्स बालोऽनुमतश्च तैः । गत्वा गृहं जगाद स्वौ पितरौ रचिताञ्जलिः ॥ ९९
ददामि सर्वसत्त्वार्थं देहमेतं विनश्वरम् । तन्मामभ्यनुजानीतं हर्तुं चापदमात्मनः ॥ १००
आत्मप्रतिकृतिं ह्येतां गृहीत्वा वितरामि वाम् । हेमरत्नमयीं राज्ञा दत्तां ग्रामशतान्विताम् ॥ १०१
एवं मे युष्मदानृण्यं परार्थश्चैव सिद्ध्यति । युवां च ध्वस्तदारिद्र्यौ बहून्पुत्रानवाप्स्यथः ॥ १०२
इत्युक्तवन्तं सहसा पितरौ तौ तमूचतुः । किमेतद्भाषसे पुत्र वातेन क्षुभितोऽसि किम् ॥ १०३
किं वा ग्रहगृहीतोऽसि प्रलपस्यन्यथा कथम् । को ह्यर्थैर्घातयेत्पुत्रं देहं दद्याच्च कः शिशुः ॥ १०४
एतत्पित्रोर्वचः श्रुत्वा बालः पुनरुवाच सः । न बुद्धिमोहाज्जल्पामि श्रृणुतं मेऽर्थवद्वचः ॥ १०५
अवाच्याशुचिसंपूर्णमुत्पत्त्यैव सुगुप्सितम् । दुःखक्षेत्रं विनाश्येव शरीरमचिरादिदम् ॥ १०६
तदेतेनाल्पसारेण सुकृतं यदुपार्ज्यते । तदेव सारं संसारे कृतबुद्धिभिरुच्यते ॥ १०७
सर्वभूतोपकाराच्च किमन्यत्सुकृतं परम् । तत्रापि पित्रोर्भक्तिश्चेत्किं देहाद्दृश्यते फलम् ॥ १०८
इत्यादिवाक्यैः स शिशुः शोचन्तौ दृढनिश्चयः । तावङ्गीकारयामास पितरौ स्वमनीषितम् ॥ १०९
गत्वा च राजभृत्येभ्यः प्रतिमां तां हिरण्मयीम् । आनीय प्रददौ ताभ्यां सग्रामशतशासनाम् ॥ ११०
ततः कृत्वाग्रतो राजभृत्यांस्तानेव स द्रुतम् । पितृभ्यामन्वितः प्रायाच्चित्रकूटं नृपान्तिकम् ॥ १११
तत्र चन्द्रावलोकस्तं वीक्ष्याखण्डिततेजसम् । रक्षारत्नमिव प्राप्तं बालं राजा ननन्द सः ॥ ११२
आरोप्य गजपृष्ठं च रचितस्रग्विलेपनम् । निनाय तं सपितृकं केतनं ब्रह्मरक्षसः ॥ ११३
तत्र मण्डलमालिख्य तस्याश्वत्थस्य पार्श्वतः । विहितोचितपूजेन हुते वह्नौ पुरोधसा ॥ ११४

आविर्बभूव मुक्ताट्टहासः सोऽध्ययनं पठन् । घूर्णन्रक्तासवक्षीबो जृम्भमाणो मुहुः श्वसन् ॥ ११५
ज्वलन्नेत्रो दिशः कुर्वन्देहच्छायान्धकारिताः । ज्वालामुखो महारौद्रदर्शनो ब्रह्मराक्षसः ॥ ११६
ततश्चन्द्रावलोकस्तं दृष्ट्वा प्रह्वोऽब्रवीन्नृपः । नरोपहारो भगवन्नानीतः स मया तव ॥ ११७
सप्तमो दिवसश्चाद्य प्रतिज्ञातस्य सोऽस्य ते । तत्प्रसीद गृहाणैतमुपहारं यथाविधि ॥ ११८
इति राज्ञार्थितो विप्रकुमारं ब्रह्मराक्षसः । स तमालोकयामास जिह्वया सृक्किणी लिहन् ॥ ११९
तत्क्षणं स महासत्त्वो बालो हृष्यन्नचिन्तयत् । स्वदेहदानेनानेन सुकृतं यन्मयार्जितम् ॥ १२०
तेन मा भून्मम स्वर्गो मोक्षो वा निरुपक्रियः । भूयात्तु मे परार्थाय देहो जन्मनि जन्मनि ॥ १२१
इति संकल्पयत्येव तस्मिन्नापूर्यत क्षणात् । विमानैः सुरसंघानां पुष्पवृष्टिमुचां नभः ॥ १२२
अथाग्रे प्रापितं तस्य बालं तं ब्रह्मरक्षसः । माता जग्राह करयोः पिता चरणयोस्तथा ॥ १२३
ततो यावत्तमाकृष्टखड्गो राजा जिघांसति । तावज्जहास स शिशुस्तथा सर्वेऽत्र ते यथा ॥ १२४
सब्रह्मराक्षसास्त्यक्त्वा स्वं स्वं कर्म सविस्मयाः । रचिताञ्जलयः प्रह्वास्तन्मुखप्रेक्षिणोऽभवन् ॥ १२५
इति व्याख्याय वेतालो विचित्रसरसां कथाम् । तं त्रिविक्रमसेनं स निजगाद नृपं पुनः ॥ १२६
तद्ब्रूहि राजन्को हेतुर्यत्तेन हसितं तदा । बालेनैतादृशेऽप्यस्मिन्प्राणान्तसमयेऽप्यहो ॥ १२७
कौतुकं च महन्मेऽत्र तदेतच्चेन्न वक्ष्यसि । जानानोऽपि ततो मूर्धा शतधा ते स्फुटिष्यति ॥ १२८
इति वेतालतः श्रुत्वा स राजा प्रत्युवाच तम् । शृणु योऽभूदभिप्रायो हासे तस्य शिशोस्तदा ॥ १२९
यो नाम दुर्बलो जन्तुः स भये प्रत्युपस्थिते । क्रन्दति प्राणहेतोः स्वं पितरं मातरं तथा ॥ १३०
तदपाये च राजानमार्तत्राणाय निर्मितम् । तदलाभेऽपि यद्यत्र यथासंभवि दैवतम् ॥ १३१
तस्य त्वेकस्थमप्येतत्सर्वं संजातमन्यथा । पितृभ्यां हस्तपादं हि रुद्धं तस्यार्थतृष्णया ॥ १३२
राजा च त्रातुमात्मानं स्वयं तं हन्तुमुद्यतः । दैवतं तत्र यद्ब्रह्मरक्षस्तत्तस्य भक्षकम् ॥ १३३
अध्रुवस्यान्तविरसस्याधिव्याधिक्षतस्य च । देहस्यार्थे विमूढानां तेषामीदृग्विडम्बना ॥ १३४
ब्रह्मेन्द्रविष्णुरुद्राद्या यत्रावश्यं विनाशिनः । तत्रैषामीदृशी कापि शरीरस्थैर्यवासना ॥ १३५
एतत्तन्मोहवैचित्र्यं दृष्ट्वा मत्वा च वाञ्छितम् । सिद्धमाश्चर्यहर्षाभ्यां स जहास द्विजार्भकः ॥ १३६

इत्युक्त्वा विरतस्य तस्य नृपतेरंसात्स भूयोऽपि त-
द्वेतालो झगिति स्वकं पदमगादन्तर्हितो मायया ।
राजा सोऽप्यविकल्पमेव पुनरप्यन्वग्ययौ तं जवा-
दक्षोभ्यं हृदयं बतेह महतामम्भोनिधीनामिव ॥ १३७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके सप्तविंशस्तरङ्गः ।

---

## अष्टाविंशस्तरङ्गः ।

### ( एकविंशो वेतालः । )

अथ गत्वा पुनः प्राप्य शिंशपातस्ततोऽग्रहीत् । स त्रिविक्रमसेनोंऽसे वेतालं तं नराधिपः ॥ १
आगच्छन्तं च तं भूयः स वेतालोऽब्रवीन्नृपम् । राजन्नुद्दामकंदर्पां शृण्वेकां वच्मि ते कथाम् ॥ २
अस्ति शक्रपुरीवान्या धात्रा सुकृतिनां कृते । दिवश्च्युतानां विहिता विशालाख्या पुरी भुवि ॥ ३
तस्यां बभूव नृपतिः पद्मनाभ इति श्रुतः । सच्चक्रनन्दकः श्रीमानाक्रान्तबलिराजकः ॥ ४
तस्मिन्पृथ्वीपतौ तस्यां नगर्यां सुमहावणिक् । अर्थदत्ताभिधानोऽभूद्धनैर्विजितवित्तपः ॥ ५
तस्यैका च सुतानङ्गमञ्जरीत्युदपद्यत । स्वःसुन्दरीप्रतिकृतिर्भुवि धात्रेव दर्शिता ॥ ६
दत्ता च तेन वणिजा वणिग्वरसुताय सा । मणिवर्माभिधानाय ताम्रलिप्तीनिवासिने ॥ ७
एकापत्यतया चातिवत्सलः स न तां वणिक् । भर्तृयुक्तां सुतां गेहात्तत्याजानङ्गमञ्जरीम् ॥ ८
तस्याश्चानङ्गमञ्जर्याः पतिर्द्वेष्यो बभूव सः । मणिवर्मा सरोगस्य कटुतिक्तमिवौषधम् ॥ ९

पत्युस्तु सास्य सुमुखी जीवितादप्यभूत्प्रिया । धनर्द्धिः कृपणस्येव कृच्छ्रात्सुचिरसंचिता ॥ १०
एकदा चान्तिकं पित्रोस्ताम्रलिप्तीं निजं गृहम् । उत्कण्ठादिनिमित्तेन मणिवर्मा जगाम सः ॥ ११
ततो दिनेषु यातेषु तीक्ष्णसूर्यांशुसायकैः । प्रोषितानां निरुद्धाध्वा घर्मकाल इहाभ्यगात् ॥ १२
वसन्तविरहादुष्णा निःश्वासाः ककुभामिव । मल्लिकापाटलामोदमेदुरा मरुतो ववुः ॥ १३
उत्पेतुः पवनोद्धूता गगने रेणुराजयः । दूत्यो घनागमायेव प्रहितास्तप्तया भुवा ॥ १४
आकाङ्क्षिततरुच्छायाः कठोरातपतापिताः । पथिका इव यान्ति स्म चिरेण दिवसा अपि ॥ १५
चन्द्रांशुपाण्डुरुचयो गाढाश्लेषसुखप्रदम् । विना हेमन्तमगमन्नतिदुर्बलतां निशाः ॥ १६
तत्कालं चन्दनालेपधवला सा वणिक्सुता । संवीततनुकौशेयशोभितानङ्गमञ्जरी ॥ १७
ददर्श स्वगृहोत्तुङ्गवातायनगतैकदा । आप्तसख्या युता भव्यं युवानं विप्रपुत्रकम् ॥ १८
संचरन्तं रतिप्राप्त्यै नवोत्पन्नमिव स्मरम् । कमलाकरनामानं पुत्रं राजपुरोधसः ॥ १९
सोऽपीन्दोरिव मूर्तिं तां कान्तां दृष्ट्वोपरि स्थिताम् । कुमुदाकरतां भेजे सानन्दः कमलाकरः ॥ २०
तयोरभूदमूल्यं तन्मनःसंवननं तदा । स्मरगुर्वाज्ञया यूनोरन्योन्यस्यावलोकनम् ॥ २१
उन्मूलितह्रियौ तौ च दूरविक्षिप्तचेतसा । रजोभिभूतौ जह्राते मन्मथावेगवात्यया ॥ २२
दृष्ट्वा च मदनाविष्टः सख्या स कमलाकरः । सहस्थितेन नीतोऽभूत्कथंचिद्भवनं निजम् ॥ २३
सापि तं नामतोऽन्विष्य विवशानङ्गमञ्जरी । तया स्वया समं सख्या प्राविशद्वासकं शनैः ॥ २४
तत्र संचिन्तयन्ती च कान्तं कामज्वरातुरा । नापश्यन्नाशृणोत्किंचिल्लुठन्ती शयनीयके ॥ २५
गतेष्वहःसु द्वित्रेषु सत्रपा सभया च सा । असहा विरहोन्मादं विसोढुं कृशपाण्डुरा ॥ २६
दुष्प्रापप्रियसंयोगनिरास्था नक्तमेकदा । गवाक्षप्रेरितकरेणाकृष्टेव हिमांशुना ॥ २७
सुप्ते परिजने स्वैरं निर्गत्य मरणोन्मुखी । जगाम स्वगृहोद्यानवापीं तरुलतावृताम् ॥ २८
तत्र पित्रा कृतोदारप्रतिष्ठां कुलदेवताम् । उपेत्य चण्डिकां देवीं नत्वा स्तुत्वा व्यजिज्ञपत् ॥ २९
अस्मिञ्जन्मनि चेद्भर्ता न मया कमलाकरः । प्राप्तस्तद्देवि भूयान्मे सोऽन्यस्मिन्नपि जन्मनि ॥ ३०
इत्युक्त्वा पुरतस्तस्या देव्याः साशोकपादपे । पाशं विरचयामास स्वोत्तरीयेण रागिणी ॥ ३१
तावदाप्ता सखी तस्याः सा प्रबुध्यात्र वासके । तामदृष्ट्वा तदुद्यानं दैवादागाद्विचिन्वती ॥ ३२
तत्र दृष्ट्वा च तां पाशमर्पयन्तीं तथा गले । मामेत्युक्त्वा प्रधाव्यैव पाशं तस्यास्तमच्छिनत् ॥ ३३
सापि तां वीक्ष्य संप्राप्तां कृत्तपाशां निजां सखीम् । अनङ्गमञ्जरी भूमौ पपाताधिकदुःखिता ॥ ३४
आश्वासिता स्वसख्या च तया पृष्टा च सा क्षणात् । दुःखहेतुं समाख्याय पुनरेनामभाषत ॥ ३५
सखि मालतिके तन्मे दुर्लभे प्रियसंगमे । गुर्वादिपरतन्त्राया न सुखं मरणात्परम् ॥ ३६
इति ब्रुवाणैवानङ्गशराग्निज्वलिता भृशम् । सानङ्गमञ्जरी मोहं ययौ नैराश्यनिःसहा ॥ ३७
कष्टं स्मराज्ञा दुर्लङ्घ्या यया नीता दशामिमाम् । अन्याविनीतवनिताहासिनीयं सखी मम ॥ ३८
इत्यादि विलपन्तीं च तां सा मालतिका सखी । शनैराश्वासयामास शीताम्बुपवनादिभिः ॥ ३९
तापोपशान्तये चास्याश्चकार नलिनीदलैः । शय्यां ददौ च हृदये हारं तुहिनशीतलम् ॥ ४०
ततः साश्रुरुवाचैतां सखीं सानङ्गमञ्जरी । सखि हारादिभिर्नायं दाहोऽन्तर्मम शाम्यति ॥ ४१
येन प्रशाम्यति पुनः स्वबुद्ध्यैव विधत्स्व तत् । मां संयोजय कान्तेन जीवितं मे यदीच्छसि ॥ ४२
एवमुक्तवतीं तां सा स्नेहान्मालतिकाब्रवीत् । सखि भूयिष्ठयाताद्य रात्रिः प्रातरहं पुनः ॥ ४३
इहैव कृतसंकेतमानेष्यामि प्रियं तव । तदालम्ब्य धृतिं तावन्निजं प्रविश मन्दिरम् ॥ ४४
इत्युक्तवत्यै संतुष्य तस्यै सानङ्गमञ्जरी । हारं स्वकण्ठादाकृष्य प्रददौ पारितोषिकम् ॥ ४५
गच्छाधुनैव स्वगृहं प्रातः सिद्ध्यै ततो व्रज । इति चैतां सखीं प्रेष्य सा विवेश स्ववासकम् ॥ ४६
प्रातश्च सा मालतिका केनाप्यनुपलक्षिता । तत्सखी तस्य कमलाकरस्य भवनं ययौ ॥ ४७
चिन्वती तत्र चोद्याने तरुमूले ददर्श तम् । चन्दनार्द्राम्बुरुहिणीपत्रशय्यातिवर्तिनम् ॥ ४८

रहस्यधारिणैकेन कदलीदलमारुतैः । आश्वास्यमानं सुहृदा दह्यमानं स्मराग्निना ॥ ४९
तस्या विनेयमस्य स्यात्कामावस्थेदृशीति सा । विचिन्त्य तस्थौ प्रच्छन्ना ज्ञातुं तत्र विनिश्चयम् ॥ ५०
तावच्च सुहृदा तेन स ऊचे कमलाकरः । क्षणमेकमिहोद्याने दत्त्वा दृष्टिं मनोरमे ॥ ५१
विनोदय मनो मित्र मात्र विक्लवतामगाः । तच्छ्रुत्वा तं स्वसुहृदं विप्रपुत्रो जगाद सः ॥ ५२
यन्ममानङ्गमञ्जर्या वणिक्पुत्र्या तया हृतम् । विनोदयामि तदिदं कुतः शून्याशयो मनः ॥ ५३
स्मरेण शून्यहृदयो बाणतूणीकृतो ह्यहम् । तत्प्राप्स्यामि मनश्चौरीं तां यथा कुरु मे तथा ॥ ५४
इत्युक्ते विप्रपुत्रेण तेनात्मानं प्रदर्श्य सा । हृष्टा मालतिकाभ्येत्य तमुवाचास्तसंशया ॥ ५५
तवास्म्यनङ्गमञ्जर्या सुभग प्रहितान्तिकम् । संदेशं चाहमेवैषा विस्पष्टार्थं ब्रवीमि ते ॥ ५६
एष कः शिष्टधर्मो यत्प्रविश्य हृदयं हठात् । मनो मुषित्वा मुग्धाया गम्यते स्थगितात्मना ॥ ५७
चित्रं च यद्वामदृशा तुभ्यमेव तयाधुना । मनोहराय देहोऽपि दातुं प्राणैः सहेष्यते ॥ ५८
निःश्वासान्सा हि संतप्तान्विमुञ्चति दिवानिशम् । ज्वलतो हृदि कंदर्पवह्नेर्धूमोद्गमानिव ॥ ५९
संपतन्ति मुहुश्चास्याः साञ्जना बाष्पबिन्दवः । वदनाम्भोजसौगन्ध्यलुब्धा मधुकरा इव ॥ ६०
तद्यदीच्छसि तद्वच्मि शिवं वामुभयोरहम् । इत्युक्तो मालतिकया सोऽब्रवीत्कमलाकरः ॥ ६१
भद्रे भयं करोत्येषा वाक्तवाश्वासयत्यपि । वदन्ती विधुरावस्थां बद्धभावां च मे प्रियाम् ॥ ६२
तदेका गतिरत्र त्वं यथा वेत्सि तथा कुरु । इत्युक्तवाक्ये कमलाकरे मालतिकाब्रवीत् ॥ ६३
अनङ्गमञ्जरीमद्य गुप्तं तां प्रापयाम्यहम् । नक्तं स्वभवनोद्यानं त्वं तिष्ठेस्तत्र बाह्यतः ॥ ६४
ततः प्रवेशयिष्यामि त्वामत्रान्तः स्वयुक्तितः । एवं यथेष्टो युवयोर्भविष्यति समागमः ॥ ६५
इत्युक्त्वानन्द्य तं विप्रपुत्रं मालतिका ततः । गत्वा कृतार्था सानङ्गमञ्जरीमप्यनन्दयत् ॥ ६६
अथाह्ना सह यातेऽर्के क्वापि संध्यानुरागिणि । ऐन्द्र्या दिशेन्दुतिलकेनानने सुप्रसाधिते ॥ ६७
त्यक्तपद्माकरा प्राप्ता श्रीर्मयेतीव हर्षतः । हसत्युत्फुल्लवदने विशदे कुमुदाकरे ॥ ६८
कृतप्रसाधनः सोत्कः स्वैरं स कमलाकरः । कामी कान्तागृहोद्यानद्वारबाह्यमुपागमत् ॥ ६९
तावच्च सा मालतिका तां युक्त्यानङ्गमञ्जरीम् । आनिनाय तदुद्यानं कृच्छ्राद्गमितवासराम् ॥ ७०
उपवेश्य च तां मध्ये गुल्मके चूतशाखिनाम् । प्रावेशयत्तं निर्गत्य तत्रैव कमलाकरम् ॥ ७१
स च प्रविश्य पत्रौघघनपादपमध्यगाम् । तामध्वग इव च्छायां ददर्शानङ्गमञ्जरीम् ॥ ७२
उपैति यावच्च स तां तावद्दृष्ट्वा प्रधाव्य सा । कामवेगहृतव्रीडा कण्ठे तं सहसाग्रहीत् ॥ ७३
क्व यासि लब्धोऽसि ममेत्यालपन्ती च तत्क्षणम् । सातिहर्षभरस्तब्धनिःश्वासा पञ्चतामगात् ॥ ७४
पपात च महीपृष्ठे वातरुग्णा लतेव सा । विचित्रो बत कामस्य विपाकविषमः क्रमः ॥ ७५
तद्दृष्ट्वाशनिपातोग्रं सद्यः स कमलाकरः । हा हा किमेतदित्युक्त्वा मूर्च्छितो न्यपतद्भुवि ॥ ७६
लब्धसंज्ञः क्षणेनाथ तामङ्कारोपितां प्रियाम् । आलिङ्गन्परिचुम्बंश्च तत्तच्च विलपन्बहु ॥ ७७
तथा दुःखातिभारेण स प्रसह्य निपीडितः । यथा तस्य टसत्कृत्य क्षणाद्धृदयमस्फुटत् ॥ ७८
अथ तौ मालतिकया शोच्यमानावुभावपि । दृष्ट्वा प्राप्तक्षयौ शोकादिव क्षीणाभवत्क्षपा ॥ ७९
प्रातरुद्यानपालेभ्यो ज्ञात्वा बन्धुजनस्तयोः । तत्राययौ त्रपाश्चर्यदुःखमोहाकुलीकृतः ॥ ८०
आसीत्कर्तव्यतामूढश्चिरं खेदादवाङ्मुखः । कष्टाः कुलखलीकारहेतवो बत कुस्त्रियः ॥ ८१
तावच्च ताम्रलिप्तीतः स तस्याः पतिरागमत् । सोत्कण्ठोऽनङ्गमञ्जर्या मणिवर्मा पितुर्गृहात् ॥ ८२
स श्वाशुरं गृहं प्राप्य यथातत्त्वमवेत्य तत् । बाष्पान्धलोचनो ध्यायंस्तदेवोद्यानमाययौ ॥ ८३
तत्र भार्यां गतासुं तां दृष्ट्वान्यसहितामपि । शोकाग्निज्वलितो रागी सद्यः सोऽपि जहावसून् ॥ ८४
ततः क्रन्दति तत्रस्थे जने कोलाहलाकुलाः । आययुर्ज्ञातवृत्तान्ताः पौराः सर्वेऽत्र विस्मिताः ॥ ८५
अथात्रानङ्गमञ्जर्याः पित्रा पूर्वावतारिता । देवी संनिहिता चण्डी विज्ञप्ताभून्निजैर्गणैः ॥ ८६
त्वदाकारप्रतिष्ठाकृदर्थदत्तः सदैव ते । भक्तो वणिक्तदस्यास्मिन्दुःखे देवि दयां कुरु ॥ ८७

एतद्गणेभ्यः श्रुत्वा सा शरण्या शंकरप्रिया । शान्तानङ्गास्त्रयोऽप्येते जीवन्त्विति समादिशत् ॥ ८८
अथ सर्वेऽपि ते सुप्तप्रतिबुद्धा इव क्षणात् । तत्प्रसादात्समुत्तस्थुर्जीवन्तो वीतमन्मथाः ॥ ८९
ततो दृष्ट्वा तदाश्चर्यं सानन्दे सकले जने । लज्जानतमुखः प्रायात्स्वगृहं कमलाकरः ॥ ९०
अर्थदत्तोऽपि तां ह्रीतामादायानङ्गमञ्जरीम् । सुतां स्वभर्तृसहितां ययौ बद्धोत्सवो गृहान् ॥ ९१

इति कथयित्वा तस्यां रात्रौ मार्गे कथां स वेतालः ।
निजगाद तं त्रिविक्रमसेनं क्षोणीपतिं भूयः ॥ ९२
राजन्कस्य वदैतेष्वधिको मोहोऽनुरागमूढेषु ।
सोऽत्र च पूर्वोक्तस्ते शापो जानन्न चेद्वदसि ॥ ९३
इत्येतद्वेतालाच्छ्रुत्वा स प्रत्युवाच तं नृपतिः ।
एतेषु रागमूढः प्रतिभाति ममाधिकः स मणिवर्मा ॥ ९४
इतरौ हि तावुभावपि कालक्रमपक्वमन्मथावस्थौ ।
अन्योन्यसानुरागौ यदि जीवितमुज्झतः स्म तद्भवतु ॥ ९५
मणिवर्मा त्वतिमूढो यो भार्यामन्यपुरुषसक्तमृताम् ।
दृष्ट्वैव कोपकाले प्रत्युत रक्तः शुचामुचत्प्राणान् ॥ ९६

इति गदितवतः स तस्य राज्ञो बत वेतालपतिः पुनर्जगाम ।
निजमेव पदं तदंसपीठादथ राजापि तमन्वगात्स भूयः ॥ ९७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बकेऽष्टाविंशस्तरङ्गः ।

एकोनत्रिंशस्तरङ्गः ।

( द्वाविंशो वेतालः । )

ततो राजा पुनर्गत्वा वेतालं शिंशपाग्रतः । स त्रिविक्रमसेनस्तं प्राप्यांसारोपितं व्यधात् ॥ १
आयान्तं तं च राजानं स वेतालोऽब्रवीत्पथि । राजन्साधुः सुसत्त्वस्त्वं तदपूर्वां कथां शृणु ॥ २
बभूव पूर्वं कुसुमपुराख्यनगरेश्वरः । पृथ्वीतलेऽस्मिन्धरणीवराहो नाम भूपतिः ॥ ३
तस्य ब्राह्मणभूयिष्ठे राष्ट्रे ब्रह्मस्थलाभिधः । अग्रहारोऽभवत्तत्र विष्णुस्वामीत्यभूद्द्विजः ॥ ४
तस्यानुरूपा भार्याभूद्यथा स्वाहा हविर्भुजः । तस्यां च तस्य चत्वारः क्रमादुत्पेदिरे सुताः ॥ ५
अधीतवेदेषूत्क्रान्तशैशवेषु च तेषु सः । विष्णुस्वामी दिवं प्रायाद्भार्ययानुगतस्तया ॥ ६
ततस्ते तत्र तत्पुत्राः सर्वेऽप्यानाथ्य दुःस्थिताः । गोत्रजैर्हृतसर्वस्वा मन्त्रयांचक्रिरे मिथः ॥ ७
नास्तीह गतिरस्माकं तद्व्रजामो वयं न किम् । इतो मातामहगृहं ग्रामं यज्ञस्थलाभिधम् ॥ ८
एतदेव विनिश्चित्य प्रस्थिता भैक्ष्यभोजनाः । मातामहगृहं प्रापुस्तेऽथ तद्बहुभिर्दिनैः ॥ ९
तत्र मातामहाभावान्मातुलैर्दत्तसंश्रयाः । भुञ्जानास्तद्गृहे तस्थुः स्वाध्यायाभ्यासतत्पराः ॥ १०
कालक्रमाच्च तेषां ते मातुलानामकिंचनाः । अवज्ञापात्रतां जग्मुर्भोजनाच्छादनादिषु ॥ ११
ततः स्वजनसंस्फूर्जदवमानहतात्मनाम् । तेषां रहः सचिन्तानां ज्येष्ठो भ्राताब्रवीदिदम् ॥ १२
भो भ्रातरः किं क्रियते सर्वमाचेष्टते विधिः । न शक्यं पुरुषस्येह क्वचित्किंचित्कदाचन ॥ १३
अहं ह्युद्वेगतो भ्राम्यन्प्राप्तोऽद्य पितृकानने । विपन्नस्थितमद्राक्षं त्रस्ताङ्गं पुरुषं भुवि ॥ १४
अचिन्तयं च दृष्ट्वा तमहं तां स्पृहयन्गतिम् । धन्योऽयमेवं विश्रान्तो दुःखभारं विमुच्य यः ॥ १५
इति संचिन्त्य तत्कालं कृत्वा मरणनिश्चयम् । वृक्षाग्रसङ्गिना पाशेनात्मानमुदलम्बयम् ॥ १६
यावच्च मे विसंज्ञस्य तदा निर्यान्ति नासवः । तावत्त्रुटितपाशोऽत्र पतितोऽस्मि महीतले ॥ १७
लब्धसंज्ञश्च केनापि पुंसा क्षिप्रात्कृपालुना । आश्वास्यमानमात्मानमपश्यं पटमारुतैः ॥ १८
सखे कथय विद्वानप्येवं कं प्रति खिद्यसे । सुखं हि सुकृताद्दुःखं दुष्कृताद्देति नान्यतः ॥ १९
दुःखाद्यदि तवोद्वेगः सुकृतं तत्समाचर । कथं तु नारकं दुःखमात्मत्यागेन वाञ्छसि ॥ २०

इत्युक्त्वा मां समाश्वास्य स च क्वापि गतः पुमान् । अहं चेहागतस्त्यक्त्वा तादृशं मरणोद्यमम् ॥ २१
तदेवं नेच्छति विधौ न मर्तुमपि लभ्यते । इदानीं च तनुं तीर्थे तपसा दाहयाम्यहम् ॥ २२
येन निर्धनतादुःखभागी न स्यामहं पुनः । इत्युक्तवन्तं ज्येष्ठं तं कनिष्ठा भ्रातरोऽब्रुवन् ॥ २३
अर्थैर्विना कथं प्राज्ञोऽप्यार्य दुःखेन बाध्यसे । किं न वेत्सि यदर्थानां शरदभ्रचला गतिः ॥ २४
आहृत्य रक्ष्यमाणापि यत्नेनान्तविरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ २५
तदुद्योगेन स गुणः कोऽप्युपार्ज्यो मनस्विना । आनीयन्ते हृटाद्बद्ध्वा येनार्थहरिणा मुहुः ॥ २६
इत्युक्तो भ्रातृभिर्धैर्यं क्षणाज्ज्येष्ठोऽऽवलम्ब्य सः । उवाच को गुणस्तादृग्गर्जनीयो भवेदिति ॥ २७
ततो विचिन्त्य सर्वे ते वदन्ति स्म परस्परम् । विचित्य पृथ्वीं विज्ञानं किंचिच्छिक्षामहे वयम् ॥ २८
निश्चित्यैतच्च संकेतस्थानमुक्त्वा समागमे । एकैकशस्ते चत्वारश्चतस्रः प्रययुर्दिशः ॥ २९
याति काले च मिलितास्ते संकेतनिकेतने । किं केन शिक्षितमिति भ्रातरोऽन्योन्यमब्रुवन् ॥ ३०
अथात्रैकोऽब्रवीदीदृग्विज्ञानं शिक्षितं मया । येनास्थिशकलं प्राप्य प्राणिनो यस्य कस्यचित् ॥ ३१
उत्पादयाम्यहं तस्मिन्मांसं तदुचितं क्षणात् । एतत्तस्य वचः श्रुत्वा द्वितीयस्तेष्वभाषत ॥ ३२
अहं तत्रैव संजातमांसेऽस्थिशकले किल । जाने जनयितुं लोमत्वचं तत्प्राणिसंभवि ॥ ३३
ततस्तृतीयोऽप्यवदज्जाने तत्रैव चास्म्यहम् । तत्प्राण्यवयवान्स्रष्टुं जातत्वङ्मांसलोमनि ॥ ३४
चतुर्थश्च ततोऽवादीदुत्पन्नावयवाकृतिम् । तमेव प्राणिनं प्राणैर्युक्तं कर्तुमवैम्यहम् ॥ ३५
एवमुक्त्वा मिथः स्वस्वविज्ञानप्रथनाय ते । चत्वारोऽप्यस्थिखण्डाय प्रययुर्भ्रातरोऽटवीम् ॥ ३६
तत्र सिंहस्य ते प्रापुरस्थिखण्डं विधेर्वशात् । अविज्ञातविशेषाश्च गृह्णन्ति स्म तथैव तत् ॥ ३७
एकश्च तत्समुचितैस्ततो मांसैरयोजयत् । द्वितीयोऽजनयत्तस्य तद्वत्त्वग्लोमसंहतीः ॥ ३८
तृतीयश्चाखिलैरङ्गैस्तद्योग्यैस्तदपूरयत् । चतुर्थश्च ददौ तस्य सिंहीभूतस्य जीवितम् ॥ ३९
उदतिष्ठदथोद्भूतसटाभारोऽतिभैरवः । स दंष्ट्रासंकटमुखः सिंहः खरनखाङ्कुशः ॥ ४०
धावित्वा च स्वनिर्मातॄंस्तानेव चतुरोऽपि सः । अवधीत्केसरी तृप्तो विवेश च वनं ततः ॥ ४१
एवं ते सिंहनिर्माणदोषान्नष्टा द्विजातयः । दुष्टं हि जन्तुमुत्थाप्य कस्यात्मनि सुखं भवेत् ॥ ४२
इत्थं चोपार्जितो यत्नाद्गुणोऽपि विधुरे विधौ । संपत्तये न न परं जायते तु विपत्तये ॥ ४३
मूले ह्यविकृते दैवे सिक्ते प्रज्ञानवारिणा । नयालवालः फलति प्रायः पौरुषपादपः ॥ ४४

इति तस्यां निशि मार्गे वेतालेनांसतः कथां तेन ।
आख्याय स त्रिविक्रमसेनो राजा पुनर्जगदे ॥ ४५
राजंस्तेष्वपराध्यति चतुर्षु कस्तत्र सिंहनिर्माणे ।
यद्यवधीत्तत्क्लृप्तो वद समयः सोऽत्र पूर्वस्ते ॥ ४६
इति वेतालाच्छ्रुत्वा राजा सोऽचिन्तयद्विमौनस्य ।
इच्छति गन्तुमयं मे यात्वानेष्याम्यमुं भूयः ॥ ४७
इति हृदि निश्चित्य स तं महीपतिः प्रत्युवाच वेतालम् ।
यस्तस्य जीवदायी सिंहस्य स पापभाक्तेषु ॥ ४८
प्राणिविशेषमबुद्ध्वा मांसत्वग्लोमगात्रनिर्माणम् ।
युक्तिबलात्तु कृतं यैस्तेषां दोषोऽस्ति नाज्ञानात् ॥ ४९
येन तु सिंहाकारं दृष्ट्वा विद्याप्रकाशनोत्केन ।
प्राणास्तस्य वितीर्णास्तेन कृता ब्रह्महत्यास्ताः ॥ ५०
एतत्स राज्ञो वचनं निशम्य स्वधाम वेतालवरो जगाम ।
तस्यांसतस्तत्पुनरेव मायी राजापि तं सोऽनुससार भूयः ॥ ५१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बक एकोनत्रिंशस्तरङ्गः ।

---

त्रिंशस्तरङ्गः ।

( त्रयोविंशो वेतालः )

ततो गत्वा पुनः प्राप शिंशपापादपात्ततः । स त्रिविक्रमसेनस्तं वेतालं राजसत्तमः ॥ १
स्कन्धे कृत्वा च तं मौनी दर्शितानेकवैकृतम् । यावत्प्रतिष्ठते तावत्स वेतालस्तमब्रवीत् ॥ २
राजन्नकार्येऽप्येतस्मिन्दुर्वारोऽयं ग्रहस्तव । तत्ते श्रमविनोदाय कथयामि कथां शृणु ॥ ३
आसीत्कलिङ्गविषये नाम्ना शोभावती पुरी । दिवीव शक्रनगरी वसतिः शुभकर्मणाम् ॥ ४
यां प्रद्युम्न इवैश्वर्यवीर्यातिशयविश्रुतः । प्रद्युम्ननामा नृपतिः शशासोर्जितशासनः ॥ ५
गुणापकर्षश्चापेषु मुरजेषु कराहतिः । युगेष्वश्रूयत कलिर्यस्यां प्रज्ञासु तीक्ष्णता ॥ ६
एकदेशे पुरस्तस्या नृपेण प्रतिपादितः । यज्ञस्थलाभिधानोऽभूदग्रहारो बहुद्विजः ॥ ७
तत्रासीद्यज्ञसोमाख्यो ब्राह्मणो वेदपारगः । महाधनोऽग्निहोत्री च पूजितातिथिदेवतः ॥ ८
तस्य व्यतीते तारुण्ये मनोरथशतैः सुतः । भार्यायामनुरूपायामेक एवोदपद्यत ॥ ९
ववृधे च पितुः सोऽस्य गृहे बालः सुलक्षणः । कृताभिधानो विधिवद्देवसोम इति द्विजैः ॥ १०
प्राप्तषोडशवर्षश्च स विद्याविनयादिभिः । आवर्जितजनोऽकस्माज्ज्वरेण प्राप पञ्चताम् ॥ ११
ततः परासुं स्नेहात्तमाश्लिष्य सह भार्यया । यज्ञसेनः पिता शोचन्न दाहाय जहौ चिरम् ॥ १२
ब्रह्मन्संसारगन्धर्वनगरस्य न वेत्सि किम् । परावरज्ञोऽपि गतिं वारिबुद्बुदभङ्गुराम् ॥ १३
ये सैन्यैः पूरितधरा हर्म्यपृष्ठेषु हारिषु । लसत्संगीतनादेषु रत्नपर्यङ्कवर्तिनः ॥ १४
श्रीखण्डद्रवलिप्ताङ्गा वरस्त्रीपरिवारिताः । व्यलसन्नमरंमन्या भूलोकेऽस्मिन्नराधिपाः ॥ १५
तेऽप्येककाः श्मशानेषु रुदत्प्रेतानुयायिषु । चिताधिशयिनो यत्र जग्धाः क्रव्यात्कृशानुभिः ॥ १६
शिवाभिर्वलितोपान्ताः कालेन कवलीकृताः । न रोद्धुं शकिताः कैश्चित्तत्रान्येषां कथैव का ॥ १७
तदेतं प्रेतमाश्लिष्य विद्वन्वद करोषि किम् । इत्याद्यबोधयन्वृद्धा मिलितास्तं द्विजं ततः ॥ १८
ततस्तेन कथंचित्तं मुक्तमारोप्य तत्सुतम् । शिविकायां गतप्राणं कृतप्रेतप्रसाधनम् ॥ १९
बान्धवा वैशसोदश्रुमिलद्बन्धुजनान्विताः । श्मशानं प्रापयामासुः कोलाहलसमाकुलाः ॥ २०
अत्रान्तरे च तत्रासीच्छ्मशाने कोऽपि तापसः । वृद्धः पाशुपतो योगी मठिकायां कृतस्थितिः ॥ २१
वयसा तपसा चातिभूयसा सुकृशां तनुम् । बिभ्राणो भङ्गभीत्येव सिराभिः परिवेष्टितम् ॥ २२
नाम्ना वामशिवो भस्मपाण्डुरोमावृताकृतिः । विद्युत्पिङ्गजटाजूटो महेश्वर इवापरः ॥ २३
स तापसोऽत्र तत्कालं दत्तोपालम्भखेदितम् । मूर्खं शठं ध्यानयोगाद्यवलिप्तमहंकृतम् ॥ २४
भिक्षाफलव्रतधरं शिष्यमन्तिकवासिनम् । जगाद दूराच्छ्रुत्वा तं जनकोलाहलं बहिः ॥ २५
उत्तिष्ठ गत्वात्र बहिर्विज्ञायागच्छ सत्वरम् । कुतोऽत्राश्रुतपूर्वोऽयं श्मशाने तुमुलारवः ॥ २६
इत्युक्ते गुरुणा तेन स शिष्यः प्रत्युवाच तम् । नाहं यामि स्वयं याहि भिक्षावेला ह्यपैति मे ॥ २७
तच्छ्रुत्वोवाच स गुरुर्धिङ्मूर्खोदरतत्पर । अह्नोऽर्धप्रहरे याते भिक्षावेलात्र का तव ॥ २८
श्रुत्वैवैतत्स तं क्रुद्धः कुशिष्यः प्राह तापसम् । धिग्जराजीर्ण नाहं ते शिष्यो न त्वं गुरुर्मम ॥ २९
अहमन्यत्र यास्यामि वह पात्रीमिमां स्वयम् । इत्युक्त्वोत्थाय स प्रायात्त्यक्त्वाग्रे दण्डकुण्डिकाम् ॥ ३०
विहसन्नथ निर्गत्य मठिकायाः स तापसः । तत्रागाद्यत्र दाहार्थमानीतः स द्विजार्भकः ॥ ३१
दृष्ट्वा च तं जनतया शोच्यमानाग्र्ययौवनम् । योगी प्रवेष्टुं तद्देहं मतिं चक्रे जरार्दितः ॥ ३२
गत्वा च द्रुतमेकान्ते मुक्तकण्ठं प्ररुद्य च । ननर्त स ततः क्षिप्रमङ्गहारैर्यथोचितैः ॥ ३३
ततो विवेश योगात्तद्द्विजपुत्रकलेवरम् । क्षणात्स स्वतनुं त्यक्त्वा तपस्वी यौवनेच्छया ॥ ३४
तत्क्षणं रचितायां च चितायां सहसैव सः । लब्धजीवो द्विजयुवा प्रोत्तस्थौ कृतजृम्भिकः ॥ ३५
तद्दृष्ट्वा बन्धुवर्गस्य दिष्ट्या जीवति जीवति । इत्युद्बभूव नादोऽत्र निखिलस्य जनस्य च ॥ ३६
अथामोक्ष्यन्व्रतं सर्वान्मृषा योगेश्वरः स तान् । विप्रपुत्रशरीरान्तःप्रविष्टस्तापसोऽब्रवीत् ॥ ३७

लोकान्तरगतस्याद्य महापाशुपतव्रतम् । प्राप्तं साक्षान्ममाभाष्य दत्तं शर्वेण जीवितम् ॥ ३८
अधुनैव च धार्यं तद्गत्वैकान्ते व्रतं मया । जीवितं मेऽन्यथा नास्ति तद्यूयं यात याम्यहम् ॥ ३९
इति सर्वान्स तत्रस्थान्संबोध्य दृढनिश्चयः । स्वगृहान्प्रेषयामास हर्षशोकाकुलान्व्रती ॥ ४०
स्वयं च गत्वा श्वभ्रे तत्क्षिप्त्वा पूर्वकलेवरम् । आत्तव्रतो महायोगी युवीभूतोऽन्यतो ययौ ॥ ४१
इति व्याख्याय वेतालः कथां निशि तदा पथि । तं त्रिविक्रमसेनं स राजानं पुनरब्रवीत् ॥ ४२
राजन्ब्रूहि स योगीन्द्रः कस्मात्परपुरे वसन् । प्ररुरोद ननर्ताथ कौतुकं महदत्र मे ॥ ४३
इति वेतालतः श्रुत्वा शापशङ्की स भूपतिः । विमुच्य मौनमेवं तमवादीद्धीमतां वरः ॥ ४४
शृणु तत्र बभूवास्य योऽभिप्रायस्तपस्विनः । सह वृद्धं चिरायेदं शरीरं सिद्धिसाधनम् ॥ ४५
पितृभ्यां लालितं बाल्ये त्यजाम्यद्येति दुःखितः । स जरत्तापसोऽरोदीद्देहस्नेहो हि दुस्त्यजः ॥ ४६
नवं देहं प्रवेक्ष्यामि साधयिष्याम्यतोऽधिकम् । इति हर्षादनृत्यच्च कस्य नेष्टं हि यौवनम् ॥ ४७

एतत्तस्य वचो निशम्य नृपतेरंसात्स भूयोऽप्यगा-
द्वेतालो मृतपूरुषान्तरगतस्तं शिंशपापादपम् ।
राजा सोऽपि तमन्वधावदधिकोत्साहः पुनः प्रेप्सया
कल्पान्तेऽप्यचलं कुलाद्रिविजयि स्थैर्यं हि धीरात्मनाम् ॥ ४८

---

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रिंशस्तरङ्गः ।

## एकत्रिंशस्तरङ्गः ।

### ( चतुर्विंशो वेतालः । )

ततस्तां तिमिरश्यामां चिताग्निज्वलितेक्षणाम् । श्मशाने भीषणे तस्मिन्वीरो रजनिराक्षसीम् ॥ १
घोरामगणयन्राजा गत्वा तां शिंशपां पुनः । स त्रिविक्रमसेनस्तं तस्या वेतालमाददे ॥ २
स्कन्धे कृत्वा च तं यावत्प्रक्रामति स पूर्ववत् । तावद्भूयः स वेतालो नरदेवमुवाच तम् ॥ ३
भो राजन्नहमुद्विग्नो न पुनस्त्वं गतागतैः । तदेकं मे महाप्रश्नमिमं कथयतः शृणु ॥ ४
आसीन्माण्डलिकः कोऽपि नृपतिर्दक्षिणापथे । धर्माभिधानो धौरेयः साधूनां बहुगोत्रजः ॥ ५
तस्य चन्द्रवतीनाम भार्या मालवदेशजा । अभून्महाकुलोत्पन्ना वरस्त्रीमौलिमालिका ॥ ६
तस्यां च तस्य भार्यायां भूपतेरुदपद्यत । एकैव लावण्यवती नामान्वर्थाभिधा सुता ॥ ७
प्रदेयायां च तस्यां स सुतायां धर्मभूपतिः । उन्मूलितोऽभून्मिलितैर्दायादै राष्ट्रभेदिभिः ॥ ८
ततः पलाय्य निरगात्स देशाद्भार्यया सह । दुहित्रा च तया रात्रावात्तसद्रत्नसंचयः ॥ ९
मालवं प्रति च स्वैरं प्रस्थितः श्वशुरास्पदम् । विन्ध्याटवीं तया रात्र्या प्राप भार्यासुतायुतः ॥ १०
तस्यां प्रविष्टस्योदश्रुरिवावश्यायशीकरैः । निशानुयात्रां दत्त्वेव ययौ तस्य महीक्षितः ॥ ११
आरुरोहाथ पूर्वाद्रिमुत्क्षिप्ताग्रकरो रविः । मा गाश्चौराटवीमेतामिति तं वारयन्निव ॥ १२
ततोऽत्र ससुताजानिः क्षताङ्घ्रिः कुशकण्टकैः । पदातिः स नृपो गच्छन्भिल्लानां प्राप पल्लिकाम् ॥ १३
परेषां प्राणसर्वस्वहारिभिः पुंभिरावृताम् । वर्जितां धार्मिकैर्दुर्गां कृतान्तनगरीमिव ॥ १४
तत्र दृष्ट्वैव तं दूरात्सवस्त्राभरणं नृपम् । मोषितुं बहवोऽधावञ्शबरा विविधायुधाः ॥ १५
तान्विलोक्य सुताभार्ये राजा धर्मो जगाद सः । पुरा स्पृशन्ति वां म्लेच्छास्तदितो विशतं वनम् ॥ १६
इति राज्ञोदिता राज्ञी वनमध्यं विवेश सा । लावण्यवत्या सुतया सार्धं चन्द्रवती भयात् ॥ १७
राजाप्यभिमुखायातान्खड्गचर्मधरोऽत्र सः । अवधीत्तान्बहूञ्शूरः शबराञ्शरवर्षिणः ॥ १८
ततस्तेनाखिला पल्ली पल्लीशप्रा निपत्य तम् । प्रहारक्षतचर्माणमवधीन्नृपमेककम् ॥ १९
गृहीताभरणे याते दस्युसैन्ये विलोक्य तम् । भर्तारं निहतं दूराद्वनगुल्मान्तरस्थिता ॥ २०
राज्ञी चन्द्रवती सात्र दुहित्रा सह विह्वला । पलायमाना गहनं दूरमन्वगगाद्वनम् ॥ २१

तत्र मध्याह्नतापार्तास्विव मूलानि शाखिनाम्। छायास्वपि प्रविष्टासु शिशिराणि सहाध्वगैः ॥ २२
एकदेशेऽब्जसरसस्तीरेऽशोकतरोस्तले। शोकार्ता रुदती श्रान्ता ससुता समुपाविशत् ॥ २३
तावत्तद्वनमभ्यर्णनिवासी मृगयाकृते। महामनुष्यः कोऽप्यागादश्वारूढः सपुत्रकः ॥ २४
स चण्डसिंहनामा तं पुत्रं सिंहपराक्रमम्। उवाच दृष्ट्वात्र तयोः पांसूत्थे पदपद्धती ॥ २५
एते सुरेखे सुभगे अनुसृत्याप्नुवो यदि। स्त्रीयौ ते तत्तयोरेकां स्वीकुरुष्व यथारुचि ॥ २६
इत्युक्तवन्तं तं स्माह पुत्रः सिंहपराक्रमः। यस्याः सूक्ष्माविमौ पादौ सा भार्या प्रतिभाति मे ॥ २७
सा हि स्वल्पवया नूनं जाने समुचिता मम। बृहत्पादा तु योग्येयमेतज्ज्येष्ठवयास्तव ॥ २८
इति सूनोर्वचः श्रुत्वा चण्डसिंहो जगाद तम्। कैषा कथा भवन्माता प्रत्यग्रं हि गता दिवम् ॥ २९
तादृशे सुकलत्रे च गते कान्यत्र वासना। तच्छ्रुत्वा सोऽपि पुत्रस्तं चण्डसिंहमभाषत ॥ ३०
तात मैवमभार्यं हि शून्यं गृहपतेर्गृहम्। अन्यच्च मूलदेवोक्ता गाथा किं न श्रुता त्वया ॥ ३१

यत्र घनस्तनजघना नास्ते मार्गावलोकिनी कान्ता।
अजडः कस्तदनिगडं प्रविशति गृहसंज्ञकं दुर्गम् ॥ ३२

तज्जीवितेन मे तात शापितोऽसि न तां यदि। द्वितीयां मदभीष्टायां भार्यार्थे स्वीकरिष्यसि ॥ ३३
एतत्पुत्रवचः श्रुत्वा प्रतिपद्य च तत्सखः। स चण्डसिंहोऽनुसरन्पदपङ्क्तिं शनैर्ययौ ॥ ३४
प्राप्य तच्च सरःस्थानं मुक्तातारौघमण्डिताम्। श्यामां चन्द्रवतीं राज्ञीं तां ददर्शावभासिताम् ॥ ३५
लावण्यवत्या सुतया ज्योत्स्नयेवावदातया। नैशीं द्यामिव मध्याह्ने तरुच्छायामुपाश्रिताम् ॥ ३६
उपाययौ च पुत्रेण साकं तां स सकौतुकः। सापि दृष्ट्वा तमुत्तस्थौ वित्रस्ता चौरशङ्किनी ॥ ३७
अलं त्रासेन नाम्बैतौ चौरौ सौम्याकृती इमौ। सुवेषौ कौचिदाखेटकृते नूनमिहागतौ ॥ ३८
इत्युक्ता सुतया राज्ञी यावद्दोलायतेऽत्र सा। तावदश्वावतीर्णस्ते चण्डसिंहोऽब्रवीदुभे ॥ ३९
किं संभ्रमेण वामावां प्रणयाद्द्रष्टुमागतौ। तद्विश्वस्य निरातङ्के वदतं के युवामिति ॥ ४०
हरनेत्रानलज्वालादग्धमन्मथदुःस्थिते। रतिप्रीती इवारण्यमिदमेवमुपागते ॥ ४१
प्रविष्टे स्थः कथं चेह बत निर्मानुषे वने। रत्नप्रासादवासार्हमिदं हि युवयोर्वपुः ॥ ४२
कथं वराङ्गनोत्सङ्गयोग्यौ कण्टकिनीमिमाम्। भुवं वां चरणौ भ्रान्ताविति नौ मनसि व्यथा ॥ ४३
एषा च चित्रं युवयोः पतन्ती धूलिरानने। वातोद्धूता हतच्छायमावयोः कुरुते मुखम् ॥ ४४
भवत्योरेष चाङ्गेऽस्मिन्निपतन्पुष्पपेशले। किरणोष्मा दहत्यस्मानुच्चण्डश्चण्डदीधितेः ॥ ४५
तद्ब्रूतमात्मवृत्तान्तं दूयते हृदयं हि नः। द्रष्टुं न शक्नुमोऽरण्ये स्थितिं वां श्वापदावृते ॥ ४६
इत्युक्ते चण्डसिंहेन राज्ञी निःश्वस्य सा शनैः। लज्जाशोकाकुला तस्मै स्वं वृत्तान्तमवर्णयत् ॥ ४७
ततो निःस्वामिका मत्वा तामाश्वास्य च सात्मजाम्। स्वीचक्रे मधुरैर्वाक्यैश्चण्डसिंहोऽनुरञ्जयन् ॥ ४८
आरोप्य चाश्वयोः पृष्ठं सपुत्रस्तां सपुत्रिकाम्। निनाय वित्तपपुरीसमृद्धां वसतिं निजाम् ॥ ४९
सापि जन्मान्तरगतेवावशाङ्गीचकार तम्। अनाथा कृच्छ्रपतिता विदेशे स्त्री करोति किम् ॥ ५०
ततस्तां सूक्ष्मपादत्वाद्राज्ञीं सिंहपराक्रमः। चण्डसिंहसुतस्तत्र भार्यां चन्द्रवतीं व्यधात् ॥ ५१
तत्सुतां तां च लावण्यवतीं नृपतिकन्यकाम्। बृहत्त्वात्पादयोर्भार्यां चण्डसिंहश्चकार सः ॥ ५२
प्राग्घि सूक्ष्मबृहत्पादमुद्रापङ्क्तिद्वयेक्षणात्। प्रतिपन्नं तथा ताभ्यां सत्यं कश्चातिवर्तते ॥ ५३
एवं पादविपर्यासात्ते पितापुत्रयोस्तयोः। दुहितामातरौ भार्ये जाते श्वश्रूस्नुषे तदा ॥ ५४
कालेन च तयोस्ताभ्यां भर्तृभ्यां जज्ञिरे द्वयोः। पुत्रा दुहितरश्चैव तेषामन्येऽप्यथ क्रमात् ॥ ५५
इत्थं संप्राप्य तौ चण्डसिंहसिंहपराक्रमौ। तस्थतुस्तत्र लावण्यवतीं चन्द्रवतीं च ते ॥ ५६
इति व्यावर्ण्य वेतालस्तदा पथि कथां निशि। स त्रिविक्रमसेनं तं पप्रच्छ नृपतिं पुनः ॥ ५७
तयोर्मातादुहित्रोर्ये पुत्रपित्रोस्तयोर्नृप। सकाशाज्जन्तवो जाताः क्रमादुभयपक्षयोः ॥ ५८
ज्ञात्वेदं ब्रूहि मे तेषामन्योन्यं के भवन्ति ते। पूर्वोक्तः सोऽत्र शापस्ते जानानश्चेन्न वक्ष्यसि ॥ ५९

एतद्वेतालतः श्रुत्वा विमृशन्बहुधापि सः। नाज्ञासीत्तद्यदा राजा तूष्णीकः प्रययौ तदा॥ ६०
ततस्तदंसकूटस्थो वेतालो विहसन्हृदि। मृतपूरुषदेहान्तर्निविष्टः समचिन्तयत्॥ ६१
नायं राजा महाप्रश्ने वेत्त्यस्मिन्दातुमुत्तरम्। तेन तूष्णीं व्रजत्येष हृष्टोऽतिचतुरैः पदैः॥ ६२
न च वञ्चयितुं शक्यः सत्त्वराशिरयं परम्। क्रीडन्भिक्षुः स चास्माभिरियतैव न शाम्यति॥ ६३
तदद्य वञ्चयित्वा तं दुरात्मानमुपायतः। तत्सिद्धिं भाविकल्याणे राजन्यस्मिन्निवेशये॥ ६४
इत्यालोच्य स वेतालो नृपं तमवदत्तदा। राजन्कृष्णनिशाघोरे श्मशानेऽस्मिन्गतागतैः॥ ६५
एतैः क्लिष्टः सुखार्हस्त्वं न विकल्पश्च कोऽपि ते। तदाश्चर्येण धैर्येण तुष्टोऽहममुना तव॥ ६६
शवमेतं नयेदानीं निर्गच्छाम्यमुतो ह्यहम्। इदं तु शृणु यद्वच्मि हितं तव कुरुष्व च॥ ६७
आनीतमेतद्भवता यस्यार्थे नृकलेवरम्। कुभिक्षुः सोऽद्य मामस्मिन्समाहूयार्चयिष्यति॥ ६८
उपहारीचिकीर्षुश्च त्वामेव स शठस्ततः। भूमौ प्रणाममष्टाभिरङ्गैः कुर्विति वक्ष्यति॥ ६९
त्वं प्राग्दर्शय तावन्मे करिष्येऽहं तथैव तत्। इति सोऽपि महाराज वक्तव्यः श्रमणस्त्वया॥ ७०
ततो निपत्य भूतौ स प्रणामं यावदेव ते। दर्शयिष्यति तावत्त्वं छिन्द्यास्तस्यासिना शिरः॥ ७१
ततो विद्याधरैश्वर्यसिद्धिर्या तस्य वाञ्छिता। तां त्वं प्राप्स्यसि भुङ्क्ष्वेमां भुवं तदुपहारतः॥ ७२
अन्यथा तु स भिक्षुस्त्वामुपहारीकरिष्यति। एतदर्थं कृतो विघ्नस्तवात्रेयच्चिरं मया॥ ७३
तत्सिद्धिरस्तु ते गच्छेत्युक्त्वा तस्यांसपृष्ठगात्। निर्गत्य स ययौ तस्माद्वेतालः प्रेतकायतः॥ ७४

अथ स नरपतिस्तं प्रीतवेतालवाक्याच्छ्रमणमहितमेव क्षान्तिशीलं विचिन्त्य।
वटविटपितलं तत्तस्य पार्श्वं प्रतस्थे मृतपुरुषशरीरं तद्गृहीत्वा प्रहृष्टः॥ ७५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बक एकत्रिंशस्तरङ्गः।

---

द्वात्रिंशस्तरङ्गः।

(पञ्चविंशो वेतालः।)

ततस्तस्यान्तिकं भिक्षोः क्षान्तिशीलस्य भूपतिः। स त्रिविक्रमसेनोऽत्र प्राप स्कन्धे शवं वहन्॥ १
ददर्श तं च श्रमणं मार्गाभिमुखमेककम्। कृष्णपक्षक्षपारौद्रे श्मशाने तरुमूलगम्॥ २
असृग्लिप्तस्तले गौरेणास्थिचूर्णेन निर्मिते। मण्डले दिक्षु विन्यस्तपूर्णशोणितकुम्भके॥ ३
महातैलप्रदीपाढ्ये हुतपार्श्वस्थवह्निनि। संभृतोचितसंभारे स्वेष्टदैवतपूजने॥ ४
उपागाच्च स तं राजा सोऽपि भिक्षुर्विलोक्य तम्। आनीतमटकं हर्षादुत्थायोवाच संस्तुवन्॥ ५
दुष्करो मे महाराज विहितोऽनुग्रहस्त्वया। त्वादृशाः क्व क्व चेष्टेयं देशकालौ क्व चेदृशौ॥ ६
निष्कम्पं सत्यमेवाहुर्मुख्यं त्वां कुलभूभृताम्। एवमात्मानपेक्षेण परार्थो येन साध्यते॥ ७
एतदेव महत्त्वं च महतामुच्यते बुधैः। प्रतिपन्नादचलनं प्राणानामत्ययेऽपि यत्॥ ८
इति ब्रुवन्स सिद्धार्थमानी भिक्षुर्महीपतेः। तस्यावतारयामास स्कन्धात्तं मटकं तदा॥ ९
स्नपयित्वा समालभ्य बद्धमाल्यं विधाय च। मटकं मण्डलस्यान्तः स्थापयामास तस्य तत्॥ १०
भस्मोद्धूलितगात्रश्च केशयज्ञोपवीतभृत्। प्रावृतप्रेतवसनो भूत्वा ध्यानस्थितः क्षणम्॥ ११
तस्मिन्मन्त्रबलाहूतं प्रवेश्य नृकलेवरे। तं वेतालवरं भिक्षुः पूजयामास स क्रमात्॥ १२
ददौ तस्मै कपालार्घपात्रेणार्घ्यं सुनिर्मलैः। नरदन्तै(रक्तै)स्ततः पुष्पं सुगन्धि च विलेपनम्॥ १३
दत्त्वा मानुषनेत्रैश्च धूपं मांसैर्बलिं तथा। समाप्य पूजां राजानं तमुवाच स पार्श्वगम्॥ १४
राजन्निहास्य मन्त्राधिराजस्य कृतसंनिधेः। प्रणाममङ्गैरष्टाभिर्निपत्य कुरु भूतले॥ १५
येनाभिप्रेतसिद्धिं ते दास्यत्येष वरप्रदः। श्रुत्वैतत्स्मृतवेतालवचा राजाब्रवीत्स तम्॥ १६
नाहं जानामि तत्पूर्वं प्रदर्शयतु मे भवान्। ततस्तथैव तदहं करिष्ये भगवन्निति॥ १७
ततो दर्शयितुं यावत्स भिक्षुः पतितो भुवि। तावत्खड्गप्रहारेण स राजास्य शिरोऽच्छिनत्॥ १८

आचकर्ष च हृत्पद्ममुदरादस्य पाटितम्। वेतालाय च तस्मै तच्छिरोहृत्कमलं ददौ ॥ १९
साधुवादे ततो दत्ते प्रीतैर्भूतगणैस्ततः। तुष्टोऽब्रवीत्स वेतालो नृपं तं नृकलेवरात् ॥ २०
राजन्विद्याधरेन्द्रत्वं भिक्षोरासीद्यदीप्सितम्। तत्तावद्भूमिसाम्राज्यभोगान्ते ते भविष्यति ॥ २१
क्लेशितोऽसि मया यत्त्वं तदभीष्टं वरं वृणु। इत्युक्तवन्तं वेतालं स राजा तमभाषत ॥ २२
त्वं चेत्प्रसन्नः को नाम न सिद्धोऽभिमतो वरः। तथाप्यमोघवचनादिदं त्वत्तोऽहमर्थये ॥ २३
आद्याः प्रश्नकथा एता नानाख्यानमनोरमाः। चतुर्विंशतिरेषा च पञ्चविंशी समाप्तिगा ॥ २४
सर्वाः ख्याता भवन्त्वेताः पूजनीयाश्च भूतले। इति तेनार्थितो राज्ञा वेतालो निजगाद सः ॥ २५
एवमस्तु विशेषं च शृणु वच्म्यत्र भूतले। याश्चतुर्विंशतिः पूर्वा यैषा चैका समापिनी ॥ २६
कथावलीयं वेतालपञ्चविंशतिकाख्यया। ख्याता जगति पूज्या च शिवा चैव भविष्यति ॥ २७
यः श्लोकमात्रमप्यस्याः कथयिष्यति सादरः। यो वा श्रोष्यति तौ सद्यो मुक्तपापौ भविष्यतः ॥ २८
यक्षवेतालकूष्माण्डडाकिनीराक्षसादयः। न तत्र प्रभविष्यन्ति यत्रैषा कीर्तयिष्यते ॥ २९
इत्युक्त्वा स ययौ तस्मान्निर्गत्य नृकलेवरात्। यथाभिरुचितं धाम वेतालो योगमायया ॥ ३०
ततस्तत्र सुरैः सार्धं राज्ञस्तस्य महेश्वरः। साक्षादाविरभूत्तुष्टः प्रणतं चादिदेश तम् ॥ ३१
साधु वत्स हतोऽद्यायं यत्त्वया कूटतापसः। विद्याधरमहाचक्रवर्तिताहठकामुकः ॥ ३२
त्वमादौ विक्रमादित्यः सृष्टोऽभूः स्वांशतो मया। म्लेच्छरूपावतीर्णानामसुराणां प्रशान्तये ॥ ३३
अथ चोद्दामदुर्वृत्तदमनाय मया पुनः। त्वं त्रिविक्रमसेनाख्यो हीरः सृष्टोऽत्र भूपतिः ॥ ३४
अतः सद्वीपपातालां स्थापयित्वा महीं वशे। विद्याधराणामचिरादधिराजो भविष्यसि ॥ ३५
भुक्त्वा दिव्यांश्चिरं भोगानुद्विग्नः स्वेच्छयैव तान्। त्यक्त्वा ममैव सायुज्यमन्ते यास्यस्यसंशयम् ॥ ३६
अपराजितनामानं खड्गं चैतं गृहाण मे। यस्य प्रसादात्सर्वं त्वं प्राप्स्यस्येतद्यथोदितम् ॥ ३७
इत्युक्त्वा खड्गरत्नं तद्दत्त्वा तस्मै महीभृते। वाक्पुष्पाभ्यर्चितस्तेन देवः शंभुस्तिरोदधे ॥ ३८

अथ दृष्ट्वैव समाप्तं कार्यमशेषं निशि प्रभातायाम्।
प्रविवेश स त्रिविक्रमसेनः स्वपुरं नृपः प्रतिष्ठानम् ॥ ३९

तत्र क्रमावगतरात्रिविचेष्टिताभिरभ्यर्चितः प्रकृतिभिर्विततोत्सवाभिः।
स्नानप्रदानगिरिशार्चननृत्तगीतवाद्यादिभिस्तदखिलं स दिनं निनाय ॥ ४०

अल्पैरेव च वासरैः स नृपतिः शार्वस्य वीर्यादसेः
सद्वीपां सरसातलां च बुभुजे निष्कण्टकां मेदिनीम्।
संप्राप्याथ हराज्ञया सुमहतीं विद्याधराधीशतां
भुक्त्वा तां सुचिरं जगाम भगवत्सायुज्यमन्ते कृती ॥ ४१

(इति वेतालपञ्चविंशतिका।)

इति विक्रमकेसरी स मन्त्री चिरमिलितः पथि शापविप्रयोगात्।
अभिधाय पुनर्मृगाङ्कदत्तं प्रकृतार्थं निजगाद राजपुत्रम् ॥ ४२

एवं देव स वृद्धो विप्रो वेतालपञ्चविंशतिकाम्।
एतामाख्याय कथां ग्रामे तस्मिन्नुवाच मां भूयः ॥ ४३

तत्पुत्र स त्रिविक्रमसेनो राजा किलैवमक्लीबः।
वेतालानुग्रहतः किमिव न यत्प्राप्तवानिष्टम् ॥ ४४

तस्मादिह त्वमपि मन्त्रमिमं गृहीत्वा मत्तः प्रसादय विमुक्तविषादवृत्तिः।
वैतालमुख्यममुना प्रभुणा मृगाङ्कदत्तेन संगममवाप्स्यसि वीर येन ॥ ४५

नह्यप्राप्यं किंचिदुत्साहभाजां भग्नोत्साहो वत्स को नावसीदेत्।
तत्ते प्रीत्या वच्मि यत्तत्कुरुष्व त्वं मे बन्धुः सर्पदंशार्तिहर्ता ॥ ४६

इत्युक्तवतस्तस्माद्विप्रादादाय सक्रियं मन्त्रम् ।
तं चामन्त्र्य ततोऽहं देवोज्जयिनीं गतोऽभूवम् ॥ ४७

तत्र श्मशाने मृतकं रजन्यामाहृत्य कृत्वा स्नपनादि तस्य ।
आहूय मन्त्रेण च तेन तस्मिन्वेतालमस्म्यर्चितवान्यथावत् ॥ ४८
भोज्यं महामांसमदायि तस्मै तृप्त्यै तदा सोऽपि तदाशु जग्ध्वा ।
तृप्तोऽस्मि नैवान्यदुपानयेति मामभ्यधान्मानुषमांसगृध्नुः ॥ ४९
कालं यदा नाक्षमतात्र किंचिदुत्कृत्य मांसानि तदा निजानि ।
प्रादामहं प्रीतिकराणि तस्मै योगेश्वरस्तेन स मेऽभ्यतुष्यत् ॥ ५०
अथाब्रवीन्मां स सखे दृढेन सत्त्वेन तुष्टोऽस्म्यमुनाधुना ते ।
तत्पूर्ववद्वीर भवाक्षताङ्गो वृणीष्व मत्तो वरमीप्सितं च ॥ ५१
इत्युक्तवन्तं तमहं तदैव प्रत्यब्रवं मां नय देव तत्र ।
यत्र प्रभुर्मे स मृगाङ्कदत्तो नातः परोऽन्योऽभिमतो वरो मे ॥ ५२
एतत्स वेतालपतिर्निशम्य मामभ्यधात्तर्हि ममांसपृष्ठम् ।
आरोह यावत्तरसा भवन्तं तस्यान्तिकं स्वस्य विभोर्नयामि ॥ ५३
इत्येव तस्योक्तवतस्तथेति स्कन्धाग्रमारोहमहं प्रसह्य ।
ततो वहन्मां स नभःपथेन प्रातिष्ठत प्रेततनुप्रविष्टः ॥ ५४
आनीय चेहाद्य विलोक्य युष्मान्मार्गेऽवतार्याम्बरतश्च तेन ।
एतेन वेतालवरेण देव संप्रापितोऽहं तव पादमूलम् ॥ ५५
समागतश्च प्रभुणाहमद्य गतः स चाप्येष समाप्तकृत्यः ।
इत्येष मे मानद नागशापाद्भवद्वियुक्तस्य महानुदन्तः ॥ ५६
इति विक्रमकेसरिणो निजसचिवाच्छ्रुतवियोगवृत्तान्तः ।
मार्गे मृगाङ्कदत्तो गच्छन्कान्तानिमित्तमुज्जयिनीम् ॥ ५७
पारावताख्यशापभ्रष्टक्रममिलितकतिपयामात्यः ।
मुमुदे स राजपुत्रः संभावितसकलसाध्यसंपत्तिः ॥ ५८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वात्रिंशस्तरङ्गः ।

---

त्रयस्त्रिंशस्तरङ्गः ।

नमो विघ्नजिते यस्य जानुदेशे विवर्तते । कुम्भस्रस्तेव नक्षत्रमाला रात्रिषु नृत्यतः ॥ १
ततः कथावसाने स मार्गमध्यात्समुत्थितः । मृगाङ्कदत्तो मुदितः प्राप्तविक्रमकेसरी ॥ २
गुणाकरेण सहितस्तथा विमलबुद्धिना । सविचित्रकथो भीमपराक्रमसमन्वितः ॥ ३
प्रचण्डशक्तियुक्तश्च श्रुतधिद्विजसंगतः । प्राप्तशेषान्विचिन्वानः शापविश्लेषितान्सखीन् ॥ ४
शशाङ्कवत्याः संप्राप्त्यै प्रागेवोज्जयिनीं प्रति । गन्तुं प्रवृत्तः पुनरप्युच्चचालात्मनाष्टमः ॥ ५
क्रमात्प्राप च स ग्रीष्मशुष्कतोयामपादपाम् । अटवीं चण्डमार्तण्डतापसंतप्तवालुकाम् ॥ ६
तस्यां व्रजन्स सचिवान्राजपुत्रो जगाद तान् । पश्यतैषाटवी कीदृग्दुर्गमायतभैरवा ॥ ७
एषा हि विभ्रष्टपथा जनत्यक्ता निराश्रया । उद्यद्दुःखानलज्वालेवाभिर्मरुमरीचिभिः ॥ ८
विकीर्णरूक्षकेशेव तृणैरुच्छुष्कमर्मरैः । सिंहव्याघ्रादिवित्राससरोमाञ्चेव कण्टकैः ॥ ९
रुदतीवातपक्लान्तजलाकाङ्क्षिमृगारवैः । तदेषा त्वरयास्माभिर्लङ्घनीया विशङ्कटा ॥ १०
इत्यूचिवान्स तैः सार्धं सचिवैः क्षुत्तृषार्दितैः । द्रुतं मृगाङ्कदत्तस्तामटवीमुदलङ्घयत् ॥ ११
ददर्श चाग्रे सुमहत्स्वच्छशीतजलैर्भृतम् । सरोऽर्कतापगलितस्यामृतांशोरिव द्रवैः ॥ १२

दिगन्तव्यापिविस्तारं प्रतिबिम्बमिवात्मनः । द्रष्टुं त्रैलोक्यलक्ष्म्येव विहितं मणिदर्पणम् ॥ १३
धार्तराष्ट्रकृतक्षोभं विचित्रार्जुनविभ्रमम् । विश्रान्तिकृत्स्वादुरसं भारतानुकृतिं दधत् ॥ १४
उपकण्ठमिलन्नीलकण्ठपीतविषोत्तमम् । अच्युताश्रितलक्ष्मीकं मन्थकालाब्धिसंनिभम् ॥ १५
सूर्यरश्मिभिरप्राप्तगम्भीरशिशिरान्तरम् । अनन्तपद्मनिलयं पातालमिव भूमिगम् ॥ १६
तस्य तीरे च सरसः पश्चिमे स व्यलोकयत् । राजपुत्रः ससचिवो महान्तं दिव्यपादपम् ॥ १७
वातान्दोलितविस्तारिशाखाभुजकदम्बकम् । मूर्धलग्नाभ्रसरितं नृत्यन्तमिव शंकरम् ॥ १८
अत्युन्नतेन शिरसा व्योमपृष्ठावगाहिना । कौतुकान्नन्दनोद्यानशोभां द्रष्टुमिवोद्यतम् ॥ १९
शोभमानं फलैर्दिव्यरसैः शाखावलम्बिभिः । कल्पद्रुमं सुरानद्धैः पीयूषकलशैरिव ॥ २०
मा मां यथा तथा कश्चित्स्प्राक्षीदिति खगारवैः । व्याहरन्तमिव प्रेङ्खत्पल्लवाग्रकरं मुहुः ॥ २१
यावन्मृगाङ्कदत्तस्तं स निर्वर्णयति प्रभुः । तावत्तन्मन्त्रिणस्तस्मिन्प्रधाव्य क्षुत्तृषार्दिताः ॥ २२
फलानि भोक्तुमारूढास्तस्य दृष्ट्वैव तानि ते । फलत्वं षडपि प्राप्ता मानुषा अप्यशङ्कितम् ॥ २३
ततो मृगाङ्कदत्तस्तानपश्यन्विह्वलः सखीन् । एकैकं स तरौ तत्र नामग्राहमशब्दयत् ॥ २४
यदा ददुर्न वचनं न चादृश्यन्त ते क्वचित् । तदा हा हा हतोऽस्मीति नैराश्यविधुरं वदन् ॥ २५
स राजपुत्रो न्यपतन्मूर्च्छितोऽत्र महीतले । द्रुमानारूढपार्श्वस्थकेवलश्रुतधिद्विजः ॥ २६
श्रुतधिः स च विप्रस्तमुवाचाश्वास्य तत्क्षणम् । कृतप्रज्ञोऽपि किं देव त्यक्तधैर्योऽवसीदसि ॥ २७
अश्रुते हि स कल्याणं व्यसने यो न मुह्यति । नागशापवियुक्तान्किं नैतान्संप्राप्तवानसि ॥ २८
तथैव पुनरप्येतान्मन्त्रिणोऽन्यांश्च लप्स्यसे । शशाङ्कवत्या संयोगोऽप्यचिरात्ते भविष्यति ॥ २९
एवं श्रुतधिनोक्तः सन्राजपुत्रो जगाद सः । कुत एतदिदं धात्रा नाशायासूत्रितं हि नः ॥ ३०
क्वान्यथा निशि वेतालः क्व च भीमपराक्रमः । क्व शशाङ्कवतीज्ञानं तत्संवादप्रसङ्गतः ॥ ३१
तां च प्राप्तुमयोध्यायाः क्व चास्माकं विनिर्गमः । विन्ध्याटव्यां क्व चान्योन्यवियोगो नागशापतः ॥ ३२
ततः कतिपयानां नः क्रमशः क्व च संगमः । क्व चाधुना वियोगोऽयमिष्टत्यागः पुनः सखे ॥ ३३
ते हि वृक्षेऽत्र भूतेन ग्रस्तास्तैश्च विना मम । का शशाङ्कवती किं च जीवितं तदलं भ्रमैः ॥ ३४
इत्यूचिवाञ्शुचा सोऽत्र सरस्यात्मानमुज्झितुम् । मृगाङ्कदत्त उत्तस्थौ श्रुतधौ वारयत्यपि ॥ ३५
तावद्वागत्र गगनादुच्चचाराशरीरिणी । मा पुत्र साहसं कार्षीः सर्वं स्वन्तं हि भावि ते ॥ ३६
अस्मिन्गणपतिर्देवः स्वयं वसति पादपे । स च त्वत्सचिवैरेतैरज्ञानाद्विमानितः ॥ ३७
ते ह्यशुद्धा अनाचान्ता अक्षालितकराङ्घ्रयः । क्षुधार्तास्तन्निवासेऽस्मिन्नारूढाः फललिप्सवः ॥ ३८
ततः स्पृष्टेषु तेष्वत्र फलतामेव ते गताः । यश्चित्तास्तद्गतिं गच्छन्त्विवति विघ्नेशशापतः ॥ ३९
अन्येऽपि ये त्वत्सचिवाश्चत्वारस्ते पथामुना । आगता एवमेवास्मिन्नारूढाः फलतां गताः ॥ ४०
तस्मादाराधयैतं त्वं तपोभिर्गणनायकम् । एतत्प्रसादात्सर्वेष्टसिद्धिस्तव भविष्यति ॥ ४१
इत्युक्तः स सुधासारसृजेवाकाशतो गिरा । मृगाङ्कदत्तो जातास्थो देहत्यागान्न्यवर्तत ॥ ४२
कृत्वा च सरसि स्नानं तरौ तस्मिन्गणाधिपम् । अर्चयित्वोज्झिताहारस्तमस्तौषीत्कृताञ्जलिः ॥ ४३

जय निजताण्डवडम्बरमर्दभरन्यञ्चितेन भुवनेन ।
समहीशैलवनेन प्रणम्यमानेश गजवदन ॥ ४४

जय ससुरासुरमानुषभुवनत्रयपूजिताङ्घ्रिकमलयुग ।
वरविविधसिद्धिनिर्भरनिधान कुम्भोपमाकार ॥ ४५

जय युगपदुदितचण्डद्वादशदिनकृत्प्रदीप्ततेजस्क ।
हरहरिसुरपतिदुर्जयदितिजकुलाकालकल्पान्त ॥ ४६

जय भक्तवृजिनवारण लीलानीराजनोल्मुकेनेव ।
परशुवरेण विराजितकरतलकलितानलज्वाल ॥ ४७

अभिमतसिद्ध्यै भर्तुस्त्रिपुरावजये गणेश गौर्यापि।
यः पूजितोऽसि तं त्वां श्रितोऽस्मि शरणं नमस्तेऽस्तु॥ ४८

इति संस्तुतविघ्नेशो निराहारः कुशास्तरे। मृगाङ्कदत्तोऽनैषीत्तां रात्रिं तस्य तरोस्तले॥ ४९
तथैवैकादशाहानि श्रुतधौ परिचारके। विघ्नेशाराधनपरो राजपुत्रो निनाय सः॥ ५०
द्वादशेऽह्नि निशि स्वप्ने तं जगाद गणेश्वरः। वत्स तुष्टोऽस्मि ते मुक्तशापान्प्राप्स्यसि मन्त्रिणः॥ ५१
गत्वा च तैः समं प्राप्य तां शशाङ्कवतीं क्रमात्। प्रत्यावृत्य स्वनगरीं पृथ्वीराज्यं करिष्यसि॥ ५२
एवं गणेश्वरादिष्टः प्रबुद्धः स निशाक्षये। मृगाङ्कदत्तः स्वप्नं तं दृष्टं श्रुतधयेऽभ्यधात्॥ ५३
तेनाभिनन्दितः प्रातः स्नात्वाभ्यर्च्य विनायकम्। तद्वासवृक्षं तं यावत्कुरुते स प्रदक्षिणम्॥ ५४
तावत्समं तरोस्तस्मादवतीर्य दशापि ते। फलत्वमुक्ताः सचिवा निपेतुस्तस्य पादयोः॥ ५५
व्याघ्रसेनस्तथा स्थूलबाहुर्मेघबलोऽपि च। दृढमुष्टिश्चतुर्थश्च षट् चादौ येऽत्र वर्णिताः॥ ५६

ततः स सकलान्समं सपदि मन्त्रिणः प्राप्य तान्
दृशाकुलितया गिरा प्रमदमन्थरारम्भया।
नरेश्वरसुतोऽधिकप्रणयमेकमेकं मुहु-
र्ददर्श परिषस्वजे तदनु संबभाषे कृती॥ ५७

तेऽपि नवेन्दुक्षामं कृततपसं वीक्ष्य तं प्रभुं सास्राः।
श्रुतधिनिगदितयथार्थाः प्रशशंसुर्नाथवन्तमात्मानम्॥ ५८

अथ तत्र स तैर्मृगाङ्कदत्तः सरसि कृताप्लवनादिभिः सहैव।
सचिवैः सुखपारणं सहर्षो विदधे लब्धधृतिः स्वकार्यसिद्ध्यै॥ ५९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रयस्त्रिंशस्तरङ्गः।

---

चतुस्त्रिंशस्तरङ्गः।

ततः सोऽत्र सरस्तीरे कृतपारणसुस्थितः। मृगाङ्कदत्तस्तैः साकं सचिवैः स्वैरुपाविशत्॥ १
ततस्ते तदहः प्राप्ताश्चत्वारो निजमन्त्रिणः। तेनापृच्छ्यन्त विश्लेषकालवृत्तान्तमादरात्॥ २
अथ स व्याघ्रसेनाख्यस्तेषां मध्यात्तमब्रवीत्। देवास्मदीयवृत्तान्तं श्रूयतां वर्णयाम्यहम्॥ ३
यदा पारावताख्यस्य तस्य नागस्य शापतः। भवद्भ्यो दूरविभ्रष्टो जातोऽहं नष्टचेतनः॥ ४
तदा भ्रान्त्वाटवीं रात्रौ लब्धसंज्ञोऽप्यहं चिरात्। न दिशो न च पन्थानमपश्यं तमसा वृतः॥ ५
कृच्छ्राच्च दुःखदीर्घायां गतायां विरतिं निशि। उदिते भगवत्यर्के क्रमादाशाप्रकाशके॥ ६
अचिन्तयमहं हा धिक् क नु यातः स नः प्रभुः। अस्मद्वियुक्तश्चैकाकी कथं सोऽत्र भविष्यति॥ ७
कथं वा तमवाप्स्यामि कुत्रान्विष्यामि का गतिः। वरमुज्जयिनीं यामि तत्र प्राप्येत जातु सः॥ ८
सा शशाङ्कवतीहेतोर्गन्तव्या तस्य हि स्थिता। इत्याशया शनैः प्रायामहमुज्जयिनीं प्रति॥ ९
गाहमानोऽथ कष्टां तामटवीं दुर्दशामिव। दह्यमानोऽर्ककिरणैरग्निचूर्णोल्करैरिव॥ १०
कथंचित्प्राप्तवानस्मि सरः फुल्लोत्पलेक्षणम्। हंसादिमधुरारावैः संभाषणमिवाचरत्॥ ११
प्रयुक्तवीचिहस्ताग्रं प्रसन्नविपुलाशयम्। दर्शनादेव सर्वार्तिहरं सत्पुरुषं यथा॥ १२
तत्र स्नात्वा च भुक्त्वा च बिसान्यापीय वारि च। यावत्स्थितोस्मि तावत्रीनेतानद्राक्षमागतान्॥ १३
दृढमुष्टिमथ स्थूलबाहुं मेघबलं तथा। समेत्य च भवद्वार्ता मिथोऽस्माभिरपृच्छ्यत॥ १४
अजानन्तश्च सर्वेऽपि वयं ते पापशङ्किनः। अकार्ष्म देहत्यागाय मतिं त्वद्विरहासहाः॥ १५
तावच्च तस्मिन्सरसि स्नातुं मुनिकुमारकः। आगमद्दीर्घतपसः सुतो नाम्ना महातपाः॥ १६
जटीकृतनिजज्वालो भूयोऽग्निरिव खाण्डवम्। दिधक्षुराश्रितो ब्राह्मीं प्रज्वलंस्तेजसा तनुम्॥ १७
कृष्णाजिनेन संवीतः सव्येनात्तकमण्डलुः। दक्षिणेन करेणाक्षमालावलयमुद्वहन्॥ १८

सहागतमृगैः शृङ्गप्रोत्खातस्नानमृत्तिकः । युक्तः कतिपयैरन्यैः समानैर्मुनिपुत्रकैः ॥ १९
सोऽस्मानुपागाद्दृष्ट्वैव सरःप्रपतनोद्यतान् । करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः ॥ २०
अवदच्च न कार्यं वः पापं कापुरुषोचितम् । दुःखान्धा हि पतन्त्येव विपच्छ्वभ्रेषु कातराः ॥ २१
धीरास्तु दृष्टसन्मार्गा विवेकामलचक्षुषः । न पतन्त्यवटे प्राप्यमवश्यं प्राप्नुवन्ति च ॥ २२
यूयं च भव्याकृतयः कल्याणं प्राप्स्यथ ध्रुवम् । तद्ब्रूत किं नु दुःखं वो मानसं दूयते हि मे ॥ २३
एवमुक्तवते तस्मै मुनिपुत्राय तत्क्षणम् । आमूलान्निजवृत्तान्तं सर्वं कथितवानहम् ॥ २४
ततस्तेन वयं तैस्तैर्वाक्यैरायतिदर्शिभिः । संबोध्य सानुगेनापि देहत्यागान्निवर्तिताः ॥ २५
अथ स्नात्वा ततो नातिदूरं स मुनिपुत्रकः । अस्माननैषीदातिथ्यं विधित्सुः पितुराश्रमम् ॥ २६
तत्रोच्चशाखोर्ध्वभुजैर्वेदिकासूत्थितस्थितैः । प्रारब्धतपसीवार्करश्मिपैः पादपैरपि ॥ २७
उपवेश्यैकदेशेऽस्मान्दत्तार्घ्यान्स मुनेः सुतः । एकैकमाश्रमतरुं गत्वा भिक्षामयाचत ॥ २८
अपूर्यत क्षणात्तस्य फलैस्तेभ्यः स्वतश्च्युतैः । भिक्षापात्रमथागात्तद्गृहीत्वा सोऽस्मदन्तिकम् ॥ २९
अदाच्च दिव्यास्वादानि तान्यस्मभ्यं फलानि सः । यैर्भुक्तैरमृतेनेव तृप्ता जाता वयं तदा ॥ ३०
क्षीणेऽह्नि चाब्धौ पतिते सूर्ये ज्योतिर्भिरम्बरे । तत्पातोच्छलितैरम्भःशीकरैरिव पूरिते ॥ ३१
तद्वैराग्यादिव प्राचीशैलशृङ्गतपोवनम् । संवीतचन्द्रिकाधौतवल्कले शशिनि श्रिते ॥ ३२
एकस्थानोपविष्टानां कृताशेषस्वकर्मणाम् । मुनीनामाश्रमे तत्र दर्शनाय गता वयम् ॥ ३३
प्रणिपत्योपविष्टाश्च कृतातिथ्यैः प्रियंवदैः । कुतो यूयमिति क्षिप्रात्पृष्टाः स्मस्तैर्महर्षिभिः ॥ ३४
ततो मुनिकुमारेण तेन तेभ्यो निवेदितः । तदाश्रमप्रवेशान्तो वृत्तान्तोऽस्मन्निबन्धनः ॥ ३५
अथास्मानत्र कण्वाख्यो ज्ञानी मुनिरभाषत । किमेवं वीरपुरुषा अपि क्लैब्यं गताः स्थ भोः ॥ ३६
आपद्यभग्नधैर्यत्वं संपद्यनभिमानिता । यदुत्साहस्य चात्यागस्तद्धि सत्पुरुषव्रतम् ॥ ३७
महान्तश्च महान्त्येव कृच्छ्राण्युत्तीर्य धैर्यतः । महतोऽर्थान्समासाद्य महच्छब्दमवाप्नुवन् ॥ ३८
इयं सुन्दरसेनस्य तथा च श्रूयतां कथा । यथा मन्दारवत्यर्थे क्लेशस्तेनान्वभूयत ॥ ३९
इत्युक्त्वा स मुनिः कण्वः सर्वेष्वत्र महर्षिषु । अस्मासु चोपशृण्वत्सु कथामेतामवर्णयत् ॥ ४०
अस्त्यलंकृतकौबेरीदिङ्मुखो निषधाभिधः । देशस्तत्रालका नाम बभूव नगरी पुरा ॥ ४१
यस्यां सदैव सर्वार्थसमृद्धिसुखितो जनः । केवलं रत्नदीपानामासीच्छश्वदनिर्वृतिः ॥ ४२
तस्यामन्वर्थनामाभून्महासेनो महीपतिः । शरजन्माद्भुताप्युग्रप्रतापप्लुष्टशात्रवः ॥ ४३
तस्य राज्ञो महामन्त्री गुणपालित इत्यभूत् । शौर्यालयो महीभारवोढा शेष इवापरः ॥ ४४
तस्मिन्न्यस्तभरस्यास्य सुखिनः क्षपितद्विषः । देव्यां शशिप्रभाख्यायामुत्पेदे नृपतेः सुतः ॥ ४५
नाम्ना सुन्दरसेनो यः शिशुरेवाशिशुर्गुणैः । शौर्यसौन्दर्यलक्ष्मीभ्यां स्वयंवरपतिर्वृतः ॥ ४६
तस्य राजसुतस्यात्र शूरास्तुल्यवयोगुणाः । आ बाल्यात्सह संवृद्धा बभूवुः पञ्च मन्त्रिणः ॥ ४७
चण्डप्रभो भीमभुजस्तथा व्याघ्रपराक्रमः । वीरो विक्रमशक्तिश्च दृढबुद्धिश्च पञ्चमः ॥ ४८
ते च सर्वे महासत्त्वा बलबुद्धिसमन्विताः । कुलीनाः स्वामिभक्ताश्च रुतज्ञा अपि पक्षिणाम् ॥ ४९
तैः समं स उवासात्र राजपुत्रः पितुर्गृहे । अनुरूपां विना भार्यां तरुणोऽप्यपरिग्रहः ॥ ५०
अनम्राक्रमणं शौर्यं धनं निजभुजार्जितम् । भार्या रूपानुरूपा च पुरुषस्येह पूज्यते ॥ ५१
अन्यथा तु किमेतेन त्रयेणापीत्यचिन्तयत् । स च सुन्दरसेनोऽथ वीरस्तैः सचिवैः सह ॥ ५२
एकदा चान्वितः सैन्यैर्वयस्यैस्तैश्च पञ्चभिः । निर्ययौ मृगयाहेतोर्नगर्याः स नृपात्मजः ॥ ५३
निर्यातं च ददर्शैतं दूरदेशान्तरागता । कापि कात्यायनी नाम प्रौढा प्रव्राजिकोत्तमा ॥ ५४
अरोहिणीकश्चन्द्रोऽयं किं वाप्यरतिकः स्मरः । इति चामानुषं वीक्ष्य तद्रूपं सा व्यचिन्तयत् ॥ ५५
बुद्ध्वा च राजपुत्रं तं पृष्टात्तत्परिवारतः । धातुः सा सर्गवैचित्र्यं प्रशंसन्ती विसिस्मिये ॥ ५६
अथारात्तारदीर्घेण राजपुत्रं स्वरेण तम् । कुमार विजयस्वेति वदन्ती प्रणनाम सा ॥ ५७

सोऽपि सुन्दरसेनस्तदनाकर्ण्यैव तत्क्षणम् । ययौ स्वसचिवारब्धकथाव्यग्रेण चेतसा ॥ ५८
अथोच्चैः श्रावयन्ती तं सा क्रुद्धोवाच तापसी । न शृणोष्याशिषं कस्माद्राजपुत्र ममाप्यहो ॥ ५९
कस्याहं नार्चिता पृथ्व्यां राज्ञो राजसुतस्य वा । एवमेव च दर्पोऽयं यदि ते यौवनादिभिः ॥ ६०
तन्मन्दारवतीं कन्यां हंसद्वीपेश्वरात्मजाम् । जगल्ललामभूतां च भार्यात्वेन त्वमाप्स्यसि ॥ ६१
ततो मन्ये महेन्द्रादेरपि श्रोष्यसि न ध्रुवम् । मदावलेपाद्वचनं के वराकास्तु मानुषाः ॥ ६२
एवमुक्तवतीं श्रुत्वा तामाहूय सकौतुकः । प्रह्वः सुन्दरसेनोऽसौ क्षमयामास तापसीम् ॥ ६३
प्रजिघाय च भृत्यानां हस्ते विश्रमणाय सः । गृहं विक्रमशक्तेस्तां प्रष्टुकामः स्वमन्त्रिणः ॥ ६४
ततो गत्वा कृताखेटः प्रत्यागत्य कृताह्निकः । तामानाय्य स पप्रच्छ कुमारो भुक्तभोजनाम् ॥ ६५
भगवत्युच्यतां कैषा त्वयाद्य परिकीर्तिता । कन्या मन्दारवत्याख्या परं कौतूहलं हि नः ॥ ६६
तच्छ्रुत्वा तापसी सा तमुवाच शृणु वच्म्यदः । तीर्थादिहेतोः सद्वीपां भ्रमामि पृथिवीमिमाम् ॥ ६७
भ्रमन्ती प्राप्तवत्यस्मि हंसद्वीपं प्रसङ्गतः । तत्र मन्दारदेवस्य राज्ञो दृष्टा मया सुता ॥ ६८
देवपुत्रोपभोगार्हा दृश्या नापुण्यकर्मभिः । या मन्दारवतीत्याख्यां धत्ते श्रीरिव नान्दनी ॥ ६९
बिभ्रती हारिणीं मूर्तिं दर्शनोद्दीपितस्मरा । धात्रा सुधामयी सृष्टा या चान्येवैन्दवी तनुः ॥ ७०
तस्या रूपेण सदृशो नास्त्येवान्यत्र भूतले । जानेऽनुहरति त्वेको भवांस्तद्रूपसंपदम् ॥ ७१
यैः सा न दृष्टा विफले तेषां नेत्रे च जन्म च । इति श्रुत्वा च तापस्या मुखाद्राजसुतोऽब्रवीत् ॥ ७२
तस्यास्तत्तादृशं रूपं पश्यामोऽम्ब वयं कथम् । एतत्तद्वचनं श्रुत्वा सापि प्रव्राजिकाभ्यधात् ॥ ७३
अहं चित्रपटे तां च तत्काललिखितां रसात् । वहे वल्गुलिकान्तःस्थां कौतुकं यदि दृश्यताम् ॥ ७४
एवमुक्तवती तस्मै तुष्टाय नृपसूनवे । कृष्ट्वा वल्गुलिकातः सा चित्रस्थां तामदर्शयत् ॥ ७५
सोऽपि सुन्दरसेनस्तां कन्यां चित्रगतामपि । विचित्ररूपामानन्दनिःस्पन्दं प्रविलोकयन् ॥ ७६
रोमाञ्चकण्टकचितैरङ्गैरास्ते स्म तत्क्षणम् । कीलितः पुष्पचापस्य बाणैरिव निरन्तरैः ॥ ७७
शनैरशृण्वन्नवदन्नपश्यंश्चैव किंचन । तन्मयीभूय चित्रस्थ इव सोऽप्यभवच्चिरम् ॥ ७८
तद्दृष्ट्वा मन्त्रिणस्तस्य जगदुस्तां तपस्विनीम् । आर्ये सुन्दरसेनं त्वं देवमत्र पटे लिख ॥ ७९
सदृशालेख्यविज्ञानं तावद्वीक्षामहे तव । तच्छ्रुत्वैव लिलेखैतं कुमारं सा क्षणात्पटे ॥ ८०
तं चातिसदृशं दृष्ट्वा सर्वेऽप्यत्रैवमब्रुवन् । नास्त्यालेख्यविसंवादो भगवत्या मनागिति ॥ ८१
अयं कुमार एवेति चित्रेऽस्मिञ्जायते हि धीः । तन्मन्दारवतीदेवीरूपं नात्र विसंवदेत् ॥ ८२
इत्युक्तवत्सु सचिवेष्वात्तचित्रपटद्वयः । प्रीतः सुन्दरसेनस्तां पूजयामास तापसीम् ॥ ८३
विसृज्य च यथार्हं तामेकस्थाननिवासिनीम् । विवेशाभ्यन्तरगृहं कान्ताचित्रपटं वहन् ॥ ८४
किं मुखं किमु कान्त्यास्याः क्षालिताङ्कमलः शशी । राज्याभिषेककलशौ स्मरस्यैतावुत स्तनौ ॥ ८५
लहर्यो रूपजलधेः किमेतास्त्रिवलीलताः । नितम्बः किमयं किं वा विलासशयनं रतेः ॥ ८६
इति चित्रगतां तत्र प्रत्यङ्गं तां विभावयन् । स मन्दारवतीं तस्थौ निपत्य शयनीयके ॥ ८७
तथैव चान्वहं तिष्ठन्नाहारादिपराङ्मुखः । स्मरज्वरभराक्रान्तः सोऽल्पैरेवाभवद्दिनैः ॥ ८८
तद्बुद्ध्वागत्य पितरौ तस्य पप्रच्छतुः सखीन् । शशिप्रभामहासेनौ स्वैरमस्वास्थ्यकारणम् ॥ ८९
तद्वयस्याश्च ते ताभ्यां तथा सर्वं तदब्रुवन् । यथात्र हेतुतां प्राप्ता हंसद्वीपनृपात्मजा ॥ ९०
ततः सुन्दरसेनं तं महासेनो जगाद सः । पुत्र किं गूह्यते स्थाने खल्वभिष्वङ्ग एष ते ॥ ९१
कन्यारत्नं हि मन्दारवती योग्या तवैव सा । मित्रं मन्दारदेवश्च परमं तत्पिता मम ॥ ९२
तद्गूतसाध्ये युक्ते च कस्मिन्नर्थे कदर्थना । एवं तमुक्त्वा संमन्त्र्य कन्यां तां तस्य याचितुम् ॥ ९३
राज्ञो मन्दारदेवस्य हंसद्वीपं विसृष्टवान् । दूतं सुरतदेवाख्यं स महासेनभूपतिः ॥ ९४
ददौ सुन्दरसेनं तं तापस्या लिखितं तया । हस्ते चित्रपटे तस्य रूपोत्कर्षप्रकाशकम् ॥ ९५
स दूतश्चतुरं गत्वा प्राप्याम्बुधितटे पुरम् । महेन्द्रादित्यनृपतेः शशाङ्कपुरसंज्ञकम् ॥ ९६

ततः प्रवहणारूढो हंसद्वीपमवाप तत्। दिनैर्मन्दारदेवस्य नृपतेस्तस्य मन्दिरम् ॥ ९७
द्वाःस्थैरावेदितस्तत्र प्रविश्यान्तर्विलोक्य सः। यथावृत्तं नृपं दूतो दत्तकोशलिकोऽभ्यधात् ॥ ९८
संदिष्टं ते महाराज महासेनेन भूभुजा। देहि सुन्दरसेनाय मत्पुत्राय निजां सुताम् ॥ ९९
पटे च लिखिता सा हि कात्यायन्यभिधानया। तापस्या कन्यकारत्नमित्यानीयेह दर्शिता ॥ १००
रूपानुरूप्याद्यास्माभिर्जातेच्छैर्लिखितं पटे। रूपं सुन्दरसेनस्याप्यत्र प्रहितमीक्ष्यताम् ॥ १०१
एष चासदृशो रूपे भार्यां स्वसदृशीं विना। नेच्छत्युद्वाहमेका च त्वत्सुतास्यानुकारिणी ॥ १०२
इति संदिश्य हस्ते मे पटो राज्ञायमर्पितः। दृश्यतां युज्यतां देव मधुना माधवी लता ॥ १०३
एतद्दूतवचः श्रुत्वा हर्षादानाययन्नृपः। सुतां स मन्दारवतीं देवीं तस्याश्च मातरम् ॥ १०४
ताभ्यां सह तमुद्घाट्य दृष्ट्वा चित्रपटं च सः। तुल्यो मद्दुहितुः पृथ्व्यां नास्तीत्येतन्मदं जहौ ॥ १०५
जगाद चामुना राजपुत्रेण यदि युज्यते। तदस्या रूपनिर्माणं सुतायाः सफलं मम ॥ १०६
अनेन रहिता ह्येषा राजते नानयाप्यसौ। का ह्यब्जिनी विना हंसं कश्च हंसोऽब्जिनीं विना ॥ १०७
इति राज्ञोदिते राज्यां श्रद्धावत्यामतीव च। सा मन्दारवती जज्ञे सद्यो मदनमोहिता ॥ १०८
तस्थौ चित्रपटन्यस्तनिश्चलोत्फुल्ललोचना। अधिष्ठितेव सुप्तेव विनिद्रा लिखितेव च ॥ १०९
ततो मन्दारदेवस्तां सुतां दृष्ट्वा तथाविधाम्। अङ्गीकृत्यैव तद्दानं स तं दूतमपूजयत् ॥ ११०
अन्येद्युः प्राहिणोत्तं च प्रतिदूतं च स स्वकम्। विप्रं कुमारदत्ताख्यं महासेननृपं प्रति ॥ १११
जगाद चोभावपि तौ गत्वा तमलकेश्वरम्। मम वाक्यान्महासेनं राजानं वदतं द्रुतम् ॥ ११२
सौहार्देन मया तावत्कन्या दत्ता तदुच्यताम्। त्वत्पुत्रः किमिहायातु किं कन्यात्र प्रहीयताम् ॥ ११३
इति राज्ञोक्तसंदेशौ ततः प्रवहणेन तौ। सह प्रययतुर्दूतावब्धिमार्गेण सत्वरम् ॥ ११४
शशाङ्कपुरमासाद्य ततः स्थलपथेन तौ। प्रापतुस्तां पुरीमृद्धामलकामलकामिव ॥ ११५
उपेत्य राजसद्माथ प्रविश्य च यथोचितम्। कृतादरं महासेनं राजानं तावपश्यताम् ॥ ११६
तं च मन्दारदेवोक्तं प्रतिसंदेशमूचतुः। राज्ञे तस्मै स च श्रुत्वा तुष्टस्तौ द्वावपूजयत् ॥ ११७
पृष्ट्वा च कन्याजन्मर्क्षं तस्मात्तत्पितृदूततः। लग्नं विवाहे पप्रच्छ सूनोः स गणकान्नृपः ॥ ११८
ते च मासत्रये शुक्लपञ्चम्यां मासि कार्तिके। लग्नं तस्मै वदन्ति स्म शुभं वध्वा वरस्य च ॥ ११९
तस्मिँल्लग्ने विवाहं च सूनोश्च प्रेषणं तदा। तस्मै मन्दारदेवाय संदिदेशालकापतिः ॥ १२०
हस्ते कुमारदत्तस्य तद्दूतस्यापरस्य च। चन्द्रस्वाम्यभिधानस्य स्वस्य लेखेऽभिलिख्य सः ॥ १२१
तौ च दूतौ ततो गत्वा लेखं दत्त्वा तथैव च। हंसद्वीपेश्वरस्याग्रे तस्य सर्वं शशंसतुः ॥ १२२
सोऽपि राजा तथेत्युक्त्वा चन्द्रस्वामिनमर्चितम्। व्यसृजत्तं महासेनदूतं स्वस्वामिनोऽन्तिकम् ॥ १२३
प्रत्यागतेऽलकां तस्मिन्नुक्तकार्यविनिश्चये। लग्नप्रतीक्षास्ते तस्थुः सर्वेऽप्युभयपक्षयोः ॥ १२४
तावच्च हंसद्वीपे सा प्राक्चित्रपटदर्शनात्। जातानुरागा मन्दारवती तं चिरभाविनम् ॥ १२५
विवाहलग्नं बुद्ध्वा तं तावत्कालक्रमासहा। प्रेयस्यत्युत्सुका गाढं संतेपे मदनाग्निना ॥ १२६
अङ्गारवर्षमङ्गे च चन्दनैरपि लेपनम्। पद्मिनीपत्रशय्यापि संतप्तसिकतास्तरः ॥ १२७
दीप्रदावानलशिखाः सुधांशोरपि रश्मयः। तस्याः सुन्दरसेनोत्कचेतसो बत जज्ञिरे ॥ १२८
मौनस्था वर्जिताहारा विरहव्रतमाश्रिता। आकुलाप्तसखीपृष्टा कृच्छ्रादेवमुवाच सा ॥ १२९
सखि दूरे विवाहो मे न च शक्नोमि तं विना। वरं प्रतीक्षितुं कालमलकाधिपतेः सुतम् ॥ १३०
दूरो देशश्च कालश्च विचित्रा च गतिर्विधेः। तदत्र मध्ये को वेत्ति किं कस्येह भविष्यति ॥ १३१
तन्मे मर्तव्यमेवेति वदन्ती विरहातुरा। जगाम मन्दारवती सद्यः सा विषमां दशाम् ॥ १३२
तद्बुद्ध्वा तत्सखीवक्त्रात्तां च दृष्ट्वा तथाविधाम्। सभार्यो मन्त्रयामास तत्पिता सह मन्त्रिभिः ॥ १३३
राजा स मित्रमस्माकं महासेनोऽलकापतिः। एषा च मन्दारवती कालं सोढुमिहाक्षमा ॥ १३४
तत्का त्रपा यथा चास्तु तत्रैव प्रेष्यतामियम्। कान्तान्तिकस्था धृत्या हि कालक्षेपं सहिष्यते ॥ १३५

इत्यालोच्य समाश्वास्य तां मन्दारवतीं सुताम् । आरोप्य च प्रवहणे सधनां सपरिच्छदाम् ॥ १३६
शुभेऽहनि ततो हंसद्वीपादम्बुधिवर्त्मना । विवाहहेतोर्विधिवज्जननीकृतमङ्गलाम् ॥ १३७
विनीतमतिनामानं सह दत्त्वा स्वमन्त्रिणम् । राजा मन्दारदेवोऽसौ विससर्जालकां प्रति ॥ १३८
ततो दिनानि कतिचिद्यावत्प्रवहणेन सा । प्रयाति मन्दारवती राजपुत्री महोदधौ ॥ १३९
अकस्मात्तावदुत्तस्थौ गर्जज्जलदतस्करः । सशूत्कारमरुद्धोरमुक्तधाराशरोत्करः ॥ १४०
क्षणाच्च दूरमाकृष्य विधिनेव बलीयसा । वातेन तस्या वहनं हन्यमानमभज्यत ॥ १४१
मग्ने तस्मिन्परीवारे विनीतमतिना सह । ममज्ज तस्याः सकलं भाण्डागारं महोदधौ ॥ १४२
सा त्वब्धिना राजपुत्री जीवन्त्येवोर्मिबाहुना । उत्क्षिप्य नीत्वा निकटे क्षिप्ता वेलावने तदा ॥ १४३
क्वाब्धौ पातः क्व चात्युच्चैनोर्मिणा प्रापणं वने । भवितव्यस्य नासाध्यं दृश्यते बत दृश्यताम् ॥ १४४
ततः सा तादृशी त्रस्तविह्वला विजने वने । दृष्ट्वैकाकिनमात्मानं दुःखाब्धावपतत्पुनः ॥ १४५
क्व प्रस्थितास्मि क्व प्राप्ता क्व च मे स परिच्छदः । क्व विनीतमतिर्वृत्तमकस्मात्किमिदं मम ॥ १४६
मन्दभाग्या क्व गच्छामि हा हतास्मि करोमि किम् । उत्तारिता हतविधे किमहं जलधेस्त्वया ॥ १४७
हा तात हाम्ब हा हार्यपुत्र पुत्रालकापतेः । त्वामप्राप्य विपद्येऽहं पश्य किं त्रायसे न माम् ॥ १४८
इत्यादि विलपन्ती च सा मन्दारवती भृशम् । प्ररुरोदाश्रुभिश्छिन्नहारमुक्ताफलोपमैः ॥ १४९
तावच्च नातिदूरस्थात्तत्राश्रमपदान्मुनिः । आजगाम मतङ्गाख्यः स्नातुं जलनिधेर्जले ॥ १५०
स बालब्रह्मचारिण्या दुहित्रा यमुनाख्यया । अन्वितस्तमृपिस्तस्याः शुश्राव रुदितध्वनिम् ॥ १५१
उपेत्य कृपया तां च ददर्श तनयायुतः । यूथभ्रष्टामिव मृगीं दिक्षु क्षिप्तार्तलोचनाम् ॥ १५२
का त्वं वनेऽत्र ते प्राप्तिः कथं कस्माच्च रोदिषि । इति तां च स पप्रच्छ महर्षिः स्निग्धया गिरा ॥ १५३
ततस्तं सकृपं दृष्ट्वा सा मन्दारवती शनैः । आश्वास्याकथयत्तस्मै स्ववृत्तान्तं त्रपानता ॥ १५४
अथ स प्रणिधायैतां मतङ्गमुनिरब्रवीत् । राजपुत्रि विषादेन कृतं धृतिमवाप्नुहि ॥ १५५
शिरीषपेशलाङ्गीं त्वां बाधते क्लेशविप्लवः । अपेक्षन्ते हि विपदः किं पेलवमपेलवम् ॥ १५६
भवती त्वचिरादेव पतिं प्राप्स्यत्यभीप्सितम् । तदागच्छाश्रमं तावन्नातिदूरमितो मम ॥ १५७
तत्रानया मत्सुतया सहास्स्व स्वगृहे यथा ।.............................॥ १५८
इति तां स समाश्वास्य कृत्वा स्नानं महामुनिः । निनाय मन्दारवतीमाश्रमं स्वं सुतान्वितः ॥ १५९
तत्र सा संयता तस्थौ भर्तृसंगमकाङ्क्षिणी । परिचर्याविनोदेन तस्यर्षेस्तत्सुतान्विता ॥ १६०
अत्रान्तरे चालकायां दिनानि गणयन्सदा । तस्यां स मन्दारवतीविवाहदिवसोन्मुखः ॥ १६१
कालं सुन्दरसेनोऽपि चिरोत्कण्ठाकृशो नयन् । आसीदाश्वास्यमानः स्वैर्मित्रैश्चण्डप्रभादिभिः ॥ १६२
क्रमाच्च लग्नदिवसे प्रत्यासन्ने पिता नृपः । तस्य यात्रासमारम्भं हंसद्वीपं प्रति व्यधात् ॥ १६३
शुभेऽह्नि च ततः प्रायात्कृतप्रस्थानमङ्गलः । सैन्यैः सुन्दरसेनः क्ष्मां कम्पयन्स नृपात्मजः ॥ १६४
गच्छन्क्रमेण च प्राप तुष्टः स्वसचिवान्वितः । तीराभरणमम्भोधेः स शशाङ्कपुरं पुरम् ॥ १६५
तत्र प्रत्युद्गतो राज्ञा प्रश्रयावनतेन सः । बुद्ध्वा महेन्द्रादित्येन प्रविवेशानुगैः सह ॥ १६६
वात्यायमानरूपश्रीः पौरस्त्रीपद्मिनीवने । समाससाद चारूढवारणो राजमन्दिरम् ॥ १६७
तत्रोपचरितस्तेन महेन्द्रादित्यभूभुजा । प्रतिपन्नानुयात्रेण स विशश्राम तद्दिनम् ॥ १६८
अपि वारिधिमुत्तीर्य तामहं प्राप्नुयां प्रियाम् । नवोढासुलभप्रेमलज्जासाध्वसशीलिनीम् ॥ १६९
आलिङ्ग्यमानां मा मेति लपन्तीं शृणुयां च ताम् । इत्यादिभिरनैषीत्तां यामिनीं स मनोरथैः ॥ १७०
प्रातश्चात्रैव नगरे स्थापयित्वा स्वसैनिकम् । महेन्द्रादित्यसहितः कूलं वारिनिधेर्ययौ ॥ १७१
तत्र तेन समं राज्ञा स्वयं प्रवहणं महत् । आरुरोहैकमन्नाम्बुपूर्णं स्वसचिवैर्युतः ॥ १७२
द्वितीयस्मिन्प्रवहणे राजपुत्रः परिच्छदम् । अवश्यनेयं संक्षिप्तं समारोपितवांश्च सः ॥ १७३
ततो मुक्ते प्रवहणे चलवातपटध्वजे । अभिप्रययतुस्ते द्वे दिशं दक्षिणपश्चिमाम् ॥ १७४

द्वित्रेष्वहःसु यातेषु गच्छतोश्चाम्बुधौ तयोः। अकस्मादुदभूत्तत्र महानुत्पातमारुतः॥ १७५
अहो वायुरपूर्वोऽयमित्याश्चर्यवशादिव। व्याघूर्णन्ते स्म जलधेस्तटेषु वनराजयः॥ १७६
व्यत्यस्ताश्च मुहुर्वातादधरोत्तरतां ययुः। वारिधेर्वारिनिचया भावाः कालक्रमादिव॥ १७७
आक्रन्देन समं दत्ते रत्नैरर्घे महाब्धये। प्रयत्नेन सहापास्ते कर्णधारैर्मरुत्पटे॥ १७८
मुक्तासु जीविताशाभिः सह सर्वैः ससंभ्रमैः। शिलासु शृङ्खलाबद्धास्वतिगुर्वीषु सर्वतः॥ १७९
तरङ्गोत्क्षिप्तविक्षिप्ते नागबन्धैरिवाम्बुधौ। प्रभ्रेमतुः प्रवहणे प्रयुद्ध इव ते उभे॥ १८०
ततः सुन्दरसेनस्तद्दृष्ट्वा धैर्यादिवासनात्। चलितस्तमुवाचेदं महेन्द्रादित्यभूपतिम्॥ १८१
ममापुण्यैरकाण्डे वः प्रलयोऽयमुपस्थितः। तन्न शक्नोम्यहं द्रष्टुं क्षिपाम्यात्मानमम्बुधौ॥ १८२
इत्युक्त्वा स्वोत्तरीयेण बद्ध्वा परिकरं द्रुतम्। स राजपुत्रो जलधौ तत्रात्मानमपातयत्॥ १८३
तद्दृष्ट्वा तद्वयस्यास्ते पञ्च चण्डप्रभादयः। महेन्द्रादित्यसहितास्तत्रैवात्मानमक्षिपन्॥ १८४
बाहुभ्यां च तरन्तस्ते नदीनां गतसंभ्रमाः। सर्वेऽपीतस्ततो जग्मुर्विक्षिप्ता वीचिवेगतः॥ १८५
क्षणाच्च शान्ते पवने निःशब्दस्तिमितोऽम्बुधिः। ददौ प्रशान्तकोपस्य सज्जनस्य समानताम्॥ १८६
तावच्च वातेन कुतोऽप्यानीतां यानपात्रिकाम्। प्राप सुन्दरसेनोऽत्र सहितो दृढबुद्धिना॥ १८७
तामारुरोह चैकेन समं तेन स्वमन्त्रिणा। स जीवितप्रमययोरन्तर्दोलामिवापराम्॥ १८८
ततो दिशमजानानः पयोमयमिवाखिलम्। प्रभ्रष्टपौरुषः पश्यन्दैवताशरणस्तदा॥ १८९
नावा मन्दानुकूलेन दैवेनेव नभस्वता। संप्रेर्यमाणया तीरं प्रापितोऽभूत्त्रिभिर्दिनैः॥ १९०
ततस्तीरविलग्नायां तस्यामात्मद्वितीयकः। स्थलं च जीविताशां च सममभ्यारुरोह सः॥ १९१
तत्रस्थश्च समाश्वस्य दृढबुद्धिमभाषत। उत्तीर्णोऽप्यम्बुधेरस्मि पातालादप्यधो गतः॥ १९२
यतो विक्रमशक्तिं तं तं च व्याघ्रपराक्रमम्। चण्डप्रभं भीमभुजं सचिवांस्तांस्तथाविधान्॥ १९३
महेन्द्रादित्यनृपतिं तं चाकारणबान्धवम्। विनाश्य सर्वानधुना का शोभा जीवितेन मे॥ १९४
इत्युक्तवन्तं तं मन्त्री दृढबुद्धिर्जगाद सः। देव धैर्यं गृहाण त्वं जाने कल्याणमस्ति नः॥ १९५
यथा ह्यावां तथा तेऽपि तरेयुर्जातु वारिधिम्। शक्या हि केन निश्चेतुं दुर्ज्ञाना नियतेर्गतिः॥ १९६
इत्यादि तत्तथावत्तं दृढबुद्धिर्ब्रवीति सः। तावदाजग्मतुस्तत्र स्नानार्थं तापसावुभौ॥ १९७
तौ विलोक्य विषण्णं तं राजपुत्रमुपेत्य च। परिपृच्छ्य च वृत्तान्तं साधू सदयमूचतुः॥ १९८
सुमते नान्यथाभावं बलिनः पूर्वकर्मणः। अपि देवाः क्षमाः कर्तुं सुखदुःखप्रदायिनः॥ १९९
हातुमिच्छन्नतो दुःखं धीरः सुकृतमाचरेत्। सा हि प्रतिक्रिया तस्य न शोकः शातनस्तनोः॥ २००
तद्विषादं जहीहि त्वं शरीरं रक्ष धैर्यतः। शरीरे सति को नाम पुरुषार्थो न सिद्ध्यति॥ २०१
कल्याणलक्षणश्चासि भाव्यवश्यं शुभं तव। इत्युक्त्वा तौ समाश्वास्य निन्यतुः स्वाश्रमं मुनी॥ २०२
तत्र कांश्चिच्च दिवसान्प्रतीक्षन्स नृपात्मजः। तस्थौ सुन्दरसेनोऽथ दृढबुद्धिसमन्वितः॥ २०३
अत्रान्तरे च तन्मन्त्री दोर्भ्यां भीमभुजोऽम्बुधिम्। तीर्त्वा विक्रमशक्तिश्च द्वौ पृथक्प्रापतुस्तटम्॥ २०४
अस्मद्वदुत्तरेज्जातु सोऽपीत्याशावशाच्च तौ। महाटवीं विविशतुश्चिन्वानौ दुःखमोहितौ॥ २०५
शेषौ तत्सचिवौ चण्डप्रभव्याघ्रपराक्रमौ। राजा महेन्द्रादित्यश्च तथैवोत्तीर्य वारिधिम्॥ २०६
आर्ताः सुन्दरसेनं तमन्विष्याप्राप्य दुःखिताः। अलब्धभग्नप्रवहनास्तच्छशाङ्कपुरं ययुः॥ २०७
ततस्तौ मन्त्रिणौ तत्र तच्च प्राक्स्थापितं बलम्। रुदन्तो ज्ञातवृत्तान्ता ययुः स्वामलकां पुरीम्॥ २०८
प्राप्तेष्वराजतनयेष्वनुशोचत्सु तेषु सा। आक्रन्दैकमयी जज्ञे पुरी प्ररुदितप्रजा॥ २०९
महासेननृपश्चात्र सदेवीको निशम्य तत्। सुतोदन्तं न यत्प्राणैर्जहे तद्बलमायुषः॥ २१०
देहत्यागोद्यतं तं च सदेवीकं न्यवारयन्। सचिवा वचनैस्तैस्तैर्दर्शिताशोपपत्तिभिः॥ २११
ततः स नगरीबाह्ये स्वयंभ्वायतने नृपः। सूनोः प्रवृत्तिं चिन्वानस्तपस्यन्नास्त सानुगः॥ २१२
तावन्मन्दारदेवोऽपि हंसद्वीपे स भूपतिः। जामातुर्दुहितुश्चाब्धिपातोदन्तमबुध्यत॥ २१३

शुश्राव चालकाप्राप्तं जामातृसचिवद्वयम् । महासेननृपं चास्थाधृतप्राणं तपःस्थितम् ॥ २१४
ततः सोऽपि सुताशोककातरो मरणोद्यमात् । वारितो मन्त्रिभिस्तैस्तैस्तेषु न्यस्तभरो नृपः ॥ २१५
महासेननृपस्यागात्पार्श्वं तस्यालकां पुरीम् । समदुःखस्य सहितो देव्या कंदर्पसेनया ॥ २१६
यद्विज्ञातसुतोदन्तनिश्चयः स करिष्यति । तदेवाहं समं तेन करिष्यामीति निश्चितः ॥ २१७
विज्ञातमन्दारवतीवृत्तान्ताधिकदुःखिना । महासेनावनीशेन समागम्यान्वशोचत ॥ २१८
तेनैव सह तत्रासीत्तपस्यन्नियतेन्द्रियः । मिताशी दर्भशयनो हंसद्वीपेश्वरोऽपि सः ॥ २१९
एवं धात्रा विकीर्णेषु तेषु सर्वेष्वितस्ततः । मारुतेनेव पर्णेषु प्रस्थाय स्वाश्रमात्ततः ॥ २२०
दैवात्सुन्दरसेनोऽत्र मतङ्गर्ष्याश्रमस्य सः । तस्य प्रापान्तिकं यत्र सा मन्दारवती स्थिता ॥ २२१
तत्र नानारसानेकपरिपक्वफलानतैः । निरुद्धतीरं तरुभिर्ददर्शाच्छजलं सरः ॥ २२२
श्रान्तस्तस्मिन्कृतस्नानो भुक्तस्वादुफलस्ततः । दृढबुद्धिसखो गत्वा प्रापैकां वननिम्नगाम् ॥ २२३
तस्यास्तीरेण गच्छंश्च लिङ्गायतनपार्श्वतः । स पुष्पावचयव्यग्रा दृष्टवान्मुनिकन्यकाः ॥ २२४
तासां मध्ये ददर्शैकां कन्यां लोकैकसुन्दरीम् । कान्त्या प्रकाशयन्तीं तज्ज्योत्स्नयेवाखिलं वनम् ॥ २२५
विलोकितेन कुर्वाणां फुल्लनीलोत्पला दिशः । तन्वतीं चरणन्यासैरवनौ नलिनीवनम् ॥ २२६
केयं सहस्रनयनप्रेक्षणीया किमप्सराः । वनश्रीरथवा पुष्पलग्नाग्रकरपल्लवा ॥ २२७
बहु दिव्याङ्गनासर्गसिद्धाभ्यासेन वेधसा । एतस्या निर्मितमिदं नूनमत्यद्भुतं वपुः ॥ २२८
तस्याश्चानुहरत्येषा चित्रदृष्टाकृतेरहो । प्रियाया मम मन्दारवत्याः सैव भवेन्नु किम् ॥ २२९
कथं वैतत्क सा हंसद्वीपे क्वैतद्वनान्तरम् । तन्न जानीमहे केयं कुतः कुत्रेह भामिनी ॥ २३०
इति राजसुतस्तं च दृढबुद्धिं जगाद सः । दृढबुद्धिश्च दृष्ट्वा तां वरकन्यां तदाब्रवीत् ॥ २३१
अन्यैव देव काप्यस्या वनपुष्पमयेष्वपि । हारकाञ्चीकलापादिभङ्गिराभरणेष्वियम् ॥ २३२
न चेदं जायते रूपं सौकुमार्यं च कानने । तद्दिव्या राजकन्या वा काप्येषा नर्षिकन्यका ॥ २३३
उत्तिष्ठावः क्षणं ज्ञातुमिहेति दृढबुद्धिना । उक्ते तौ तस्थतुस्तत्र पादपान्तरितावुभौ ॥ २३४
तावच्चोचितपुष्पास्ता मुनिकन्यास्तया सह । वरकन्यकया स्नातुं सरितं तामवातरन् ॥ २३५
तत्र तासु जलक्रीडाप्रवृत्तासु विधेर्वशात् । ग्राहेणागत्य जगृहे सैवात्र वरकन्यका ॥ २३६
तद्विलोक्यैव तत्कालं कन्यास्तास्त्रस्तविह्वलाः । चक्रन्दुरार्तास्त्रायध्वं त्रायध्वं वनदेवताः ॥ २३७
एषा हि मन्दारवती स्नान्ती नद्यामशङ्कितम् । ग्राहेणागत्य तरसा गृहीता हा विपद्यते ॥ २३८
एतच्छ्रुत्वैव किं सैव स्यात्प्रियेति प्रधाव्य सः । द्रुतं सुन्दरसेनस्तं ग्राहं क्षुरिकयावधीत् ॥ २३९
मृत्योरिव मुखात्तस्माद्द्रुतमुत्क्षिप्य रोधसि । आश्वासयामास च तां स मन्दारवतीं ततः ॥ २४०
सापि तीर्णभया दृष्ट्वा सुभगं तमचिन्तयत् । महात्मा प्राणदः कोऽयं मम भाग्यैरिहागतः ॥ २४१
चित्रं सुसदृशश्चैष चित्रदृष्टस्य तस्य मे । प्राणेशस्यालकानाथतनयस्य सुजन्मनः ॥ २४२
अपि नाम स एव स्याद्धिग्धिग्दुश्चिन्तितं मम । ईदृशः स विदेशस्थः शान्तं मा भूत्कदाचन ॥ २४३
तन्नान्यपुरुषोपान्ते स्थातुं युक्तं ममाधुना । व्रजामि तदितः स्वस्ति भवत्वस्मै महात्मने ॥ २४४
इति संचिन्त्य मन्दारवती प्राह स्म ताः सखीः । प्रणम्यैतं महाभागमेत यामोऽधुना वयम् ॥ २४५
तच्छ्रुत्वा बहुसाधारो नामश्रवणमात्रतः । प्रागनुच्छिन्नसंदेहो राजपुत्रः स तत्सखीम् ॥ २४६
एकां सुन्दरसेनोऽत्र पप्रच्छाख्यायतां शुभे । कस्यात्मजा कीदृशीयं सखी वः कौतुकं हि मे ॥ २४७
इति तं पृष्टवन्तं सा मुनिकन्यैवमभ्यधात् । राज्ञो मन्दारदेवस्य हंसद्वीपपतेरियम् ॥ २४८
सुता मन्दारवत्याख्या कुमारी राजसूनवे । दातुं सुन्दरसेनाय नीयमानालकां पुरीम् ॥ २४९
भग्नप्रवहणाम्भोधावुत्क्षिप्ता वीचिभिस्तटे । आनीतेह किल प्राप्य मतङ्गमुनिनाश्रमम् ॥ २५०
एवमुक्ते तया हर्षविषादाकुलितं सखा । नृत्यन्सुन्दरसेनं तं दृढबुद्धिरुवाच सः ॥ २५१
दिष्ट्याद्य मन्दारवती देवीलाभेन वर्धसे । सैवैषा हि न यास्माकं मनोरथपथेऽप्यभूत् ॥ २५२

इत्युक्त्वा सा सखी तस्याः पृच्छन्तीर्मुनिकन्यकाः । अबोधयत्तं वृत्तान्तं ताः सखीं तामनन्दयन् ॥ २५३
ततः सुन्दरसेनस्य हार्यपुत्रेत्युदीर्य सा । पपात मन्दारवती रुदती तस्य पादयोः ॥ २५४
सोऽप्याश्लिष्य रुरोदैतां रुदतोस्तत्र चैतयोः । अरुदन्करुणार्द्राणि काष्ठान्यपि तृणान्यपि ॥ २५५
गत्वाथ मुनिकन्याभिस्ताभिः स श्रावितो द्रुतम् । आजगाम मुनिस्तत्र मतङ्गो यमुनान्वितः ॥ २५६
सोऽत्र सुन्दरसेनं तमाश्वास्य चरणानतम् । मन्दारवत्या सहितं निनाय निजमाश्रमम् ॥ २५७
तदहश्च तदातिथ्यविश्रान्तं जातनिर्वृतिम् । अन्येद्युः स तमाह स्म राजपुत्रं महामुनिः ॥ २५८
श्वेतद्वीपे मया पुत्र गन्तव्यं कार्यतोऽधुना । तन्मन्दारवतीयुक्तो गच्छ त्वमलकां प्रति ॥ २५९
तत्र राजसुतामेतां परिणीयानुपालयेः । सुतेति प्रतिपन्ना हि तुभ्यमेषा मयार्पिता ॥ २६०
सुचिरं चानया सार्धं पृथ्वीराज्यं करिष्यसि । सचिवांश्च निजान्सर्वानचिरात्तानवाप्स्यसि ॥ २६१
इत्युक्त्वा सवधूकं तमामन्त्र्य नभसा ययौ । मुनिर्यमुनया साकं दुहित्रा स स्वतुल्यया ॥ २६२
ततः सुन्दरसेनोऽपि स मन्दारवतीयुतः । दृढबुद्धिसहायश्च प्रोच्चचालाश्रमात्ततः ॥ २६३
प्राप्य वारिनिधेस्तीरं ददर्श निकटागतम् । केनाप्यधिष्ठितं यूना वणिजा वहनं लघु ॥ २६४
ययाचे चाश्रयं तस्मिन्नध्वसौकर्यलोभतः । दृढबुद्धिमुखेनारात्तत्पतिं तं वणिक्सुतम् ॥ २६५
सोऽपि तीरे तथेत्यस्य वहनं तदढौकयत् । तां मन्दारवतीं पश्यन्कुवणिक्स्मरमोहितः ॥ २६६
ततः सुन्दरसेनोऽत्र तामारोप्याग्रतः प्रियाम् । तटस्थितः सन्नारोढुमात्मना यावदिच्छति ॥ २६७
तावत्स कर्णधारस्य संज्ञां कृत्वा वणिग्द्रुतम् । वहनं चालयामास परस्त्रीलोलुभः शठः ॥ २६८
क्रन्दद्राजसुतं तच्च क्षणेनादृष्टिगोचरम् । अभूत्सुन्दरसेनस्य वहनं तस्य पश्यतः ॥ २६९
हा धिक्चौरैः प्रमुषितोऽस्मीत्याक्रन्दन्पपात सः । विलपंश्च चिरं सोऽत्र जगदे दृढबुद्धिना ॥ २७०
उत्तिष्ठ मुञ्च वैक्लव्यं नायं वीरोचितः क्रमः । एहि चौरं तमन्वेष्टुं गच्छावोऽनेन वर्त्मना ॥ २७१
आपत्काले च कष्टेऽपि नोत्साहस्त्यज्यते बुधैः । ························· ॥ २७२
इति प्रबोधितस्तेन कथंचिद्दृढबुद्धिना । तीरात्सुन्दरसेनोऽब्धेरुत्थाय प्रस्थितोऽभवत् ॥ २७३
गच्छन्क्रमाच्च हा देवि हा मन्दारवतीति सः । विलपन्साश्रुरनिशं संतप्तो विरहाग्निना ॥ २७४
निराहारः सबाष्पैकदृढबुद्धिपरिच्छदः । विवेश सोन्माद इव व्यामोहेन महद्वनम् ॥ २७५
न चात्र गणयामास सख्युस्तस्य वचो हितम् । तत्र तत्राभ्यधावत्तु केवलं दयितामयः ॥ २७६
उन्निद्रपुष्पाभरणा वणिक्चौरात्पलायिता । आगता हि प्रिया सा स्यादिति फुल्लासु वल्लिषु ॥ २७७
भयात्सरोनिमग्ना किं वदनं पक्ष्मलेक्षणम् । उन्नमय्येक्षते सा मामिति चाब्जेषु सालिषु ॥ २७८
किं व्याहरति सैषात्र मुग्धा मां मञ्जुभाषिणी । इति पत्रलताच्छन्नकोकिलाकूजितेष्वपि ॥ २७९
एवं प्रतिपदं मुह्यन्यथार्केण तथेन्दुना । ताप्यमानः स बभ्राम तुल्यनक्तंदिनश्चिरम् ॥ २८०
कथंचिन्निर्गतस्तस्माद्वनात्सदृढबुद्धिकः । राजपुत्रोऽथ स प्राप मार्गभ्रष्टो महाटवीम् ॥ २८१
उदग्रखड्गविषमां सिंहाधिष्ठानभीषणाम् । सेनामिव सुदुर्दर्शां दस्युसेनानिषेविताम् ॥ २८२
तां गाहमानः सुलभानेकापायां निराश्रयाम् । दुर्दशामिव स प्रापि पुलिन्दैरुद्यतायुधैः ॥ २८३
भगवत्युपहारार्थं चिन्वद्भिः पुरुषान्पशून् । विन्ध्यकेतोः पुलिन्देन्द्रस्याज्ञया तन्निवासिनः ॥ २८४
विदेशो विरहक्लेशो नीचात्परिभवोऽपि सः । अनाहारोऽध्वसंताप इति पञ्चाग्निविप्लवे ॥ २८५
असृजद्दस्युसंपातं षष्ठमग्निमहो विधिः । राजपुत्रस्य तस्यात्र धैर्यस्यान्तमवेक्षितुम् ॥ २८६
स चात्मना द्वितीयस्तान्ग्रहणार्थं प्रधावितान् । पृषत्कवर्षिणो दस्यून्बहूञ्छुरिकयावधीत् ॥ २८७
तद्बुद्ध्वा प्रैष्यत बलं राज्ञान्यद्विन्ध्यकेतुना । ततोऽपि सुबहूंश्चौरान्युद्धज्ञो निजघान सः ॥ २८८
ततः स सवयस्योऽपि व्रणितक्लान्तमूर्च्छितः । बद्ध्वा कारागृहे नीत्वा शबरैस्तैर्निचिक्षिपे ॥ २८९
तत्र कीटोत्कराकीर्णे जालकारालयाविले । सूच्यमानाहिसंचारे निर्मोकैर्गर्तलम्बिभिः ॥ २९०
गुल्फदघ्नोच्छलद्धूलावाखुखातबिलोल्बणे । अन्तःक्षिप्तस्थितानेकभीतापन्नजनाकुले ॥ २९१

निरयाणामिवोत्पत्तिधाम्नि द्वौ तावपश्यताम् । मन्त्रिणौ तद्वदेवादौ बद्धानीतस्थिताबुभौ ॥ २९२
यौ तौ प्रविशतां तद्वदटवीं तीर्णवारिधी । तमन्वेष्टुं प्रभुं भीमभुजविक्रमशक्तिकौ ॥ २९३
तौ रुदन्तौ परिज्ञाय पेततुस्तस्य पादयोः । सोऽपि तौ प्रत्यभिज्ञातौ कण्ठे बाष्पाकुलोऽग्रहीत् ॥ २९४
ततः शतगुणीभूतदुःखास्तेऽन्योन्यदर्शनात् । आश्वासयद्भिरपरैरूचिरे बन्धनस्थितैः ॥ २९५
कृतं दुःखेन किं शक्यं पूर्वकर्मातिवर्तितुम् । किं न पश्यथ सर्वेषां सह मृत्युमुपस्थितम् ॥ २९६
आगामिन्यां चतुर्दश्यां पुलिन्दक्ष्माभृतामुना । देव्याः पशूपहारार्थं वयमेते हि संभृताः ॥ २९७
तत्किं शुचा गतिश्चित्रा जन्तुषु क्रीडतो विधेः । तदभद्रं यथा तद्वद्दयाद्भद्रं स एव वः ॥ २९८
इत्युक्ता बन्धनस्थैस्ते बद्धास्तत्रावतस्थिरे । कष्टं निरनुरोधत्वमापदां सुमहत्स्वपि ॥ २९९
प्राप्तायां च चतुर्दश्यामत्र राजाज्ञया ततः । ते सर्वेऽप्युपहारार्थमनीयन्ताम्बिकागृहम् ॥ ३००
दीपज्वालाचलज्जिह्वं घण्टालीदन्तमालया । व्यासक्तवीरशिरसा घोरं मृत्युमुखं यथा ॥ ३०१
तत्र सुन्दरसेनस्तां दृष्ट्वा देवीं प्रणम्य सः । भक्तिप्रह्वेन मनसा स्तुवन्नेवं व्यजिज्ञपत् ॥ ३०२
दारितोद्दामदैत्येन त्रिशिखेनास्रवर्षिणा । शमितासुरसंतापे प्रणताभयदायिनि ॥ ३०३
निर्वापय प्रसन्नेन लोचनेनामृतश्च्युता । दृष्ट्वा मां दुःखदावाग्निदग्धं देवि नमोऽस्तु ते ॥ ३०४
इति राजसुते तस्मिन्व्याहरत्येव तत्र सः । आगात्पूजयितुं देवीं विन्ध्यकेतुः पुलिन्दराट् ॥ ३०५
तं दृष्ट्वैव परिज्ञाय भिल्लराजं त्रपानतः । स तान्सुन्दरसेनः स्वान्वयस्यान्स्वैरमब्रवीत् ॥ ३०६
अहो सैष पुलिन्देन्द्रो विन्ध्यकेतुरुपैति यः । तातस्य पार्श्वे सेवार्थं भुङ्क्ते चैतां महाटवीम् ॥ ३०७
तद्यदस्तु न वक्तव्यमस्माभिरिह किंचन । श्रेयान्हि मानिनो मृत्युर्नेदृगात्मप्रकाशनम् ॥ ३०८
इति मन्त्रयते यावत्सखिभिः स नृपात्मजः । तावत्स विन्ध्यकेतुः स्वान्राजा भृत्यानभाषत ॥ ३०९
अरे प्रदर्शयत तं प्रवीरं मे महापशुम् । हताः सुबहवो योधा गृह्यमाणेन येन मे ॥ ३१०
तच्छ्रुत्वैव स शुष्कासृग्दिग्धो व्रणितधूसरः । तस्य सुन्दरसेनोऽग्रे तद्भृत्यैः प्रापितोऽभवत् ॥ ३११
स तं दृष्ट्वा पुलिन्देन्द्रः परिज्ञाय मनागिव । ब्रूहि कस्त्वं कुतश्चेति पप्रच्छ परिशङ्कितः ॥ ३१२
योऽहं यतः कुरुध्वं यत्प्रस्तुतं किमनेन वः । इति सुन्दरसेनोऽपि भिल्लेन्द्रं प्रत्युवाच तम् ॥ ३१३
ततस्तं सम्यगालापात्प्रत्यभिज्ञाय संभ्रमात् । हा हेति जल्पन्नवनौ विन्ध्यकेतुः पपात सः ॥ ३१४
हा महाराज पापेन महासेन मयाधुना । पश्य युष्मत्प्रसादानामुचितं कीदृशं कृतम् ॥ ३१५
यत्ते प्राणसमः सूनुर्नीतोऽवस्थामिहेदृशीम् । देवः सुन्दरसेनोऽयं कुतोऽप्येवमिहागतः ॥ ३१६
इत्याद्याश्लिष्य तं राजपुत्रं स व्यलपत्तथा । विन्ध्यकेतुर्यथा सर्वेऽप्यत्राभूवन्नुदश्रवः ॥ ३१७
एतन्न बहु यत्पूर्वं प्रत्यभिज्ञातवानसि । राजपुत्रमिमं पश्चाद्वृत्तेऽर्थे किं व्यथास्यथाः ॥ ३१८
तत्को विषादो हर्षेऽस्मिन्नित्याश्वास्यत तैश्च सः । हृष्टैः सुन्दरसेनस्य वयस्यैर्भिल्लभूपतिः ॥ ३१९
ततश्च पादपतितः स राजा सममानयत् । प्रीत्या सुन्दरसेनं तं मोचिताखिलपुंपशुम् ॥ ३२०
कृतार्चनश्च नीत्वैनं स्वपल्लीं सवयस्यकम् । क्रमादुपाचरत्पथ्यैराबद्धव्रणपट्टिकम् ॥ ३२१
पप्रच्छ चेहागमनं राजपुत्र कथं नु ते । महत्कौतुकमेतद्धि मम तत्कथ्यतामिति ॥ ३२२
ततः सुन्दरसेनेन स्ववृत्तान्तेऽनुवर्णिते । चित्रीयमाणचेतास्तं शबरेन्द्रो जगाद सः ॥ ३२३
क्व मन्दारवतीहेतोर्यात्रा पातः क्व चाम्बुधौ । क्व मतङ्गाश्रमप्राप्तिः क्व तया तत्र संगमः ॥ ३२४
क्वापहारश्च वणिजा तस्या विश्वासतः पुनः । क्व चाटवीप्रवेशस्ते क्वोपहाराय बन्धनम् ॥ ३२५
क्व चास्माभिः प्रत्यभिज्ञा मृत्योरास्याच्च निर्गमः । विचित्रविधये तस्मै सर्वथा विधये नमः ॥ ३२६
तन्न कार्या त्वया चिन्ता कान्तां प्रति यतो विधिः । यथेदमकरोत्कर्ता तथैतदपि ते द्रुतम् ॥ ३२७
इति वादिनमेवैतं पुलिन्देन्द्रं द्रुतागतः । निजसेनापतिः प्रीतः प्रविश्यैवं व्यजिज्ञपत् ॥ ३२८
देवादाय धनं भूरि स्त्रीरत्नं चातिरूपवत् । प्रविष्टः सानुगजनः कोऽप्येतामटवीं वणिक् ॥ ३२९
स च बुद्धा मया गत्वा सबलेन सहानुगः । वष्टभ्य सधनस्त्रीक इहानीतो बहिः स्थितः ॥ ३३०

तच्छ्रुत्वा किं वणिक्स स्यात्सा मन्दारवती च किम्। इति सुन्दरसेनोऽन्तर्विन्ध्यकेतुश्च दध्यतुः ॥ ३३१
प्रवेश्यतामिहैवासौ स्त्री चेत्युक्तवतोस्तयोः। प्रावेशयन्नृपस्तं वणिजं तां च योषितम् ॥ ३३२
ततो दृष्ट्वैव तौ सोऽत्र दृढबुद्धिरभाषत। सैव मन्दारवत्येषा देवी सैष च दुर्वणिक् ॥ ३३३
हा देवि घर्मदग्धेव लतावस्थामिमां कथम्। गतास्यपुष्पाभरणा विशुष्काधरपल्लवा ॥ ३३४
इति क्रन्दति तस्मिंश्च दृढबुद्धौ प्रधाव्य सः। प्रियां सुन्दरसेनस्तां कण्ठे सरभसोऽग्रहीत् ॥ ३३५
ततो विरहमालिन्यमश्रुधाराजलेन तौ। क्षालयन्ताविवान्योन्यं प्रियौ रुरुदतुश्चिरम् ॥ ३३६
अथोभौ तौ समाश्वास्य विन्ध्यकेतुरुवाच तम्। वणिजं किं त्वया दारा विश्वस्तस्य हृता इति ॥ ३३७
ततो जगाद स वणिग्भयगद्गदया गिरा। वृथा मयेदं नाशाय कृतमेषा तु रक्षिता ॥ ३३८
निजेनाधर्षणीयेन महसैव मनस्विनी। वह्निज्वालेव न स्प्रष्टुमप्यसौ शकिता मया ॥ ३३९
किं च नीत्वा निजं देशं शान्तमन्युः प्रसादिता। परिणेतुमभिप्रेता पापस्याभूदियं मम ॥ ३४०
इत्युक्तवन्तमादिष्टवधं तेनात्र भूभुजा। सोऽथ सुन्दरसेनस्तं ररक्ष वणिजं वधात् ॥ ३४१
प्राणाधिकं तु तत्तस्य धनोद्रेकमहारयत्। दिने दिने म्रियन्ते हि गतार्था न गतासवः ॥ ३४२
एवं सुन्दरसेनेन तस्मिन्वणिजि मोचिते। प्राणलाभेन संतुष्टे यथेच्छं कृपणे गते ॥ ३४३
स विन्ध्यकेतुरादाय तां मन्दारवतीं नृपः। युक्तां सुन्दरसेनेन स्वदेवीमन्दिरं ययौ ॥ ३४४
तत्रादिश्य स देवीं तां स्नानवस्त्रानुलेपनैः। संमान्य मन्दारवतीं तद्वत्स्नातमलंकृतम् ॥ ३४५
स्वयं सुन्दरसेनं तमुपवेश्य वरासने। प्राभृतैरर्चयामास मुक्तामृगमदादिभिः ॥ ३४६
चक्रे तयोश्च दंपत्योः संगमादृशमुत्सवम्। स राजा मुदिताशेषप्रनृत्तशबराङ्गनम् ॥ ३४७
अथ सुन्दरसेनस्तमन्येद्युर्नृपमभ्यधात्। रूढं व्रणैर्मे सिद्धं च यथेष्टं तदितोऽधुना ॥ ३४८
यामो वयं स्वनगरीं ताताय प्रेषयाशु तत्। लेखहारं सवृत्तान्तं मदागमनशंसिनम् ॥ ३४९
इत्युक्तो राजपुत्रेण स तेन शबरेश्वरः। तथैव दत्तसंदेशं लेखहारं विसृष्टवान् ॥ ३५०
स लेखहारको यावत्तां प्राप्नोत्यलकां पुरीम्। तावत्तत्र महासेनः सदेवीकः स भूपतिः ॥ ३५१
तस्य सुन्दरसेनस्य प्रवृत्त्यज्ञानदुःखितः। अग्निप्रवेशायोद्युक्तः शंकरायतनाग्रतः ॥ ३५२
अभूत्किलानुशोचद्भिः पौरैः परिवृतोऽखिलैः। ................................ ॥ ३५३
तं दृष्ट्वा स महासेनं नृपतिं लेखहारकः। उपाजगाम शबरो धावन्नावेदितात्मकः ॥ ३५४
धूलीलिप्तो धनुष्पाणिर्लतात्वग्बद्धमूर्धजः। श्यामः कटीनिवसनं बिल्वपत्रमयं दधत् ॥ ३५५
दिष्ट्याद्य वर्धसे देव यन्मन्दारवतीयुतः। पुत्रः सुन्दरसेनस्ते निस्तीर्याम्भोधिमागतः ॥ ३५६
अस्मत्प्रभोर्विन्ध्यकेतोः स हि प्राप्यान्तिकं प्रभो। तेनैव साकमागन्तुं प्रवृत्तः प्रेष्य मां पुरः ॥ ३५७
इत्युदीर्य च तस्यात्र राज्ञः पादान्तिके न्यधात्। लेखं स भिल्लभूपाललेखहारो हरञ्शुचम् ॥ ३५८
ततो हृष्टैर्जनैः सर्वैः कृते कलकलारवे। लेखे च वाचिते ज्ञाते यथावृत्ते महाद्भुते ॥ ३५९
सत्कृत्य लेखहारं स त्यक्तशोकः कृतोत्सवः। राजधानीं महासेननृपः सर्वैः सहाविशत् ॥ ३६०
उत्सुकश्च ततोऽन्येद्युः सूनोस्तस्यागमिष्यतः। अग्रतो भवितुं प्रायाद्धंसद्वीपेश्वरान्वितः ॥ ३६१
चचाल चतुरङ्गं च बलं तस्यामितं तथा। असह्यमर्दभीतेव चकम्पे वसुधा यथा ॥ ३६२
तावत्सुन्दरसेनोऽपि स्वगृहाभिमुखं ततः। प्रतस्थे भिल्लपल्लीतः स मन्दारवतीसखः ॥ ३६३
बन्धनागारलब्धेन तेन विक्रमशक्तिना। सख्या भीमभुजेनापि युक्तः सदृढबुद्धिकः ॥ ३६४
वातरंहोहयारूढः सहितो विन्ध्यकेतुना। पुलिन्दसैन्यैः पृथिवीं तन्मयीमिव दर्शयन् ॥ ३६५
गच्छन्कतिपयैरेव दिनैर्मार्गे ददर्श तम्। पितरं संमुखायातं सपरिच्छदबान्धवम् ॥ ३६६
ततोऽवरुह्य तुरगात्सानन्दैर्वीक्षितो जनैः। उपेत्य पादयोस्तस्य सवयस्योऽपतत्पितुः ॥ ३६७
सोऽपि तं पुत्रमालोक्य राकाचन्द्रमिवोदधिः। आत्मन्येव न माति स्म हर्षोल्लासतरङ्गितः ॥ ३६८
दृष्ट्वा च मन्दारवतीं तां पादावनतां स्नुषाम्। आत्मानं कृतिनं मेने कुलं चैव ननन्द च ॥ ३६९

तांश्च त्रीन्दृढबुद्ध्यादीन्प्रणतान्पुत्रमन्त्रिणः । ततोऽधिकं सोऽभ्यनन्दद्विन्ध्यकेतुं च तं नृपः ॥ ३७०

अथ सुन्दरसेनोऽपि पित्रा तेन निवेदितम् । नत्वा मन्दारदेवं तं श्वशुरं मुमुदे परम् ॥ ३७१

तौ च पूर्वागतौ चण्डप्रभव्याघ्रपराक्रमौ । दृष्ट्वाङ्किलमौ सचिवौ पूर्णान्मेने मनोरथान् ॥ ३७२

तत्क्षणं चात्र सोऽप्यागान्महेन्द्रादित्यभूपतिः । शशाङ्कपुरतः प्रीत्या श्रुतवृत्तान्तहर्षुलः ॥ ३७३

अथ तैः समं समग्रैः सुन्दरसेनः स राजसुतः ।
नडकूबर इव रम्भां मन्दारवतीं वहन्दयिताम् ॥ ३७४

अलकापुरीमयासीन्निजवसतिं वाहनोत्तमारूढः ।
सकलसमृद्धिनिकेतनभूमिं भूयिष्ठपुण्यजनाम् ॥ ३७५

तस्यां च वातायनसंश्रिताभिर्नेत्रोत्पलैः पौरजनाङ्गनाभिः ।
आकीर्यमाणः प्रियया समेतः स राजधानीं स्वपितुर्विवेश ॥ ३७६

आनन्दबाष्पाकुललोचनायाः प्रणम्य मातुश्चरणौ च तत्र ।
स राजपुत्रोऽखिलबन्धुभृत्यबद्धोत्सवं तं दिवसं निनाय ॥ ३७७

अथापरेद्युर्गणकोपदिष्टे लग्ने स तस्याश्चिरकाङ्क्षितं तम् ।
जग्राह पाणिं जनकार्पिताया मन्दारवत्या नरनाथसूनुः ॥ ३७८

ददौ च तस्मै श्वशुरो महार्घाण्यपुत्रको मन्दरदेवभूपः ।
रत्नानि भूयांसि निजं च राज्यं प्रीतः स्वदेहोत्तरकालभावि ॥ ३७९

चकार चेच्छाविभवानुरूपं पिता महासेननृपश्च तस्य ।
अदुग्धगुं मोचितबन्धनस्थं महोत्सवं वृष्टहिरण्यवस्त्रम् ॥ ३८०

दृष्ट्वाथ मन्दारवतीसमागमात्कृतार्थतां सुन्दरसेनमागतम् ।
प्रमोदमासेव्य च तद्विवाहजं प्रगीतनृत्यन्निखिलाङ्गनागणम् ॥ ३८१

ययौ महासेनमहीभृतार्चितः स्वमण्डलं मन्दरदेवभूपतिः ।
शशाङ्कपूर्वं च पुरं स पार्थिवः स विन्ध्यकेतुश्च महाटवीपतिः ॥ ३८२

ततोऽत्र यातेषु दिनेषु सद्गुणं प्रजाप्रियं सुन्दरसेनमात्मजम् ।
अवेक्ष्य राज्ये च निवेश्य तं निजे वनं महासेननृपो जगाम सः ॥ ३८३

संप्राप्य राज्यमथ सुन्दरसेनदेवः सोऽपि स्वबाहुबलनिर्जितवैरिवर्गः ।
तैर्मन्त्रिभिः सह महीमखिलां शशास मन्दारवत्यधिगमप्रसरत्प्रमोदः ॥ ३८४

इति तत्र सरस्तीरे व्याख्याय कथां मृगाङ्कदत्ताय ।
स व्याघ्रसेननामा सचिवो निजगाद तं भूयः ॥ ३८५

एतत्स कण्वो मुनिराश्रमान्तः कथाद्भुतं वर्णितवान्प्रभो नः ।
कथावसाने च दयालुरस्मानाश्वासयन्नेवमसाववोचत् ॥ ३८६

तत्पुत्रकाः सुविषमाणि दुरुत्तराणि कृच्छ्राणि धीरहृदयाः किल ये सहन्ते ।
ते प्राप्नुवन्ति परमित्थममीप्सितानि नान्ये तु ये गलितसत्त्वविलुप्तचेष्टाः ॥ ३८७

तस्मादिमां त्यजत विक्लवतां प्रयात युष्माकमप्यधिपतिः स मृगाङ्कदत्तः ।
संप्राप्तसर्वसचिवः सुचिरं पृथिव्यां राज्यं करिष्यति समेत्य शशाङ्कवत्या ॥ ३८८

इति तेन वयं महर्षिणोक्ता धृतिमालम्ब्य निशां च तत्र नीत्वा ।
चलितास्तत आश्रमादवाप्ताः क्रमशः काननमेतदध्वखिन्नाः ॥ ३८९

इह चातितृषा क्षुधा च तप्ताः फलहेतोर्गणनाथवृक्षमेतम् ।
अधिरुह्य फलत्वमेव यातास्तपसा देव तवाद्य मोचिताः स्मः ॥ ३९०

इत्यस्माकं नागशापोपनीतो वृत्तान्तोऽयं त्वद्वियोगे चतुर्णाम्।
क्षीणे शापे चाधुनास्माभिरेतैर्युक्तः सर्वैः कार्यसिद्ध्यै प्रयाहि॥ २११

एतन्मृगाङ्कदत्तो निजसचिवाद्व्याघ्रसेनतः श्रुत्वा।
लाभे शशाङ्कवत्या लब्धधृतिस्तां निशामनयत्॥ २१२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुस्त्रिंशस्तरङ्गः।

---

पञ्चत्रिंशस्तरङ्गः।

ततः प्रातः समुत्थाय तस्माद्वरसरस्तटात्। मृगाङ्कदत्तः सचिवैरशेषैर्मिलितैः सह॥ १
युक्तः श्रुतधिना तेन प्रायादुज्जयिनीं प्रति। स शशाङ्कवतीं प्रेप्सुर्नत्वा तं विघ्नजिद्गुमम्॥ २
ततस्तास्ता वनभुवो भूयोऽनेकशतह्रदाः। तमालश्यामलाभोगा घनागमनिशा इव॥ ३
अन्याश्च विचरद्भीमभत्तेभाभग्नकीचकाः। विपरीतार्जुनाकारा विराटनगरीनिभाः॥ ४
गिरीन्द्रकंदराश्चैव शुद्धाः पुष्पवतीरपि। क्रूरसत्त्वाश्रिताः शान्तैर्मुनिभिः संश्रिता अपि॥ ५
अतिक्रम्य क्रमाद्वीरः स सर्वसचिवान्वितः। प्रापदुज्जयिनीपुर्याः संनिकर्षं नृपात्मजः॥ ६
ततो गन्धवतीं प्राप्य नदीं स्नानहृतक्लमः। तीर्त्वा च तां महाकालश्मशानं प्राप सानुगः॥ ७
ददर्श तत्र नानास्थिकपालशकलाकुलम्। धृतमानुषकङ्कालकरालं वीरसेवितम्॥ ८
बहुभूतगणाकीर्णमाक्रीडड्डाकिनीप्रियम्। महाभैरवमासन्नचिताधूममलीमसम्॥ ९
तदतिक्रम्य चापश्यत्स तां युगपुरातनीम्। पुरीमुज्जयिनीं गुप्तां कर्मसेनेन भूभुजा॥ १०
अधिष्ठितप्रतोलीकां रक्षिभिर्विविधायुधैः। प्रवीरकुलजानेकराजपुत्राभिरक्षितैः॥ ११
गिरीन्द्रशिखराकारैः प्राकारैः परिवेष्टिताम्। दुष्प्रवेशामविज्ञातैर्हस्त्यश्वरथसंकुलाम्॥ १२
विलोक्य तादृशीं तां च सर्वतोऽप्यतिदुर्गमाम्। मृगाङ्कदत्तो विमनाः सचिवान्स्वानुवाच सः॥ १३
कष्टं क्लेशशतैरेवमभव्यस्यागतस्य मे। प्रवेश एव नास्तीह प्रियाप्राप्तौ तु का गतिः॥ १४
तच्छ्रुत्वा तेऽप्यवोचंस्तं किमेषा प्रतिभाति ते। अस्माकमियतां देव बलसाध्या महापुरी॥ १५
उपायोऽत्र विचेतव्यः स चावश्यं भविष्यति। दैवतैर्बहुशो ह्येतदादिष्टं विस्मृतं कथम्॥ १६
इत्युक्तः सचिवैस्तस्या नगर्या बहिरेव सः। मृगाङ्कदत्तो दिवसान्कांश्चित्तस्थौ परिभ्रमन्॥ १७
प्राक्सिद्धमथ वेतालं दध्यौ विक्रमकेसरी। तन्मन्त्री वासभवनात्तत्प्रियाकर्षणेच्छया॥ १८
सोऽपि कृष्णच्छविः प्रांशुरुष्ट्रग्रीवो गजाननः। महिषाङ्घ्रिरुलूकाक्षो वेतालः खरकर्णकः॥ १९
एत्य तत्र प्रवेष्टुं यन्न शशाक जगाम तत्। शंभोर्वरात्तां नगरीं नाक्रामन्ति तथाविधाः॥ २०
अथामात्यैर्वृतं खिन्नं प्रवेशोन्मुखचेतसम्। मृगाङ्कदत्तं श्रुतधिर्नीतिज्ञः सोऽब्रवीद्द्विजः॥ २१
किं देव नीतितत्त्वज्ञोऽप्यजानन्निव मुह्यसि। स्वपरान्तरमप्रेक्ष्य मतः कस्येह विक्रमः॥ २२
एकैकस्मिन्नगर्यां हि द्वारेष्वस्यां चतुर्ष्वपि। कुञ्जराणां सहस्रे द्वे वाजिनां पञ्चविंशतिः॥ २३
रथानां दशलक्षं च पदातीनां दिवानिशम्। संनद्धमास्ते रक्षार्थं वीराधिष्ठानदुर्जयम्॥ २४
तन्नः कतिपयानां यत्सहसात्र प्रवेशनम्। परं पतङ्गवृत्तिः सा नार्थसिद्धिस्तु काचन॥ २५
सैन्येनापि च नाल्पेन युक्ता क्षेप्तुमियं पुरी। हस्तिपादातयुद्धं तद्विरोधोऽधिबलेन यत्॥ २६
तन्मायाबटुना तेन पुलिन्दपृथिवीभृता। सुहृदा नर्मदाग्राहभयात्त्रातेन दारुणात्॥ २७
तन्मित्रेण च मातङ्गराजेनातिबलीयसा। तेन दुर्गपिशाचेन तत्संबन्धानुरागिणा॥ २८
किरातराजेन यथा बालसब्रह्मचारिणा। शक्तिरक्षितसंज्ञेन तेन विक्रमशालिना॥ २९
समेत्य सबलैः सर्वैः सैन्यपूरितदिङ्मुखः। सम्यक्सहायसंपन्नः साधयैतत्समीहितम्॥ ३०
किरातराजश्च स ते दूतागमनसंविदम्। प्रतीक्षमाणः स्थित इत्येतत्ते विस्मृतं कथम्॥ ३१
मायाबटुश्च मातङ्गराजादेशागतो ध्रुवम्। सज्जस्तेन सहैवास्ते संवित्तस्य कृता ह्यसौ॥ ३२

ततस्य मातङ्गपतेर्विन्ध्यदक्षिणपार्श्वगम् । निवासकोट्टं गच्छामः करभग्रीवनामकम् ॥ ३३
तत्रैवाहूयते राजा कैरातः शक्तिरक्षितः । ततः संभूय सर्वैस्तैरुद्योगः सिद्धये शुभः ॥ ३४
श्रुत्वैतच्छ्रुतधेर्वाक्यमर्थवत्प्राज्ञसंमतम् । मृगाङ्कदत्तः सामात्यस्तथेति श्रद्दधेतराम् ॥ ३५
अन्येद्युश्च नमस्कृत्य गुणिबन्धुं धृतोदयम् । प्रदर्शिताशं विश्वस्य नभोनित्याध्वगं रविम् ॥ ३६
उच्चचाल ततो विन्ध्यपार्श्वं तं दक्षिणं प्रति । तस्य दुर्गपिशाचस्य मातङ्गेन्द्रस्य केतनम् ॥ ३७
तन्मन्त्रिणश्च स व्याघ्रसेनो भीमपराक्रमः । गुणाकरो मेघबलः समं विमलबुद्धिना ॥ ३८
स विचित्रकथः स्थूलबाहुर्विक्रमकेसरी । प्रचण्डशक्तिः श्रुतधिर्दृढमुष्टिस्तमन्वगुः ॥ ३९
तैः समं सोऽतिविस्तीर्णा निजचेष्टा इवाटवीः । गहनांश्च वनोद्देशान्स्वाभिप्रायानिव क्रमात् ॥ ४०
अतिक्रामन्सरस्तीरतरुमूलनिशाश्रयः । प्राप्यारुरोह विन्ध्याद्रिमात्मचित्तमिवोन्नतम् ॥ ४१
तस्याप्राग्दक्षिणं पार्श्वमवरुह्य च दूरतः । दन्तिदन्ताजिनचिता भिल्लपल्लीर्विलोकयन् ॥ ४२
कुत्र स्यादास्पदं तस्य मातङ्गाधिपतेरिह । कुतो ज्ञास्याम इत्यन्तर्दध्यौ राजसुतोऽत्र सः ॥ ४३
तावच्च संमुखायातमेकं मुनिकुमारकम् । स ददर्श सहामात्यैः पप्रच्छ च कृतानतिः ॥ ४४
अपि जानासि कुत्रेह गृहं मातङ्गभूपतेः । सौम्य दुर्गपिशाचस्य द्रष्टव्यो वर्तते हि नः ॥ ४५
तच्छ्रुत्वा स जगादैवं साधुस्तापसपुत्रकः । इतः पञ्चवटीत्यस्ति प्रदेशः क्रोशमात्रके ॥ ४६
नातिदूरे च तस्याभूदगस्त्यस्याश्रमो मुनेः । नाकतः पातितोत्सिक्तनहुषेन्द्रस्य हेलया ॥ ४७
यत्र पित्राज्ञयोपात्तवनवासः सलक्ष्मणः । सीतयानुगतो रामो मुनिमन्वास्त तं चिरम् ॥ ४८
रक्षोविनाशपिशुनौ चन्द्रार्काविव यत्र सः । आस्कन्दितुं प्रवृत्तोऽभूत्कबन्धो रामलक्ष्मणौ ॥ ४९
यत्र योजनबाहोश्च रामो भुजमपातयत् । अगस्त्यप्रार्थनायातनहुषाजगरोपमम् ॥ ५०
यत्र मेघागमेऽद्यापि श्रुत्वा जलधरध्वनिम् । स्मरन्तो रामकोदण्डरवस्याम्बररोधिनः ॥ ५१
वीक्ष्य विष्वग्दिशः शून्या गृह्णन्त्युद्बाष्पलोचनाः । जानकीवर्धिताः शष्पकवलं न जरन्मृगाः ॥ ५२
हतशेषानिव त्रातुं हरिणान्यत्र राघवम् । जहार हेमहरिणो वैदेहीविरहप्रदः ॥ ५३
कावेरीवारिबहुले यत्रानेकमहाह्रदे । पीत्वोद्गीर्णमिवागस्त्येनाब्धिपाथः पदे पदे ॥ ५४
तस्याश्रमस्य नात्यन्तदूरे विन्ध्यस्य सानुनि । करभग्रीवनामास्ति कोट्टः कुटिलदुर्गमः ॥ ५५
तत्र प्रतिवसत्यन्तर्भूपालानिर्जितो बली । स मातङ्गपतिर्दुर्गपिशाचश्चण्डविक्रमः ॥ ५६
धनुर्धराणां लक्षस्य तेषामधिपतिश्च सः । योधपञ्चशती येषामेकैकमनुधावति ॥ ५७
तैर्दस्युभिः स मुष्णाति सार्थान्दलयति द्विषः । भुङ्क्ते महाटवीं चैतां तांस्तानगणयन्नृपान् ॥ ५८
एतन्मुनिसुताच्छ्रुत्वा तमामन्त्र्य स सानुगः । मृगाङ्कदत्तस्तेनैव मार्गेण त्वरितं ययौ ॥ ५९
प्रापच्च तस्य करभग्रीवस्य निकटं क्रमात् । मातङ्गराजकोट्टस्य भिल्लपल्लीसमाकुलम् ॥ ६०
ददर्शादूरतश्चात्र शबरौघानितस्ततः । बर्हिबर्हेभदशनव्याघ्रचर्ममृगामिषान् ॥ ६१
तिर्यञ्च इव जीवन्ति पश्यतारण्यवृत्तयः । चित्रं तदप्यमी दुर्गपिशाचं ब्रुवते प्रभुम् ॥ ६२
नास्त्येवाराजकं किंचिद्बत कोऽपि प्रजास्वहो । राजशब्दः सुरैः सृष्टो मात्स्यन्यायभयादयम् ॥ ६३
एवं मृगाङ्कदत्तस्तान्भिल्लान्वीक्ष्य सखीन्ब्रुवन् । यावत्स करभग्रीवकोट्टमार्गं विविक्षति ॥ ६४
तावन्मायाबटोस्तस्य तत्रादावभ्युपेयुषः । तं पूर्वदृष्टं ददृशुश्चाराः शबरभूभृतः ॥ ६५
ते मायाबटवे तस्मै गत्वा सद्यो न्यवेदयन् । तदागमं ससैन्यश्च सोऽपि प्रत्युज्जगाम तम् ॥ ६६
निकटीभूय दृष्ट्वा च मुक्तवाहः प्रधाव्य सः । पपात पादयोस्तस्य राजसूनोः पुलिन्दराट् ॥ ६७
कृतकण्ठग्रहं राजा स पृष्टकुशलश्च तम् । सामात्यं वाहनारूढमनैषीत्कटकं निजम् ॥ ६८
प्राहिणोच्च प्रतीहारं तदागमनशंसिनम् । तस्मै मातङ्गराजाय निजं स शबराधिपः ॥ ६९
आजगाम च मातङ्गराजः सोऽपि स्वदेशज्ञः । द्रुतं दुर्गपिशाचोऽत्र नाम्नो बिभ्रद्यथार्थताम् ॥ ७०
शिलाकूटकठोराङ्गस्तमालमलिनच्छविः । पुलिन्दाश्रितपापश्च विन्ध्याचल इवापरः ॥ ७१

भ्रुकुट्या भीषणमुखः प्रकृत्यैव त्रिशाखया। स्वीकर्तुं विन्ध्यवासिन्या त्रिशूलेनेव चिह्नितः॥ ७२
तरुणः क्षपिताशेषवया अप्यसुदर्शनः। कृष्णोऽप्यनन्यसेवी च भूभृत्पादोपजीव्यपि॥ ७३
नवाभ्र इव मायूरपिच्छचित्रधनुर्धरः। हिरण्याक्ष इवोद्दामवराहक्षतविग्रहः॥ ७४
घटोत्कच इवोत्सिक्तभीमरूपधरो बली। कलिकाल इवाधर्मनिरतोच्छृङ्खलप्रजः॥ ७५
आययौ च बलाभोगस्तस्यापूरितभूतलः। मुक्तोऽर्जुनभुजासङ्गात्प्रवाह इव नार्मदः॥ ७६
शिलाकलापो लुठितः किमञ्जनगिरेरयम्। किमुताकालकल्पान्तमेघौघः पतितो भुवि॥ ७७
इति शङ्कां स विदधच्चण्डालानीकिनीचयः। प्रससर्पासितच्छायामलिनीकृतदिङ्मुखः॥ ७८
उपगम्य च तत्स्वामी दूराभ्यस्तशिराः क्षितौ। मृगाङ्कदत्तं तं दुर्गपिशाचः प्रणनाम सः॥ ७९
उवास चाद्य देवी मे प्रसन्ना विन्ध्यवासिनी। उचितोचितवंशो यद्गृहान्प्राप्तो भवान्मम॥ ८०
तद्धन्योऽस्मि कृतार्थोऽस्मीत्युक्त्वा तस्मादुपायनम्। मातङ्गराजः स ददौ मुक्ताकस्तूरिकादिकम्॥ ८१
सोऽप्यभ्यनन्दत्प्रीत्या तं राजपुत्रो यथोचितम्। ततस्तत्रैव सर्वे ते चक्रुः सेनानिवेशनम्॥ ८२
आलानबद्धैर्द्विरदैस्तुरगैर्मन्दुराश्रितैः। कृतास्पदैश्च पादातैः स्थगिता सा महाटवी॥ ८३
आजन्मापूर्वनगरीभावसंप्राप्तिसंपदा। घूर्णमानेव तत्कालं नैव स्वात्मन्यवर्तत॥ ८४
ततोऽत्र काननोद्याने विहितस्नानमङ्गलम्। कृताहारं सुखासीनमेकान्ते सचिवान्वितम्॥ ८५
मायाबटौ स्थिते दुर्गपिशाचः स कथान्तरे। मृगाङ्कदत्तमवदत्प्रीतिप्रश्रयपेशलम्॥ ८६
मायाबटुरयं राजा बहुकालमिहागतः। त्वन्निदेशप्रतीक्षः सन्स्वामिन्साकं मया स्थितः॥ ८७
तद्राजपुत्र युष्माभिः कुत्र स्थितमियच्चिरम्। किं कृतं चेति कार्यं स्वमस्मान्बोधयताधुना॥ ८८
एतत्तद्वचनं श्रुत्वा राजपुत्रो जगाद सः। तदा मायाबटोरस्य गृहाद्विमलबुद्धिना॥ ८९
गुणाकरेण च समं प्राप्य भीमपराक्रमम्। गत्वा श्रुतधिया साकं चिन्वतान्यान्सखीन्मया॥ ९०
प्राप्तः प्रचण्डशक्तिश्च विचित्रकथ एष च। मार्गक्रमेण चैषोऽपि ततो विक्रमकेसरी॥ ९१
ततो वरसरस्तीरे प्राप्य विघ्नेशपादपम्। फलार्थमधिरुह्यैते तच्छापात्फलतां गताः॥ ९२
आराध्याथ गणेशं तं कथंचिन्मोचिता मया। शेषाश्चादौ तथाभूतास्तत्र मुक्तास्तथैव मे॥ ९३
दृढमुष्टिरयं व्याघ्रसेनमेघबलाविमौ। स्थूलबाहुरसौ चेति चत्वारः सचिवा इमे॥ ९४
एतैः प्राप्तैः समं सर्वैरहमुज्जयिनीमगाम्। तस्यां च गुप्तद्वारायां प्रवेशोऽप्यभवन्न नः॥ ९५
कुतः शशाङ्कवत्यास्तु हरणोपायचिन्तनम्। सैन्यहीनस्य चाभून्मे न दूतप्रेषणार्हता॥ ९६
ततः संमन्त्र्य युष्माकमागता निकटं वयम्। इदानीं सिद्धये यूयं प्रमाणमिह नः सखे॥ ९७
एवं मृगाङ्कदत्तेन स्ववृत्तान्तेऽभ्युदीरिते। सोऽथ दुर्गपिशाचस्तं समायाबटुरब्रवीत्॥ ९८
धीरो भव कियत्कार्यमेतदस्माभिरञ्जसा। प्राणाः प्रथममेवैते त्वदर्थमुपकल्पिताः॥ ९९
आनयामोऽत्र तं बद्ध्वा कर्मसेनं महीभृतम्। प्रसह्य च हरामोऽस्य तां शशाङ्कवतीं सुताम्॥ १००
इति मातङ्गराजेन समायाबटुनोदिते। मृगाङ्कदत्तः सप्रीतिबहुमानमभाषत॥ १०१
किं न संभाव्यते युष्मास्वियमेव हि वक्ति वः। प्रतिपन्नसुहृत्कार्यनिर्वाहं धीरसत्त्वता॥ १०२
दार्ढ्यं विन्ध्याद्रितः शौर्यं व्याघ्रेभ्यो मित्ररागिताम्। वनाब्जिनीभ्यश्चादाय यूयं धात्रेह निर्मिताः १०३
तद्विचार्य यथायुक्तं कुरुध्वमिति वादिनि। मृगाङ्कदत्ते दिनकृद्विशश्रामास्तमस्तके॥ १०४
ततस्तत्र त्रियामां तां स्कन्धावारे विशश्रमुः। ते कर्मान्तिककॢप्तेषु निवेशेषु यथोचितम्॥ १०५
प्रातर्मृगाङ्कदत्तश्च विससर्ज गुणाकरम्। किरातराजमानेतुं सुहृदं शक्तिरक्षितम्॥ १०६
तेन गत्वोक्तवृत्तान्तः स्वल्पैरेव दिनैश्च सः। तद्युक्तोऽतिमहासैन्यः किरातपतिराययौ॥ १०७
पदातिलक्षदशकं द्वे लक्षे वाजिनामपि। महावीराधिरूढानामयुतं मत्तदन्तिनाम्॥ १०८
अष्टाशीतिसहस्राणि रथानां च महीपतिम्। अन्वाययुर्ध्वजच्छत्रसंछादितनभांसि तम्॥ १०९
मृगाङ्कदत्तश्च मुदा प्रत्युद्गम्याभिपूज्य तम्। प्रावेशयत्सकटकं ससुहृत्सचिवो नृपम्॥ ११०

तावन्मातङ्गराजस्य येऽप्यन्ये मित्रबान्धवाः। मायाबटोश्च तद्दत्तदूताः सर्वेऽप्युपाययुः॥ १११
वधूघे च लसन्नादः संमिलद्वाहिनीशतः। मृगाङ्कदत्तहृदयानन्दः शिबिरवारिधिः॥ ११२
मुक्तामृगमदैर्वस्त्रैर्मांसभारैः फलासवैः। तान्स दुर्गपिशाचोऽत्र नृपतीन्समभानयत्॥ ११३
स्नानानुलेपनाहारपानशय्याद्यनुत्तमम्। सर्वेभ्यः शबराधीशो मायाबटुरुपाहरत्॥ ११४
मृगाङ्कदत्तश्चैकत्र बुभुजे निखिलैः सह। तैर्यथोचितभूभागेषूपविष्टैर्नरेश्वरैः॥ ११५
अपि मातङ्गराजं तं सोऽग्रे दूरादभोजयत्। कार्यं देशश्च कालश्च गरीयान्न पुनः पुमान्॥ ११६
विश्रान्ते च नवायाते किरातादिबले ततः। मृगाङ्कदत्तः सोऽन्येद्युर्दन्तिदन्तासनस्थितः॥ ११७
अस्थाने राजलोकस्य यथार्हकृतसत्क्रियः। विजनीकृत्य मातङ्गराजादीन्सुहृदोऽब्रवीत्॥ ११८
इदानीं कालहारः किं क्रियते किं न गम्यते। अनेन सर्वसैन्येन शीघ्रमुज्जयिनीं प्रति॥ ११९
तच्छ्रुत्वा श्रुतधीर्विप्रो राजपुत्रं जगाद तम्। शृणु देव वदाम्यत्र यथा नीतिविदां मतम्॥ १२०
कार्याकार्यविभागः प्राग्बोद्धव्यो विजिगीषुणा। असाध्यं यदुपायेन तदकार्यं परित्यजेत्॥ १२१
तत्कार्यं यदुपायेन साध्यं तत्र चतुर्विधः। उपायः साम दानं च भेदो दण्ड इति स्मृतः॥ १२२
पूर्वः पूर्वो वरस्तेषां निकृष्टश्च परः परः। तस्मात्सामप्रयोगस्ते पूर्वं देवेह युज्यते॥ १२३
निर्लोभे कर्मसेने हि राज्ञि दानं न सिद्धये। न भेदो नहि सन्त्यस्य क्रुद्धलुब्धावमानिताः॥ १२४
दण्डश्च दुर्गदेशस्थे तस्मिन्नतिबलाधिके। नृपैरजितपूर्वेऽन्यैः प्रयुक्तः संशयावहः॥ १२५
अविश्वास्या च युद्धेषु जयश्रीर्बलिनामपि। न च कन्यार्थिनो युक्तः कर्तुं तद्बान्धवक्षयः॥ १२६
तत्तस्य राज्ञः साम्नैव दूतस्तावद्विसृज्यताम्। तदसिद्धौ हठायातो दण्ड एव प्रयोक्ष्यते॥ १२७
इत्येतच्छ्रुतधेर्वाक्यं सर्वे तत्र तथेति ते। श्रद्दधुः प्रशशंसुश्च तस्य मन्त्रक्रमज्ञताम्॥ १२८
ततः संमन्त्र्य तैरेव समं दूतगुणान्वितम्। किरातराजानुचरं तदाख्यातं द्विजोत्तमम्॥ १२९
दूतं सुविग्रहं नाम कर्मसेनाय भूभृते। मृगाङ्कदत्तो व्यसृजल्लेखसंदेशहारिणम्॥ १३०
स गत्वोज्जयिनीं दूतः प्रतीहारनिवेदितः। वल्लभाश्वद्विपाकीर्णकक्ष्यान्तरमनोरमम्॥ १३१
प्रविश्य राजभवनं सिंहासनगतं नृपम्। ददर्श कर्मसेनं तं मन्त्रिभिः परिवारितम्॥ १३२
प्रणम्य चासनासीनः स पृष्टकुशलः क्रमात्। राज्ञाभिनन्दितस्तेन लेखं तस्मै समर्पयत्॥ १३३
आदाय तं च तन्मन्त्री मुद्राक्षेपप्रसारितम्। प्रज्ञाकोपाभिधानोऽत्र स्पष्टमेवमवाचयत्॥ १३४
स्वस्ति श्रीकरभग्रीवकोट्टमूलाटवीतटात्। महाराजाधिराजस्य पुत्रोऽयोध्यापुरीपतेः॥ १३५
श्रीमतोऽमरदत्तस्य महीमण्डलमण्डनम्। श्रीमान्मृगाङ्कदत्तोऽत्र प्रह्वोपनतराजकः॥ १३६
उज्जयिन्यां महाराजकर्मसेनस्य सादरम्। निजवंशपयोधीन्दोरिदं संदिशति स्फुटम्॥ १३७
कन्या तवास्ति सावश्यं देयान्यस्मै प्रयच्छ तत्। मह्यं तां सदृशी सा मे भार्यादिष्टा हि दैवतैः॥ १३८
एवं नौ बन्धुभावः स्यान्नश्येत्पूर्वा च वैरिता। नो चेन्निजभुजावेव प्रार्थयिष्येऽत्र वस्तुनि॥ १३९
इत्यत्र वाचिते लेखे प्रज्ञाकोपेण मन्त्रिणा। राजा सकोपः सचिवान्कर्मसेनो जगाद सः॥ १४०
विपक्षास्ते सदास्माकमनात्मज्ञेन तेन च। एतत्तथैव संदिष्टं पश्यताद्यासमञ्जसम्॥ १४१
आत्माभिलिखितः पूर्वं वयं पश्चादवज्ञया। दर्पाध्मातेन पर्यन्ते बाहुवीर्यमुदीरितम्॥ १४२
तन्न मे प्रतिसंदेशो योग्यः कन्याकथैव का। गच्छ दूत भवत्स्वामी यत्स वेत्ति करोतु तत्॥ १४३
इत्युक्तः कर्मसेनेन राज्ञा दूतोऽत्र स द्विजः। सुविग्रहस्तमोजस्वी क्रमायातमभाषत॥ १४४
अदृष्ट्वा राजपुत्रं तं संप्रत्योजायसे जड। सज्जो भवागते तस्मिन्वेत्स्यसि स्वपरान्तरम्॥ १४५
इति तेनोदिते राजसभा क्षोभमियाय सा। गच्छावध्योऽसि किं कुर्म इति क्रुद्धोऽभ्यधान्नृपः॥ १४६
अन्येऽत्र दन्तदष्टोष्ठा मृद्नन्तः स्वान्करान्करैः। किं नाधुनैव गत्वा तं हन्म इत्यब्रुवन्मिथः॥ १४७
यात्वयं बटुवाचाटूस्यास्य किं कुप्यते गिरा। द्रक्ष्यते यत्करिष्याम इत्यूचुर्धैर्यतः परे॥ १४८
भ्रूभङ्गैः केचिदासन्नचापरोपणसूचनम्। कुर्वन्त इव निःशब्दं तस्थुः कोपारुणैर्मुखैः॥ १४९

एवं सभायां क्रुद्धायां स निर्गत्य सुविग्रहः। दूतो मृगाङ्कदत्तस्य पार्श्वं स्वकटकं ययौ ॥ १५०
तस्मै स कर्मसेनोक्तं समित्राय शशंस तत्। सोऽप्यादिदेश तच्छ्रुत्वा यात्रां सैन्ये नृपात्मजः ॥ १५१

ततः स्वाम्यादेशप्रबलपवनापातविधुतो बलाम्भोधिर्धावन्नरतुरगमातङ्गमकरः।
सपक्षाणां तन्वन्मनसि परितोषं क्षितिभृतां स संप्राप क्षोभं प्रतिभयकरं कातरनृणाम् ॥ १५२

क्षितिमथ विदधद्बलाश्वलालागजमदकर्दमितां मृगाङ्कदत्तः।
बधिरितभुवनः स तूर्यनादैरुदचलदुज्जयिनीं शनैर्जयाय ॥ १५३

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चत्रिंशस्तरङ्गः।

---

षट्त्रिंशस्तरङ्गः।

ततः स विन्ध्यमुल्लङ्घ्य प्राप संनद्धसैनिकः। मृगाङ्कदत्तः सीमान्तमुज्जयिन्याः सुहृद्युतः ॥ १
तद्बुद्ध्वा कर्मसेनोऽपि राजास्य सबलोऽग्रतः। धीरो युद्धाय संनह्य नगर्या निरगात्ततः ॥ २
निकटीभूय चान्योन्यदर्शिन्योरुभयोस्तयोः। तत्सेनयोः प्रववृते संग्रामो वीरहर्षणः ॥ ३
नृसिंहनादवित्रस्तभग्नक्लीबासुराकुलः। सोऽभूद्धिरण्यकशिपोर्निवास इव संगरः ॥ ४
संतता विनिकृन्तन्तो घना गगनगामिनः। सुभटेष्विषवः पेतुः सस्येषु शलभा इव ॥ ५
खड्गाहतेभकुम्भोत्थो बभौ मुक्ताफलोत्करः। संरम्भत्रुटितो हार इव तत्समरश्रियः ॥ ६
तीक्ष्णकुन्ताग्रदशनं ग्रस्ताश्वनरकुञ्जरम्। कृतान्तस्येव वदनं तद्विरेजे रणाजिरम् ॥ ७
उत्पेतुर्भल्ललूनानि शिरांसि भुजशालिनाम्। दिवि दत्तोर्ध्वझम्पानि दिव्यस्त्रीरिव चुम्बितुम् ॥ ८
कबन्धा ननृतुश्चात्र सुभटानां पदे पदे। निर्भासितोत्तमस्वामिसंगरप्रमदादिव ॥ ९
एवं च पञ्चदिवसान्वहच्छोणितनिम्नगः। आसीत्करङ्ककूटाढ्यः स शूरान्तकरो रणः ॥ १०
पञ्चमेऽह्नि रहः सायं तं समेतं स्वमन्त्रिभिः। मृगाङ्कदत्तं श्रुतधिर्विप्रोऽभ्येत्य जगाद सः ॥ ११
युष्मासु समरव्यग्रेष्वितो भिक्षुकरूपिणा। गत्वा निराकुलद्वारां प्रविश्योज्जयिनीं मया ॥ १२
निकटादप्यदृश्येन भूत्वा विद्याप्रभावतः। यदन्विष्टं यथावत्तच्छृणु देव वदामि ते ॥ १३
यदैव कर्मसेनोऽसौ राजा युद्धाय निर्गतः। तदैवानुज्ञया मातुः सा शशाङ्कवती गृहात् ॥ १४
निर्गत्य तत्पुरीवर्तिगौर्यायतनमाश्रिता। तामाराधयितुं देवीं श्रेयोर्थं समरे पितुः ॥ १५
तत्रस्था च रहस्येकां सखीमाप्तामुवाच सा। मत्कृते सखि तातस्य विग्रहोऽयमुपागतः ॥ १६
आक्रान्तश्चार्पयेदेष तस्मै राजसुताय माम्। गणयन्ति न राज्यार्थेऽपत्यस्नेहं महीभुजः ॥ १७
न च जानेऽनुरूपः किं स मे राजसुतो न वा। कामं हि मृत्युमिच्छेयं न विरूपमहं पतिम् ॥ १८
मन्ये रूपाभिसंपन्नो दरिद्रोऽपि वरं पतिः। न विरूपः पुनः कृत्स्नपृथिवीचक्रवर्त्यपि ॥ १९
तत्कीदृगिति गत्वा तं विलोक्यागच्छ सैन्यतः। प्रज्ञानेन च नाम्ना च शुभे चतुरिका ह्यसि ॥ २०
एवं सखी तयोक्ता सा युक्त्या कटकमेत्य नः। त्वां विलोक्य विभो गत्वा राजपुत्रीमुवाच ताम् ॥ २१
किमन्यत्सखि सा जिह्वा जाने नास्त्यपि वासुकेः। या शक्ता गदितुं तस्य रूपं राजसुतस्य तत् ॥ २२
ब्रवीमि पुनरेतावद्यथा नान्या समास्ति ते। नारी रूपेण मनुजस्तथा नान्योऽस्ति तत्समः ॥ २३
अत्यल्पं धिङ्मयोक्तं वा मन्ये ह्यस्मिञ्जगत्त्रये। न सिद्धो नापि गन्धर्वो न देवोऽप्यस्ति तादृशः ॥ २४
एवं सखीगिरा तस्यास्त्वयि न्यस्तं च मानसम्। शशाङ्कवत्याः कामेन कीलितं च समं शरैः ॥ २५
तत्क्षणात्प्रभृति श्रेयस्कामा तव पितुश्च सा। कृशीभवन्ती तपसा स्थिता त्वद्विरहेण च ॥ २६
तद्युतं निशि गत्वाद्य हृत्वा गौर्याश्रमात्ततः। विजनादानयत तां राजपुत्रीमलक्षितम् ॥ २७
यात मायाबटोरस्य गृहानेते नृपास्ततः। पश्चात्प्रकोपं रक्षित्वा तत्रैष्यन्ति समं मया ॥ २८
निवर्ततामिदं युद्धं मा स्म भूत्सैन्यसंक्षयः। अस्तु वः कुशलं देहे राज्ञस्त्वच्छ्वशुरस्य च ॥ २९
गतिरेषा ह्यगतिका युद्धं प्राणार्पणेन यत्। उपायेषु जघन्योऽयमुपायो गीयते बुधैः ॥ ३०

एवमुक्तः श्रुतधिना स गुप्तं प्रययौ निशि । मृगाङ्कदत्तस्तत्राश्वानारुह्य सचिवैः सह ॥ ३१
सुप्तस्त्रीबालशेषां तां विवेशोज्जयिनीं च सः । गत्वैव संवृतद्वारां सुप्तैः स्वल्पैश्च रक्षिभिः ॥ ३२
ततः श्रुतधिना दत्तैरभिज्ञानैः सुलक्षितम् । ख्यातं पुष्पकरण्डाख्यमहोद्यानान्तरस्थितम् ॥ ३३
तत्कालालंकृतप्राचीमुखेन शशिना करैः । प्रकाशितं राजसुतस्तं स गौर्याश्रमं ययौ ॥ ३४
तावच्च परिचर्यादिश्रान्ते सुप्ते सखीजने । सा शशाङ्कवती तत्र वीतनिद्रा व्यचिन्तयत् ॥ ३५
मदर्थं बत राजानो राजपुत्रा दिने दिने । वीरास्ते ते च हन्यन्ते समित्युभयसैन्ययोः ॥ ३६
स च राजसुतो देव्या स्वप्ने ह्यम्बिकयानया । आदिष्टः पूर्वभर्ता मे मदर्थप्रार्थिताहवः ॥ ३७
हृदयं च यमाच्छिद्य दत्त्वा शरपरम्पराम् । सिद्धलक्षेण कामेन नीत्वा तस्मै समर्पितम् ॥ ३८
तातस्तु मन्दपुण्यां मां नैव तस्मै प्रदास्यति । पूर्ववैराच्च दर्पाच्च लेखादित्यद्य हि श्रुतम् ॥ ३९
वामे विधौ च कः स्वप्नदेवतादेशनिश्चयः । प्रियप्राप्तौ च पश्यामि न कांचित्सर्वथा दिशम् ॥ ४०
तद्यावन्नाहितं किंचित्तस्य तातस्य वा रणे । शृणोमि तावदात्मानं हताशं न त्यजामि किम् ॥ ४१
इत्युत्थाय पुरो गत्वा गौर्याः साशोकपादपे । पाशं विरचयामास स्वोत्तरीयेण दुःखिता ॥ ४२
तावन्मृगाङ्कदत्तोऽपि सवयस्यः प्रविश्य तम् । उद्यानं तरुबद्धाश्वो गौर्यागाराश्रमं गतः ॥ ४३
तत्र तत्सचिवेनाराद्राजपुत्रीं विलोक्य ताम् । मृगाङ्कदत्तो जगदे स्वैरं विमलबुद्धिना ॥ ४४
देव पश्यात्र काप्येषा पाशेन वरकन्यका । उद्यता हन्तुमात्मानं तत्का नाम भवेदियम् ॥ ४५
तच्छ्रुत्वैव विलोक्यैतां राजसूनुरुवाच सः । अहो केयं रतिः किंस्विद्रूपिणी किमु निर्वृतिः ॥ ४६
साकारा कान्तिरिन्दोर्वा मन्मथाज्ञाथ जङ्गमा । किं वामराङ्गना नैवमस्याः पाशोद्यमः कथम् ॥ ४७
तत्तावदिह तिष्ठामः पादपान्तरिताः क्षणम् । यावज्जानीमहे केयमिति व्यक्तं कथंचन ॥ ४८
इत्युक्त्वा सवयस्योऽत्र यावच्छन्नः स तिष्ठति । सा शशाङ्कवती तावद्गिरा देवीं व्यजिज्ञपत् ॥ ४९
अस्मिञ्जन्मनि चेद्देवि न स राजसुतः पतिः । देवो मृगाङ्कदत्तो मे निष्पन्नः पूर्वदुष्कृतैः ॥ ५०
त्वत्प्रसादेन तद्भूयादन्यस्मिन्नपि जन्मनि । स भर्ता गौरि भगवत्यापन्नार्तिहरे मम ॥ ५१
इति विज्ञप्य देवीं सा राजपुत्री प्रणम्य च । कण्ठे समर्पयामास पाशं बाष्पार्द्रलोचना ॥ ५२
तत्क्षणं च प्रबुद्धैव तददर्शनविह्वलाः । चिन्वन्त्यः सहसा तस्याः सख्योऽन्तिकमुपाययुः ॥ ५३
हा हा किमिदमारब्धं सखि धिक्साहसं त्वया । इत्युक्त्वैव च तास्तस्याः पाशं कण्ठादपाहरन् ॥ ५४
अथ ह्रीतविषण्णा सा यावद्बालात्र तिष्ठति । उदभूद्भारती तावद्गौरीगर्भगृहान्तरात् ॥ ५५
मा विषादं कृथाः पुत्रि शशाङ्कवति नैव तत् । वचो मृषा मे यत्स्वप्ने तवोक्तं सुभगे मया ॥ ५६
सोऽयं मृगाङ्कदत्तो हि पूर्वभर्ता तवान्तिके । प्राप्त एव व्रजानेन सह भुङ्क्ष्वाखिलां भुवम् ॥ ५७
श्रुत्वैतां सहसा वाणीं सा शशाङ्कवती शनैः । यावद्विलोकयत्यत्र पार्श्वे किंचित्ससाध्वसा ॥ ५८
तावन्मृगाङ्कदत्तस्य मन्त्री विक्रमकेसरी । तामुपागम्य वक्ति स्म दर्शयन्नग्रपाणिना ॥ ५९
देवि सत्यं भवान्या ते समादिष्टमयं हि सः । राजपुत्रः पतिः प्रेमपाशाकृष्टस्तवाग्रतः ॥ ६०
तच्छ्रुत्वा सा ततस्तिर्यङ्न्यस्तदृष्टिर्ददर्श तम् । कान्तं तेजस्विनं मध्यवर्तिनं सहचारिणाम् ॥ ६१
ग्रहैः परिवृतं चन्द्रमवतीर्णमिवाम्बरात् । रूपोपमानमन्येषाममृतस्यन्दनं दृशोः ॥ ६२
ततः पतदनङ्गेषुपुङ्खपक्ष्मचितैरिव । अङ्गैः कण्टकितैर्यावदास्ते सा स्तम्भनिश्चला ॥ ६३
तावन्मृगाङ्कदत्तस्तामुपेत्य त्याजयन्ह्रियम् । स कालोचितमाह स्म गिरा प्रेममधुश्च्युता ॥ ६४
त्याजयित्वा निजं देशं राज्यं बन्धूंश्च दूरतः । दासीकृत्याहमानीतो गुणैर्बद्ध्वा नताङ्गि ते ॥ ६५
तन्मयारण्यवासस्य वसुधाशयनस्य च । फलाहारस्य तीव्रार्कतापसंसेवनस्य च ॥ ६६
तपःकष्टस्य तन्वङ्गि संप्राप्तं फलमीदृशम् । यद्दृष्टा नेत्रपीयूषवृष्टिरेषा तनुस्तव ॥ ६७
यदि स्नेहानुरोधश्च मयि ते हरिणाक्षि तत् । अस्मत्पुरीपुरंध्रीणां प्रयच्छ नयनोत्सवम् ॥ ६८
सङ्ग्रामः शाम्यतु श्रेयो भवतूभयपक्षयोः । कृतार्थं जायतां जन्म सह गुर्वाशिषा मम ॥ ६९

एवं मृगाङ्कदत्तेन सा शशाङ्कवती तदा । उक्ता जगाद वसुधाविन्यस्तनयना शनैः ॥ ७०
अयं तावद्गुणक्रीतो जनः स्वाधीन एव ते । तदार्यपुत्र कुशलं यद्वेषि कुरुष्व तत् ॥ ७१
इति वाक्सुधया तस्याः कृती निर्वापितोऽथ सः । मृगाङ्कदत्तो देवीं तां गौरीं स्तुत्वा प्रणम्य च ॥ ७२
आरोप्य राजपुत्रीं च तां तुरंगे स्वपृष्ठतः । तत्सखीभिः समारूढपश्चाद्भागाश्वपृष्ठगैः ॥ ७३
दशभिः सहितो वीरैः सचिवैः शस्त्रपाणिभिः । उच्चचाल ततो रात्रौ राजपुत्रो धृतायुधः ॥ ७४
ते चैकादश दृष्ट्वापि तत्र रोद्धुं न शेकिरे । नगरीरक्षिभिः क्रुद्धा रुद्रा इव दुरासदाः ॥ ७५
विनिर्गत्योज्जयिन्याश्च जग्मुर्मायाबटोर्गृहम् । सशशाङ्कवतीकास्ते यथा श्रुतधिनोदितम् ॥ ७६
क एते क प्रयाताश्चेत्युद्भ्रान्तेष्वत्र रक्षिषु । सा चोज्जयिन्यां बुबुधे क्रमाद्राजसुता हृता ॥ ७७
तच्चाख्यातुं महादेवी कर्मसेनाय भूभृते । सत्वरं नगराध्यक्षं प्राहिणोत्कटकं प्रति ॥ ७८
अत्रान्तरे च कटके तत्र रात्रावुपेत्य तम् । चाराधिकारी राजानं कर्मसेनं व्यजिज्ञपत् ॥ ७९
देव प्रदोष एवाद्य गुप्तं निर्गत्य सैन्यतः । मृगाङ्कदत्तः सामात्यो हयैरुज्जयिनीं गतः ॥ ८०
तां शशाङ्कवतीं हर्तुं गौर्यायतनवर्तिनीम् । इति सम्यङ्मया ज्ञातं प्रभुर्जानात्यतः परम् ॥ ८१
इत्याकर्ण्य समाहूय कर्मसेनः स भूपतिः । रहः स्वसेनापतये यथाश्रुतमवर्णयत् ॥ ८२
जगाद च वराश्वानां सहितः पञ्चभिः शतैः । शूराधिरूढैः प्रच्छन्नं द्रुतमुज्जयिनीं व्रज ॥ ८३
मृगाङ्कदत्तं जहि तं पापं प्राप्य बधान वा । विद्धि मामागतं पश्चात्पृष्ठस्थापितसैनिकम् ॥ ८४
इत्युक्तस्तेन राज्ञा स यथादिष्टबलान्वितः । प्रायात्सेनापती रात्रौ तथेत्युज्जयिनीं प्रति ॥ ८५
मार्गे तन्नगराध्यक्षान्मिलितादशृणोच्च सः । राजपुत्रीं हृतां वीरैर्यथान्यैरेव कैश्चन ॥ ८६
ततः सनगराध्यक्षः प्रत्यागत्य तथैव तत् । कर्मसेनं स राजानं यथावृत्तमबोधयत् ॥ ८७
स तद्बुद्ध्वा विचिन्त्यैव तदशक्यं ततो नृपः । अवस्कन्दनिवृत्तस्तां तूष्णीमेवानयन्निशाम् ॥ ८८
मृगाङ्कदत्तसैन्येऽपि मायाबटुमुखा नृपाः । निन्युस्तथैव तां रात्रिं संनद्धाः श्रुतधेर्गिरा ॥ ८९
प्रातश्चान्विष्टवृत्तान्तः कर्मसेननृपः सुधीः । मृगाङ्कदत्तकटके राज्ञां दूतं विसृष्टवान् ॥ ९०
मृगाङ्कदत्तेन हृता सुता तावच्छलेन मे । तदस्तु कोऽपरो ह्यस्यास्तादृशः सदृशः पतिः ॥ ९१
तदिदानीं स युष्माभिः सममायातु मद्गृहम् । करोमि यावदुद्वाहं तनयाया यथाविधि ॥ ९२
एवं स संदिदेशास्य मुखे दूतस्य भूपतिः । तच्च ते सश्रुतधयो राजानः श्रद्दधुस्तदा ॥ ९३
ऊचुश्च दूतं स्वपुरीं तर्हि यात्वेष वः प्रभुः । यावत्तमानयामोऽत्र गत्वा राजसुतं वयम् ॥ ९४
तच्छ्रुत्वैव तथा तेन गत्वा दूतेन वर्णिते । स कर्मसेनः सबलस्तथेत्युज्जयिनीमगात् ॥ ९५
तद्दृष्ट्वा तेऽपि राजानो मायाबटुपुरःसराः । मृगाङ्कदत्तं प्रति तं चेलुः श्रुतधिना सह ॥ ९६
तावन्मृगाङ्कदत्तोऽपि स शशाङ्कवतीयुतः । मायाबटुगृहं प्राप तत्काञ्चनपुरं पुरम् ॥ ९७
तत्र सोऽन्तःपुरैस्तस्य यथार्हकृतसत्क्रियः । सवयस्यो विशश्राम सिद्धकार्यः प्रियासखः ॥ ९८
अन्येद्युः सश्रुतधयो नृपास्तेऽत्र समाययुः । स किरातपतिर्वीरः ससैन्यः शक्तिरक्षितः ॥ ९९
शबराधिपतिः सोऽपि राजा मायाबटुर्बली । शूरो दुर्गपिशाचश्च स मातङ्गचमूपतिः ॥ १००
सर्वे शशाङ्कवत्या ते युक्तं रात्र्येव कैरवम् । मृगाङ्कदत्तं दृष्ट्वा तमभ्यनन्दन्कृतोत्सवाः ॥ १०१
यथार्हकृतमानाय तस्मै तं च न्यवेदयन् । संदेशं कर्मसेनीयं प्रवेशं च निजे गृहे ॥ १०२
संनिवेश्याथ कटकं चलन्नगरसंनिभम् । मृगाङ्कदत्तो मन्त्राय समं सर्वैर्नृपाविशत् ॥ १०३
विवाहायोज्जयिन्यां किं गन्तव्यमुत नो मया । उच्यतामिति पप्रच्छ नृपतीन्सचिवांश्च सः ॥ १०४
दुष्टः स राजा तद्गेहगमने कुशलं कुतः । कार्यं च तत्र नास्त्येव प्राप्तैव हि तदात्मजा ॥ १०५
इत्यैकमत्येन नृपाः सचिवाश्चाब्रुवन्यदा । तदा मृगाङ्कदत्तस्तमपृच्छच्छ्रुतधिं द्विजम् ॥ १०६
उदासीन इव ब्रह्मंस्तूष्णीमेवं स्थितोऽसि किम् । किमेतद्देवाभिमतं तवाप्युत न वा वद ॥ १०७
ततः श्रुतधिराह स्म यदि श्रोष्यसि वच्मि तत् । गन्तव्यं कर्मसेनस्य गृहेष्विति मतिर्मम ॥ १०८

अशाठ्येन हि संदिष्टमेतत्तेनान्यथा कथम् । सुतापहारे स बली युद्धं त्यक्त्वा गृहं व्रजेत् ॥ १०९
सबलस्य च किं कुर्यात्प्राप्तस्यापि गृहं स ते । प्रीतिस्तु तत्र यातस्य भवेत्तेन समं तव ॥ ११०
सहायोऽग्रे स च स्यान्नः स्नेहेन दुहितुः पुनः । नेच्छत्यविधिनोद्वाहं तेनैवं वक्ति तत्त्वतः ॥ १११
तद्युक्तं गमनं तत्रेत्युक्ते श्रुतधिना तदा । साधु साध्विति तत्रोचुः सर्वे श्रद्धाय तद्वचः ॥ ११२
ततो मृगाङ्कदत्तस्तानवोचत्सर्वमस्त्वदः । किं तु तातं विनाम्बां च विवाहो मे न रोचते ॥ ११३
तदम्बातातयोः कश्चिदाह्वानाय व्रजत्वितः । बुद्ध्वा च तदभिप्रायं करिष्यामो यथोचितम् ॥ ११४
इत्यूचिवान्स संमन्त्र्य पित्रोः पार्श्वं स्वमन्त्रिणम् । तत्रस्थ एव व्यसृजद्वीरो भीमपराक्रमम् ॥ ११५
तावच्च तत्रायोध्यायां पुरि राजा स तत्पिता । कालेनामरदत्तस्तज्ज्ञातवांस्तस्य लोकतः ॥ ११६
मृगाङ्कदत्तस्य कृतं देशनिर्वासनप्रदम् । विनीतमतिना मिथ्या राजपुत्रस्य पैशुनम् ॥ ११७
ततः कुमन्त्रिणं कोपात्तं निहत्य स सान्वयम् । पुत्रनिर्वासनोदग्रदुःखकष्टामगाद्दशाम् ॥ ११८
निर्गत्य च पुरीबाह्ये तस्थावायतने हरेः । राजा स नन्दिग्रामाख्ये चरन्दारैः समं तपः ॥ ११९
तत्र स्थिते चिरात्तस्मिन्स चारावेदितागमः । अयोध्यां प्राप वाताश्ववेगाद्भीमपराक्रमः ॥ १२०
स तामपश्यदुद्विग्नां गतराजसुतां पुरीम् । रामप्रवासवैधुर्यकष्टं पुनरिवागताम् ॥ १२१
राजपुत्रस्य पृच्छद्भिर्वार्तां पौरैर्वृतोऽथ सः । तन्मुखाच्छ्रुतवृत्तान्तो नन्दिग्रामं ततो ययौ ॥ १२२
तत्राभीष्टसुतोदन्तसोत्सुकं महिषीयुतम् । ददर्शामरदत्तं तं तपःक्षामतनुं नृपम् ॥ १२३
तमेत्य पादपतितः कृतकण्ठग्रहं नृपम् । पृष्टोदन्तमवोचत्स सास्रं भीमपराक्रमः ॥ १२४
प्राप्ता मृगाङ्कदत्तेन सूनुना ते स्ववीर्यतः । सा शशाङ्कवती देव कर्मसेननृपात्मजा ॥ १२५
तद्विवाहश्च देवेन विना देव्या च सर्वथा । न तस्य पितृभक्तस्य शोभनः प्रतिभासते ॥ १२६
अतस्तेन विसृष्टोऽहमिहैवागम्यतामिति । विज्ञापनाय धरणिन्यस्तमूर्ध्ना सुतेन वः ॥ १२७
प्रतीक्षमाणो युष्मांश्च स काञ्चनपुरे स्थितः । शबराधिपतेर्देव राज्ञो मायाबटोर्गृहे ॥ १२८
शृण्विदानीं च वृत्तान्तमित्युक्त्वा देशनिर्गमात् । आरभ्य सोऽटवीवासवियोगविषमायतम् ॥ १२९
स युद्धं कर्मसेनीयसंध्यन्तं विविधाद्भुतम् । कृत्स्नं स्वप्रभुवृत्तान्तं जगौ भीमपराक्रमः ॥ १३०
तच्छ्रुत्वा सुतकल्याणे स राजा जातनिश्चयः । तदैवामरदत्तः स्वं हर्षात्प्रस्थानमादिशत् ॥ १३१
गजारूढः समं देव्या राजभिः सचिवैश्च सः । सहस्त्यश्वबलः प्रायात्पुत्रं प्रत्युत्सुकस्ततः ॥ १३२
अल्पैरेव च स प्राप दिवसैरविलम्बितः । शबराधिपदेशस्थं सुतस्य कटकं नृपः ॥ १३३
तद्बुद्ध्वैव च तस्याग्रे समग्रै राजभिः सह । मृगाङ्कदत्तो निरगात्सवयस्यश्चिरोत्सुकः ॥ १३४
दृष्ट्वैव दूरात्तुरगादवतीर्यास्य पादयोः । गजावरूढस्य पितुर्मातुश्च निपपात सः ॥ १३५
आलिङ्गितः स च पितुः शरीरेण भुजान्तरम् । मनोरथेन हृदयं बाष्पैश्चापूरयद्दृशौ ॥ १३६
माताप्याश्लिष्य सुचिरात्पश्यन्ती तं मुहुः सुतम् । भूयो वियोगभीतेव न मोक्तुमशकच्चिरम् ॥ १३७
ते चाप्यमरदत्तं तं सदेवीकं नृपाः प्रभुम् । मृगाङ्कदत्तसुहृदस्तदाख्यातास्तदानमन् ॥ १३८
स राजा सापि तद्देवी दंपतीविधुरेषु तान् । सहायानेकपुत्रस्य स्नेहादभिननन्दतुः ॥ १३९
मायाबटोः प्रविश्याथ राजधानीं विलोक्य च । स शशाङ्कवतीं तत्र तां पादावनतां स्नुषाम् ॥ १४०
गृहीतप्राभृतो देव्या तया च स्नुषया सह । निर्गत्यामरदत्तः स्वे कटके वसतिं व्यधात् ॥ १४१
भुक्त्वा च तत्र पुत्रेण सह सर्वैश्च राजभिः । गीतवादित्रनृत्तैस्तन्निनाय ससुखं दिनम् ॥ १४२
मेने च लब्धयशसा कृतिनं तेन सूनुना । मृगाङ्कदत्तेनात्मानं भाविना चक्रवर्तिना ॥ १४३
तावच्च कर्मसेनेन राज्ञा तेन सुमेधसा । दूतो मृगाङ्कदत्तस्य संमन्त्र्यात्र व्यसृज्यत ॥ १४४
भवानुज्जयिनीं तावदिमां नैवागमिष्यति । तत्प्रेषयिष्याम्यत्रैव सुषेणाख्यमहं सुतम् ॥ १४५
स शशाङ्कवतीं तुभ्यं विधिवद्भगिनीं निजाम् । दास्यत्यतो नाविधिना सा विवाह्या त्वयानघ ॥ १४६
असत्स्नेहानुरोधश्चेदिति तं संदिदेश च । लेखे दूतमुखे चास्य राजसूनोः स भूपतिः ॥ १४७

राजस्थाने श्रुते तस्मिन्संदेशे राजसूनुना। तत्पिता तस्य दूतस्य स राजैवोत्तरं ददौ ॥ १४८
कर्मसेननृपात्कोऽन्यो वक्त्येतत्तस्य सन्मतेः। स्नेहोऽस्ति काममस्मासु तदेनं प्रेषयत्वितः ॥ १४९
सुषेणं स निजं पुत्रं करिष्यामस्तथा वयम्। यथा संतोषकृत्तस्य सुतोद्वाहो भविष्यति ॥ १५०
इत्युक्त्वा प्रतिसंदेशं दूतं तं प्रेष्य सत्कृतम्। राजा सश्रुतधिं पुत्रं नृपतींश्च जगाद सः ॥ १५१
अयोध्यामधुना यामो विवाहस्तत्र शोभते। सुषेणस्य च सत्कारो यथावत्तत्र सिद्ध्यति ॥ १५२
राजा मायाबटुश्चेह सुषेणं संप्रतीक्षताम्। तेनागतेन सहितोऽयोध्यां पश्चादुपैष्यति ॥ १५३
वयं विवाहसंभारहेतोर्यामोऽग्रतः पुनः। इति राजवचस्तत्र ते सर्वेऽप्यनुमेनिरे ॥ १५४
ततोऽन्येद्युः समं देव्या सैन्यैश्च स महीपतिः। मृगाङ्कदत्तश्च युतौ राजभिः सचिवैश्च तैः ॥ १५५
मायाबटुं निधायात्र सुषेणागमनावधि। शशाङ्कवत्या सहितौ चेलतुः कृतिनौ ततः ॥ १५६
वल्गत्तुरंगसंघाततरङ्गशतसंकुलः। असंख्यसर्पत्पादातपाथःपूरितदिङ्मुखः ॥ १५७
तुमुलप्रोल्लसच्छब्दपिहितान्यरवश्रवः। चचाल स बलाम्भोधिस्तयोर्गम्भीरभीषणः ॥ १५८
कुर्वाणौ च रजश्छन्नां वसुधाविभ्रमां दिवम्। गजेन्द्रजघनाकीर्णां वसुधां च भुविभ्रमाम् ॥ १५९
मार्गे क्रमेण गच्छन्तौ शक्तिरक्षितकस्य तौ। गृहं किरातराजस्य पितापुत्राववापतुः ॥ १६०
तत्र तेन महारत्नहेमसद्वस्त्रराशिभिः। सदारेण कृतोदारसपर्यौ सपरिग्रहौ ॥ १६१
दिनमेकं कृताहारौ विश्रम्य सबलौ ततः। प्रस्थाय च स्वनगरीमयोध्यां प्रापतुः क्रमात् ॥ १६२
हर्म्यवातायनारूढचञ्चत्पौराङ्गनाननैः। कान्तिपल्लवितैः फुल्लविलोलकमलामिव ॥ १६३
सवधूकचिरायातराजपुत्रेक्षणोत्सुकैः। नेत्रैः पारिप्लवैश्चासां चलत्कुवलयैरिव ॥ १६४
संपतद्भिर्वृतां राजहंसैर्विविशतुश्च ताम्। तरङ्गितां पताकाभिः प्रवाते सरसीमिव ॥ १६५
तत्राभ्यनन्दन्पौरास्तौ दीयमानाशिषौ द्विजैः। बन्दिभिः स्तूयमानौ च गीयमानौ च चारणैः ॥ १६६
कर्मसेनस्य तनयामिमामालोकयेद्यदि। न पुनः सुतया लक्ष्म्या दर्पं कुर्यान्महोदधिः ॥ १६७
न च गौर्यापि हिमवानित्यत्र च जगौ जनः। शशाङ्कवत्या लावण्यसंपदं वीक्ष्य विस्मितः ॥ १६८
तदा च मङ्गलमहातूर्यप्रतिरवैर्दिशः। उत्सवाधिगमे राज्ञां संवेदनमिव व्यधुः ॥ १६९
बहिःसृतेनेव भरादनुरागेण निर्भरा। सिन्दूरेण प्रनृत्ता सा सर्वाभूत्सोत्सवा पुरी ॥ १७०
अन्येद्युर्गणकैः सूनोर्लग्नाहे निश्चिते नृपः। चकारामरदत्तोऽत्र तद्विवाहाय संभृतिम् ॥ १७१
अपूरि तस्य नगरी तैस्तैर्नानादिगागतैः। रत्नैस्तथा यथा चक्रे सा कुबेरपुरीमधः ॥ १७२
अथागत्याचिरादेको द्वाःस्थनिवेदितः। दूतो मायाबटोरत्र नृपतिं तं व्यजिज्ञपत् ॥ १७३
देवागतो राजपुत्रः सुषेणो नृपतिश्च सः। मायाबटुरयोध्यायाः सीमान्तेऽस्याः स्थितावुभौ ॥ १७४
श्रुत्वैवामरदत्तस्तद्राजा सैन्यैः समं निजम्। सेनापतिं सुषेणस्य तस्याग्रे विससर्ज सः ॥ १७५
तेन साकमयोध्यातो राजपुत्रमुपागतम्। मृगाङ्कदत्तः ससुहृत्प्रीत्या प्रत्युद्ययौ ततः ॥ १७६
दूराद्वाहावतीर्णौ च कृतकण्ठग्रहौ मिथः। तावुभौ पृष्टकुशलौ मिलतः स्म नृपात्मजौ ॥ १७७
प्रेम्णा चैकरथारूढौ नगरीं विशतः स्म ताम्। दिशन्तौ पौरनारीणां विलोचनमहोत्सवम् ॥ १७८
सुषेणश्चात्र राजानं दृष्ट्वा तद्बहुमानितः। शशाङ्कवत्यास्तदनु स्वसुर्वासगृहं ययौ ॥ १७९
तत्रोत्थाय कृताश्लेषस्तया बाष्पायमाणया। उपविश्य स सव्रीडां राजपुत्रीं जगाद ताम् ॥ १८०
तातस्त्वामाह नायुक्तं पुत्रि किंचित्त्वया कृतम्। अद्यैतद्धि मया ज्ञातं यत्स्वप्नेऽम्बिकया तव ॥ १८१
मृगाङ्कदत्तो भर्तासौ समादिष्टो नृपात्मजः। भर्तृमार्गानुसरणं स्त्रीणां च परमं व्रतम् ॥ १८२
इत्युक्ता तेन सा बाला हृदयं स्वमधोमुखी। सिद्धमिष्टं तवेत्येवं पश्यन्ती विजहौ त्रपाम् ॥ १८३
अथ तस्यै सुषेणोऽसौ नीत्वा राजाग्रतो ददौ। धनं शशाङ्कवत्यै तद्यत्तस्या निजसंचितम् ॥ १८४
हेम्नो भारसहस्रे द्वे रत्नाभरणकारणम्। सुभृतान्पञ्च करभान्भाण्डं चान्यद्धिरण्मयम् ॥ १८५

१ अयं श्लोको ब्रोकॉसमुद्रिते पुस्तके त्रुटितोऽस्ति.

उवाच चैतदस्याः स्वं तातानुप्रेषितं तु यत् । विवाहवेद्यामस्यैतत्प्रदास्यामि क्रमादिति ॥ १८६
ततः सर्वेऽपि ते तत्र भुक्तपीता नृपान्तिके । मृगाङ्कदत्तादियुता निन्युस्तन्निर्वृता दिनम् ॥ १८७
प्राप्ते लग्नदिनेऽन्येद्युर्व्यग्रे राज्ञि स्वयं मुदा । मृगाङ्कदत्तः स्नानादि चकारात्मानुरूपतः ॥ १८८
तां शशाङ्कवतीं चात्र कान्त्यैव कृतकौतुकाम् । नार्यः प्रसाधयामासुराचार इति केवलम् ॥ १८९
निर्गत्य कौतुकागारादथ व्यग्रसुषेणतः । हुताशनवतीं वेदीमध्यासातां वधूवरौ ॥ १९०
तस्यां स राजदुहितुस्तस्या राजसुतोऽग्रहीत् । धृताब्जशोभारुचिरं पाणिं लक्ष्म्या इवाच्युतः ॥ १९१
बभौ किमपि तापाच्च धूमाच्चाग्निप्रदक्षिणे । अकोपेऽप्यरुणोद्बाष्पं तच्छशाङ्कवतीमुखम् ॥ १९२
वह्नौ च लाजाञ्जलयो विकीर्णा विबभुस्तया । हासाः प्रयत्नसाफल्यहृष्टस्येव मनोभुवः ॥ १९३
ददौ लाजविसर्गे च सुषेणः प्रथमे तदा । पञ्चाश्वानां सहस्राणि वारणानां शतं तथा ॥ १९४
स्वर्णभारशते द्वे च नवतिं च करेणुकाः । भृताः सद्वस्त्रसद्रत्नमुक्ताभरणभारकैः ॥ १९५
महीविजयजं वित्तं तदेव द्विगुणं क्रमात् । अन्येषु लाजमोक्षेषु प्रादात्तस्याः स सोदरः ॥ १९६

अथोल्लसत्युत्सवतूर्यनिःस्वने विवेश निष्पन्नविवाहमङ्गलः ।
मृगाङ्कदत्तः स नवोढया तया शशाङ्कवत्या सह मन्दिरं निजम् ॥ १९७
पिता च राजास्य यथार्हदत्तैर्हस्त्यश्वरत्नाभरणान्नपानैः ।
आ राजचक्रं शुकशारिकान्तं सोऽरञ्जयत्स्वाः प्रकृतीः सपौराः ॥ १९८
त्यागप्रकर्षश्च तदास्य राज्ञस्तेनैव पर्याप्ततयात्र जज्ञे ।
आबद्धवस्त्राभरणा वितेरुर्द्रुमा महीकल्पतरुभ्रमं यत् ॥ १९९
ततः स राजा समृगाङ्कदत्तः शशाङ्कवत्या सह राजभिश्च ।
भुक्त्वा सुषेणेन च साकमेतमापानगोष्ठ्या दिवसं निनाय ॥ २००
अथ सेवितनृत्तचर्चरीके गृहगे तत्र जने सुभुक्तपीते ।
परिपीतधरारसो गताध्वा रविरस्ताचलकंदरं विवेश ॥ २०१
तमवेक्ष्य च संध्यया समेतं नवरागोज्ज्वलया क्वचित्प्रयातम् ।
विचलत्खगमेखला किलेर्ष्याकुपितेवानुदधाव वासरश्रीः ॥ २०२
ददृशे च विलोलतारकेण प्रबलीभूतमनोभुवा मुखेन ।
विलसत्तिमिरासितांशुकान्ता प्रसृता रात्र्यभिसारिका क्रमेण ॥ २०३
उदयाचलवारणाङ्कुशत्वं नवसिन्दूरसमुज्ज्वलो जगाम ।
उदयन्नथ कुप्यदायताक्षीकुटिलापाङ्गसहोदरः शशाङ्कः ॥ २०४
शशिना कृतकेलिकर्णपूरं रतिवल्लीनवपल्लवेन तेन ।
तमसोऽपगमे धृतप्रसादा हरिदैन्द्री हसदाननं बभार ॥ २०५
कृतसांध्यविधिश्च सोऽपि नक्तं नववध्वा सहितो मृगाङ्कदत्तः ।
प्रविवेश तया शशाङ्कवत्या रजनीवासगृहं महार्हशय्यम् ॥ २०६
मुखचन्द्रमसा तदाङ्गनाया निशि तस्याः प्रविलुप्ततामसेन ।
अवभासितचित्रभित्तिनान्तः पुनरुक्तीकृतसन्मणिप्रदीपम् ॥ २०७
शयनीयगतश्च तत्र तस्याः स्थितवत्याः परिवृत्य सप्रियायाः ।
अहरत्परिरभ्य चुम्बनेन क्रमशश्चाधरखण्डनेन लज्जाम् ॥ २०८
चिरकाङ्क्षितमन्वभूच्च मा मेत्यलमल्पोच्चरदक्षरं स तस्याः ।
नवमोहनमन्त्रसारसौख्यं त्रुटितस्फारमहार्हरत्नकाञ्चि ॥ २०९
अरमत लुलितालकेन चास्या मुखशशिनार्धनिमीलितेक्षणेन ।
श्रमवशशिथिलालसैश्च सोऽङ्गैर्विरलविलुप्तविलेपनै रतान्ते ॥ २१०

अथ तत्परिभोगलीलयेव क्षपिताक्षीयत सा तयोस्त्रियामा।
विकसत्सुरतोत्सवाभिलाषप्रसरा प्रीतिरुपाययौ तु वृद्धिम् ॥ २११

गता निशा संप्रति देव मुच्यतां विलासशय्या सुरतक्लमच्छिदः।
अमी हि चूर्णालककम्पदायिनो मृगीदृशां वान्ति निशान्तवायवः ॥ २१२

चन्द्रं निशायाः सहसानुयान्त्या हारच्युतानीव च मौक्तिकानि।
दूर्वावनाग्रेष्ववपिण्डितानि स्फुरन्ति सच्छायमुषोजलानि ॥ २१३

कोषेषु व्यलसन्निपीतमधवो ये कैरवाणां चिरं
लब्धाभ्यन्तरसुस्थिता विकसतामिन्दुप्रभासंगमे।
ते संकोचमुपागतेषु विगलच्छ्रीकेषु तेष्वन्यतो
भृङ्गाः पश्य कुमार यान्ति मलिनाः कस्य स्थिरा ह्यापदि ॥ २१४

दिनकृत्करमण्डिताधरामवलोक्यैव निशां मनोभुवा।
अपशशितिलकं वपुः कृतं मथितात्पालपतमोञ्जनं तथा ॥ २१५

इति मृदुमधुरैः स बन्दिवाक्यैरुषसि शशाङ्कवतीविमुक्तकण्ठः।
अपगतसुरतान्तखेदनिद्रः सपदि जहौ शयनं मृगाङ्कदत्तः ॥ २१६

उत्थाय च व्यधित वासरकृत्यमेष पित्रा निजोचितकृताखिलसंविधानः।
भूयस्तथैव च निनाय तदा बहूनि तान्युत्सवेन दयितासहितो दिनानि ॥ २१७

अथ राजामरदत्तस्तज्जनकस्तच्छ्वशुर्यस्य।
शिरसि सुषेणस्यादौ बबन्ध पट्टं कृताभिषेकस्य ॥ २१८

विषयं तदुचितमेकं हस्त्यश्वहिरण्यभारवस्त्राणि।
शतसंख्याश्च वरस्त्रीर्ददौ स तस्मै कृतादरो नृपतिः ॥ २१९

शबरकिराताधिपती मायाबटुशक्तिरक्षितौ च ततः।
सहबान्धवौ सदारौ मातङ्गचमूपतिं च तं स नृपम् ॥ २२०

दुर्गपिशाचं सचिवान्मृगाङ्कदत्तस्य तांश्च सश्वशुरवीन्।
सममानयत्प्रदत्तैर्विषयैर्गोवाजिहेमवस्त्रैश्च ॥ २२१

ततः किरातेन्द्रमुखान्विसृज्य तान्नृपान्स्वदेशेषु सुषेणसंयुतान्।
शशास राज्यं सुतशौर्यनिर्वृतः स तत्सुखेनामरदत्तभूपतिः ॥ २२२

मृगाङ्कदत्तोऽपि विजित्य वैरिणः शशाङ्कवत्या सुचिरादवाप्तया।
निजैश्च तैर्भीमपराक्रमादिभिः सहावतस्थे सचिवैश्चिरं सुखी ॥ २२३

कालेऽथ यात्यमरदत्तनृपस्य तस्य स्वैरं जरा श्रवणमूलमुपाजगाम।
भुक्ताः श्रियः परिणतं वयसा शमस्य नन्वेष काल इति वक्तुमिवाङ्गभूता ॥ २२४

ततः स भोगेषु विरक्तमानसो महीपतिः स्वान्निजगाद मन्त्रिणः।
निशम्यतां संप्रति वर्णयामि वो विधित्सितं यन्मम वर्तते हृदि ॥ २२५

गतं वयो नः पलितेन सांप्रतं कृतान्तदूतेन कचग्रहः कृतः।
जरागमे जीर्णरसं च मादृशां कुभोगतृष्णाव्यसनं विडम्बना ॥ २२६

विवृद्धिभाजा वयसा समं यद्विवर्धते लोभमनोभवग्रहः।
असंशयं कापुरुषव्रतं हि तत्स्वभावजं सत्पुरुषैरशिक्षितम् ॥ २२७

तदस्ति मे लब्धयशा महीतले सराजकावन्तिनरेन्द्रनिर्जयात्।
स्वतोऽनुरक्तप्रकृतिर्गुणाधिको मृगाङ्कदत्तः सुसहायवानयम् ॥ २२८

तदेतदस्मै निजराज्यमूर्जितं समर्प्य तीर्थं तपसेऽहमाश्रये ।
परैरनिन्द्यं चरितं मनस्विनां वयोनुसारोचितमेव शोभते ॥ २२९

इति क्षितीशस्य वचः सुनिश्चितं निशम्य धीराः किल तस्य मन्त्रिणः ।
क्रमेण देवीप्रमुखाश्च पौरास्तथेति सर्वे प्रतिपेदिरे तदा ॥ २३०

ततः स राजा गणकोक्तलग्ने दिने विविक्ते सहितो द्विजाग्र्यैः ।
मृगाङ्कदत्तस्य चकार तस्य राज्याभिषेकोत्सवमात्मजस्य ॥ २३१

इतस्ततः क्षत्तृनिदेशधावज्जनाकुलं व्यग्रनियुक्तवर्गम् ।
तदास्य नृत्यद्वरचारणस्त्रि मुदा जुघूर्णेव गृहं नृपस्य ॥ २३२

तीर्थोदकं भूरि सभार्यकस्य मृगाङ्कदत्तस्य पपात मूर्ध्नि ।
जलप्रवाहाः पुनरस्य पित्रोः सानन्दयोर्नेत्रयुगान्निरीयुः ॥ २३३

अधिष्ठिते तेन नवेन राज्ञा सिंहासने सिंहपराक्रमेण ।
तद्विद्विषां कोपभयानतानां भूमावसिंहासनमेव मेने ॥ २३४

ततः पिता तस्य दिनानि सप्त ततान सज्जीकृतराजमार्गम् ।
यथार्हसंमानितराजलोकं महोत्सवं सोऽमरदत्तभूपः ॥ २३५

दिनेऽष्टमे दारयुतो नगर्या निर्गत्य पुत्रं स मृगाङ्कदत्तम् ।
निवर्त्य तं बाष्पमुखं सपौरं वाराणसीं मन्त्रिसखो जगाम ॥ २३६

तस्यां स गङ्गाम्बुपरिप्लुताङ्गो राजा त्रिसंध्यं त्रिपुरान्तकस्य ।
कुर्वन्सपर्यां फलमूलवृत्तिस्तस्थौ तपस्यन्मुनिवत्सदारः ॥ २३७

आसाद्य राज्यमथ सोऽपि मृगाङ्कदत्तो भास्वानिवाम्बरतलं विपुलामलं तत् ।
आक्रम्य च क्षितिभृतः करसंनिपातैः प्रावर्तत प्रतपितुं प्रसरत्प्रतापः ॥ २३८

मायाबटुप्रभृतिभिश्च सकर्मसेनैः संभूय सश्रुतधिभिः सचिवैः स तैः स्वैः ।
सद्वीपमेतदवजित्य चतुर्दिगन्तमेकातपत्रमवनीवलयं शशास ॥ २३९

तस्मिंश्च राजनि कथासु निशम्यमानदुर्भिक्षदस्युपरचक्रभयादिदुःखा ।
नित्यप्रहृष्टसुखिता नवरामभद्रसौराज्यसौख्यमसमं वसुधा बभार ॥ २४०

अध्यास्य तैश्च सचिवैः सह तामयोध्यां नानादिगागतनृपार्चितपादपद्मः ।
सम्राट् समं दयितया स शशाङ्कवत्या भोगानकण्टकसुखान्बुभुजे चिराय ॥ २४१

इति स व्याख्याय कथां मलयवनान्ते मुनिः पिशङ्गजटः ॥
तं नरवाहनदत्तं राजसुतं विरहिणं जगदे ॥ २४२

तस्मात्सोढक्लेशो मृगाङ्कदत्तो यथा शशाङ्कवतीम् ।
प्राप पुरा पुत्र तथा प्राप्स्यसि तां मदनमञ्चुकां त्वमपि ॥ २४३

इति तस्मात्स मुनीन्द्रादाकर्ण्य वचोमृतं पिशङ्गजटात् ।
हृदि नरवाहनदत्तो धृतिमाधान्मदनमञ्चुकाप्राप्तौ ॥ २४४

सद्गतचित्तोऽथ स तं मुनिवरमामन्त्र्य हारितां पूर्वम् ।
तत्रानेत्रीं चिन्वन्मलयगिरौ ललितलोचनां व्यचरत् ॥ २४५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षट्त्रिंशस्तरङ्गः ।

**समाप्तश्चायं शशाङ्कवतीलम्बको द्वादशः ।**

---

॥ श्रीः ॥

## महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

### मदिरावती नाम त्रयोदशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

स वो विघ्नेश्वरः पायान्नमितोन्नमितेव यम् । अनुनृत्यति नृत्यन्तं संध्यासु भुवनावली ॥ १

गौरीप्रसाधनालग्नचरणालक्तकश्रियः । सखी सुखाय भूयाद्वः शंभोर्भालेक्षणप्रभा ॥ २

कवीन्द्रमानसाम्भोजनिवासभ्रमरीं नुमः । देवीं सहृदयानन्दशब्दमूर्तिं सरस्वतीम् ॥ ३

ततो विरहसंतप्तो विना मदनमञ्चुकाम् । नरवाहनदत्तः स तेषु वत्सेश्वरात्मजः ॥ ४

मलयाचलपादेषु तदुपान्तवनेषु च । भ्रमन्मधुमनोज्ञेषु नैव प्राप रतिं क्वचित् ॥ ५

बिभेद तस्य मृदुरप्यापतद्भिः शिलीमुखैः । स्मरचापलतेवात्र हृदयं चूतमञ्जरी ॥ ६

कर्णौ मधुरमप्यस्य दुनोति स्म च दुःसहम् । मारनिर्भर्त्सनावाक्यकटु कोकिलकूजितम् ॥ ७

पुष्परेणुपिशङ्गश्च मदनाग्निरिवापतन् । विददाह तमङ्गेषु शीतोऽपि मलयानिलः ॥ ८

ततोऽलिकुलझांकारमुखरैस्तैः स काननैः । निष्कास्यमान इव तं प्रदेशं शनकैर्जहौ ॥ ९

गच्छन्क्रमेण च प्राप कथंचिद्देवतासखः । गङ्गागामिपथाभ्यर्णवनान्तसरसस्तटम् ॥ १०

तरुमूलोपविष्टौ च तत्र ब्राह्मणपुत्रकौ । उभौ भव्याकृती स्वैरं कथासक्तौ ददर्श सः ॥ ११

तौ च दृष्ट्वा तमुत्थाय प्रह्वौ मदनशङ्कया । अवोचतां नमस्तुभ्यं भगवन्कुसुमायुध ॥ १२

ब्रूहि देव किमेकाकी त्यक्तकौसुमकार्मुकः । इतो भ्रमसि सा कुत्र रतिः सहचरी तव ॥ १३

तच्छ्रुत्वा तौ स वत्सेशसुतो विप्रावभाषत । नाहं कामो मनुष्योऽहं नष्टा सत्यं तु मे रतिः ॥ १४

इत्युक्त्वाख्यातवृत्तान्तस्तौ विप्रौ पृष्टवान्नृपः । कौ युवां कीदृशी चैषा कथात्र युवयोरिति ॥ १५

ततस्तयोर्विप्रयूनोरेकस्तं विनतोऽब्रवीत् । राज्ञां भवादृशामग्रे रहस्यं कथमुच्यते ॥ १६

तथाप्याज्ञानिरोधात्ते कथयामि निशम्यताम् । अस्ति शोभावती नाम कलिङ्गविषये पुरी ॥ १७

कलिना न प्रविष्टा सा न स्पृष्टा पापकर्मभिः । न दृष्टा परराष्ट्रेण धात्रा सृष्टेव तादृशी ॥ १८

तस्यां यशस्करो नाम विद्वानाढ्यो बहुक्रतुः । ब्राह्मणोऽभूदभूत्तस्य सत्पत्नी मेखलेति च ॥ १९

तयोरेकोऽहमुत्पन्नः सुतो वयसि मध्यमे । वर्धितश्चोपनीतश्च ताभ्यामस्मि ततः क्रमात् ॥ २०

ततः पठत्यध्ययनं बाले मय्यतिदुस्तरम् । तत्रावृष्टिकृतं देशे दुर्भिक्षमुदपद्यत ॥ २१

तेन तातोऽम्बया साकं मामादाय ततो गतः । विशालां नाम नगरीं सधनः सपरिच्छदः ॥ २२

तस्यां लक्ष्मीसरस्वत्योर्वसतौ मुक्तवैरयोः । ततो मित्रेण वणिजा दत्तवासः स्थितिं व्यधात् ॥ २३

---

१ इयमेव कथा मालतीमाधवप्रकरणस्य मूलभूता.

अहं च विद्याधिगमं कुर्वाणो गुरुवेश्मनि । तत्रावसं सवयसां मध्ये सब्रह्मचारिणाम् ॥ २४
एकश्च तेषु मे मित्रमभूत्क्षत्रकुमारकः । गुणी विजयसेनाख्यो महाढ्यक्षत्रियात्मजः ॥ २५
एकदास्मदुपाध्यायगृहं मित्रस्य तस्य मे । स्वसा कुमारी मदिरावती नाम सहागमत् ॥ २६
यस्या वदनलावण्यशेषेण हिमदीधितेः । जननेत्रामृतं जाने विम्बं धात्रा विनिर्मितम् ॥ २७
जगत्संमोहनं पष्ठमस्त्रमालोक्य तद्वपुः । पञ्चस्वन्येषु बाणेषु मन्ये मन्दादरः स्मरः ॥ २८
तां दृष्ट्वा सुहृदस्तस्माच्छ्रुतनामान्वयामहम् । स्मराज्ञाविवशोऽभूवं सद्यस्तन्मयमानसः ॥ २९
पश्यन्ती सापि मां तिर्यक्स्निग्धमुग्धेन चक्षुषा । ब्रुवाणाङ्कुरितं प्रेम पुलकेन कपालयोः ॥ ३०
क्रीडानिभाच्चिरं स्थित्वा कथंचित्स्वगृहानगात् । क्षिपन्ती वलितापाङ्गां प्रीतिदूतीं दृशं मयि ॥ ३१
ततस्तद्विरहार्तोऽहं गृहं गत्वा निपत्य च । स्थले मत्स्य इवाकार्षमुद्वर्तनविवर्तने ॥ ३२
लावण्यामृतसर्वस्वनिधानं यत्प्रजापतेः । अपि भूयोऽपि तत्तस्याः पश्येयमहमाननम् ॥ ३३
धन्यः सखीजनो यं सा तेन स्मेरेण पश्यति । चक्षुषा तेन च मुखेनालपत्यपयन्त्रणम् ॥ ३४
इत्यादि चिन्तयन्कृच्छ्रादहोरात्रं व्यतीत्य तम् । तदुपाध्यायसदनं द्वितीयेऽहन्यहं गतः ॥ ३५
तत्रोपेत्य सविस्रम्भकथामध्ये स सादरः । सुहृद्विजयसेनो मां सप्रहर्षोऽब्रवीदिदम् ॥ ३६
स्वसुर्मे मदिरावत्या मुखान्मन्मित्रमीदृशम् । श्रुत्वा त्वां मामकी माता सस्नेहा द्रष्टुमिच्छति ॥ ३७
तदेह्यस्मद्गृहं साकं मया स्नेहोऽस्ति चेन्मयि । त्वत्पादपद्मरजसा तद्विभूषितमस्तु नः ॥ ३८
एतत्तद्वचनं सद्यो निर्वापणमभून्मम । मरुभूम्यध्वगस्येव महद्वर्षमशङ्कितम् ॥ ३९
तथेति तद्गृहं गत्वा दृष्ट्वा तन्मातरं ततः । तत्सत्कृतोऽहं तत्रासं प्रियादर्शननिर्वृतः ॥ ४०
गते विजयसेनेऽथ पित्राहूते मदन्तिकात् । मामेत्य मदिरावत्या धात्रेयी प्रणतावदत् ॥ ४१
भर्तृदारिकयास्माकमुद्याने भर्तृदारक । विवृद्धिं मदिरावत्या नीता या मालतीलता ॥ ४२
नूतनो वर्तते तस्याः खलु पुष्पभरोद्गमः । मधुसंगमसानन्दविलासहसितोज्वलः ॥ ४३
विषह्यापतितांस्तस्याः कुसुमेषुशिलीमुखान् । मुकुलान्युच्चितान्यद्य भर्तृदारिकया स्वयम् ॥ ४४
मौक्तिकैरिव तैरेषा विधायैकावली तया । प्रहिता ते नवं वस्तु पूर्वं प्रेष्ठाय दीयते ॥ ४५
इत्युक्त्वा सार्पिता मह्यं माला चतुरया तया । सपञ्चफलकर्पूरैर्नागवल्लीदलैर्युता ॥ ४६
प्रियास्वहस्तरचितां कण्ठे कृत्वा च तामहम् । सुखं किमपि संप्रापं तत्तदालिङ्गनाधिकम् ॥ ४७
मुखे कृत्वा च ताम्बूलं तामवोचं प्रियासखीम् । किं ब्रवीम्यधिकं भद्रे हृदि कामो ममेदृशः ॥ ४८
त्यजेयं जीवितमिदं त्वद्वयस्याकृते यदि । तदेव मे जन्मफलं सा हि प्राणेषु मे प्रभुः ॥ ४९
इत्युक्त्वा तां विसृज्याहमुपाध्यायगृहानगाम् । समं विजयसेनेन समायातेन तत्क्षणम् ॥ ५०
अन्येद्युर्मदिरावत्या सहितोऽस्मद्गृहं च सः । अगाद्विजयसेनोऽत्र मत्पित्रोर्दत्तसंमदः ॥ ५१
तदेवं मदिरावत्या मम चैकनिवासतः । गूढ एव गतो वृद्धिमनुरागोऽनुवासरम् ॥ ५२
एकदा मदिरावत्या दासी मामब्रवीद्रहः । शृणु यत्ते महाभाग वच्मि चित्ते तथा कुरु ॥ ५३
यतः प्रभृति दृष्टस्त्वं तत्रोपाध्यायवेश्मनि । वत्सया मदिरावत्या ततः प्रभृति सा किल ॥ ५४
अभिनन्दति नाहारं न तनोति प्रसाधनम् । रमते न च संगीते न क्रीडति शुकादिभिः ॥ ५५
कदलीपत्रपवनैः श्रीखण्डार्द्रविलेपनैः । तप्यते चन्द्रपादैश्च तुषारशिशिरैरपि ॥ ५६
कृष्णपक्षेन्दुलेखेव क्षामीभवति सान्वहम् । निर्वाति युष्मत्कथया केवलं क्रियमाणया ॥ ५७
एतन्मे स्वदुहित्रोक्तं तस्याः सर्वक्रियाविदा । या छायेव न तत्पार्श्वात्क्षणमप्यपसर्पति ॥ ५८
पुनर्नीत्वा च विस्रम्भं सा स्वयं मदिरावती । पृष्टा मया तया प्रोक्तं स्वं मनस्त्वद्गतं मम ॥ ५९
तदिदानीं यथा तस्याः फलेदेव मनोरथः'। तथा सुभग कुर्वीथा जीवन्तीं तां यदीच्छसि ॥ ६०

१ इयमेव मालती. २ 'महाभाग—तस्या' अभिनवो विचित्रः कुसुमेषुव्यापारः' इत्यादि मालतीमाधवप्रथमेऽङ्केऽपि मालतीधात्रेयिकाया लवङ्गिकायाः श्लिष्टं वाक्यमस्ति.

इति वाक्सुधया तस्या दत्तानन्दोऽहमभ्यधाम्। युष्मदायत्तमेवैतत्स्वाधीनोऽयं जनस्तव ॥ ६१
एतच्छ्रुत्वा प्रहृष्टा सा ततो याता यथागतम्। तत्प्रत्ययाच्च जातास्थो निर्वृतोऽहमगां गृहम् ॥ ६२
अन्येद्युस्तां च मदिरावतीं पितुरयाचत। उज्जयिन्याः समायातो महान्क्षत्रियपुत्रकः ॥ ६३
तत्पिता च सुतां तस्मै प्रदातुं प्रत्यपद्यत। तच्चाहं तत्परिजनाच्छ्रुतवाञ्श्रोत्रदारुणम् ॥ ६४
ततः स्वर्गादिव भ्रष्टो वज्रेणेव समाहतः। आक्रान्त इव भूतेन मोहं प्रापमहं चिरम् ॥ ६५
आश्वस्याचिन्तयं चाहं वैक्लव्येनाधुनैव किम्। पश्यामि तावत्पर्यन्तं प्राप्नोतीष्टमविक्लवः ॥ ६६
इत्याशयाहं दिवसान्यावत्कांश्चिन्नयामि तान्। प्रियासखीभिरागत्य धार्यमाणस्तदुक्तिभिः ॥ ६७
लग्नोऽत्र निश्चितस्तावदभ्यक्ता मदिरावती। प्राप्तश्चोद्वाहदिवसस्तस्याः प्रविततोत्सवः ॥ ६८
स्वेच्छासंचाररुद्धायां तस्यां तत्पितृवेश्मनि। जन्ययात्राप्रवेशोऽभूदासन्नस्तूर्यनादितैः ॥ ६९
तद्दृष्ट्वा तन्निराशोऽहं कष्टं जीवितवैशसम्। कलयन्मन्यमानश्च विरहान्मरणं सुखम् ॥ ७०
गत्वा च नगरीबाह्यमारुह्य वटपादपम्। पाशं व्यरचयं तेन पाशेनानोकहात्ततः ॥ ७१
प्रियाप्राप्तिमनोराज्यमात्मानं चात्यजं समम्। क्षणाच्चापश्यमात्मानं नष्टां संप्राप्य चेतनाम् ॥ ७२
यूनः पतितमुत्सङ्गे छिन्नपाशस्य कस्यचित्। अनेन नूनं त्रातोऽहमिति मत्वाब्रवं च तम् ॥ ७३
महासत्त्व त्वया तावद्दर्शितैव दयालुता। किं तु मे विरहार्तस्य मृत्युरिष्टो न जीवितम् ॥ ७४
चन्द्रोऽग्निर्विषमाहारो गीतानि श्रुतिसूचयः। उद्यानं बन्धनं पौष्पी माला दिग्धा शरावली ॥ ७५
ज्वलिताङ्गारवर्षं च चन्दनाद्यनुलेपनम्।[1]································· ॥ ७६
येषां मित्र विपर्यस्तं संसारे विधुरात्मनाम्। जीविते को रसस्तेषां मादृशां विप्रयोगिनाम् ॥ ७७
इत्युक्त्वावर्णयं चास्मै तमहं कृच्छ्रबन्धवे। पृष्टोदन्ताय मदिरावतीवृत्तान्तविस्तरम् ॥ ७८
ततोऽब्रवीत्स साधुर्मां किं प्राज्ञोऽपि विमुह्यसि। सर्वं यस्य कृते तेन किं त्यक्तेनात्मना फलम् ॥ ७९
आत्मीयमत्र वृत्तान्तं शृण्विमं कथयामि ते। अस्तीह निषधो नाम देशो हिमवदाश्रयः ॥ ८०
कलिविद्रावितस्यैको यो धर्मस्य समाश्रयः। जन्मक्षेत्रं च सत्यस्य गृहं कृतयुगस्य च ॥ ८१
अतृप्तिर्यत्र लोकस्य श्रुते न त्वर्थसंचये। संतोषश्च स्वदारेषु नोपकारेषु सर्वदा ॥ ८२
तत्र शीलश्रुताढ्यस्य ब्राह्मणस्याहमात्मजः। सोऽहं देशान्तरालोककौतुकान्निर्गतो गृहात् ॥ ८३
भ्रमन्देशानुपाध्यायान्पश्यन्प्राप्तोऽस्मि च क्रमात्। सखे शङ्खपुरं नाम नातिदूरमितः पुरम् ॥ ८४
शङ्खपालस्य यत्रास्ति नागराजस्य पावनम्। शङ्खह्रद इति ख्यातं स्वच्छतोयं महत्सरः ॥ ८५
तत्रोपाध्यायसदने वसंस्तदहमेकदा। स्नानयात्रोत्सवेऽगच्छं द्रष्टुं शङ्खह्रदं सरः ॥ ८६
असंख्यैः पूरिततटं नानादेशागतैर्जनैः। सुरासुरैरिवाम्भोधिं क्षोभ्यमाणं समन्ततः ॥ ८७
वधूनां श्लथधम्मिल्लविस्रस्तकुसुमस्रजाम्। वीचिहस्तैः परामृष्टजघनस्तनमण्डलम् ॥ ८८
आश्लिष्यापहृतेनाङ्गरागेणापिञ्जरीकृतम्। महाह्रदं तमद्राक्षं तन्वानं कामुकायितम् ॥ ८९
तस्य दक्षिणतो गत्वा तरुखण्डं व्यलोकयम्। सधूममिव तापिच्छैः साङ्गारमिव किंशुकैः ॥ ९०
सज्वालमिव चोत्फुल्ललोहिताशोकवल्लिभिः। हरनेत्रानलप्लुष्टं देहं रतिपतेरिव ॥ ९१
तत्रातिमुक्तकलतामण्डपद्वारि कुर्वतीम्। कुसुमावचयं कांचिदपश्यं कन्यकामहम् ॥ ९२
लीलाकटाक्षविक्षेपतर्जितश्रवणोत्पलाम्। उत्क्षिप्तबाहुलतिकालक्षितैकपयोधराम् ॥ ९३
वहन्तीं कबरीपाशं पृष्ठतः परिमोचितम्। वदनेन्दुभयेनेव तिमिरं शरणागतम् ॥ ९४
नूनं रम्भादिनिर्माणसिद्धहस्तेन वेधसा। सृष्टा साक्ष्णोर्निमेषेण विज्ञेया मानुषीति या ॥ ९५
सा च दृष्टा प्रविष्टैव हृदयं मे मृगेक्षणा। हस्तभल्लीव मारस्य जगत्त्रितयमोहिनी ॥ ९६
सापि मामवलोक्यैव सद्यः स्मरवशाभवत्। विमुच्य पुष्पावचयक्रीडां प्रेमविहस्तिता ॥ ९७

१ मालतीमाधवे त्वेतद्वृत्तान्तस्थाने माधवस्य श्मशाने गमनं तत्राघोरघण्टादिसमागमश्च वर्णितः तत्सर्वमपि लावाणकलम्बकचतुर्थतरङ्गस्थविदूषककथातः समुद्धृतं भवभूतिना. २ पुस्तकान्तरेऽस्माच्छ्लोकादग्रे एकश्लोकस्य त्रुटिचिह्नमस्ति.

चलद्धारलतामध्यपद्मरागप्रभोद्गमैः । अनुरागमिवोद्भिन्नं भरेण हृदयाद्बहिः ॥ ९८
दर्शयन्ती परावृत्य तनुं मुहुरवैक्षत । सा मामपाङ्गविश्रान्ततारकान्तेन चक्षुषा ॥ ९९
एवं यावत्स्थितावावामन्योन्यालोकिनौ क्षणम् । तावत्तत्रोदभूद्भग्नजनहाहारवो महान् ॥ १००
आगाद्वन्येभगन्धान्धो धावन्दलितशृङ्खलः । मत्तहस्ती धुतारोहकर्णान्तलुलिताङ्कुशः ॥ १०१
तं दृष्ट्वैव प्रधाव्याहं वित्रस्तां विद्रुतानुगाम् । जनमध्यमनैषं तामुत्सङ्गारोपितां प्रियाम् ॥ १०२
समाश्वसिति यावत्सा तत्रागतपरिच्छदा । तावज्जनरवाकृष्टस्तत्रैवागात्स वारणः ॥ १०३
तद्भयाद्विद्रवद्भूरिजनमध्यतिरोहिता । अनुगैः साम्यतः कापि नीताहं च गतोऽन्यतः ॥ १०४
ततो गजभये शान्ते चिन्वानस्तां सुमध्यमाम् । यन्नावापमविज्ञातनामान्वयनिकेतनाम् ॥ १०५
तच्छून्यचित्तो विभ्रष्टविद्यो विद्याधरो यथा । भ्रमन्नुपाध्यायगृहं कथमप्यहमाप्तवान् ॥ १०६
तत्र संमूर्च्छित इव प्रध्वस्त इव चाभवम् । तत्प्रेमभङ्गसोत्कम्पस्तदाश्लेषसुखं स्मरन् ॥ १०७
क्रमाच्च सुस्त्रीसुलभादार्द्रभावाश्रयादिव । निपातितोऽहमुत्सङ्गे चिन्तया दर्शिताशया ॥ १०८
अश्रुत्या च परामृष्टो हृदये व्यथितात्मना । उत्तमाङ्गे गृहीतश्च शिरोर्त्यात्यन्तवृद्धया ॥ १०९
तावच्च धैर्येण समं तन्मे विगलितं दिनम् । संकोचमागतं पद्मवनं सह मुखेन मे ॥ ११०
मनोरथैर्मदीयैश्च साकं विघटितान्यथ । रथाङ्गनाम्नां मिथुनान्यस्तं याते विवस्वति ॥ १११
ततः स्मरस्यैकसुहृत्सुखिनां नयनोत्सवः । उदगच्छन्निशानाथः प्राचीमुखविशेषकः ॥ ११२
तेन ज्वलद्भिरिव मे करैरपि सुधामयैः । आशाप्रकाशकेनापि जीविताशां न्यमील्यत ॥ ११३
अथ ज्योत्स्नानलक्षिप्तशरीरं मृत्युकाङ्क्षिणम् । एकोऽब्रवीत्सहाध्यायी विधुरं वीक्ष्य तत्र माम् ॥ ११४
किमेवं दुःखितोऽस्यद्य व्याधिस्तव न दृश्यते । अर्थकामकृतस्त्वाधिर्यदि तद्वच्मि ते शृणु ॥ ११५
अतिगर्धेन ये ह्यर्था वञ्चयित्वा परं च ये । अपहृत्य परेषां वा वाञ्छ्यन्ते नैव ते स्थिराः ॥ ११६
पापमूला यतः पापफलभारं प्रसूय ते । तद्भरेणैव भज्यन्ते शीघ्रं धनविषद्रुमाः ॥ ११७
अर्जनादिपरिक्लेशः केवलं तैर्धनैरिह । अमुत्र दुःखमाचन्द्रतारकं नारकं महत् ॥ ११८
कामोऽप्यप्राप्य नष्टो यः सा प्राणान्तविडम्बना । यश्चाधर्मोऽग्रदूतः स निरयाग्रेर्मुखप्रियः ॥ ११९
न्याय्यौ तु पूर्वसुकृतैर्धीधैर्योत्साहवान्पुमान् । अर्थकामाववाप्नोति न तु क्लीबो भवादृशः ॥ १२०
तद्भद्र धैर्यमालम्ब्य यतस्वाभीष्टसिद्धये । इत्युक्तस्तेन सख्याहं नादां यत्किंचिदुत्तरम् ॥ १२१
निगूह्याशयमाश्रित्य धैर्यं नीत्वा निशां क्रमात् । इहागतोऽहं सा नाम मास्यां पुरि वसेदिति ॥ १२२
अत्र प्राप्तेन दृष्टस्त्वं पाशार्पितगलो मया । पाशोत्तीर्णाच्छ्रुतं त्वत्तस्त्वद्दुःखं स्वं च वर्णितम् ॥ १२३
तदविज्ञातनामादेरपि तस्याः कृते सखे । सुतनोराश्रितोद्योगः पौरुषागोचरेऽप्यहम् ॥ १२४
अतस्त्वं मदिरावत्याः स्थिताया अपि गोचरे । प्राप्तौ पुरुषकारादि मुक्त्वा क्लीबायसे कथम् ॥ १२५
न श्रुतः पूर्ववृत्तान्तः किं त्वया रुक्मिणीगतः । दत्तापि चेदिपतये हृता सा हरिणा न किम् ॥ १२६
इति ब्रुवति मित्रे मे तस्मिन्नातोद्यमङ्गलैः । अग्रतस्तत एवागात्सानुगा मदिरावती ॥ १२७
मातृदेवकुलेऽमुष्मिन्कामपूजार्थमागताः । अत्र स्थिताः कामदेवं विवाहेऽर्चन्ति कन्यकाः ॥ १२८
अत एवैतदग्रेऽस्मिन्वटे पाशो मयार्पितः । इहागता सा तदर्थं मृतं पश्यतु मामिति ॥ १२९
एतच्छ्रुत्वैव स सुहृद्धीरो मामब्रवीद्द्विजः । तर्हि देवकुलेऽत्रैव प्रविश्याभ्यन्तरे द्रुतम् ॥ १३०
मातॄणां पृष्ठतश्छन्नावेहि सांप्रतमास्वहे । पश्यावः किमुपायोऽत्र कश्चित्स्यादावयोर्न वा ॥ १३१
एवमुक्तवता तेन सख्या साकं तथेत्यहम् । गत्वा देवकुलं तत्र तथैवासमलक्षितः ॥ १३२
ततः परिणयोद्गीतमङ्गलागत्य सा शनैः । प्राविशत्तत्र मदिरावती देवकुलान्तरे ॥ १३३
एकाकिन्येव याचिष्ये वरं कंचिन्मनोगतम् । कामदेवाद्भगवतस्तद्बहिर्भवताखिलाः ॥ १३४
इति सर्वा बहिष्कृत्वा सखीरनुचरैः सह । एकैव कामदेवं तमर्चयित्वा व्यजिज्ञपत् ॥ १३५
मनोभवेनापि सता त्वया देव कथं न मे । मनोगतः प्रियो ज्ञातो विप्रलब्धा हतास्मि किम् ॥ १३६

नास्मिञ्जन्मनि भूतश्चेत्त्वं वराय क्षमो मम। जन्मान्तरेऽपि तत्कुर्याः कृपां रतिपते मयि ॥ १३७
तथा प्रसादं कुर्वीथा यथा देहान्तरेऽपि मे। स एव भर्ता सुभगो भवेद्विप्रकुमारकः ॥ १३८
इत्युक्त्वा सावयोर्बाला पश्यतोः शृण्वतोरपि। शङ्कौ कृत्वोत्तरीयेण पाशं कण्ठे न्यवेशयत् ॥ १३९
उपेत्य दर्शयात्मानमस्याः पाशं गलाद्धर। इत्युक्तस्तेन सख्याहमुपासर्पं तदैव ताम् ॥ १४०
मा प्रिये साहसं पश्य सैष प्राणपणार्जितः। आर्तिकालोक्तसहजस्नेहो दासोऽमतस्तव ॥ १४१
इत्यहं व्याहरन्हर्षभरगद्गदया गिरा। सुतनोस्त्वरितं तस्याः पाशं कण्ठादपाहरम् ॥ १४२
ततो मां वीक्ष्य सहसा यावत्सानन्दसाध्वसा। क्षणं तिष्ठति सा तावत्सोऽब्रवीन्मां द्रुतं सुहृत् ॥ १४३
दिनक्षयाप्रकाशेऽस्मिन्काले निर्गत्य याम्यहम्। वेषेण मदिरावत्या एतत्परिजनैः सह ॥ १४४
आवयोरुत्तरीयाभ्यां संवीतां त्वमिमां वधूम्। आदायागच्छ निर्गत्य द्वितीयद्वारवर्त्मना ॥ १४५
याहि देशान्तरं रात्रौ यथाकाममलक्षितः। मच्चिन्तां मा कृथा दैवं शिवं मम विधास्यति ॥ १४६
इत्युक्त्वोपात्तमदिरावतीवेषः सुहृत्स मे। निर्गत्यैव ततः प्रायान्नक्तं तदनुगैर्वृतः ॥ १४७
अहं च मदिरावत्यानर्घरत्नस्रजा समम्। द्वारेणान्येन निष्क्रम्य रात्र्या यातोऽस्मि योजनम् ॥ १४८
प्रातर्निर्वर्तिताहारः क्रमाद्गच्छन्दिनैरहम्। प्राप्तोऽचलपुरं नाम नगरं दयितासखः ॥ १४९
मित्रीभूय गृहे दत्ते तत्रैकेन द्विजन्मना। परिणीता मया सात्र सत्वरं मदिरावती ॥ १५०
ततोऽत्र वसतः सिद्धयथेष्टसुखितस्य मे। किं स्यान्मित्रस्य मे वृत्तं तस्येत्येषाभवद्व्यथा ॥ १५१
तदनन्तरमेषोऽद्य दृष्टोऽकारणबान्धवः। मयेह गङ्गास्नानार्थमागतेनोत्तरायणे ॥ १५२
चिरं चैतं सवैलक्ष्यमिवाश्लिष्योपविश्य च। यावत्पृच्छामि वृत्तान्तं तावद्देव इहागतः ॥ १५३
तमेतमपरं विद्धि प्राणदारप्रदं मम। कृच्छ्रैकमित्रं पार्श्वस्थं विप्रं वत्सेशनन्दन ॥ १५४
इति तेन यथावृत्ते विप्रेणैकेन वर्णिते। नरवाहनदत्तस्तमपृच्छदपरं द्विजम् ॥ १५५
तुष्टिर्मे ब्रूहि मुक्तस्त्वं तादृशात्संकटात्कथम्। मित्रार्थागणितप्राणा दुर्लभा हि भवादृशाः ॥ १५६
एतत्तस्य वचः श्रुत्वा वत्सराजसुतस्य सः। द्वितीयोऽपि स्ववृत्तान्तं विप्रो वक्तुं प्रचक्रमे ॥ १५७
तदा ततो मां मदिरावतीवेषं विनिर्गतम्। देवागारात्तदनुगास्तद्बुद्ध्या पर्यवारयन् ॥ १५८
आरोप्य शिबिकां तैश्च नृत्यवाद्यमदाकुलैः। नीतोऽस्मि सोमदत्तस्य भवनं विभवान्वितम् ॥ १५९
कचित्सद्वस्त्रभाराढ्यं संभृताभरणं कचित्। कचिन्निष्पन्नपक्वान्नं कचित्सज्जितवेदिकम् ॥ १६०
कचित्प्रगीतदासीकं कचिच्चारणसंकुलम्। लग्नवेलाप्रतीक्षैश्च कचिदध्यासितं द्विजैः ॥ १६१
तत्रैकस्मिन्गृहे पानक्षीबैः परिजनैरहम्। कृतावगुण्ठनो नक्तं वधूबुद्ध्या प्रवेशितः ॥ १६२
उपविष्टं च मां तत्र वनिताः पर्यवारयन्। विवाहोत्सवसानन्दनानाचेष्टासमाकुलाः ॥ १६३
क्षणाद्द्वारोपकण्ठे च मेखलानूपुरारवः। अश्रावि प्राविशच्चात्र कन्यैका ससखीजना ॥ १६४
नागीव विस्फुरद्रत्नमूर्धा धवलकञ्चुका। अब्धिवीचीव लावण्यपूर्णा मुक्तावलीचिता ॥ १६५
उद्यानदेवता साक्षादिव सत्पुष्पमालिनी। सुपर्वबाहुलतिकाविराजत्करपल्लवा ॥ १६६
सा चागत्योपविष्टा मे पार्श्वे प्रियसखीधिया। पश्यामि यावत्सैवात्र चित्तचौरी समागता ॥ १६७
या सा शङ्खह्रदे दृष्टा कन्या स्नानागता मया। त्राता गजाद्दृष्टनष्टा मध्येलोकमगान्मम ॥ १६८
किमेतत्काकतालीयं किं स्वप्नः सत्यमेव वा। इति हर्षभरोद्भ्रान्तस्तदा चाहमचिन्तयम् ॥ १६९
क्षणान्तरे च मदिरावतीसख्योऽब्रुवंश्च ताम्। किमेवमार्यदुहितरुन्मना इव लक्ष्यसे ॥ १७०
एतच्छ्रुत्वाब्रवीत्कन्या सा निगूह्याशयं तदा। जानीथ किं न मदिरावती मे यादृशी सखि ॥ १७१
एषा कृतविवाहा च यास्यति श्वाशुरं गृहम्। एतद्वियुक्ता न स्थातुं शक्ष्यामीत्यस्मि दुःखिता ॥ १७२
तन्निर्यात बहिः क्षिप्रं यावद्विस्रम्भसंकथाः। कुर्वती मदिरावत्या सह तिष्ठाम्यहं सुखम् ॥ १७३
इति निष्कास्य ताः सर्वा द्वारे दत्त्वार्गलं स्वयम्। उपविश्य सखीबुद्ध्या सा मामेवमभाषत ॥ १७४
मदिरावति नास्त्यस्माद्दुःखं त्वद्दुःखतोऽधिकम्। प्राणप्रिये यदन्यस्मिन्पित्रान्यस्मै प्रदीयसे ॥ १७५

तथापि ते भवेज्जातु दर्शनं संगमोऽपि वा । संस्तवाज्ज्ञायमानेन तेन स्वप्रेयसा सह ॥ १७६
मम त्वनास्थमुत्पन्नं यद्दुःखं तद्वदामि ते । यथाहं ते तथा त्वं हि विस्रम्भैकास्पदं मम ॥ १७७
गतवत्यस्मि यात्रायां स्नातुं शङ्खह्रदं सरः । विनोदयितुमात्मानं भाविलद्विरहातुरम् ॥ १७८
तत्रोद्यानं दिवा मुक्त्वा नभश्चन्द्र इवागतः । आलानकाञ्चनस्तम्भ इव सौन्दर्यदन्तिनः ॥ १७९
नवीनश्मश्रुमधुपश्रेणीश्रितमुखाम्बुजः । कोऽपि कान्तो द्विजयुवा दृष्टो नववया मया ॥ १८०
वनेषु केवलं क्लिष्टास्तपोभिर्मुनिकन्यकाः । न दृष्टोऽयं युवा याभिः किं तासां तपसः फलम् ॥ १८१
इति संचिन्तयन्त्या मे कामेन हृदयं शरैः । तथा विद्धं यथा लज्जा भयं च गलितं ततः ॥ १८२
ततः पश्यामि पश्यन्तं यावत्तं तिर्यगीक्षणा । आलानमुक्तो मत्तेभस्तावदागादशङ्कितम् ॥ १८३
तेन नश्यत्परिजनां भीतां दृष्ट्वा स मां युवा । धावित्वाङ्के कृतां दूरे मध्ये लोकस्य नीतवान् ॥ १८४
तत्संस्पर्शामृतानन्दमीलिताहं तदा सखि । को हस्ती किं भयं काहं क्व स्थितास्मीति नाविदम् ॥ १८५
ततः परिजनो यावत्प्राप्तो मे तावदागतः । मत्तहस्ती स तत्रैव विरहो मूर्तिमानिव ॥ १८६
उत्क्षिप्याहमथानीता तद्भयादनुगैर्गृहम् । स च मे जनसंक्षोभे न जाने क्व गतः प्रियः ॥ १८७
तदाप्रभृत्यविज्ञातनामादिकमसुप्रदम् । स्मरन्ती तं करप्राप्तं केनापीह हृतं निधिम् ॥ १८८
सर्वदुःखहरां निद्रां स्वप्ने तद्दर्शनेच्छया । वाञ्छन्ती चक्रवाकीभिः समं क्रन्दामि रात्रिषु ॥ १८९
तदेवं निरुपायेऽस्मिन्दुःखे मम विनोदनम् । त्वद्दर्शनं यत्सखि तद्दूरीभवति चाधुना ॥ १९०
उपस्थितं तदित्थं मे मरणं मदिरावति । त्वन्मुखालोकनसुखं संप्रत्यनुभवामि तत् ॥ १९१
इत्युक्त्वा श्रोत्रपीयूषवर्षाभं वचनं मम । कलङ्कयन्ती वक्त्रेन्दुं साञ्जनैरश्रुबिन्दुभिः ॥ १९२
अवगुण्ठनमुत्क्षिप्य मुखान्मम निरीक्ष्य माम् । परिज्ञाय तदा साभूत्सहर्षाश्चर्यसाध्वसा ॥ १९३
ततो मयोक्तं मुग्धे किं संभ्रमः सोऽहमेव ते । विधिर्हि घटयत्यर्थानचिन्त्यानपि संमुखः ॥ १९४
मयापि त्वत्कृते दुःखमनुभूतं सुदुःसहम् । यादृशं यादृशी चैषा प्रपञ्चरचना विधेः ॥ १९५
वक्ष्यामि विस्तरात्तत्ते नायं कालः कथाक्रमे । निर्गमोपाय एवैकश्चिन्त्यतां संप्रति प्रिये ॥ १९६
इत्युक्ता सा मया बाला प्राप्तकालमभाषत । अनेन पश्चाद्द्वारेण निर्गच्छावः शनैरितः ॥ १९७
बहिश्चात्र गृहोद्यानं पितुः सुक्षत्रियस्य मे । तन्मार्गेणैव निर्गत्य व्रजावो यत्रकुत्रचित् ॥ १९८
इत्युक्तवत्यैव तया गुप्ताभरणया सह । तदुक्तेनैव मार्गेण निरगच्छमहं ततः ॥ १९९
रात्र्या च दूरमध्वानं तया गत्वा द्रुतं भयात् । प्रभाते प्राप्तवानस्मि प्रियायुक्तो महाटवीम् ॥ २००
गच्छतोश्चावयोस्तस्यां स्वकथैकविनोदयोः । निर्मानुषायां शनकैर्मध्याह्नः समवर्तत ॥ २०१
निराश्रयाध्वगमनां निराक्रन्दामतापयत् । भूमिं तां दुष्टभूपाल इव तीक्ष्णकरः करैः ॥ २०२
तस्मिन्काले परिश्रान्तां प्रेयसीं तां तृषार्दिताम् । कृच्छ्रप्राप्तां तरुच्छायां शनैः प्रापितवानहम् ॥ २०३
आश्वासयामि यावच्च तत्र तां पटमारुतैः । अकस्मान्महिषस्तावदागाद्व्रणितविद्रुतः ॥ २०४
तस्य पश्चात्प्रधावंश्च हयारूढो धनुर्धरः । आगात्कोऽपि महासत्त्व इत्याकृत्यैव सूचितः ॥ २०५
स महामहिषं भल्लीप्रहारेणापरेण तम् । वज्रघातेन वज्रीव गिरिं वीरो न्यपातयत् ॥ २०६
दृष्ट्वा चास्मानुपागत्य स मां प्रीत्यैव पृष्टवान् । कस्त्वं कैषा च ते साधो केहायातौ युवामिति ॥ २०७
अथोपवीतमुद्घाट्य प्रोक्तं सत्यानृतं मया । विप्रोऽहमेषा भार्या मे कार्याद्देशान्तरागतौ ॥ २०८
आवां चौरहतात्सार्थाद्विभ्रष्टौ मार्गनाशतः । इह प्रविष्टौ दृष्टश्च भवान्नष्टाश्च भीतयः ॥ २०९
एवं मयोक्ते ब्राह्मण्यात्सानुकम्पश्च सोऽभ्यधात् । अहं वनचराधीशो मृगयार्थमिहागतः ॥ २१०
युवां चाध्वपरिश्रान्तौ संप्राप्तावतिथी मम । तदेतं विश्रमायैतन्नातिदूरं मदास्पदम् ॥ २११
इत्युक्त्वा मत्प्रियां श्रान्तामारोप्य स्वतुरंगमे । पादचारीभवन्नावां स्वनिवासं स नीतवान् ॥ २१२
तत्र बान्धववत्सोऽस्मान्भोजनाद्यैरुपाचरत् । कुदेशेष्वपि जायन्ते क्वचित्केचिन्महाशयाः ॥ २१३
ततोऽटवीं तामुत्क्रम्य तद्वितीर्णानुयात्रिकाम् । प्राप्याग्रहारमेकं सा परिणीता मया वधूः ॥ २१४

ततः परिभ्रमन्देशान्दृष्ट्वा सार्थं समं तया। अद्य भागीरथीस्नानमहं कर्तुमिहागतः ॥ २१५

इहैव चैष संप्राप्तः स्वयंवरसुहृन्मया। देवश्च दृष्ट इत्येष वृत्तान्तो मामकः प्रभो ॥ २१६

इत्युक्त्वा विरतं स यावदथ तं निर्व्याजसत्त्वोचित-
प्राप्ताभीष्टफलं प्रशंसतितरां वत्सेशपुत्रो द्विजम्।
यावत्तं युवराजमात्मसचिवा बम्भ्रम्यमाणाश्चिरं
चिन्वन्तः किल गोमुखप्रभृतयस्तत्रागता लेभिरे ॥ २१७

स च नरवाहनदत्तश्चरणनतान्हर्षबाष्पधौतमुखान्।
तानभिननन्द सर्वान्संमान्य यथोचितं सचिवान् ॥ २१८

अथ तौ विप्रयुवानौ सदर्थनीतिप्रियौ सहादाय।
स ययौ सह तैर्मन्त्रिभिरन्वागतललितलोचनः स्वपुरीम् ॥ २१९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे मदिरावतीलम्बके प्रथमस्तरङ्गः।

समाप्तश्चायं मदिरावतीलम्बकस्त्रयोदशः।

---

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## पञ्चलम्बकश्चतुर्दशः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

### प्रथमस्तरङ्गः ।

तुष्टेन येन देहार्धमप्युमायै समर्पितम् । स वो ददात्वभिमतं वरदः पार्वतीपतिः ॥ १
निशि विघ्नजितो वोऽव्यात्ताण्डवोद्दण्डितः करः । शोणश्चन्द्रातपत्रस्य तन्वन्विद्रुमदण्डताम् ॥ २
ततो वत्सेश्वरसुतस्तास्तास्त्रैलोक्यसुन्दरीः । भार्या दधानस्तां चाद्यां देवीं मदनमञ्चुकाम् ॥ ३
नरवाहनदत्तोऽत्र कौशाम्ब्यां गोमुखादिभिः । उवास सह संपूर्णकामः पितृविभूतिभिः ॥ ४
तस्याभीष्टवधूसङ्गसुखामृतमनोरमाः । नृत्तगीतकथालापरम्यास्ते दिवसा ययुः ॥ ५
अथैकदा स तामग्र्यां कान्तां मदनमञ्चुकाम् । न ददर्शावरोधान्तर्न वा परिजनं क्वचित् ॥ ६
तामनालोकयन्कान्तां स जगाम विवर्णताम् । रजनीविरहध्वस्तकान्तिरिन्दुरिवोषसि ॥ ७
चित्तं जिज्ञासितुं किं नु च्छन्ना स्यात्कापि मे प्रिया । किं वापराधलेशात्सा कुतोऽपि कुपितैव मे ॥ ८
माययाच्छादिता केनाप्यथवापहृता नु किम् । इत्यनेकविकल्पौघविह्वलोऽथ बभूव सः ॥ ९
अन्वेषयन्यदा नैव लभते स्म कुतोऽपि ताम् । संतेपे स तदोद्दामतद्वियोगदवाग्निना ॥ १०
उपेत्य ज्ञातवृत्तान्तस्तस्य वत्सेश्वरः पिता । मातरः सचिवा भृत्याः सर्वे विह्वलतां ययुः ॥ ११
हारचन्दनचन्द्रांशुमृणालनलिनीदलैः । ववृधे तस्य संतापो न जगाम शमं पुनः ॥ १२
कलिङ्गसेना सद्यश्च विहीना सुतया तया । विद्याधरीव विभ्रष्टविद्या संमूढतां ययौ ॥ १३
अथ तत्राब्रवीदेका वृत्तान्तःपुररक्षिका । नरवाहनदत्ताग्रे सर्वेष्वाकर्णयत्स्विदम् ॥ १४
हर्म्याग्रे तां तदा कन्यां सतीं मदनमञ्चुकाम् । दृष्ट्वावतीर्य नभसः सद्यो विद्याधरो युवा ॥ १५
योऽसौ मानसवेगाख्यो नामोक्त्वा समयाचत । कलिङ्गसेनामभ्येत्य देह्येतां मे सुतामिति ॥ १६
तेनैतया निषिद्धेन सता गत्वा यथागतम् । इदानीं गुप्तमागत्य हृता सा किं न मायया ॥ १७
परदारगृहं नैव दिव्या यद्यपि कुर्वते । तथाप्यमार्गं मार्गं वा रागान्धः को हि पश्यति ॥ १८
श्रुत्वैतच्चित्तमाकोपविमर्शविरहोत्प्लुतम् । नरवाहनदत्तस्य जज्ञे वीचिष्विवाम्बुजम् ॥ १९
रुमण्वानथ वक्ति स्म पुरीयं रक्ष्यतेऽभितः । प्रवेशनिर्गमौ नेह विद्येते गमनं विना ॥ २०
हरप्रसादाच्चास्त्यस्या नानिष्टं तदिहं स्थिता । क्वचित्प्रणयकोपात्सा तथा च श्रूयतां कथा ॥ २१
मुनिः पुराङ्गिरा नाम विवाहार्थमयाचत । अष्टावक्रस्य तनयां सावित्रीं नाम कन्यकाम् ॥ २२
अष्टावक्रो न तां तस्मै ददावङ्गिरसे सुताम् । सगुणायापि सावित्रीमन्यस्मै पूर्वकल्पिताम् ॥ २३
ततस्तद्भ्रातृतनयामश्रुतां नाम सोऽङ्गिराः । उपयेमे तया साकं स तस्थौ भार्यया सुखम् ॥ २४
सा च भार्यास्य वेत्ति स्म सावित्रीं पूर्ववाञ्छिताम् । एकदा सोऽङ्गिरा मौनी जपन्नासीच्चिरं मुनिः ॥ २५

भार्याथ सा तं पप्रच्छ मुहुः सप्रणयाश्रुता। चिरं किमार्यपुत्रैवं चिन्तयस्युच्यतामिति ॥ २६
प्रिये ध्यायामि सावित्रीमित्युक्ते तेन साश्रुता। सावित्रीं तां मुनिसुतां मत्वात्मनि चुकोप ह ॥ २७
दुर्भगोऽयमिति त्यक्तुं देहं गत्वा वनं च सा। शुभं भर्तुरनुध्याय कण्ठे पाशं समर्पयत् ॥ २८
मा पुत्रि साहसं कार्षीः पत्या ध्याता न तेऽङ्गना। ध्याताऽहं तेन सावित्रीत्युक्त्वा पाशाद्ररक्ष ताम् ॥ २९
प्रकटीभूय गायत्री साक्षसूत्रकमण्डलुः। भक्तानुकम्पिनी चैतां समाश्वास्य तिरोदधे ॥ ३०
अथैषाङ्गिरसा भर्त्रा संप्राप्तान्विष्यता वनात्। तदेवं दुःसहं स्त्रीणामिह प्रणयखण्डनम् ॥ ३१
तत्स्वल्पेनापराधेन कुपितेह क्वचित्स्थिता। अन्वेष्या शंभुरक्ष्या सा राजपुत्रवधूः पुनः ॥ ३२
एवं रुमण्वता प्रोक्ते राजा वत्सेश्वरोऽब्रवीत्। एवमेतन्न दुरितं तस्याः संभाव्यते यतः ॥ ३३
नरवाहनदत्तस्य भार्या देवविनिर्मिता। कामांशस्यावतीर्णैषा रतिर्मदनमञ्चुका ॥ ३४
असौ विद्याधरैश्वर्यं दिव्यं कल्पं सहानया। करिष्यतीति दिव्या वागब्रवीन्न च तन्मृषा ॥ ३५
तदेषान्विष्यतां सम्यगिति राज्ञोदिते स्वयम्। नरवाहनदत्तः स तदवस्थोऽपि निर्ययौ ॥ ३६
यथायथा हि चिन्वानो न तां प्राप तथातथा। तेषु तेषु प्रदेशेषु सोन्माद इव सोऽभ्रमत् ॥ ३७
अपेते तत्पुरात्तस्मिन्पिहितद्वारका गृहाः। तद्दुःखदर्शनोद्वेगादिव संमीलितेक्षणाः ॥ ३८
वनेषु तं च पृच्छन्तं चलत्पल्लवपाणयः। न सा दृष्टा तवास्माभिरित्यूचुरिव पादपाः ॥ ३९
उद्यानेषूत्पतन्तश्च खगास्तस्मै विचिन्वते। इतः सा न गतेत्येवं शशंसुरिव सारसाः ॥ ४०
मरुभूतिर्हरिशिखो गोमुखः सवसन्तकः। ते ते च सचिवा भ्रेमुस्तामन्वेष्टुं समन्ततः ॥ ४१
अत्रान्तरे वेगवती नाम विद्याधरी किल। कन्या दृष्टचरोदारवपुर्मदनमञ्चुका ॥ ४२
तदीयं रूपमास्थाय तस्यावुपवनान्तरे। आगत्यैकाकिनी स्वैरमत्राशोकतरोरधः ॥ ४३
तां ददर्श विचिन्वानो मरुभूतिः परिभ्रमन्। सद्यो विशल्यकरणीं सशल्यस्येव चेतसः ॥ ४४
नरवाहनदत्तं तं गत्वा हृष्टो जगाद सः। समाश्वसिहि दृष्टा ते मयोद्याने स्थिता प्रिया ॥ ४५
इत्येवोक्तवता तेन साकं तत्क्षणमेव सः। नरवाहनदत्तस्तदुद्यानं मुदितो ययौ ॥ ४६
तत्रातिविरहक्लान्तो भार्यां मदनमञ्चुकाम्। तामपश्यत्स तृषितो वारिधारामिवाध्वगः ॥ ४७
दृष्ट्वैवालिङ्गितुं तां च भृशार्तो यावदिच्छति। तावत्सा तं जगादैवं धूर्ता परिणयैषिणी ॥ ४८
मां त्वं संप्रति मा स्प्राक्षीः शृणु तावद्वचो मम। मयोपयाचिता यक्षास्त्वत्प्राप्त्यै प्राग्विवाहतः ॥ ४९
विवाहे वः प्रदास्यामि स्वहस्तेन बलीनिति। विवाहकाले ते तस्मिन्मम प्राणेश विस्मृताः ॥ ५०
तत्कोपात्तैरहमितो यक्षैरपहृताभवम्। गच्छ भूयो विवाहं तं कृत्वा दत्त्वा बलिं च नः ॥ ५१
निजं पतिमुपेयास्त्वं नान्यथा ते शिवं भवेत्। इत्युक्त्वा तैरिहानीय यक्षैर्मुक्तास्मि सांप्रतम् ॥ ५२
तन्मां परिणयस्वाशु पुनर्यावद्ददाम्यहम्। यक्षेभ्योऽभिमतां पूजां ततः पूरय वाञ्छितम् ॥ ५३
तच्छ्रुत्वैव समाहूय शान्तिसोमं पुरोहितम्। क्षणात्संभृत्य संभारान्मायामदनमञ्चुकाम् ॥ ५४
विद्याधरीं वेगवतीमुपयेमे स तत्क्षणम्। नरवाहनदत्तस्तां वियोगक्षणकातरः ॥ ५५
प्रहृष्टवत्सराजोऽथ देव्यानन्दी महोत्सवः। नन्दत्कलिङ्गसेनोऽभूत्तत्रातोद्यरवाकुलः ॥ ५६
ददौ बलिं च यक्षेभ्यो मायामदनमञ्चुका। विद्याधरी स्वहस्तेन सा मद्यपिशितादिभिः ॥ ५७
नरवाहनदत्तोऽथ वासकस्थस्तया सह। पपौ स सोत्सवः पानं पानशौण्डोऽपि तद्गिरा ॥ ५८
सिषेवे च तया साकं जीवलोकसुखं ततः। छाययेव दिनाधीशः परिवर्तितरूपया ॥ ५९
रहःस्था चाब्रवीत्सा तं सुप्ता नाहं प्रिय त्वया। सहसा मुखमुद्धाट्य वीक्षणीयेह संप्रति ॥ ६०
तच्छ्रुत्वा स किमेतत्स्यादिति यावत्सकौतुकः। सुप्ताया राजपुत्रोऽस्या मुखमन्येद्युरीक्षते ॥ ६१
तावदन्यैव सा कापि न सा मदनमञ्चुका। स्वापवेलावशध्वस्तमायारूपविवर्तना ॥ ६२
ततः स जाग्रदेवासीद्यावत्प्रबुबुधेऽत्र सा। का त्वं सत्यं वदेत्येवमथ तां पृच्छति स्म सः ॥ ६३
साप्यनिद्रोपविष्टं तं दृष्ट्वा रूपे निजे स्थिता। वक्तुं प्रचक्रमे जातप्रतिभेदा मनस्विनी ॥ ६४

शृण्विदानीं ब्रवीम्येतद्यथावस्तु तव प्रिय । अस्त्याषाढपुरं नाम विद्याधरपुरं गिरिः ॥ ६५
तत्र वेगवतो राज्ञः पुत्रो विद्याधराधिपः । अस्ति मानसवेगाख्यो राजा भुजबलोद्धतः ॥ ६६
तस्य वेगवती नाम भगिन्यस्मि कनीयसी । स च भ्राता न मे विद्यां दातुमैच्छदतिद्विषन् ॥ ६७
ततो मया ताः क्लेशेन तपोवनगतात्पितुः । प्राप्तास्तद्वरतश्चैताः सर्वाधिकबला मम ॥ ६८
साहं दृष्टवती दीनामुद्याने रक्षिभिर्वृताम् । आषाढाद्रिपुरे तस्मिन्स्थितां मदनमञ्चुकाम् ॥ ६९
माययापहृता तेन भ्रात्रा मे दयिता तव । रावणेनेव दुःखार्ता रामभद्रस्य जानकी ॥ ७०
अनिच्छन्ती च सा साध्वी तेनाक्रान्तुं न शक्यते । स्त्रीणां हठोपभोगे हि शापस्तस्यास्ति मृत्युजः ॥ ७१
ततस्तेन प्रयुक्ताहं कुभ्रात्रा तत्प्रबोधने । तस्याः समीपमगमं त्वत्प्रलापमयात्मनः ॥ ७२
तत्प्रसङ्गाच्च कामाज्ञातुल्ये त्वन्नाम्न्युदीरिते । तया साध्व्या त्वदेकाग्रमिदं जातं मनो मम ॥ ७३
स ते पतिः स्याद्यन्नाम्नि श्रुते स्मरवशा भवेः । इत्याद्यश्च तदा देवीस्वप्नादेशो मया स्मृतः ॥ ७४
संस्मृत्य ग्राहयित्वा तां धृतिं मदनमञ्चुकाम् । तद्रूपेण मयागत्य युक्त्यात्मेह विवाहितः ॥ ७५
तदेहि यत्र त्वद्भार्या स्थिता मदनमञ्चुका । तत्रैव तत्कृपाविष्टा प्राणेश त्वां नयाम्यहम् ॥ ७६
त्वत्प्रियेति तवेवाहं सपत्न्या अपि किंकरी । ममात्मनिरपेक्षा हि कापि त्वत्प्रेमवश्यता ॥ ७७
इत्युक्त्वा सा स्वविद्यानां बलाद्वेगवती निशि । नरवाहनदत्तं तं गृहीत्वोदपतन्नभः ॥ ७८
शनैः प्रयाति सा व्योम्ना यावत्तावददर्शनात् । जायापत्योस्तयोः प्राप्तः परिवारोऽत्र चुक्षुभे ॥ ७९
तत्र वत्सेश्वरो बुद्ध्वा सह वासवदत्तया । पद्मावत्यादिभिश्चाशु वज्राहत इवाभवत् ॥ ८०
यौगन्धरायणाद्याश्च संपौरास्तस्य मन्त्रिणः । मरुभूतिमुखैः पुत्रैः सहाभूवन्सुविह्वलाः ॥ ८१
ततोऽन्तरिक्षतस्तत्र द्वितीय इव भास्करः । अवातरत्प्रभाबद्धमण्डलो नारदो मुनिः ॥ ८२
विद्याधर्या निजभुवं नीतः शीघ्रमिहैष्यति । पुत्रस्ते तव धृत्यर्थं प्रेषितश्चास्मि शूलिना ॥ ८३
इत्युक्त्वा वत्सराजाय कृतार्घाय ततो मुनिः । स वेगवत्याश्चरितं यथावृत्तं शशंस तत् ॥ ८४
ततस्तस्मिन्समाश्वस्ते मुनिः सोऽत्र तिरोदधे । अत्रान्तरे वेगवती व्योम्ना प्रापयति स्म सा ॥ ८५
नरवाहनदत्तं तं तमाषाढपुरं गिरिम् । बुद्ध्वा मानसवेगस्तत्स हन्तुं तावधावत ॥ ८६
ततस्तेन समं भ्रात्रा युद्धं विद्याबलोद्धतम् । वेगवत्या अभूत्स्त्रीणां पतिः प्राणा न बान्धवाः ॥ ८७

अथ निजविद्याबलतो भैरवरूपं विधाय विकटं सा ।
मानसवेगं सहसा संमोह्य तमग्निपर्वते निदधे ॥ ८८
तमपि च विद्याहस्ते नरवाहनदत्तमादितो न्यस्तम् ।
नीत्वा गन्धर्वपुरे कूपे चिक्षेप रक्षितुं विजले ॥ ८९

तत्र स्थितं च तमुवाच मनागिह त्वं तिष्ठार्यपुत्र भविता च शिवं तवात्र ।
मा चाधृतिं हृदि कृथाः शुभपात्र सर्वविद्याधराधिपतिता तव भाविनीह ॥ ९०
यामि प्रसाधयितुमद्य पुनर्यतोऽहं ज्येष्ठव्यतिक्रमणदुर्बलिताः स्वविद्याः ।
त्वामभ्युपैमि नचिरादिति सा तमुक्त्वा विद्याधरी क्वचन वेगवती जगाम ॥ ९१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

ततः कूपस्थितं तत्र गन्धर्वः कोऽप्यवैक्षत । नरवाहनदत्तं तं वीणादत्त इति श्रुतः ॥ १
परार्थफलजन्मानो न स्युर्मार्गद्रुमा इव । तापच्छिदो महान्तश्चेज्जीर्णारण्यं जगद्भवेत् ॥ २
यदृच्छया तं स सुजनः पृष्ट्वा चान्वयनामनी । हस्तेऽवलम्ब्योदहरत्कूपात्तस्मादुवाच च ॥ ३
मानुषोऽसि न देवश्चेद्गन्धर्वनगरं कथम् । मानुषागम्यमेतत्त्वमागतः कथ्यतामिति ॥ ४
विद्याधर्याहमानीय क्षिप्तोऽत्रात्मबलादिति । नरवाहनदत्तोऽपि स तं प्रत्यब्रवीत्तदा ॥ ५

ततस्तं वीक्ष्य सच्चक्रवर्तिचिह्नं गुणी गृहम्। नीत्वा स वीणादत्तः स्वैरुपचारैरुपाचरत्॥ ६
अन्येद्युस्तत्पुरं दृष्ट्वा वीणाहस्ताखिलप्रजम्। नरवाहनदत्तस्तं वीणादत्तं स पृष्टवान्॥ ७
सर्वेऽप्याबालमेते किं वीणाहस्ता जना इति। वीणादत्तोऽपि स ततस्तमेवं प्रत्यभाषत॥ ८
राजा सागरदत्ताख्यो गन्धर्वाणामिहास्ति यः। तस्य गन्धर्वदत्ताख्या सुतास्ति न्यक्कृताप्सराः॥ ९
धात्रा कृतं सुधाचन्द्रचन्दनाद्यैरिवोचितैः। सर्वसुन्दरनिर्माणवर्णकायेव यद्वपुः॥ १०
सततं सा च गायन्ती वीणायां शौरिणा स्वयम्। दत्तं स्वगीतकं काष्ठां गान्धर्वे परमां गता॥ ११
यो वादयति वीणायां त्रिभिर्ग्रामैश्च गायति। गान्धर्वे कोविदः सम्यग्वैष्णवं स्तुतिगीतकम्॥ १२
स मे पतिः स्यादित्यस्या राजपुत्र्याश्च निश्चयः। तेन सर्वेऽत्र वीणासु शिक्षन्ते न च तद्विदुः॥ १३
एतच्छ्रुत्वैव सानन्दो वीणादत्तमुखाद्वचः। नरवाहनदत्तोऽसौ राजपुत्रो जगाद तम्॥ १४
अहं कलानां सर्वासां स्वयंवरवृतः पतिः। जानामि सर्वं गान्धर्वं त्रैलोक्योदरवर्ति यत्॥ १५
इत्युक्तवन्तं स सुहृद्वीणादत्तो निनाय तम्। राज्ञः सागरदत्तस्य पार्श्वं तत्र जगाद च॥ १६
नरवाहनदत्तोऽयं वत्सराजसुतः किल। इह विद्याधरीहस्ताद्विभ्रष्टो नगरे तव॥ १७
गान्धर्वाचार्य एवायं केशवस्तुतिगीतकम्। वेत्ति गन्धर्वदत्ताया त्रयोपरि महान्रसः॥ १८
तच्छ्रुत्वा सोऽब्रवीद्राजा सत्यमेतन्मया श्रुतम्। गन्धर्वाणां मुखात्पूर्वं तन्मान्योऽयमिहाद्य नः॥ १९
देवांशश्चैष न भ्रान्तिर्देवभूमौ किमन्यथा। इह विद्याधरीसङ्गादागच्छेन्मानुषो भवन्॥ २०
आनीयतां तद्गन्धर्वदत्ता वीक्षामहेऽद्भुतम्। इति राज्ञोदिते जग्मुरानेतुं तां महत्तराः॥ २१
आगाच्च सा ततः कान्ता कुसुमाभरणोज्ज्वला। यौवनेन विघूर्णन्ती वातेनेवार्तवी लता॥ २२
उपविश्य पितुः पार्श्वे तद्वाक्याच्च क्षणान्तरे। भृत्यैः कथितवृत्तान्ता वीणायां गीतकं जगौ॥ २३
स्वरान्श्रुतिषु युञ्जन्त्यास्तस्या ब्राह्म्या इव श्रियः। नरवाहनदत्तोऽभूद्गीते रूपे च विस्मितः॥ २४
राजपुत्रि न ते वीणा सुस्वरा प्रतिभाति मे। जाने वालः स्थितस्तन्त्र्यामिति सोऽत्र जगाद च॥ २५
ततोऽत्र वीक्ष्यते यावद्वालस्तावदवापि सः। तेन सर्वेऽपि ते जग्मुर्गन्धर्वा अपि विस्मयम्॥ २६
राजपुत्र गृहाणेमां कर्णौ सिञ्चामृतेन नः। इति राजा सुताहस्ताद्वीणां तस्मै ददौ वदन्॥ २७
सोऽपि तां वादयन्विष्णोरगायद्गीतकं तथा। यथा ते तत्र गन्धर्वाश्चित्रन्यस्ता इवाभवन्॥ २८
ततो गन्धर्वदत्ता सा दृष्ट्यैव प्रणयार्द्रया। तं वव्रे फुल्लनीलाब्जमालयेवास्तया स्वयम्॥ २९
तदालोक्य तथारूपां तत्प्रतिज्ञां स्मरंश्च सः। राजा गन्धर्वदत्तां तां सद्यस्तस्मै सुतां ददौ॥ ३०
दिव्यातोद्यादिकश्चात्र विवाहो यस्तयोरभूत्। कोपमा कथ्यते तस्य येनान्यदुपमीयते॥ ३१
ततस्तया समं तत्र तस्थौ गन्धर्वदत्तया। नरवाहनदत्तोऽसौ दिव्यैर्भोगैर्नवोढया॥ ३२
एकस्मिंश्च दिने द्रष्टुं निर्गतो नगरश्रियम्। तांस्तान्प्रदेशानालोक्य पुरोद्यानं विवेश सः॥ ३३
तत्र व्योम्नोऽवरोहन्तीं सोऽपश्यद्दिव्ययोषितम्। समं दुहित्रानभ्रेऽपि सवृष्टिमिव विद्युतम्॥ ३४
वत्सराजसुतः सोऽयं पुत्रि भावी पतिस्तव। इति तां वीक्ष्य जल्पन्तीं ज्ञानतस्तां निजां सुताम्॥ ३५
का त्वं किमागतासीति सोऽपृच्छत्तामुपागताम्। सापीप्सितोपक्रमिणी दिव्ययोषित्तमब्रवीत्॥ ३६
देवसिंहाभिधानस्य विद्याधरपतेरहम्। भार्या धनवती नाम कन्यैषा च सुता मम॥ ३७
चण्डसिंहस्य भगिनी नाम्नेयमजिनावती। अस्या भर्ता त्वमादिष्टो गगनोद्गतया गिरा॥ ३८
वेगवत्याऽत्र निक्षिप्तं भाविविद्याधरेश्वरम्। बुद्ध्वाहं निजविद्यातस्त्वां प्राप्ता वक्तुमीप्सितम्॥ ३९
न विद्याधरगम्येऽत्र स्थाने युक्तं तवासितुम्। ते हि द्वेषेण हन्युस्त्वामप्राप्तपदमेककम्॥ ४०
तदेहि तदगम्यां त्वां नयावः सांप्रतं भुवम्। नेन्दुः क्षिपति किं कालं परिक्षीणोऽर्कमण्डले॥ ४१
संप्राप्तेऽवसरे चैतां सुतां मे परिणेष्यसि। इत्युक्त्वैव तमादाय सा ससुता खमुद्ययौ॥ ४२
श्रावस्त्यां पुरि नीत्वैव निक्षिप्योपवने च तम्। समं तयाजिनावत्या सुतया सा तिरोदधे॥ ४३
तत्र प्रसेनजिद्राजा दूरादाखेटकागतः। ददर्श राजपुत्रं तमुदाराकारलक्षणम्॥ ४४

स सकौतुकमभ्येत्य पृष्ट्वा नाम कुलं तथा। प्रीतः सप्रश्रयं राजा निनायैतं स्वमन्दिरम्॥ ४५
आवद्धवारणघटं वाजिराजिविराजितम्। भ्रमणश्रान्तराजश्रीविश्रान्तिभवनोपमम्॥ ४६
यत्र तत्र स्थितं सोत्का नरं कल्याणभाजनम्। संपदोऽभिसरन्त्येव प्रियं जनमिवाङ्गनाः॥ ४७
यत्स तस्मै ददौ राजा गुणलुब्धो निजां सुताम्। नरवाहनदत्ताय भगीरथयशोभिधाम्॥ ४८
तया समं च तत्रासीन्महार्हविभवः सुखम्। लक्ष्म्येव मूर्तया धात्रा तद्विनोदाय सृष्टया॥ ४९
एकदाभ्युदिते लोकलोचानन्दवर्षिणि। रजनीरमणे प्राचीदिग्वधूमुखमण्डने॥ ५०
निरभ्रनिर्मलव्योमदर्पणप्रतिबिम्बिते। भगीरथयशोवक्त्र इवामृतमनोरमे॥ ५१
कौमुदीसुधया धौते हर्म्याग्रे स तया सह। प्रदोषे प्रियया पानमसेवत तदिच्छया॥ ५२
पपौ प्रियतमावक्त्रप्रतिमालंकृतं मधु। रसनाया इवानन्ददायि लोचनयोरपि॥ ५३
प्रियामुखसमं कान्तमिन्दुं मेने तदा न सः। तस्य ते समदाताम्रनेत्रभ्रूविभ्रमाः कुतः॥ ५४
सेवितापानलीलश्च प्रविश्याभ्यन्तरं ततः। भगीरथयशोयुक्तः स भेजे शयनीयकम्॥ ५५
तत्र प्रियायां सुप्तायां तस्यां सुप्तविनिद्रकः। नरवाहनदत्तोऽसौ स्मृत्वाकस्मात्किलाब्रवीत्॥ ५६
भगीरथयशःप्रीतिविस्मृता एव ता मम। अन्यभार्याः कथं तत्स्यादिति चात्र विधिः प्रभुः॥ ५७
सचिवा ये च मे दूरे तेभ्योऽपि मरुभूतिकः। विक्रमैकरसो नीतिमात्रे हरिशिखः स्थितः॥ ५८
ताभ्यां न सांप्रतं कृत्यं गोमुखश्चतुरः पुनः। सर्वावस्थासु मे मित्रं विदूरस्थो दुनोति माम्॥ ५९
इत्युल्लपन्स तत्राशु निद्राघ्नं मधुरं मृदु। हा दुःखमिति शुश्राव नार्येवोदीरितं वचः॥ ६०
श्रुत्वा च दीप्रदीपेऽत्र सर्वतो यावदीक्षते। तावन्नार्या मुखं दिव्यं गवाक्षान्तर्ददर्श सः॥ ६१
समलो व्योम्नि दृष्टोऽद्य चन्द्रोऽनेनेति कौतुकात्। अव्योम्नि दर्शितं धात्रा चन्द्रमन्यमिवामलम्॥ ६२
अङ्गं शेषमपश्यंश्च तस्यास्तद्दर्शनोत्सुकः। तद्रूपाकृष्टनयनो छगित्येवमचिन्तयत्॥ ६३
आतापिदैत्यो युक्त्या प्राग्ब्रह्मणा सर्गविघ्नकृत्। आश्चर्यं पश्य गत्वात्रेत्युक्त्वा प्रैष्यत नन्दनम्॥ ६४
तत्र तेनाद्भुताकारो दृष्टोऽङ्घ्रिः केवलं स्त्रियः। विपन्नश्च तदन्याङ्गदिदृक्षाव्यसनेन सः॥ ६५
एवं ममापि धात्रेदं मुखमात्रं विपत्तये। सृष्टं स्यादिति यावच्च सोऽत्राकलयति क्षणम्॥ ६६
तावद्गवाक्षाद्दिव्या स्त्री प्रदर्श्य करपल्लवम्। इत एहीति साङ्गुल्या संज्ञां तस्याकरोत्तदा॥ ६७
ततः संसुप्तदयितात्स्वैरं निर्गत्य वासकात्। तस्याः समीपं संप्राप स सोत्को दिव्ययोषितः॥ ६८
अन्यासक्तं प्रशंसन्ती पतिं मदनमञ्चुके। हा हतासीति सा चास्मिन्निकटोपगतेऽब्रवीत्॥ ६९
तच्छ्रुत्वा तां प्रियां स्मृत्वा प्रज्वलद्विरहानलः। नरवाहनदत्तस्तां पृच्छति स्म स भामिनीम्॥ ७०
का त्वं कुत्र त्वया दृष्टा प्रिया मदनमञ्चुका। मामुपेता किमर्थं च भवती कथ्यतामिति॥ ७१
ततो विदूरं नीत्वा तं प्रौढा राजसुतं निशि। शृणु सर्वं त्वमित्युक्त्वा साथ वक्तुं प्रचक्रमे॥ ७२
नगर्यां पुष्करावत्यामभ्याराधनपिङ्गलः। अस्ति पिङ्गलगान्धारो नाम विद्याधरेश्वरः॥ ७३
तस्य प्रभावतीं नाम सुतां मां विद्धि कन्यकाम्। आराधितप्रसन्नाद्धि वरात्प्राप्तां विभावसोः॥ ७४
साहं तदाषाढपुरं द्रष्टुं वेगवतीं सखीम्। अगच्छं न च तां तत्र प्राप क्वापि तपःस्थिताम्॥ ७५
तन्मातुः पृथिवीदेव्या मुखान्मदनमञ्चुकाम्। बुद्ध्वा तां त्वत्प्रियां चात्र स्थितां द्रष्टुमगामहम्॥ ७६
अपश्यं तामनाहारकृशां पाण्डुरधूसराम्। बद्धैकवेणीं रुदतीं त्वद्गुणैकप्रलापिनीम्॥ ७७
वृतां विद्याधराधीशकन्यावृन्दैरुदश्रुभिः। तद्दर्शनत्वच्छ्रवणप्रोद्यद्दुःखसुखाकुलैः॥ ७८
तयोक्तत्वत्स्वरूपा च भवदानयनेन ताम्। आश्वास्य तत्कृपाक्रान्ता त्वद्गुणाकृष्टमानसा॥ ७९
विद्याप्रभावाद्बुद्ध्वा च संप्रति त्वामिह स्थितम्। आगतास्मि तवाभ्याशं तदर्थस्वार्थसिद्धये॥ ८०
विस्मृताद्य प्रियं दृष्ट्वा त्वामिहान्यप्रलापिनम्। मया हा दुःखमित्युक्त्वा सा ते भार्यानुशोचिता॥ ८१
इत्युक्तः स तया सोत्को राजपुत्रो जगाद ताम्। नय मां तत्र सा यत्र नियुङ्क्ष्व च यथेच्छसि॥ ८२
तच्छ्रुत्वा सा तमादाय खमुत्पत्य प्रभावती। विद्याधरी चन्द्रवत्यां गन्तुं प्रववृते निशि॥ ८३

यान्ती क्वाप्यग्निमालोक्य ज्वलन्तं सा प्रदक्षिणम् । नरवाहनदत्तस्य तस्यादाय करं व्यधात् ॥ ८४
तेनोद्वाहविधिं युक्त्या प्रौढा सा निरवर्तयत् । संकल्पैकप्रधाना हि दिव्यानामखिलाः क्रियाः ॥ ८५
ततो नभस्तलात्तस्य पृथिवीं वेदिकामिव । नदीर्भुजंगीसदृशीर्वल्मीकानिव पर्वतान् ॥ ८६
तानि तानि तथान्यानि कौतुकानि पदे पदे । दर्शयन्ती प्रियस्यात्र ययौ दूरं क्रमेण सा ॥ ८७
आकाशगमनश्रान्ते तृषार्तेऽस्मिञ्जलार्थिनि । नरवाहनदत्ते सा व्योममार्गादवातरत् ॥ ८८
निनाय च वनान्तं तं चन्द्रांशुधवलाम्भसः । राजतेन द्रवेणेव भृतस्य सरसोऽन्तिकम् ॥ ८९
तत्र शान्तं जलतृषा तस्य पीताम्भसो वने । उत्पन्नं रमणीये तु कान्तासंभोगतृष्णया ॥ ९०
ततो हठार्थिता कृच्छ्रात्संभोगे सा प्रभावती । सानुक्रोशा कृतश्वासां ध्यात्वा मदनमञ्चुकाम् ॥ ९१
नरवाहनदत्तस्य तस्य प्रववृते तदा । परार्थप्रतिपन्ना हि नेक्षन्ते स्वार्थमुत्तमाः ॥ ९२
जगाद तं च मा मंस्था आर्यपुत्र त्वमन्यथा । अभिप्रायो ममास्तीह तथा चात्र कथां शृणु ॥ ९३
पुरा पाटलिपुत्रेऽभूत्कापि स्त्री मृतभर्तृका । बालैकपुत्रा तरुणी निर्धना रूपशालिनी ॥ ९४
सा चात्मपरितोषाय परपूरुषसंगमम् । विदधाना ययौ गेहाद्रात्रौ रात्रौ यतस्ततः ॥ ९५
मोदकं पुत्र ते प्रातरानेष्यामीति तं सुतम् । बालं चाश्वास्य सायासीत्तं च सान्वहमानयत् ॥ ९६
स च बालो गृहे तूष्णीं तयासीन्मोदकाशया । एकदा न तयानीतो विस्मृत्यास्य स मोदकः ॥ ९७
याचमानं च तं बालं मोदकं सा किलाऽब्रवीत् । अहं स्वकामुकं वेद्मि मोदकं नापरं सुत ॥ ९८
तच्छ्रुत्वा नानयानीतो मोदको मेऽन्यसक्तया । इति तस्य निराशस्य शिशोर्हृदयमस्फुटत् ॥ ९९
तदहं प्रिय पूर्वं त्वां सुतरां स्वीकरोमि चेत् । तन्मयैव कृताश्वासा त्वत्संगममहोत्सवे ॥ १००
मत्त एव निराशा चेद्बुद्ध्वा मदनमञ्चुका । भवेत्तद्धृदयं तस्याः स्फुटेत्कुसुमपेशलम् ॥ १०१
तदेतेनानृशंस्येन तामनाश्वास्य संप्रति । न तथाभिलषामि त्वामपि प्राणाधिकं प्रियम् ॥ १०२
इत्युक्तः स प्रभावत्या तया सानन्दविस्मयः । नरवाहनदत्तोऽत्र तत्कालं समचिन्तयत् ॥ १०३
अहो नवनवाश्चर्यनिर्माणे रसिको विधिः । अचिन्त्योदारचरिता येन सृष्टा प्रभावती ॥ १०४
इति ध्यायन्स तां प्रेम्णा स्तुत्वा राजसुतोऽब्रवीत् । तर्हि मां नय सा यत्र स्थिता मदनमञ्चुका ॥ १०५
तच्छ्रुत्वा च गृहीत्वा तं नभसा सा प्रभावती । क्षणेन प्रापयामास तमाषाढपुरं गिरिम् ॥ १०६
तत्र संगमयामास तेन शुष्यत्तनुं चिरात् । पूरेणेव नदीं वृष्टिः सा तां मदनमञ्चुकाम् ॥ १०७
सोऽप्यपश्यद्वियोगार्तां कान्तां तां कृशपाण्डुराम् । नरवाहनदत्तोऽत्र पर्वणीन्दुकलामिव ॥ १०८
स तदा प्राणलाभाय तयोरन्योन्यसंगमः । बभूव जगदानन्दी शर्वरीशशिनोरिव ॥ १०९
विरहानलसंतप्तावाश्लिष्टौ दंपती च तौ । स्वेदच्छलाद्द्रवीभूतावेकतामिव जग्मतुः ॥ ११०
ततः प्रभावतीविद्याबलेन निशि कल्पितान् । बुभुजातेऽत्र तौ सद्यः स्वैरं भोगानुभावपि ॥ १११
न ददर्श च तद्विद्याबलेनैवात्र कश्चन । नरवाहनदत्तं तं विना मदनमञ्चुकाम् ॥ ११२
प्रातस्तं चात्र मुञ्चन्तमेकवेणीं निजं प्रियम् । सा जगादाहितामर्षवशान्मदनमञ्चुका ॥ ११३
हते मानसवेगेऽसौ मोक्तव्यार्यसुतेन मे । मृतायाः पक्षिभिर्वापि वेणी दाह्याथवाग्निना ॥ ११४
इति प्रतिज्ञातमभून्मया साद्य मम त्वया । जीवत्यस्मिन्नृपे मुक्ता तेन मे दूयते मनः ॥ ११५
क्षिप्तोऽपि न मृतो ह्येष वेगवत्याग्निपर्वते । त्वं चादृश्या प्रभावत्या विहितोऽत्र स्वमायया ॥ ११६
अन्यथा त्वत्समीपे हि शत्रोरस्यानुशायिनः । इहैते संचरन्तोऽद्य त्वां सहेरन्विलोक्य किम् ॥ ११७
एवमुक्तस्तया पत्न्या साध्व्या कालानुरोधवान् । नरवाहनदत्तोऽत्र सान्त्वयन्स जगाद ताम् ॥ ११८
संपत्स्यतेऽयं कामस्ते हनिष्याम्यचिरादमुम् । शत्रुं विद्याः समासाद्य प्रतीक्षस्व मनाक्प्रिये ॥ ११९
इत्याद्युक्त्वा समाश्वास्य स तां मदनमञ्चुकाम् । नरवाहनदत्तोऽत्र तस्थौ वैद्याधरे पुरे ॥ १२०
अथ प्रभावती तस्य चक्रे विद्याप्रभावतः । अतर्क्यं रूपमात्मीयं स्वयमन्तर्हिता सती ॥ १२१
स तद्रूपेण तत्रासीद्राजपुत्रो यथासुखम् । अशङ्कितः प्रकाशोऽपि तद्विद्यासिद्धभोगभुक् ॥ १२२

वेगवत्या वयस्येयमेतां मदनमञ्चुकाम् । उपाचरति तत्प्रीत्या निजसख्यवशेन च ॥ १२३
इति प्रभवतीत्येनं तद्रूपच्छन्नविग्रहम् । मन्वानाः सर्व एवोचुस्तत्र मानसवेगतः ॥ १२४
अथैकदा प्रसङ्गेन तस्मै मदनमञ्चुका । नरवाहनदत्ताय स्ववृत्तान्तं शशंस सा ॥ १२५
तदा मानसवेगो मामिहानीय स्वमायया । प्रवर्तयितुमभ्यैच्छद्भाययन्क्रूरकर्मभिः ॥ १२६
तावच्च प्रकटीभूय भगवान्भैरवाकृतिः । उद्धृतासिर्लेलज्जिह्वः कृत्वा हुंकारमभ्यधात् ॥ १२७
इयं विद्याधरेन्द्राणां भाविनश्चक्रवर्तिनः । भार्या कथं त्वयास्मासु स्थितेषु परिभूयते ॥ १२८
एवमुक्तो भगवता पपात धरणीतले । पापो मानसवेगोऽसौ मुखेन रुधिरं वमन् ॥ १२९
ततस्तिरोहिते देवे समाश्वस्तः क्षणादसौ । गतः स्वमन्दिरं भूयो मयि क्रौर्याभ्यवर्तत ॥ १३०
अथ भीतां वियोगार्तां प्राणत्यागोन्मुखीमिह । एत्यान्तःपुरचेट्यो मां सान्त्वयन्त्योऽब्रुवन्निदम् ॥ १३१
मुनिकन्यां पुरा कांचिद्दृष्ट्वा रूपवतीं हठात् । हरन्मानसवेगोऽयं तद्बन्धुभिरशप्यत ॥ १३२
परनारीमनिच्छन्तीं यदा पाप गमिष्यसि । तदा ते शतधा मूर्धा विदलिष्यत्यसाविति ॥ १३३
अतो नैष बलाद्गच्छेत्परस्त्रीं मा भयं कृथाः । देवादेशाच्च भर्त्रा ते भूयो भाव्येव संगमः ॥ १३४
एवं ममोक्ते चेटीभिः क्षणाद्वेगवती स्वसा । सास्य मानसवेगस्य संबोधयितुमागमत् ॥ १३५
मद्दर्शनकृपाविष्टा सा त्वदानयनेन माम् । आश्वास्य त्वां यथा प्राप्ता तथैव विदितं तव ॥ १३६
अथ ज्योत्स्नासितैर्वस्त्रैश्चान्द्री तनुरिवामला । दर्शनेनैव सौम्येन सिञ्चन्ती सुधयेव माम् ॥ १३७
उपेता पृथिवीदेवी माता साध्वी दुरात्मनः । अस्य मानसवेगस्य सस्नेहमिदमब्रवीत् ॥ १३८
त्यक्त्वाहारं शुभोदर्कं किमात्मानमुपेक्षसे । शत्रोरन्नं कथं भोक्ष्य इति मा च कृथा हृदि ॥ १३९
दुहितुर्वेगवत्या मे राज्येऽस्मिन्पितृकल्पितः । भागोऽस्ति सा च भर्त्रा ते परिणीता सखी तव ॥ १४०
तद्धनं भर्तृसंबन्धि तव चात्मीयमेव च । तदेतद्भुङ्क्ष्व विद्यातो ज्ञात्वा सत्यं वदामि ते ॥ १४१
एवमुक्त्वा सशपथं भोजितास्मि तया तदा । अवस्थोचितमाहारं सुतासंबन्धबद्धया ॥ १४२
ततस्त्वया सहागत्य वेगवत्यैष निर्जितः । भ्रातेह रक्षितस्त्वं च शेषमत्र न वेद्म्यहम् ॥ १४३
अथ वेगवतीसिद्धिं तदैवतवचोऽप्यहम् । स्मरन्ती नामुचं प्राणांस्त्वत्प्राप्त्याशावलम्बितान् ॥ १४४
ततो महानुभावायाः प्रभावत्याः प्रभावतः । त्वं शत्रुसंकटेऽप्यस्मिन्प्राप्तस्तावन्मयाधुना ॥ १४५
चिन्ता तु मे विलुप्ता चेद्भवेदत्र प्रभावती । नश्येच्च तव तद्रूपं ततोऽस्माकं नु किं भवेत् ॥ १४६
इत्यादि ब्रुवतीं धीरीकुर्वन्मदनमञ्चुकाम् । नरवाहनदत्तोऽसौ वीरोऽत्रास्त तया सह ॥ १४७
एकदा च प्रभावत्यां यातायां भवनं पितुः । प्रभातसमये नष्टतद्रूपं तदसंनिधेः ॥ १४८
नरवाहनदत्तं तं दृष्ट्वा पुरुषरूपिणम् । पारदारिक एषोऽत्र प्रविष्ट इति साकुलः ॥ १४९
भयाद्राजकुले गत्वा सर्वः परिजनोऽभ्यधात् । वारयन्तीमपास्यैव भीतां मदनमञ्चुकाम् ॥ १५०
ततो मानसवेगोऽत्र स राजा स्वबलान्वितः । नरवाहनदत्तं तं धावित्वा पर्यवेष्टयत् ॥ १५१
अथ तं पृथिवीदेवी माता सत्वरमेत्य सा । राजानमब्रवीत्पुत्र हन्तव्योऽयं न ते न मे ॥ १५२
न पारदारिको ह्येष वत्सराजात्मजो ह्ययम् । नरवाहनदत्तोऽत्र निजां भार्यामुपागतः ॥ १५३
विद्याबलेन जानेऽहं कोपान्धः किं न वीक्षसे । जामाता चायमस्माकं पूज्यः शशिकुलोद्भवः ॥ १५४
एवमुक्तस्तया मात्रा तर्हि शत्रुरयं मम । इति मानसवेगोऽसौ जातामर्षो जगाद ताम् ॥ १५५
ततः सा तं पुनर्माता जामातृस्नेहतोऽभ्यधात् । नाधर्मो लभ्यते कर्तुं लोके वैद्याधरे सुत ॥ १५६
इह विद्याधराणां हि धर्मार्थो विद्यते सभा । तत्रास्य तत्प्रधानाग्रे दोषं शिरसि पातय ॥ १५७
ततो यत्क्रियतेऽमुष्य शोभते तदतोऽन्यथा । विद्याधरा विकुर्वीरन्न सहेरंश्च देवताः ॥ १५८
एतत्तस्या वचो मातुर्गौरवात्प्रतिपद्य सः । सभां मानसवेगस्तं नेष्यन्बन्द्धुं प्रचक्रमे ॥ १५९
स च बन्धासहिष्णुः सन्स्तम्भमुत्पाट्य तोरणात् । नरवाहनदत्तोऽत्र तद्भृत्यानवधीद्बहून् ॥ १६०
तन्मध्यात्खड्गमेकस्य हतस्यासाद्य तत्क्षणात् । जघान सोऽन्यानपि तान्वीरो दिव्यपराक्रमः ॥ १६१

ततो मानसवेगस्तं दिव्यया निजविद्यया। बबन्ध भार्यानुगतं नयति स्म च तां सभाम् ॥ १६२
तत्र भेरीमहाशब्दसमाहूता इतस्ततः। विद्याधरा मिलन्ति स्म सुधर्मायां यथा सुराः ॥ १६३
आगत्योपाविशच्चात्र रत्नसिंहासनोपरि। राजा वायुपथो नाम सभ्यो विद्याधरैर्वृतः ॥ १६४
व्याधुन्वद्भिरिवाधर्मं वीज्यमानस्य चामरैः। तस्य मानसवेगोऽग्रे स्थित्वा पापोऽब्रवीदिदम् ॥ १६५
मर्त्योऽप्यन्तःपुरध्वंसकारी विध्वंसकः स्वसुः। शत्रुर्ममायं वध्योऽद्य स्वाम्यकामः किलैष नः ॥ १६६
तच्छ्रुत्वा तेन सभ्येन पृष्टः प्रत्युत्तरं प्रति। नरवाहनदत्तोऽत्र वीरो विस्रब्धमब्रवीत् ॥ १६७
सा सभा यत्र सभ्योऽस्ति स सभ्यो धर्ममाह यः। स धर्मो यत्र सत्यं स्यात्तत्सत्यं यत्र न च्छलम् ॥ १६८
बद्धोऽहं माययात्रैव स्थितो भूमावयं पुनः। आसनस्थश्च मुक्तश्च को विवादः समोऽत्र नौ ॥ १६९
एतद्वायुपथः श्रुत्वा तमुपावेशयत्क्षितौ। न्यायान्मानसवेगं स तं मुक्तं चाप्यकारयत् ॥ १७०
ततः सर्वेषु शृण्वत्सु तत्र वायुपथाग्रतः। नरवाहनदत्तोऽसावेवं प्रतिवचोऽभ्यधात् ॥ १७१
हृतानीतामनेनैतां भार्यां मदनमञ्चुकाम्। निजां प्राप्तोऽस्मि चेत्कस्य शुद्धान्तो ध्वंसितो मया ॥ १७२
अस्या रूपेण चाभ्येत्य विप्रलभ्य कृतो यदि। अहं भर्ता भगिन्यास्य तत्र का मेऽपराधिता ॥ १७३
स्वाम्यकामोऽस्मि चेत्कामः कस्य कुत्र न जायते। एतच्छ्रुत्वा विमृश्याथ राजा वायुपथोऽब्रवीत् ॥ १७४
धर्म्यमाह महात्मायं भविष्यत्सुमहोदयः। अस्मिन्मानसवेगत्वमधर्मं भद्र मा कृथाः ॥ १७५
इत्युक्ते तेन नाधर्मान्मोहान्धो यन्न्यवर्तत। सोऽत्र मानसवेगस्तत्क्रोधं वायुपथो ययौ ॥ १७६
ततो मानसवेगेन सह संनद्धसैनिकः। बभूव तस्य संक्षोभस्तत्र धर्मानुरोधिनः ॥ १७७
धर्मासनोपविष्टा हि दुर्बलं बलिनं परम्। आत्मीयं बत जानन्ति धीरा न्यायैकदर्शिनः ॥ १७८
विहाय मायां युध्यस्व स्पष्टमेव मया सह। यावदेकप्रहारेण हन्मि त्वां पश्य पौरुषम् ॥ १७९
इति मानसवेगं च तदावोचद्विलोकयन्। नरवाहनदत्तोऽत्र दिव्यकन्याः सकौतुकाः ॥ १८०

अन्योन्यजातकलहेषु च तत्र तेषु विद्याधरेषु सहसैव सभान्तरस्थात्।
स्तम्भोत्तमाट्टसदिति प्रविभिन्नमध्याद्देवोऽथ भैरववपुः किल निर्जगाम ॥ १८१
व्याप्ताम्बरोऽञ्जननिभश्च विनिह्नुतार्को विद्युल्लतातरलदीप्रविलोचनार्चिः।
दन्तप्रभाविततपङ्क्तिपतद्बलाको गर्जन्महाप्रलयमेघ इव प्रचण्डः ॥ १८२

न भाविविद्याधरचक्रवर्तिनः पराभवोऽस्यास्ति शठेति स ब्रुवन्।
अधोमुखं मानसवेगमीश्वरो निराकरोद्वायुपथं प्रहर्षयन् ॥ १८३

आदाय तं च भुजयोर्भगवान्भुजाभ्यां संरक्षणाय नरवाहनदत्तमाशु।
प्रापय्य पर्वतवरं शुभमृष्यमूकमास्थापयत्स किल तत्र ततस्तिरोऽभूत् ॥ १८४

प्रशशाम परस्परं सभायामथ विद्याधरसंभ्रमः स तस्याम्।
स च वायुपथो यथागतं तैः सहितः स्वैरपरैस्ततो जगाम ॥ १८५

सोऽपि च मानसवेगः कृत्वा तां मदनमञ्चुकां पुरतः।
हर्षविषादाकुलितामाषाढपुरं निजं ययौ विप्रः ॥ १८६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके द्वितीयस्तरङ्गः।

---

## तृतीयस्तरङ्गः।

मन्ये कल्याणमेव स्यात्पुरुषस्यासमं विधिः। मुहुः परीक्षते गाढं धीरत्वं सुखदुःखयोः (?) ॥ १
यदेककं विदेशेषु तैस्तैर्दारैः पदे पदे। नरवाहनदत्तं स योजयित्वा व्ययोजयत् ॥ २
अथैतमृष्यमूकाद्रौ स्थितं तस्मिन्प्रभावती। नरवाहनदत्तं तं समागत्याब्रवीत्प्रिया ॥ ३
मत्संनिधिदोषेण लब्ध्वा नीतो भवांस्तदा। तां हि मानसवेगेन सभां पापं चिकीर्षुणा ॥ ४

तद्बुद्ध्वागत्य तत्कालं देवाविर्भावडम्बरम् । कृत्वा विद्याप्रभावेण मयेह प्रापितो भवान् ॥ ५
नास्मिन्विद्याधराणां हि गिरौ बलवतामपि । विद्याप्रपञ्चः क्रमते सिद्धक्षेत्रमिदं यतः ॥ ६
ममापि विद्याविभवो नात एवेह सिद्ध्यति । तन्मे दुःखं कथं त्वं हि वन्याहारेण वर्त्स्यसि ॥ ७
इत्युक्तवत्या तत्रासीत्कालाकाङ्क्षी तया सह । नरवाहनदत्तोऽसौ ध्यायन्मदनमञ्चुकाम् ॥ ८
सस्नौ तत्पर्वतासन्ने पम्पासरसि पावने । दिव्यास्वादानि बुभुजे मूलानि च फलानि च ॥ ९
मृगमांसोपदंशं च पुण्यं वापीपयः पपौ । फलैस्तीरतरुभ्रष्टैः सरसं च सुगन्धि च ॥ १०
उवास वृक्षमूलेषु गुहागर्भगृहेषु च । रामस्यानुययौ वृत्तं तद्देशवनवासिनः ॥ ११
रामाश्रमांश्च दृष्ट्वात्र तस्मै तांस्तान्प्रभावती । सा रामायणवृत्तान्तं विनोदार्थमवर्णयत् ॥ १२
इह रामः ससौमित्रिः सीतयानुगतो वने । उवास तापसैः सार्धं तरुमूले कृतोटजः ॥ १३
अनसूयाङ्गरागेण सीतामोदितकानना । इहास्त मुनिपत्नीनां मध्ये वल्कलधारिणी ॥ १४
अत्र दुन्दुभिदैत्यश्च गुहायां वालिना हतः । वालिसुग्रीवयोर्वैरे यदभूत्कारणं पुरा ॥ १५
सुग्रीवो हि भ्रमान्मत्वा हतं दैत्येन वालिनम् । गुहायाः पर्वतैर्द्वारं पिधाय सभयो ययौ ॥ १६
वाली च भित्त्वा तद्द्वारं निर्गत्य निरवासयत् । सुग्रीवं राज्यकामोऽत्र मामवध्नादसाविति ॥ १७
स सुग्रीवः पलाय्यास्मिन्नृष्यमूके कपीश्वरः । हनुमत्प्रमुखैः सार्धमत्र सानौ पदं व्यधात् ॥ १८
अथैत्य हेमहरिणव्याजवञ्चितचेतसः । जहार रामदेवस्य रावणो जनकात्मजाम् ॥ १९
ततः सीताप्रवृत्त्यर्थी स वालिनिधनार्थिना । सुग्रीवेण समं सख्यमत्र चक्रे रघूद्वहः ॥ २०
बिभेद च बलज्ञप्त्यै तालान्सप्तात्र पत्रिणा । एकं येष्वभिनत्कृच्छ्रात्सोऽपि वाली महाबलः ॥ २१
इतो गत्वा च किष्किन्धां हेलामुक्तैकसायकः । हत्वा तं वालिनं वीरः सुग्रीवे तच्छ्रियं न्यधात् ॥ २२
अथ सीताप्रवृत्त्यर्थं हनुमत्प्रभृतिष्वितः । चतुर्दिक्कं प्रयातेषु सुग्रीवस्यानुयायिषु ॥ २३
इह रामेण वर्षासु सह मेघैर्विराविभिः । पतद्धाराश्रुतोयैश्च समदुःखैरिवासितम् ॥ २४
संपातिवचनोत्तीर्णवारिधेश्च हनूमतः । यत्नात्प्रवृत्तौ ज्ञातायां गत्वा कपिबलैः सह ॥ २५
बद्ध्वाब्धिं सेतुना तेन हत्वा लङ्केश्वरं रिपुम् । आनिन्ये जानकी देवी विमानेनामुना पथा ॥ २६
एवं प्राप्स्यसि कल्याणमार्यपुत्र भवानपि । आपत्सु धीरान्पुरुषान्स्वयमायान्ति संपदः ॥ २७
इत्यादि कथयन्त्या स प्रभावत्या तया सह । नरवाहनदत्तोऽत्र क्रीडन्नासीदितस्ततः ॥ २८
एकदा तं च पम्पायां विद्याधर्यावुभे दिवः । धनवत्यजिनावत्याववतीर्योपजग्मतुः ॥ २९
याभ्यां स गन्धर्वपुराच्छ्रावस्तीं प्रापितोऽभवत् । भगीरथयशा यस्यां तेन सा पर्यणीयत ॥ ३०
प्रभावत्याजिनावत्यां मिलितायां स्वसख्यतः । नरवाहनदत्तं सा धनवत्येवमब्रवीत् ॥ ३१
एषाजिनावती प्राक्ते वाचा दत्ता सुता मया । तस्मात्परिणयस्वैनामासन्नोऽभ्युदयो हि ते ॥ ३२
एतद्धनवतीवाक्यं सखीस्नेहात्प्रभावती । नरवाहनदत्तश्च तथेत्यभिननन्दतुः ॥ ३३
ततो धनवती तस्मै ददौ तामजिनावतीम् । सा वत्सेश्वरपुत्राय यथार्हविधिना सुताम् ॥ ३४
स्वविद्याकल्पितोदारदिव्यसंभारसुन्दरम् । निर्वर्तयामास च तत्सा सुतोद्वाहमङ्गलम् ॥ ३५
नरवाहनदत्तं सा तमन्येद्युरथाब्रवीत् । न पुत्र यत्र तत्रेह स्थातुं युक्तं चिरं तव ॥ ३६
मायी विद्याधरजनो न च कार्यमिहास्ति ते । तद्गच्छ भार्यायुक्तस्त्वं कौशाम्बीमधुना निजाम् ॥ ३७
अहं च तत्रैवैष्यामि चण्डसिंहेन सूनुना । सह विद्याधरेन्द्रैश्च स्वकैरभ्युदयाय ते ॥ ३८
एवमुक्त्वा धनवती सज्योत्स्नामिव साह्न्यपि । सितात्मवस्त्रप्रभया कुर्वाणा दिवमुद्ययौ ॥ ३९
प्रभावत्यजिनावत्यौ प्रापयामासतुश्च तम् । नरवाहनदत्तं ते कौशाम्बीं नभसा पुरीम् ॥ ४०
सोऽत्र प्राप्तस्तदुद्यानं तस्यां व्योम्नोऽवतारितः । नरवाहनदत्तोऽभूद्दृष्टः परिजनैर्निजैः ॥ ४१
आगतो राजपुत्रोऽयं दिष्ट्या वर्धामहे वयम् । इति तत्रोदभून्नादो जनस्याथ समन्ततः ॥ ४२
ततोऽकाण्डसुधासारसंसिक्त इव सोत्सवः । वत्सराजोऽथ तद्बुद्ध्वा युक्तो वासवदत्तया ॥ ४३

पद्मावत्या वधूभिश्च द्रुतं रत्नप्रभादिभिः । यौगन्धरायणाद्याश्च ये वत्सेश्वरमन्त्रिणः ॥ ४४
कलिङ्गसेना स्वे चैव सचिवा गोमुखादयः । यथार्हं तमुपाजग्मुर्ग्रीष्मे ह्रदमिवाध्वगाः ॥ ४५
ददृशुस्ते च मध्ये तं सुदशार्हकुलं द्वयोः । पत्न्योः कृष्णमिवासीनं रुक्मिणीसत्यभामयोः ॥ ४६
अङ्गेष्वेव न वर्तेरन्स्फुटस्त्विति भयादिव । तेषां तद्दर्शने हर्षबाष्पैः पिदधिरे दृशः ॥ ४७
वत्सराजश्च देव्यौ च चिरादालिङ्ग्य तं सुतम् । न शेकुर्मोक्तुमङ्गेषु प्रोतं कण्टकितेष्विव ॥ ४८
ततः प्रहततूर्येऽत्र वर्तमाने महोत्सवे । नरवाहनदत्तस्य भार्या वेगवतः सुता ॥ ४९
स्वसा मानसवेगस्य द्युमार्गेणावतीर्य सा । आगाद्वेगवती बुद्धा सिद्धविद्याप्रभावतः ॥ ५०
पतित्वा पादयोः श्वश्रूश्वशुराणां निजं पतिम् । नरवाहनदत्तं सा जगाद चरणानता ॥ ५१
त्वत्कृते दुर्बलीभूताः साधयित्वा तपोवने । विद्या पुनरहं प्राप्ता तव कल्याणिनोऽन्तिकम् ॥ ५२
एवमुक्तवती पत्या तैश्चान्यैरभिनन्दिता । प्रभावत्यजिनावत्यौ सख्यावुपजगाम सा ॥ ५३
ताभ्यामाश्लिष्य सा मध्ये यावदत्रोपवेश्यते । तावन्माताजिनावत्या आययौ धनवत्यपि ॥ ५४
आजग्मुश्च तया साकं ते ते विद्याधराधिपाः । आच्छादिताम्बरतलैर्मेघैरिव बलैर्वृताः ॥ ५५
तस्या एव सुतो वीरश्चण्डसिंहो महाभुजः । तथामितगतिर्नाम तद्बन्धुः सुमहाबलः ॥ ५६
स च पिङ्गलगान्धारः प्रभावत्याः पिता बली । सोऽपि वायुपथः पूर्वप्रतिपन्नः सभापतिः ॥ ५७
स च हेमप्रभः शूरो राजा रत्नप्रभापिता । वज्रप्रभेण पुत्रेण साकं बलसमन्वितः ॥ ५८
गन्धर्वराजो गन्धर्वदत्तया सुतया युतः । आगात्सागरदत्तोऽपि सह चित्राङ्गदेन सः ॥ ५९
उपागताश्च ते सम्यग्वत्सराजेन पूजिताः । सपुत्रेणासनेष्वत्र यथोचितमुपाविशन् ॥ ६०
अथ पिङ्गलगान्धारो राजा जामातरं क्षणात् । नरवाहनदत्तं तं जगाद सदसि स्थितम् ॥ ६१
त्वं चक्रवर्ती सर्वेषामस्माकं देवनिर्मितः । अतिस्नेहवशात्त्वां च वयं सर्वेऽभ्युपागताः ॥ ६२
इयं धनवती देवी श्वश्रूस्ते नियतव्रता । दिव्यज्ञानवती साक्षसूत्रा कृष्णाजिनाम्बरा ॥ ६३
रक्षितुं त्वां कृतोद्योगा साक्षाद्भगवती यथा । सावित्री सिद्धविद्या वा वन्द्या विद्याधरोत्तमैः ॥ ६४
तदस्ति कार्यसिद्धिस्ते किं तु यद्ब्रूमि तच्छृणु । इह विद्याधराणां द्वौ वेदर्धौ स्तो हिमाचले ॥ ६५
उत्तरो दक्षिणश्चैव नानातच्छृङ्गभूमिगौ । परतः किल कैलासादुत्तरोऽर्वाक्तु दक्षिणः ॥ ६६
तत्रोत्तराधिपत्यार्थमिदानीं दुश्चरं तपः । एषोऽमितगतिः कृत्वा शंकरं पर्यतोषयत् ॥ ६७
नरवाहनदत्तस्ते चक्रवर्ती समीहितम् । करिष्यतीति तेनायमादिष्टस्त्वामुपागतः ॥ ६८
तत्र मन्दरदेवाख्यो मुख्यो राजास्ति दुर्मतिः । बलवानपि नासाध्यः प्राप्तविद्यस्य सोऽत्र ते ॥ ६९
यस्तु दक्षिणमध्येऽस्ति गौरिमुण्ड इति श्रुतः । राजा विद्याप्रभावेण स दुष्टात्मातिदुर्जयः ॥ ७०
स च मानसवेगस्य शत्रोस्ते परमः सुहृत् । यावन्न साधितः सोऽत्र तावत्कार्यं न सिद्ध्यति ॥ ७१
तत्त्वं साधय सोत्कर्षं शीघ्रं विद्याबलं महत् । इति पिङ्गलगान्धारेणोक्ते धनवती जगौ ॥ ७२
एवं पुत्र यथायं ते राजा वदति तत्तथा । सिद्धक्षेत्रमतो गत्वा विद्यासिद्ध्यर्थमीश्वरम् ॥ ७३
आराधय प्रकर्षो हि तत्प्रसादं विना कुतः । मिलिताश्चात्र रक्षन्ति राजानस्त्वाममी इति ॥ ७४
ततश्चित्राङ्गदोऽवादीदेवमेतदहं पुनः । सर्वेषामग्रयाम्येष विजयः क्रियतामिति ॥ ७५
अथैतदेव निश्चित्य कृत्वा प्रस्थानमङ्गलम् । पित्रोरुद्बाष्पयोः पादौ गुरूणां च प्रणम्य सः ॥ ७६
दत्ताशीस्तैः समारुह्य भार्याभिः सचिवैस्तथा । सहामितगतिप्रज्ञाकल्पितां शिबिकोत्तमाम् ॥ ७७
नरवाहनदत्तोऽतः प्रतस्थे स्थगयन्नभः । कल्पान्तपवनोद्धूतसागराम्भोनिभैर्बलैः ॥ ७८
सेनानादप्रतिश्रुद्भिर्दिगन्तेषु द्युचारिणाम् । आगतश्चक्रवर्तीव इति संवादयन्निव ॥ ७९
क्षणात्तैश्च स गन्धर्वपतिविद्याधरेश्वरैः । धनवत्या च नीतोऽभूत्तं सिद्धक्षेत्रपर्वतम् ॥ ८०
तत्रादिष्टव्रतः सिद्धैः प्रातःस्नायी फलाशनः । भूमिशायी तपश्चक्रे शंकराराधनाय सः ॥ ८१
परिवार्य च तं तस्थू राजानस्ते द्युचारिणाम् । सर्वतः कृतसंरक्षा दिवानिशमतन्द्रिताः ॥ ८२

विद्याधरकुमार्योऽत्र तपस्यन्तं तमुत्सुकाः। नेत्रप्रभाभिः संवीतकृष्णाजिनमिव व्यधुः॥ ८३
तच्चिन्तान्तर्मुखैर्नेत्रैः करैश्चोरःस्थलार्पितैः। अदर्शयन्निवान्यास्तं प्रविष्टं हृदि तत्क्षणम्॥ ८४
पञ्चापराश्च दृष्ट्वा तं सद्विद्याधरकन्यकाः। मदनानलसंतप्ताश्चक्रिरे समयं मिथः॥ ८५
अयं पञ्चभिरस्माभिः सखीभिर्युगपत्पतिः। वरणीयो विवाहश्च तद्वत्कार्यो न भेदतः॥ ८६
एका यदि पृथक्कुर्याद्विवाहममुना ततः। प्रवेष्टव्योऽग्निरन्याभिस्तामुद्दिश्य सखीद्रुहम्॥ ८७
इति दिव्यासु कन्यासु क्षुभ्यतीषु विभाव्य तम्। तत्राकस्मान्महोत्पाताः प्रादुरासंस्तपोवने॥ ८८
ववौ वायुर्महारौद्रो भद्रानुन्मूलयन्द्रुमान्। एवं शूराः पतिष्यन्ति रणेऽत्रेति वदन्निव॥ ८९
किमत्र स्यादिति भयादिव भूमिरकम्पत। भीतावकाशदानार्थमिवादीर्यन्त सानवः॥ ९०
विद्याधराः प्रभुं यत्नादमुं रक्षत रक्षत। इत्यब्रवीदिवानभ्रं घोरशब्दं नभस्तलम्॥ ९१
नरवाहनदत्तश्च सोऽस्मिन्नुत्पातसंभ्रमे। ध्यायन्निष्कम्प एवासीद्भगवन्तं त्रिलोचनम्॥ ९२
संनद्धास्ते च गन्धर्वराजविद्याधरेश्वराः। अनिष्टाशङ्किनो वीरास्तं रक्षन्तोऽत्रतस्थिरे॥ ९३
मुमुचुः सिंहनादांश्च व्याधूतासिलतावनाः। भर्त्सयन्त इवोत्पातानहितागमशंसिनः॥ ९४
ततोऽन्यैश्शुरकस्माच्च कल्पान्ताम्बुदमेदुरम्। विद्याधरबलं व्योम्नि घोरनादमदृश्यत॥ ९५
सोऽयं मानसवेगेन गौरिमुण्डः सहागतः। इत्युवाच स्मरन्ती स्वां विद्यां धनवती तदा॥ ९६
ततो विद्याधरेन्द्रांस्तान्सगन्धर्वानुदायुधान्। समं मानसवेगेन गौरिमुण्डोऽभ्यधावत॥ ९७
क मानुषोऽयं क वयं तदेतत्पक्षपातिनाम्। दर्पं वः शमयाम्यद्य खुचरा इति वादिनम्॥ ९८
चित्राङ्गदोऽथ तं क्रोधाद्धावन्प्रत्यभियुक्तवान्। राजा सागरदत्तश्च गन्धर्वाणामधीश्वरः॥ ९९
चण्डसिंहामितगती राजा वायुपथस्तथा। किं च पिङ्गलगान्धारः सर्वे विद्याधरेश्वराः॥ १००
पापं मानसवेगं तमभ्यधावन्महारथाः। सिंहा इवाभिगर्जन्तः सेनासमुदयान्विताः॥ १०१
सैन्यरेणुघनाकीर्णं शस्त्रज्वालातडिल्लतम्। पतद्रक्ताम्बु तदभूद्घोरं समरदुर्दिनम्॥ १०२
शोणितासवसंपूर्णं कीर्णशत्रुशिरोबलिम्। चक्रुर्भूतमहायागमिव चित्राङ्गदादयः॥ १०३
कबन्धग्राहसंकीर्णा वहदायुधपन्नगाः। प्रावर्तन्त मिलन्मेदोडिण्डीरा रुधिरापगाः॥ १०४
हतसैन्यो वधप्राप्तो गौरिमुण्डस्ततश्च सः। पूर्वाराधितसुप्रीतां गौरीविद्यां समस्मरत्॥ १०५
आविर्भूय च सा साक्षात्त्रिनेत्रा त्रिशिखायुधा। नरवाहनदत्तीयान्प्रवीरांस्तानमोहयत्॥ १०६
ततो लब्धबलो बाहुयुद्धायाभ्यपतन्नदन्। नरवाहनदत्तं तं गौरिमुण्डः प्रधाव्य सः॥ १०७
तद्बाहुयुद्धविद्धश्च मायी सस्मार तां पुनः। सद्विद्यां तद्बलात्तं च बाह्वोरादाय खं ययौ॥ १०८
हन्तुं धनवतीविद्याबलात्तं तु स नाशकत्। गौरिमुण्डो नृपसुतं चिक्षेप त्वग्निपर्वते॥ १०९
सोऽपि मानसवेगस्तांस्तत्सखीन्गोमुखादिकान्। गृहीत्वोत्पत्य गगनं दिक्षु प्रास्यदनास्थया॥ ११०
उत्क्षिप्तास्ते च रक्षित्वा धनवत्या प्रयुक्तया। रूपिण्या विद्यया भिन्नाः स्थाप्यन्ते स्म महीतले॥ १११
सिद्धकार्यं कुशलिनं शीघ्रं प्राप्स्यथ तं प्रभुम्। इत्याश्वास्यैकशस्तान्सा विद्या तेषां तिरोदधे॥ ११२
ततो विजितमस्माभिरिति मत्वा यथागतम्। सह मानसवेगेन गौरिमुण्डो ययौ गृहान्॥ ११३
नरवाहनदत्तो वः सिद्धकार्यः समेष्यति। न तस्यानिष्टमस्तीति धनवत्याभ्युदीरिते॥ ११४
तेऽप्यस्तमोहा गन्धर्वनाथ विद्याधरेश्वराः। चित्राङ्गदादयः स्वानि जग्मुः स्थानानि संप्रति॥ ११५
सापि तत्र सपत्नीभिः सहितामजिनावतीम्। स्वसुतां तां गृहीत्वा स्वं ययौ धनवती गृहम्॥ ११६
सोऽपि मानसवेगस्तां गत्वा मदनमञ्चुकाम्। उवाच स हतो भर्ता तव तद्भज मामिति॥ ११७
स वो हन्ता न तं हन्यात्कश्चिद्देवविनिर्मितम्। इति सा तत्पुरस्थापि हसन्ती प्रत्युवाच तम्॥ ११८
नरवाहनदत्तं च तद्द्विषा वह्निपर्वते। क्षिप्यमाणं तदागत्य दिव्यः कोऽप्यग्रहीत्पुमान्॥ ११९
निनाय चाशु रक्षित्वा शीतं मन्दाकिनीतटम्। को भवानिति पृष्टश्च तेनाश्वास्य जगाद तम्॥ १२०
अमृतप्रभनामाहं देव विद्याधराधिपः। प्रेषितश्च हरेणाहं रक्षार्थं भवतोऽधुना॥ १२१

अयं च तन्निवासोऽद्रिः कैलासस्ते स्थितोऽग्रतः । अत्राराध्य शिवं श्रेयो निर्विघ्नं त्वमवाप्स्यसि ॥ १२२
तदेह्यत्र नयामि त्वामित्युक्त्वा तत्र तत्क्षणात् । प्रापय्यामन्त्र्य च ययौ सोऽथ विद्याधरोत्तमः ॥ १२३
नरवाहनदत्तोऽपि कैलासं समवाप्य सः । तपसा तोषयामास तत्राग्रस्थं विनायकम् ॥ १२४
तेन दत्ताभ्यनुज्ञश्च प्रविश्य गिरिजापतेः । आश्रमं नियमक्षामो ददर्श द्वारि नन्दिनम् ॥ १२५
कृतप्रदक्षिणं चैतं स नन्दी सदयोऽब्रवीत् । प्रायः सिद्धोऽसि विघ्ना हि प्रशान्तास्ते तवाधुना ॥ १२६
तदिहस्थस्तपस्य त्वं भगवत्तोषणावधि । दुरितघ्नतपःशुद्धिसव्यपेक्षा हि सिद्धयः ॥ १२७
इत्युक्ते नन्दिना ध्यायन्देवं देवीं च पार्वतीम् । नरवाहनदत्तोऽग्रं तपस्तेपेऽनिलाशनः ॥ १२८
तपस्तुष्टश्च भगवान्स दत्त्वा दर्शनं शिवः । देव्या गिरिजया सार्धमेव प्रह्वं तमादिशत् ॥ १२९
विद्याधराणां सर्वेषां चक्रवर्ती भवाधुना । सर्वाः सर्वातिशायिन्यो विद्याः प्रादुर्भवन्तु ते ॥ १३०
अस्मत्प्रभावाच्छत्रूणामविजेयो भविष्यसि । अच्छेद्यश्चाप्यभेद्यश्च हनिष्यस्यखिलान्रिपून् ॥ १३१
दृष्टे त्वयि न विद्याश्च प्रभविष्यन्ति ते द्विषाम् । तद्गच्छ गौरीविद्यापि त्वदायत्ता भविष्यति ॥ १३२
इति गौर्या समं दत्त्वा वरं तस्मै ददौ हरः । चक्रवर्तिमहापद्मविमानं ब्रह्मनिर्मितम् ॥ १३३
ततस्तस्याविरासंस्ता विद्याः सर्वाः सविग्रहाः । किमादिशसि यत्कुर्म इत्याज्ञासाधनोत्सुकाः ॥ १३४

इति नरवाहनदत्तः सिद्धवरौघः प्रणम्य परमेशौ ।
अधिरुह्य तच्च दिव्यं पद्मविमानं तदभ्यनुज्ञातः ॥ १३५
प्रथमं तावदयासीदमितगतेस्तस्य वक्रपुरसंज्ञम् ।
पुरमावेदितमार्गो विद्याभिः सिद्धचारणोद्गीतः ॥ १३६
सोऽप्यारूढविमानं व्योम्ना प्राप्तं विलोक्य तं दूरात् ।
अमितगतिः समुपेत्य स्वगृहं प्रावेशयत्कृतप्रणतिः ॥ १३७
प्रददौ च तत्र वर्णितनिजसिद्धिप्राप्तये मुदा तस्मै ।
नरवाहनदत्ताय स सुलोचनाख्यामुपायनं स्वसुताम् ॥ १३८
सोऽत्र तया सह विद्याधरलक्ष्म्येवाप्तया तदाऽपरया ।
नयति स्म चक्रवर्ती ततोत्सवं प्रीतिमांस्तदहः ॥ १३९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके तृतीयस्तरङ्गः ।

---

## चतुर्थस्तरङ्गः ।

ततो वक्रपुरे तत्र स्थितमास्थानवर्तिनम् । नरवाहनदत्तं तं नूतनं चक्रवर्तिनम् ॥ १
अन्येद्युरवतीर्यैव वेत्रहस्तो नभस्तलात् । उपगम्य पुमानेकः प्रणम्यैवं व्यजिज्ञपत् ॥ २
चक्रवर्तिप्रतीहारं विद्धि देव क्रमागतम् । मां पौररुचिदेवाख्यं स्वसेवार्थमुपागतम् ॥ ३
तच्छ्रुत्वा सोऽमितगतेर्मुखमैक्षत तेन च । सत्यं देवेति विज्ञप्तः क्षत्तृत्वेऽभिननन्द तम् ॥ ४
अथ प्रभावतो बुद्ध्वा वेगवत्यादिभिः सह । तत्पत्नीभिर्धनवती चण्डसिंहश्च तत्सुतः ॥ ५
तथा पिङ्गलगान्धारो राजा वायुपथान्वितः । समं सागरदत्तेन तत्र चित्राङ्गदश्च सः ॥ ६
आययुः सैन्यरुद्धार्काः सह हेमप्रभादिभिः । परतेजोऽसहिष्णुत्वं सूचयन्त इवाग्रतः ॥ ७
उपेत्य पादयोस्तस्य निपेतुश्चक्रवर्तिनः । सोऽपि संमानयामास यथार्हं स्वागतेन तान् ॥ ८
धनवत्यास्तु चरणौ गौरवात्प्रणनाम सः । सापि जामातरं प्रीता तमाशीर्भिरवर्धयत् ॥ ९
उक्तात्मसिद्धिवृत्तान्तास्तेन ते प्रभुणा ततः । चण्डसिंहादयः सर्वे प्रमोदं सुतरां दधुः ॥ १०
पार्श्वोपयाताः पत्नीश्च दृष्ट्वा धनवतीं तदा । चक्रवर्ती स पप्रच्छ क ते मे सचिवा इति ॥ ११
क्षिप्ता मानसवेगेन रक्षित्वा स्थापिता मया । विद्यामुखेन ते भिन्ना इति सा प्रत्युवाच तम् ॥ १२

ततश्चानाययत्तान्स विद्यामादिश्य रूपिणीम् । आगतान्पृष्टकुशलान्पादलग्नाञ्जगाद च ॥ १३
इयन्तो दिवसाः केन कथं कुत्रातिवाहिताः । इत्येकैकेन युष्माभिश्चित्रं मे कथ्यतामिति ॥ १४
ततोऽवादीत्स्ववृत्तान्तमादावेवं स गोमुखः । द्विषा क्षिप्तं तदा कापि देवी मां हस्तयोरधात् ॥ १५
आश्वास्य दूरेऽरण्ये च स्थापयित्वा तिरोदधे । ततोऽहं दुःखितो देहं त्यक्तुमैच्छं प्रपाततः ॥ १६
मैवं गोमुख सिद्धार्थं पुनर्द्रक्ष्यसि तं प्रभुम् । इति मां तापसस्तावत्कोऽप्युपेत्य न्यवारयत् ॥ १७
कस्त्वं कथं च वेत्स्येतदित्युक्तश्च मया ततः । एह्याश्रमं मे वक्ष्यामि तत्रैतदिति सोऽब्रवीत् ॥ १८
ततो मन्नामविज्ञानसूचितज्ञानसंपदा । अहं तेन सहागच्छं शिवक्षेत्रं तदाश्रमम् ॥ १९
तत्र मे स कृतातिथ्यः कथां स्वामेवमभ्यधात् । नागस्वामीति नामाहं कुण्डिनाख्यात्पुराद्द्विजः ॥ २०
पितरि स्वर्गते सोऽहं गत्वा पाटलिपुत्रकम् । जयदत्तमुपाध्यायं विद्याहेतोरुपासदम् ॥ २१
शिक्ष्यमाणोऽपि जाड्येन न यदाक्षरमप्यहम् । अविदं तेन मां तत्र च्छात्राः सर्वेऽप्युपाहसन् ॥ २२
ततोऽवमानग्रस्तोऽहं प्रस्थितो विन्ध्यवासिनीम् । द्रष्टुमर्धपथे प्राप्तं पुरं वक्रोलकाभिधम् ॥ २३
तत्र मह्यं प्रविष्टाय भिक्षार्थं गृहिणी गृहात् । एकस्माद्रक्तकमलं प्रददौ भिक्षया सह ॥ २४
तद्गृहीत्वापरं गेहं प्राप्तं मां वीक्ष्य चाब्रवीत् । तत्रत्या गेहिनी हा धिग्योगिन्या स्वीकृतो भवान् ॥ २५
पश्य दत्तो नृहस्तस्ते रक्ताब्जव्याजतोऽनया । तच्छ्रुत्वा यावदीक्षेऽहं तावत्पाणिः स नाम्बुजम् ॥ २६
तत्त्यक्त्वाथ पतित्वास्याः पादयोरहमब्रवम् । मातः कुरुष्वोपायं मे यथा जीवाम्यहं तथा ॥ २७
तच्छ्रुत्वा मामवादीत्सा गच्छेतो योजनत्रये । देवरक्षित इत्यस्ति ग्रामे करभके द्विजः ॥ २८
तस्यास्ति कपिला गेहे साक्षात्सुरभिरुत्तमा । साद्य त्वां शरणं प्राप्तं रक्षिष्यति निशामिमाम् ॥ २९
एवं तयोक्तः सभयो धावन्नस्मि दिनक्षये । प्राप्तवान्करभग्रामे गृहं तस्य द्विजन्मनः ॥ ३०
प्रविश्य तत्र दृष्ट्वाहं कपिलां तां प्रणम्य च । भीतस्त्वां शरणं देवि प्राप्तोऽस्मीति व्यजिज्ञपम् ॥ ३१
तावत्सा तर्जयन्ती मामन्याभिः सह योगिनी । तत्रागान्नभसा नक्तं मन्मांसरुधिरार्थिनी ॥ ३२
तद्दृष्ट्वा कपिला साथ खुरमध्ये निवेश्य माम् । अरक्षद्योधयन्ती ता योगिनीरखिलां निशाम् ॥ ३३
प्रातस्तासु गतास्वेषा कपिला व्यक्तया गिरा । मामवोचन्न पुत्राहं त्वां शक्ष्याम्यद्य रक्षितुम् ॥ ३४
तद्गच्छ पञ्चयोजन्यामितोऽरण्ये शिवालये । अस्ति भूतिशिवो नाम ज्ञानी पाशुपतोत्तमः ॥ ३५
स रक्षिष्यति रात्रिं त्वामद्यैकां शरणागतम् । तच्छ्रुत्वा तां प्रणम्यैव ततोऽहं प्रस्थितोऽभवम् ॥ ३६
द्रुतं भूतिशिवं तं च प्राप्याहं शरणं श्रितः । नक्तं च तत्र योगिन्यस्तास्तथैवागमन्पुनः ॥ ३७
ततः प्रवेश्य मामन्तर्गृहं भूतिशिवः स ताः । त्रिशूलहस्तो द्वारस्थो योगिनीर्निरभर्त्सयत् ॥ ३८
जित्वैता भोजयित्वा मां प्रातर्भूतिशिवोऽभ्यधात् । ब्रह्मन्न शक्ष्याम्यधुना रक्षितुं त्वामहं पुनः ॥ ३९
तदस्ति संध्यावासाख्ये योजनेषु दशस्वितः । ग्रामे वसुमतिर्नाम विप्रस्तस्यान्तिकं व्रज ॥ ४०
ततस्तृतीयामद्य त्वं रात्रिमुत्तीर्य मोक्ष्यसे । इत्युक्तस्तेन नत्वा तं ततः प्रस्थितवानहम् ॥ ४१
गच्छतश्चाध्वनो दैर्घ्याद्गतोऽस्तं मेऽन्तरा रविः । योगिन्यस्ताश्च मां नक्तमगृह्णन्नेत्य पृष्ठतः ॥ ४२
मां गृहीत्वा च यावत्ता हृष्टा यान्ति विहायसा । तावत्तासां पुरोऽपूर्वा योगिन्योऽन्याः परापतन् ॥ ४३
ताभिः सहोदभूदासामकस्माद्युद्धमुद्धतम् । तेन तासामहं हस्ताद्भ्रष्टो देशेऽतिनिर्जने ॥ ४४
एकमेवाथ तत्राहमपश्यं मन्दिरं महत् । प्रविशेति ब्रुवदिव द्वारेणापावृतेन माम् ॥ ४५
पलाय्याभ्यन्तरे तत्र प्रविश्याहं भयाकुलः । अद्राक्षमद्भुताकारां नारीं नारीशतान्विताम् ॥ ४६
प्रकाशमानां प्रभया प्रदीपैर्ज्वलितामिव । रक्षामहौषधिं सृष्टां धात्रा मदनुकम्पया ॥ ४७
क्षणान्मया समाश्वस्य पृष्टा सा मामभाषत । यक्षिण्यहं सुमित्राख्या शापादेवमिह स्थिता ॥ ४८
मानुषेण च मे सङ्गः प्रदिष्टः शापशान्तये । तन्मामशङ्कितप्राप्तो भजस्व भव निर्भयः ॥ ४९
इत्युक्त्वा क्षिप्रमाविश्य दासीः स्नानविलेपनैः । वस्त्रैराहारपानैश्च हृष्टं सा मामुपाचरत् ॥ ५०
क्व डाकिनीभिर्भीतिः सा क्व सुखं तच्च तत्क्षणम् । अचिन्त्यो बत दैवेनाप्यापातः सुखदुःखयोः ॥ ५१

ततस्तया समं तत्र यक्षिण्या तान्यहान्यहम् । सुखमासमथ स्वैरमेकदा साब्रवीच्च माम् ॥ ५२
क्षीणः शापः स मे ब्रह्मंस्तदितोऽद्य व्रजाम्यहम् । मत्प्रसादाच्च दिव्यं ते विज्ञानं संभविष्यति ॥ ५३
तपस्वी सिद्धभोगश्च निर्भयश्च भविष्यसि । इहस्थो मद्गृहस्यास्य मा द्राक्षीर्मध्यमं पुरम् ॥ ५४
एवमुक्त्वा तिरोऽभूत्सा ततोऽहं कौतुकेन तत् । मध्यमं पुरमारूढस्तत्रापश्यं तुरंगमम् ॥ ५५
तेनाहं निकटप्राप्तः क्षिप्तोऽश्वेन खुराहतः । क्षणाद्द्राक्षमात्मानं स्थितमस्मिञ्शिवालये ॥ ५६
ततः प्रभृति चात्राहं स्थितः सिद्धोऽस्मि च क्रमात् । तदित्थं मानुषस्यापि त्रिकालज्ञानमस्ति मे ॥ ५७
एवं च क्लेशबहुलाः सर्वस्यापीह सिद्धयः । तदिहास्स्व तवाभीष्टसिद्धिं शंभुर्विधास्यति ॥ ५८
इत्युक्तो ज्ञानिना तेन तत्रेयन्ति दिनान्यहम् । त्वत्पादप्राप्तिजातास्थः स्थितोऽभूवं तदाश्रमे ॥ ५९
स्वप्नादिष्टभवत्सिद्धिः शर्वेणाद्य किल प्रभो । कयाप्यहमिहानीतो गृहीत्वा दिव्यया स्त्रिया ॥ ६०
इत्येष मम वृत्तान्त इत्युक्त्वा गोमुखे स्थिते । नरवाहनदत्ताग्रे मरुभूतिरथाब्रवीत् ॥ ६१
क्षिप्तं मानसवेगेन मां तदा कापि देवता । पाण्योर्विधाय विन्यस्य दूरेऽटव्यां तिरोऽभवत् ॥ ६२
ततोऽहं तत्र दुःखार्तो मरणोपायचिन्तया । भ्राम्यन्नदीपरिक्षिप्तं दृष्टवानेकमाश्रमम् ॥ ६३
तत्र प्रविश्य चापश्यमुपविष्टं शिलातले । जटाभिस्तापसं तं च प्रणम्याहमुपागमम् ॥ ६४
कस्त्वं कथमनुप्राप्तोऽस्येतां भूमिममानुषीम् । इति पृष्टश्च तेनाहं तस्मै सर्वमवर्णयम् ॥ ६५
ततः स बुद्ध्वावोचन्मां मात्मानं सांप्रतं वधीः । ज्ञास्यसीह प्रभोर्वार्तां ततः कर्तासि यत्क्षमम् ॥ ६६
इति तद्वचनाद्युष्मद्वार्ताजिज्ञासया स्थिते । मयि तत्र स्त्रियो दिव्या नदीं तां स्नातुमागमन् ॥ ६७
सोऽथ मां तापसोऽवादीद्गच्छासां वस्त्रमानय । आसु स्नान्त्यास्त्वमेकस्या वार्तां ज्ञास्यस्यतः प्रभोः ॥ ६८
तच्छ्रुत्वाहं तथाकार्षं मामन्वागाच्च सा वधूः । हृतवस्त्रार्द्रवसना सहस्तस्वस्तिकस्तनी ॥ ६९
नरवाहनदत्तस्य वार्तामाख्याय वाससी । गृहाणेत्युदिता तेन तापसेनाथ साब्रवीत् ॥ ७०
नरवाहनदत्तोऽद्य हरमाराधयन्स्थितः । कैलासे दिवसैर्विद्याधरसम्राड् भविष्यति ॥ ७१
एवमुक्तवती तस्य संपेदे तापसस्य सा । भार्या शापवशाद्दिव्या तत्कथासंस्तवाद्वधूः ॥ ७२
ततस्तया समं तस्थौ विद्याधर्या स तापसः । तद्गिरा चाहमत्रासं जातास्थस्त्वत्समागमे ॥ ७३
दिनैः सगर्भा त्र सती गर्भं शुक्री प्रसूय तम् । सावोचत्तापसं शान्तः शापस्त्वत्सङ्गतो मम ॥ ७४
भूयो मत्सङ्गवाञ्छा ते यदि तत्तण्डुलैः सह । पक्त्वा मद्गर्भमेतं त्वं भुङ्क्ष्व प्राप्स्यसि मां ततः ॥ ७५
इत्युक्त्वास्यां प्रयातायामेतद्गर्भं सतण्डुलम् । पक्त्वा भुक्त्वान्वगादेतां खमुत्पत्य स तापसः ॥ ७६
अहं तदुक्तोऽप्यादौ तत्राश्नां सिद्धिमवेक्ष्य तु । भक्तसिक्थद्वयं प्राप्य पाकभाण्डादभक्षयम् ॥ ७७
तेन यत्राहमष्ठीवमभूत्तत्र काञ्चनम् । अथादैन्यः परिभ्राम्यन्प्रापमेकमहं पुरम् ॥ ७८
तत्र वेश्यागृहे हेम्ना तेनोदारव्ययस्य मे । वसतो वमनं प्रादाज्जिज्ञासुः कुट्टनी छलात् ॥ ७९
तेन मे वमतो भास्वत्पद्मरागनिभे उभे । प्राग्भुक्तभक्तसिक्थे ते मुखेन निरगच्छताम् ॥ ८०
निर्गते एव कुट्टन्या गृहीते भक्षिते च ते । नष्टाथ हेमसिद्धिः सा कुट्टन्यापहृता तया ॥ ८१
सचन्द्रार्धः शिवोऽद्यापि हरिर्येन सकौस्तुभः । तत्तयोर्वेद्मि कुट्टन्या गोचरापतने फलम् ॥ ८२
किं चेदृगेष संसारो बह्वाश्चर्यो बहुच्छलः । परिच्छेत्तुं कदा केन समुद्र इव पार्यते ॥ ८३
इत्यहं विमृशन्खिन्नस्त्वत्प्राप्त्यै चण्डिकागृहम् । अगच्छं तपसा देवीं तामाराधयितुं ततः ॥ ८४
त्रिरात्रोपोषितं सा मां देवी स्वप्ने समादिशत् । सिद्धकामः स ते स्वामी संपन्नो गच्छ पश्य तम् ॥ ८५
एतच्छ्रुत्वा प्रबुद्धोऽस्मि प्रातर्देव्या कयाप्यहम् । त्वत्पादमूलमानीत इत्येषा देव मे कथा ॥ ८६
इत्युक्तवन्तं कुट्टन्या मरुभूतिं विडम्बितम् । नरवाहनदत्तोऽसौ जहास सह पार्श्वगैः ॥ ८७
ततो हरिशिखोऽवादीत्प्रास्तं मां रिपुणा तदा । उज्जयिन्यां न्यधात्कापि रक्षित्वा देव देवता ॥ ८८
तत्राहं दुःखितो देहं त्यक्तुमिच्छन्निशागमे । गत्वा श्मशानं तत्रत्यैः काष्ठैररचयं चिताम् ॥ ८९
तां प्रज्वाल्य च तत्राग्निं पूजयन्तमुपेत्य माम् । तालजङ्घ इति ख्यातो भूताधिपतिरभ्यधात् ॥ ९०

किमर्थं प्रविशस्यग्निं स्थितो जीवन्स ते प्रभुः। पूर्णस्वसिद्धिकामेन तेन त्वं संगमिष्यसि ॥ ९१
इति मां मरणात्प्रीत्या स क्रूरोऽपि न्यवारयत्। ग्रावाणोऽप्यार्द्रतां सम्यग्भजन्त्यभिमुखे विधौ ॥ ९२
गत्वा ततोऽहं देवाग्रे तपस्यंश्च ततः स्थितः। तवानीतः कयाप्यद्य पार्श्वं देवतया प्रभो ॥ ९३
एवं हरिशिखेनोक्ते तथैवान्यैरपि क्रमात्। नरवाहनदत्तोऽसौ राजामितगतेर्गिरा ॥ ९४
तामर्हन्तीं धनवतीं प्रेर्य विद्याधरार्चिताम्। तेभ्यः स्वसचिवेभ्योऽपि विद्याः सर्वा अदापयत् ॥ ९५
ततो विद्याधरीभूतेष्वेषु तत्सचिवेष्वपि। शत्रूञ्जयाधुनेत्युक्तो धनवत्या शुभेऽहनि ॥ ९६
स चक्रवर्ती सैन्यानां प्रयाणारम्भमादिशत्। वीरो गोविन्दकूटाख्यं गौरिमुण्डपुरं प्रति ॥ ९७
अथोच्चचाल च्छन्नार्कं विद्याधरबलं दिवि। वैरिशीतकराकालराहूदयकृतभ्रमम् ॥ ९८
नरवाहनदत्तोऽपि स्वयमारुह्य कर्णिकाम्। तस्य पद्मविमानस्य भार्याः स्वाः केसरेषु च ॥ ९९
आरोप्य पत्रेषु सखींश्चण्डसिंहादिकेषु च। पुरःसरेषु नभसा प्रतस्थे विजयाय सः ॥ १००
गच्छंश्चार्धपथप्राप्ते तस्थौ धनवतीगृहे। तदर्चितः संस्तदहर्मातङ्गपुरसंज्ञके ॥ १०१
तत्रस्थश्चाहवाह्वाने दूतमेकं व्यसर्जयत्। विद्याधरेशयोर्गौरिमुण्डमानसवेगयोः ॥ १०२
अन्येद्युस्तत्र मातङ्गपुरे पत्नीर्निधाय सः। गोविन्दकूटं तं प्रायाद्राजभिर्नुचरैः सह ॥ १०३
तत्र युद्धाय तौ गौरिमुण्डमानसवेगकौ। निर्गतौ प्रत्यगृह्णंस्ते चण्डसिंहादयोऽग्रतः ॥ १०४
प्रवृत्तसमरादिष्टपतत्सुभटपादपः। सोऽभूद्गोविन्दकूटाद्रिः स्रवद्रुधिरनिर्झरः ॥ १०५
रक्तलिप्तलसत्खड्गलताजिह्वो व्यजृम्भत। सङ्ग्रामकालः शूराणां जिघत्सुर्जीवितानि सः ॥ १०६
मांसासृङ्मत्तवेतालतालवाद्यविशङ्कटः। अभून्नृत्यत्कबन्धोऽसौ भूतप्रीत्यै रणोत्सवः ॥ १०७
अथ मानसवेगं तं रणेऽस्मिन्संमुखागतम्। नरवाहनदत्तः स स्वयमभ्यपतत्क्रुधा ॥ १०८
अभिपत्य च केशेषु गृहीत्वा तस्य तत्क्षणम्। चक्रवर्ती स चिच्छेद शिरः खड्गेन पाप्मनः ॥ १०९
तद्दृष्ट्वा कुपितं तत्र गौरिमुण्डं प्रधावितम्। केशेष्वाकृष्य तद्दृष्टिनष्टविद्याबलं भुवि ॥ ११०
क्षिप्त्वा गृहीत्वाङ्घ्रियुगे भ्रामयित्वा नभस्तले। नरवाहनदत्तोऽसौ तं शिलायामचूर्णयत् ॥ १११
एवं तेन तयोर्गौरिमुण्डमानसवेगयोः। हतयोस्तद्बलं शेषमगाद्भीतं पलाय्य तत् ॥ ११२
पपात पुष्पवृष्टिश्च तस्याङ्गे चक्रवर्तिनः। गगनस्थाः सुराः सर्वे साधु साध्विति चाब्रुवन् ॥ ११३
अथात्र गौरिमुण्डस्य राजधानीं विवेश सः। नरवाहनदत्तस्तैः स्वैः सर्वैं राजभिः सह ॥ ११४
तदैव गौरिमुण्डादिसंबद्धास्तस्य शासनम्। एत्य विद्याधराधीशाः प्रणताः प्रतिपेदिरे ॥ ११५
ततोऽत्र निहताराति राज्यप्राप्त्युत्सवान्तरे। उपेत्य तं धनवती सा सम्राजं व्यजिज्ञपत् ॥ ११६
देवास्ति गौरिमुण्डस्य सुता त्रैलोक्यसुन्दरी। तामिहात्मनिकानाम्नीमुपयच्छस्व कन्यकाम् ॥ ११७
इत्युक्तः स तया राजा तामानाय्यैव तत्क्षणम्। उपयेमे तया साकमासीच्च तदहः सुखम् ॥ ११८
प्रातर्मानसवेगस्य पुरान्मदनमञ्चुकाम्। आनाययद्वेगवतीप्रभावत्यौ विसृज्य सः ॥ ११९
आनीता हर्षबाष्पार्द्रविकस्वरमुखी पतिम्। उदयस्थं हताराततिमसं प्रविलोक्य तम् ॥ १२०
शूरं विरहदोषान्ते भेजे कमपि संमदम्। सावश्यायजलोत्फुल्लकमला नलिनीव सा ॥ १२१
सोऽपि तस्यै मुदा दत्त्वा सर्वविद्याश्चिरोत्सुकः। रेमे तया समं सद्यः प्राप्तविद्याधरत्वया ॥ १२२
निनाय तानि चाहानि भार्याभिः सह तत्र सः। गौरिमुण्डपुरोद्यानवर्ती पानादिलीलया ॥ १२३
प्रभावतीं विसृज्याथ भगीरथयशा अपि। आनायिताभूत्तेनाथ विद्याश्चास्यै स दत्तवान् ॥ १२४
एकदा च तमास्थानवर्तिनं चक्रवर्तिनम्। यथावदेत्य विज्ञप्तवन्तौ विद्याधरावुभौ ॥ १२५
आवामुत्तरवेद्यर्धे देवाभूव गतावितः। ज्ञातुं मन्दरदेवस्य चेष्टां धनवतीगिरा ॥ १२६
तत्र दृष्टः स चास्थानगतो विद्याधरेश्वरः। आवाभ्यां छन्नदेहाभ्यामेवं युष्मान्प्रति ब्रुवन् ॥ १२७
श्रुतं मया यन्निहता गौरिमुण्डादयोऽखिलाः। नरवाहनदत्तेन प्राप्य विद्याधरेशताम् ॥ १२८
तदुपेक्ष्यो न सोऽस्माभिर्हन्तव्यस्तूद्भवन्रिपुः। एतच्छ्रुत्वा वचस्तस्मादावां वक्तुमिहागतौ ॥ १२९

इति चारमुखाच्छ्रुत्वा बभौ कोपाकुला सभा । नरवाहनदत्तस्य पद्मिनीवानिलाहता ॥ १३०
चित्राङ्गदस्य बाहू स्वौ विधूतप्रसृतौ पुनः । अमार्गतामिवादेशं योद्धुं वलयनिःस्वनैः ॥ १३१
हारोऽमितगतेर्वक्षस्युत्फलञ्श्वसतः क्रुधा । उत्तिष्ठोत्तिष्ठ वीर त्वमितीव मुहुरब्रवीत् ॥ १३२
भूमिं पिङ्गलगान्धारः करेण घ्नन्सशब्दकम् । चूर्णनोपक्रमोंकारमिव व्यधित वैरिणाम् ॥ १३३
मुखे वायुपथस्यापि भ्रुकुटिः पदमादधे । कोपेनारोपिता चापलतेवान्ताय विद्विषाम् ॥ १३४
संक्रुद्धः पाणिना पाणिं चण्डसिंहः प्रमर्दयन् । एवं विनिर्मथाम्यस्मिञ्शत्रूनित्यभ्यधादिव ॥ १३५
बाहुः सागरदत्तस्य करास्फालनजन्मना । शब्देन मूर्च्छता व्योम्नि रिपुमाह्वयतेव तम् ॥ १३६
नरवाहनदत्तस्तु कोपेऽप्यासीदनाकुलः । अक्षोभ्यतैव महतां महत्त्वस्य हि लक्षणम् ॥ १३७
सुचारिचक्रवर्त्यङ्गरत्नसाधनपूर्वकम् । शत्रुं स जेतुं चक्रेऽत्र यात्रायै निश्चयं तदा ॥ १३८
अथारुह्य विमानं तत्सभार्यः सचिवान्वितः । चक्रवर्ती प्रतस्थे स ततो गोविन्दकूटतः ॥ १३९
ते च सर्वेऽपि गन्धर्वराजविद्याधराधिपाः । सबलाः परिवृत्त्यैतं चेलुश्चन्द्रमिव ग्रहाः ॥ १४०
धनवत्यां पुरोगायामथासाद्य हिमाचलम् । नरवाहनदत्तः स प्रापदेकं महत्सरः ॥ १४१
सितपद्मोच्छ्रितच्छत्रमुल्लसद्धंसचामरम् । उपस्थितमिवादाय सम्राड्योग्यमुपायनम् ॥ १४२
उच्चैरभिमुखोदस्तैर्वीचिहस्तैरदूरतः । कुर्वत्साम्राज्यसंसिद्धिस्नानाह्वानमिवासकृत् ॥ १४३
चक्रवर्तिन्सरस्यस्मिन्स्नातव्यं भवतेति सः । सम्राड् वायुपथेनोक्तस्तत्र स्नातुमवातरत् ॥ १४४
नाचक्रवर्तिनः स्नानं सिद्ध्यत्यत्र तदद्य ते । सिद्धं तच्चक्रवर्तित्वमिति दिव्याब्रवीच्च वाक् ॥ १४५
तच्छ्रुत्वा चक्रवर्ती स प्रविष्टस्तज्जलान्तरे । चिक्रीडान्तःपुरैः साकं पाथस्पतिरिवाम्बुधौ ॥ १४६
धौताञ्जनारुणदृशः श्लथधम्मिल्लबन्धनाः । रेमे सोऽत्र प्रियाः पश्यन्नङ्गलग्नार्द्रवाससः ॥ १४७
सशब्दमुत्पतन्त्योऽस्मात्सरसः पत्रिपङ्क्तयः । प्रत्युद्गतानां रशनास्तच्छ्रियामिव रेजिरे ॥ १४८
तद्वधूवदनाम्भोजलावण्यविजितानि च । ममज्जुर्लज्जयेवात्र पङ्कजानि जलोर्मिषु ॥ १४९
कृतस्नानश्च तदहस्तस्यैव सरसस्तटे । नरवाहनदत्तोऽसावुवास सपरिच्छदः ॥ १५०
तत्र नर्मकथालापैः स भार्यासचिवः कृती । स्थित्वा प्रातर्विमानस्थः प्रतस्थे सबलस्ततः ॥ १५१
गच्छन्वायुपथस्याथ प्राप्य मार्गवशात्पुरम् । तस्थौ तदनुरोधेन तं तत्रैव स वासरम् ॥ १५२
अत्र दृष्टचरी तेन कन्या वायुपथस्वसा । वायुवेगयशा नाम ह्युद्यानस्थाभ्यवाञ्छयत ॥ १५३
सा हेमवालुकनदीतीरोद्यानविहारिणी । संपूर्णचन्द्रवदना सौम्यालापमनोरमा ॥ १५४
सितहासा गुरुश्रोणिभारा सद्गृहशालिनी । वीक्ष्यागतं तं तद्रक्तचित्ताप्यन्तर्दधे ततः ॥ १५५
विलक्षोऽथ स तां मत्वा हेत्वन्तरपराङ्मुखीम् । नरवाहनदत्तोऽत्र निजमावासमाययौ ॥ १५६
तत्र गोमुखवैदग्ध्यवशेन मरुभूतिना । वृत्तं राज्ञः सहस्थेन वृत्तान्तमुपलभ्य तम् ॥ १५७
देव्यश्चित्रान्परीहासान्सम्राजस्तस्य चक्रिरे । मरुभूतेरवैदग्ध्यात्सत्रपे गोमुखे स्थिते ॥ १५८
सलज्जमथ राजानं वीक्ष्याश्वास्य च गोमुखः । वायुवेगयशश्चित्तं जिज्ञासुस्तत्पुरं ययौ ॥ १५९
ततो वायुपथोऽकस्मात्पुरं द्रष्टुमिवागतम् । दृष्ट्वा प्रीतिकृतातिथ्यो नीत्वैकान्ते जगाद तम् ॥ १६०
वायुवेगयशा नाम कन्यास्ति भगिनी मम । सिद्धैः सा भाविनी चक्रवर्तिभार्या किलोदिता ॥ १६१
अतस्तामिह दित्सामि प्राभृतं चक्रवर्तिने । नरवाहनदत्ताय तन्मे त्वं साधयेप्सितम् ॥ १६२
आगन्तुं प्रस्तुतश्चाहमेतदर्थं तवान्तिकम् । इति वायुपथेनोक्ते मन्त्री तं गोमुखोऽब्रवीत् ॥ १६३
यद्यप्यरिजिगीषार्थं प्रस्थितः प्रभुरेष नः । विज्ञापय तथापि त्वमहं ते साधयाम्यदः ॥ १६४
इत्युक्त्वामन्त्र्य तं गत्वा सिद्धं कार्यं न्यवेदयत् । नरवाहनदत्ताय गोमुखोऽभ्यर्थनां विना ॥ १६५
अन्येद्युश्च तमत्रार्थमेत्य वायुपथे स्वयम् । विज्ञापयति राजानं तं धीमान्गोमुखोऽब्रवीत् ॥ १६६
न कार्योऽभ्यर्थनाभङ्गो देव वायुपथस्य ते । भक्तोऽयं यद्ब्रवीत्येष कर्तव्यं तत्प्रभोरिदि ॥ १६७

१ श्लोकोऽसमुद्रिते पुस्तके संपूर्णत्वादिश्लोकत्रुटितः.

ततः स प्रतिपेदे तद्राजा वायुपथोऽपि ताम् । तस्मै प्रादादनिच्छन्तीमप्यानीय निजानुजाम् ॥ १६८
विवाह्यमाना सावोचदनिच्छन्ती बलादहम् । भ्रात्रा दत्तेति नाधर्मो लोकपाला ममास्त्यतः ॥ १६९
एतद्ब्रुवत्यां तस्यां च सर्वा वायुपथाङ्गनाः । चक्रुः कोलाहलं येन नान्ये तच्छुश्रुवुर्वचः ॥ १७०
ततो राजन्नुपादायितद्वाक्याशयलब्धये । गोमुखो युक्तिमन्वेष्टुं तत्राभ्रमदितस्ततः ॥ १७१
भ्रान्त्वा ददर्श चैकान्ते विद्याधरकुमारिकाः । अग्निप्रवेशं युगपच्चतस्रः कर्तुमुद्यताः ॥ १७२
कारणं तेन पृष्टाश्च जगदुस्ताः सुमध्यमाः । समयोल्लङ्घनं तस्मै वायुवेगयशःकृतम् ॥ १७३
ततः स गोमुखो गत्वा राजन्स्तत्सर्वसंनिधौ । नरवाहनदत्ताय यथावस्तु न्यवेदयत् ॥ १७४
तद्बुद्ध्वा विस्मिते राज्ञि वायुवेगयशास्तदा । जगादोत्तिष्ठ गच्छामस्त्वरितं रक्षितुं वयम् ॥ १७५
आर्यपुत्र कुमारीस्तास्ततो वक्ष्यामि कारणम् । इत्युक्तः स तया राजा तत्र सर्वैः समं ययौ ॥ १७६
ददर्श च कुमारीस्ताः पुरःप्रज्वलितानलाः । विधार्यैताश्च राजानं वायुवेगयशा जगौ ॥ १७७
एषैका कालिका नाम कालकूटपतेः सुता । विद्युत्पुञ्जा द्वितीयेयं विद्युत्पुञ्जात्मसंभवा ॥ १७८
मन्दरस्य सुता राजंस्तृतीयैषा मतङ्गिनी । चतुर्थीयं महादंष्ट्रसुता पद्मप्रभा प्रभो ॥ १७९
पञ्चम्यहं चेति वयं दृष्ट्वा त्वां मारमोहिताः । सिद्धक्षेत्रे तपस्यन्तं व्यदध्म समयं मिथः ॥ १८०
समं पञ्चभिरस्माभिराहार्योऽयं प्रियः पतिः । नात्मार्पणीयस्त्वेतस्मै कयाचिदपि भिन्नया ॥ १८१
एका चेत्पृथगेतेन विवाहं विदधीत तत् । प्रवेश्यो वह्निरन्याभिरुद्दिश्यैतां सखीद्रुहम् ॥ १८२
एतत्समयभीताहं नैच्छं परिणयं पृथक् । न चात्मा तुभ्यमधुनाप्यार्यपुत्र समर्प्यते ॥ १८३
ममार्यपुत्र एवात्र लोकपालाश्च साक्षिणः । यन्नेष समयोऽद्यापि स्वेच्छमुल्लङ्घितो मया ॥ १८४
तदार्यपुत्र ता एता उपयच्छस्व मे सखीः । युष्माभिरेतद्बोः सख्यो भावनीयं च नान्यथा ॥ १८५
एवं तयोक्ते तुतुषुः समाश्लिष्यंश्च ता मिथः । कुमार्यो मरणोत्तीर्णा राजाप्यन्तर्जहर्ष सः ॥ १८६
बुद्ध्वा तत्पितरस्ते च तत्र तत्क्षणमाययुः । नरवाहनदत्ताय तस्मै प्रादुश्च ताः सुताः ॥ १८७
शासनं तेऽपि तत्कालं जामातुः प्रतिपेदिरे । कालकूटपतिप्रष्ठास्तस्य विद्याधरेश्वराः ॥ १८८
एवं पञ्च समं प्राप्य महाविद्याधरात्मजाः । नरवाहनदत्तोऽत्र माहात्म्यं स परं ययौ ॥ १८९
तस्थौ च तत्र कतिचित्ताभिः सह दिनानि सः । ततश्चैवं हरिशिखः सेनापतिरुवाच तम् ॥ १९०
शास्त्रज्ञोऽपि कथं देव नीतिमुल्लङ्घ्य वर्तसे । विग्रहावसरे कोऽयं कामभोगरसस्तव ॥ १९१
क्वायं मन्दरदेवं तं जेतुं यात्रासमुद्यमः । क्व चेयन्ति दिनानीह विहारोऽन्तःपुरैः सह ॥ १९२
एवं हरिशिखेनोक्ते महाराजो जगाद सः । युक्तमुक्तं प्रयत्नस्तु न भोगायात्र कोऽपि मे ॥ १९३
बन्धुप्राप्तिप्रदो ह्येष भार्याव्यतिकरो मया । अरिमर्देऽधुना मुख्यमङ्गमित्यभिनन्दितः ॥ १९४
तदेतानि चलन्त्वद्य सैन्यान्यरिजयाय मे । इत्युक्तवन्तं राजानं श्वशुरो मन्दरोऽब्रवीत् ॥ १९५
असिद्धचक्रवर्त्यङ्गसर्वरत्नस्य दुर्जयः । देव मन्दरदेवोऽसौ दूरदुर्गमभूमिगः ॥ १९६
देवमायमहावीररक्षितद्वारदेशया । अग्रस्थया त्रिशीर्षाख्यगुहया ह्येष रक्ष्यते ॥ १९७
सिद्धरत्नेन चाक्रम्य सा गुहा चक्रवर्तिना । तच्चक्रवर्तिरत्नं यो देव चन्दनपादपः ॥ १९८
अस्यां भुव्यस्ति तं तावत्साधयाभीष्टसिद्धये । नाचक्रवर्ती निकटं तरोः प्राप्नोति तस्य च ॥ १९९
श्रुत्वैतन्मन्दराद्रात्रौ निराहारो यतव्रतः । नरवाहनदत्तोऽगात्तं चन्दनतरुं प्रति ॥ २००
गच्छन्वित्रास्यमानोऽपि वीरो विघ्नैः सुदारुणैः । न स तत्रास मूलं च प्राप तस्य महातरोः ॥ २०१
दृष्ट्वा च तं महारत्नं निबद्धोत्तुङ्गवेदिकम् । एत्याध्यारुह्य सोपानैर्ववन्दे चन्दनद्रुमम् ॥ २०२
चक्रवर्तिन्नयमहं सिद्धस्ते चन्दनद्रुमः । स्मृतस्य संनिधास्ये ते तदितो व्रज सांप्रतम् ॥ २०३
गोविन्दकूटं सेत्स्यन्ति रत्नान्यन्यानि ते ततः । ततो मन्दरदेवं त्वं हेलयैव विजेष्यसे ॥ २०४
इत्युक्तश्च गिरा तत्र स रात्रावशरीरया । तथेत्युक्त्वा प्रणम्यैतं सिद्धिमान्दिव्यपादपम् ॥ २०५
प्रहृष्टो व्योममार्गेण महाविद्याधरेश्वरः । नरवाहनदत्तोऽथ निजं कटकमाययौ ॥ २०६

अथ नीत्वा स निशां तामास्थाने सर्वसंनिधौ प्रातः ।
नैशं साधितचन्दनपादपवृत्तान्तमखिलमाचख्यौ ॥ २०७

तद्बुद्ध्वा दयिताश्च बालसचिवाश्चाप्ताश्च विद्याधरा-
स्ते ते वायुपथादयः सकटकाश्चित्राङ्गदाद्याश्च ते ।
गन्धर्वाः प्रसभप्रसाधितमहासिद्धेः प्रहर्षाकुलाः
सत्त्वोत्साहधृतिप्रभावमहतीं तस्यास्तुवन्धीरताम् ॥ २०८

संमन्त्र्य तैः सह स मन्दरदेवदर्पं राजा विजेतुमथ दिव्यविमानगामी ।
शेषान्यचन्दनतरूदितरत्नसिद्ध्यै गोविन्दकूटगिरिमेव जगाम तावत् ॥ २०९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके चतुर्थस्तरङ्गः ।

समाप्तश्चायं पञ्चलम्बकश्चतुर्दशः ।

---

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः।

## महाभिषेको नाम पञ्चदशो लम्बकः।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम्।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते॥

प्रथमस्तरङ्गः।

निशासु ताण्डवोद्दण्डशुण्डासीत्कारशीकरैः। ज्योतींषि पुष्णन्निव वस्तमो मुष्णातु विघ्नजित्॥ १

ततो गोविन्दकूटेऽत्र स्थितमास्थानवर्तिनम्। नरवाहनदत्तं तं चक्रवर्तिनमाययौ॥ २

विद्याधरो गुमार्गेण सोऽमृतप्रभसंज्ञकः। येनैष रक्षितः पूर्वं शत्रुक्षिप्तोऽग्निपर्वते॥ ३

आगत्यावेदितात्मा च प्रणतश्चक्रवर्तिना। तेन प्रीतिकृतातिथ्यः स तं विद्याधरोऽब्रवीत्॥ ४

अस्ति दक्षिणदिग्वर्ती मलयाख्यो महागिरिः। तत्राश्रमपदे चास्ते वामदेवो महानृषिः॥ ५

स त्वां कस्यापि कार्यस्य हेतोरेकाकिनं प्रभो। आह्वयत्येतदर्थं च तेनाहं प्रेषितोऽद्य ते॥ ६

पूर्वार्जितः प्रभुस्त्वं च मम तेनास्मि चागतः। तदेहि सिद्ध्यै गच्छावः शीघ्रं तस्यान्तिकं मुनेः॥ ७

एवमुक्तवता तेन सह विद्याधरेण सः। तत्रैव भार्याः सेनाश्च स्थापयित्वा तथेति ताः॥ ८

उत्पत्य नभसा क्षिप्रं प्राप्यैव मलयाचलम्। नरवाहनदत्तस्तं वामदेवर्षिमभ्यगात्॥ ९

ददर्श तं च जरसा पाण्डुरं प्रांशुविग्रहम्। निर्मांसनेत्रकुहरस्फुरत्तारकसन्मणिम्॥ १०

विद्याधरेन्द्ररत्नानां स्थानं वेल्लज्जटालतम्। हिमाद्रिं सिद्धिसाहाय्यहेतोरिव सहागतम्॥ ११

ततो ववन्दे चरणौ मुनेस्तस्य स सोऽपि तम्। राजानं रचितातिथ्यो मुनिरेवमभाषत॥ १२

पुरा दग्धोऽपि कामस्त्वं रत्यास्तुष्टेन शंभुना। सर्वविद्याधरेन्द्राणां चक्रवर्ती विनिर्मितः॥ १३

तदाश्रमे ममैतस्मिन्गम्भीरान्तर्गुहान्तरे। सन्ति रत्नानि तानि त्वं मदादिष्टानि साधय॥ १४

जेयो मन्दरदेवो हि सिद्धरत्नस्य ते भवेत्। एतदर्थं त्वमाहूतो मयेह गिरिशाज्ञया॥ १५

इत्युक्त्वा तेन मुनिनैवोपदिष्टविधिश्च सः। नरवाहनदत्तस्तां प्रहृष्टः प्राविशद्गुहाम्॥ १६

तस्यां विजित्य विघ्नौघांस्तांस्तान्वीरो ददर्श सः। गजेन्द्रमभिधावन्तं मत्तं सगलगर्जितम्॥ १७

मुखे मुष्टिप्रहारं च दत्त्वा पादौ च दन्तयोः। आरुरोह च तं मत्तगजं राजा स लाघवात्॥ १८

साधु सिद्धं महाहस्तिरत्नं ते चक्रवर्तिनः। इति वाणी गुहामध्यादशरीरोदभूत्तदा॥ १९

ततः खङ्गमहीन्द्राभं स ददर्श निपत्य च। चक्रवर्तित्वलक्ष्म्यास्तं केशपाशमिवाग्रहीत्॥ २०

साधु भोः खङ्गरत्नं ते सिद्धं जैत्रमरिंदम। इति वागुदभूद्भूयोऽप्यशरीरा गुहान्तरे॥ २१

ततः स चन्द्रिकारत्नं कामिनीरत्नमत्र च। विध्वंसिनीति नाम्ना च विद्यारत्नमसाधयत्॥ २२

एवं द्वाभ्यां सहायाभ्यां सरसा चन्दनेन च। कार्यकालोपयुक्तानि सप्त माहात्म्यदानि च॥ २३

साधयित्वा स रत्नानि गुहाया निर्गतस्ततः। वामदेवर्षये तस्मै सिद्धं सर्वं शशंस तत्॥ २४

ततः स मुनिराह स्म तं प्रीत्या चक्रवर्तिनम् । पुत्र सिद्धमहाचक्रवर्तिरत्नो व्रजाधुना ॥ २५
जय मन्दरदेवं तं कैलासोत्तरपार्श्वगम् । भुङ्क्ष्व चोभयतत्पार्श्वसाम्राज्यश्रियमूर्जिताम् ॥ २६
इत्युक्तस्तेन मुनिना सिद्धकार्यः प्रणम्य तम् । चक्रवर्ती ततो व्योम्ना स ययौ साम्रतप्रभः ॥ २७
प्राप गोविन्दकूटस्थं तच्च स्वशिबिरं क्षणात् । महाप्रभावया श्वश्र्वा धनवत्याभिरक्षितम् ॥ २८
तत्र मार्गोन्मुखैर्दृष्ट्वा निजैर्विद्याधराधिपैः । भार्याभिः सचिवैश्चैव प्रहृष्टैः सोऽभ्यनन्द्यत ॥ २९
अथोपविष्टः पृच्छद्भ्यो वामदेवर्षिदर्शनम् । गुहाप्रवेशं रत्नानां सिद्धिं चैभ्यः शशंस सः ॥ ३०
ततस्तत्र हतानन्ददिव्यतूर्यो महोत्सवः । नृत्यद्विद्याधरीकोऽभूत्पानमत्तजनस्तथा ॥ ३१
अन्येद्युश्च रिपुस्थानस्थितासौम्यग्रहेण सः । आक्रान्तकण्टकस्थानसौम्येनात्मसमार्द्धिना ॥ ३२
सर्वान्यसंपद्युक्तेन लग्नेन कृतमङ्गलः । आरुह्य शर्वदत्तं तद्विमानं ब्रह्मनिर्मितम् ॥ ३३
जेतुं मन्दरदेवं तं ससैन्योऽन्तःपुरान्वितः । नरवाहनदत्तोऽत्र प्रतस्थे नभसा ततः ॥ ३४
चेलुश्चानुचरास्ते ते प्रवीराः परिवार्य तम् । भक्ता भीताश्च गन्धर्वराजविद्याधराधिपाः ॥ ३५
सेनापतेर्हरिशिखस्यादेशानुविधायिनः । चण्डसिंहः समं मात्रा धनवत्या सुमेधसा ॥ ३६
वीरः पिङ्गलगान्धारस्तथा वायुपथो बली । विद्युत्पुञ्जोऽमितगतिः कालकूटपतिश्च सः ॥ ३७
मन्दरः समहादंष्ट्रः स्वसखा चामृतप्रभः । समं सागरदत्तेन वीरश्चित्राङ्गदोऽपि सः ॥ ३८
एते चान्ये च येऽत्रासन्गौरिमुण्डव्यपाश्रिताः । समग्रास्तेऽन्वधावंस्तं विजिगीषुं बलान्विताः ॥ ३९
तदा तत्सेनया छन्ने गगने क्वापि भास्करः । ममज्ज लज्जयेवात्र तत्तेजोनिह्नुतप्रभः ॥ ४०
अथ मानसमुल्लङ्घ्य देवर्षिव्रातसेवितम् । अतीत्य गण्डशैलं च लीलोद्यानं द्युयोषिताम् ॥ ४१
स चक्रवर्ती संप्राप स्फटिकापाण्डुरत्विषः । मूलं निजयशोराशेरिव कैलासभूभृतः ॥ ४२
तत्र मन्दाकिनीतीरे निषण्णं निजगाद तम् । विद्याधराधिपो धीमान्मन्दरो बन्धुरं वचः ॥ ४३
इहैव तावद्देवाद्य स्थीयतां द्युनदीतटे । न युक्तमिममुल्लङ्घ्य कैलासं गन्तुमग्रतः ॥ ४४
हरास्पदस्य ह्येतस्य विद्या नश्यन्ति लङ्घनात् । त्रिशीर्षगुहया तस्य गन्तव्यं पार्श्वमुत्तरम् ॥ ४५
देवमायाभिधानेन सा च राज्ञाभिरक्ष्यते । स चातिदृप्तस्तस्मात्तमजित्वा गम्यते कथम् ॥ ४६
मन्दरेणैवमुदिते धनवत्यानुमोदिते । नरवाहनदत्तस्तं तत्रैवासीत्स वासरम् ॥ ४७
तत्रस्थो देवमायाय दूतं साम्ना व्यसर्जयत् । स च सान्त्वेन नैवास्य शासनं प्रत्यपद्यत ॥ ४८
ततोऽपरेद्युः संनद्धैस्तैस्तैः स्वै राजभिः सह । स चक्रवर्ती तं प्रायाद्देवमायं प्रति प्रभुः ॥ ४९
देवमायोऽपि तद्बुद्ध्वा ससैन्यो योद्धुमाययौ । वराहवज्रमुष्ट्यादिभूरिराजान्वितोऽग्रतः ॥ ५०
ततः प्रववृते तत्र सङ्ग्रामः सेनयोस्तयोः । कैलासे सुरसंघातविमानाच्छादिताम्बरः ॥ ५१
छिन्नभूरिशिरःश्रेणिकरकावर्षभीषणः । सवीरगर्जितः सोऽभूद्घोरो रणघनागमः ॥ ५२
देवमायस्य सेनान्यमग्रयोधं जघान यत् । वराहं चण्डसिंहोऽत्र न नामाभूत्तदाद्भुतम् ॥ ५३
चित्रं तु यत्स्वयं बद्धो देवमायोऽप्यमायिना । नरवाहनदत्तेन प्रहारैर्मूर्च्छितो रणे ॥ ५४
बद्धे च तस्मिंस्तत्सैन्यमभज्यत महारथैः । वज्रमुष्टिमहाबाहुतीक्ष्णदंष्ट्रादिभिः सह ॥ ५५
ततः सुरैर्विमानस्थैः साधु साध्वित्युदीरिते । सर्वेऽप्यभिननन्दुस्तं जयिनं चक्रवर्तिनम् ॥ ५६
अथ तं संयतानीतं समाश्वास्य महाप्रभुः । प्रसादेनानुजग्राह देवमायं मुमोच च ॥ ५७
सोऽपि बाहुजितस्तस्य शासनं चक्रवर्तिनः । वज्रमुष्ट्यादिभिः सार्धं प्रणतः प्रत्यपद्यत ॥ ५८
ततो निवृत्ते सङ्ग्रामे तस्मिन्व्यपगतेऽहनि । प्रातरास्थानमायातः पार्श्वस्थश्चक्रवर्तिनः ॥ ५९
तं त्रिशीर्षगुहाम्नायं तेन पृष्टो विविक्षुणा । देवमायो यथातत्त्वमेवं कथयति स्म सः ॥ ६०
कैलासस्य पुरा देव विद्याधरवराश्रिते । अभूतां भिन्नसाम्राज्ये द्वे पार्श्वे दक्षिणोत्तरे ॥ ६१
ऋषभाख्योऽथ देवेन तपस्तुष्टेन शंभुना । चक्रवर्ती प्रदिष्टोऽभूदेक एव तटीद्वयोः ॥ ६२
स गन्तुमुत्तरं पार्श्वं कैलासं जातु लङ्घयन् । अधःस्थितहरक्रोधाद्भ्रष्टविद्योऽपतद्दिवः ॥ ६३

ततः क्रूरेण तपसा पुनराराधितं हरम् । प्राग्वदादिष्टसाम्राज्यमृषभोसौ व्यजिज्ञपत् ॥ ६४

कैलासोल्लङ्घनं तावन्नास्ति नः केन तत्पथा । उभयोः पार्श्वयोर्देव चक्रवर्ती भवाम्यहम् ॥ ६५

तच्छ्रुत्वोत्तरपार्श्वेऽस्य गमनाय पिनाकभृत् । चकार भित्त्वा कैलासं तद्गुहाविवरं महत् ॥ ६६

अथ विद्धः स कैलासो विभ्रो व्यज्ञापयच्छिवम् । मानुषागम्यमेतन्मे भगवन्पार्श्वमुत्तरम् ॥ ६७

गम्यं तेषामपीदानीमनया गुहया कृतम् । तत्तथा कुरु येनैषा मर्यादा मे न भज्यते ॥ ६८

कैलासेनेति विज्ञप्तो गुहायां रक्षकान्हरः । स्थापयामास दिग्दन्तिदृग्विषाहीन्द्रगुह्यकान् ॥ ६९

दक्षिणेऽस्य महामायं द्वारि विद्याधरेश्वरम् । उत्तरे कालरात्रिं च चण्डिकामपराजिताम् ॥ ७०

एवं कृतगुहारक्षो महारत्नानि शंकरः । उत्पाद्य भगवांस्तत्र व्यवस्थामादिदेश सः ॥ ७१

सिद्धरत्नस्य गम्येयं द्विपार्श्वी चक्रवर्तिनः । सुचराणां सदाराणां सदूतानां भविष्यति ॥ ७२

अनुज्ञाताश्च ये तेन राजानः स्युरिहोत्तरे । तेषां चैषा गुहा गम्या न त्वन्यस्यात्र कस्यचित् ॥ ७३

इत्यादिष्टवति त्र्यक्षे कुर्वन्नृषभकस्ततः । साम्राज्यं युयुधे दर्पाद्देवैर्जघ्ने च वज्रिणा ॥ ७४

इत्येषोऽस्यास्त्रिशीर्षाख्यगुहाया आगमः प्रभो । अगम्या चैव सैषान्यैर्विना युष्मादृशैर्गुहा ॥ ७५

तस्य चैतद्गुहाद्वाररक्षिणः कालतः कुले । महामायस्य जातोऽयं देवमायोऽहमीश्वर ॥ ७६

विद्याधरेषु जातोऽयं दुर्जयो रिपुभिर्मृधे । यश्च जेष्यत्यमुं सोऽत्र चक्रवर्ती भविष्यति ॥ ७७

तेनास्य स्वामिना भाव्यं सोऽनुवर्त्योऽमुना प्रभुः । इति जन्मनि मे दिव्या व्याजहार सरस्वती ॥ ७८

सोऽहं जितस्त्वया त्वं च सिद्धरत्नः प्रभाववान् । कैलासोभयपार्श्वैकचक्रवर्तीह नः प्रभुः ॥ ७९

तत्त्रिशीर्षगुहामेतां तीर्त्वा शेषान्निपृञ्जय । इत्युक्ते देवमायेन चक्रवर्ती जगाद सः ॥ ८०

गच्छामोऽद्य गुहाद्वारे वसामस्तत्र सांप्रतम् । कृतसंविधयः प्रातः प्रवेक्ष्यामश्च तां गुहाम् ॥ ८१

इत्युक्तवान्स गत्वाथ सर्वैस्तै राजभिः सह । नरवाहनदत्तोऽत्र गुहाद्वारे समावसत् ॥ ८२

ददर्श तां च गम्भीरनिरालोकोदरां गुहाम् । जन्मभूमिमनर्केन्दुं कल्पान्ततमसामिव ॥ ८३

द्वितीयेऽह्नि च संपूज्य विवेशैतां विमानगः । ध्यातोपनतसद्रत्नसहायः सपरिच्छदः ॥ ८४

तमांसि चन्द्रिकारत्नैश्चन्दनेनाहिदृग्विषान् । दिग्गजान्हस्तिरत्नेन खड्गरत्नेन गुह्यकान् ॥ ८५

विघ्नानन्यांश्चान्यरत्नैर्निवार्य सह सेनया । उत्तीर्य तां गुहां चोदग्द्वारेण स विनिर्ययौ ॥ ८६

ददर्श च गुहागर्भनिर्गतः पार्श्वमुत्तरम् । कैलासस्यापुनर्जन्मजीवलोकान्तरोपमम् ॥ ८७

साधु रत्नप्रभावात्तमाहात्म्येन गुहा त्वया । चक्रवर्तिन्नियं तीर्णेत्युदभूद्वाक्तदा दिवः ॥ ८८

अथोचतुर्धनवती देवमायश्च तं प्रभुम् । देव संनिहिता द्वारे कालरात्रिर्हि सर्वदा ॥ ८९

एषा चोत्पादिता पूर्वं विष्णुनामृतमन्थने । दारणी दानवेन्द्राणाममृतं हर्तुमिच्छताम् ॥ ९०

सैषादिष्टा गुहामेतामिह शर्वेण रक्षितुम् । यथा नान्यस्तरेदेनां यथोक्तैस्त्वद्विधैर्विना ॥ ९१

त्वं चक्रवर्ती तीर्णश्च सिद्धरत्नो गुहामिमाम् । तदेषा पूजनीया ते पूज्या विजयसिद्धये ॥ ९२

एवं धनवतीदेवमायोक्तस्यैव तस्य सः । नरवाहनदत्तस्य तत्राक्षीयत वासरः ॥ ९३

संध्यारुणा बभूवुश्च कैलासोत्तरसानवः । सूचयन्त इवासन्नसङ्ग्रामरुधिरोक्षणम् ॥ ९४

आवृणोत्कटकं तस्य राज्ञो लब्धबलं तमः । गुहागृहपराभूतिवैरमार्त्रमिव स्मरत् ॥ ९५

अमर्षाद्दुर्मनःकालरात्रिक्रोधाङ्कुरा इव । बभ्रमुर्भूतवेतालडाकिनीगणफेरवः ॥ ९६

क्षणाच्च जज्ञे निःसंज्ञं सैन्यं सुप्तमिवाखिलम् । नरवाहनदत्तस्य स एकोऽभून्न मोहितः ॥ ९७

ततोऽनर्चनसंक्रुद्धकालरात्रिविजृम्भितम् । मन्वानश्चक्रवर्ती स वाक्पुष्पैस्तामथार्चयत् ॥ ९८

आशिरश्चक्रसंचारचतुरा प्रणवाकृतिः । त्वं प्राणशक्तिर्जन्तूनां जीवनी त्वां नमाम्यहम् ॥ ९९

स्रवन्महिषकण्ठास्रधाराभिस्त्रिशिखाश्रिभिः । आश्वासितत्रिभुवने दुर्गारूपे नमोऽस्तु ते ॥ १००

रुरुरक्तभृतभ्रान्तकरस्थितकपालया । नृत्यन्त्या त्रिंजगद्रक्षापात्रयेव जितं त्वया ॥ १०१

ऊर्ध्वाक्षिदीप्तिदीपाढ्यकपाला कालरात्र्यपि । कपालहस्ता सार्केन्दुरिव भासि भवप्रिये ॥ १०२

इति स्तुता तुतोषात्र कालरात्रिर्न तस्य यत्। तत्स्वमूर्धोपहारेण तामर्चितुमियेष सः ॥ १०३
मा पुत्र साहसं कार्षीरेषा सिद्धास्मि वीर ते। प्रकृतिस्थं तवास्त्वेतत्कटकं जयमाप्नुहि ॥ १०४
इत्युवाचात्तखड्गं तं सा देवी तत्र तत्क्षणम्। सुप्तप्रबुद्धमिव तत्कटकं तस्य चाभवत् ॥ १०५
ततो भार्या वयस्याश्च सर्वे विद्याधराश्च ते। प्रशशंसुस्तमेतस्य प्रभावं चक्रवर्तिनः ॥ १०६
अथैष विहिताहारपानाद्यावश्यकक्रियः। वीरोऽनैषीत्त्रियामां तां शतयामामिवायताम् ॥ १०७
प्रातश्च पूजयित्वा तां कालरात्रिं ततो ययौ। विद्याधरनिरुद्धाग्रमार्गं धूमशिखं प्रति ॥ १०८
अभूत्तेन समं तस्य सङ्ग्रामश्चक्रवर्तिनः। राज्ञा मन्दरदेवीयप्रधानेन स तादृशः ॥ १०९
यत्र खड्गमयं व्योम शूरमूर्धमयी मही। आसीज्जहि जहीत्युग्रवीरवाक्यमयं वचः ॥ ११०
तत्र धूमशिखं युद्धे बद्धानीतं प्रसह्य तम्। चक्रवर्ती स संमान्य ग्राहयामास शासनम् ॥ १११
न्यवेशयच्च तदहः सैन्यमत्रैव तत्पुरे। शान्तधूमशिखोद्रेकमग्निदग्धेन्धनं यथा ॥ ११२
द्वितीयेऽह्नि स चारेभ्यो योद्धुमायान्तमग्रतः। बुद्ध्वा मन्दरदेवं तं ज्ञातवृत्तान्तमग्रतः ॥ ११३
नरवाहनदत्तस्तैः सह विद्याधरेश्वरैः। प्रययौ तं प्रति ततस्तज्जये बद्धनिश्चयः ॥ ११४
किंचिद्गत्वा ददर्शाग्रे बहुराजगणान्वितम्। सैन्यं मन्दरदेवस्य रचितव्यूहमागतम् ॥ ११५
ततः कृतप्रतिव्यूहरचनो राजभिर्वृतः। नरवाहनदत्तस्तदभ्यधावदरेर्बलम् ॥ ११६
अथाहवः प्रववृते तयोरुभयसैन्ययोः। प्रलयोद्वेलजलधिक्षुभितौघानुकारिणोः ॥ ११७
ततस्ते चण्डसिंहाद्या युध्यन्ते स्म महारथाः। शूराः काञ्चनदंष्ट्राख्यराजप्रभृतयोऽन्यतः ॥ ११८
प्रकम्पितत्रिभुवनो विक्षोभितकुलाचलः। विजजृम्भे स सङ्ग्रामः कल्पान्तपवनागमः ॥ ११९
शोणैकपार्श्वः कैलासः शूरशोणितकुङ्कुमैः। भूतिश्वेतान्यपार्श्वश्च तदा गौरीशमन्वगात् ॥ १२०
खड्गपट्टोदितानेकसूर्यबिम्बोग्रभास्वरः। सत्यं प्रलयकालोऽभूद्वीराणां स महाहवः ॥ १२१
इयत्तद्युद्धमासीद्यद्विस्मयं प्रेक्षणागताः। नारदाद्या अपि ययुर्दृष्टदेवासुराहवाः ॥ १२२
इत्थं घोरे रणे तस्मिंश्चण्डसिंहोऽभिधावितः। जघ्ने काञ्चनदंष्ट्रेन गदया मूर्ध्नि भीमया ॥ १२३
तं गदाघातपतितं दृष्ट्वा धनवती सुतम्। शप्त्वा विद्याबलेनोभे सैन्ये निश्चेतने व्यधात् ॥ १२४
नरवाहनदत्तश्च चक्रवर्ती बलादितः। ततो मन्दरदेवश्च द्वावेवास्तां सचेतनौ ॥ १२५
तदा धनवतीं क्रुद्धां जगत्संहरणक्षमाम्। वीक्ष्याम्बरगता देवा अपि दिक्षु प्रदुद्रुवुः ॥ १२६
दृष्ट्वा मन्दरदेवोऽथ चक्रवर्तिनमेककम्। नरवाहनदत्तं तमभ्यधावदुदायुधः ॥ १२७
नरवाहनदत्तोऽपि विमानादवतीर्य सः। उत्खातखड्गरत्नः सन्प्रतिजग्राह तं जवात् ॥ १२८
ततो मन्दरदेवेन मायया जयमिच्छता। समदोद्दाममातङ्गरूपं चक्रे स्वविद्यया ॥ १२९
तद्दृष्ट्वाकारि सुमहत्सिंहरूपं स्वमायया। नरवाहनदत्तेन विद्यातिशयशालिना ॥ १३०
ततो भग्नेभवपुषा मुक्तसिंहाकृतिः स्फुटम्। युद्धं मन्दरदेवेन चक्रवर्ती ततान सः ॥ १३१
नानाविचित्रकरणावङ्गहारक्रियासु तौ। मण्डलाग्रधरौ नाट्यप्रवृत्ताविव रेजतुः ॥ १३२
नरवाहनदत्तोऽथ साक्षाज्जयमिवाहरत्। खड्गं मन्दरदेवस्य करात्करणयुक्तितः ॥ १३३
हृतखड्गस्य चाकृष्टक्षुरिकस्यात्र तामपि। तथैव तस्य सहसा चक्रवर्ती जहार सः ॥ १३४
ततोऽपशस्त्रं बाहुभ्यां युध्यमानं स गुल्फयोः। प्राप्य मन्दरदेवं तं राजा भूमावपातयत् ॥ १३५
प्रारेभे च शिरश्छेत्तुं केशेष्वाकृष्य तस्य सः। वक्षसि न्यस्तचरणः सम्राट् खड्गेन विद्विषः ॥ १३६
तावन्मन्दरदेवीति नाम्ना कन्याभ्युपेत्य तम्। स्वसा मन्दरदेवस्य वारयन्त्येवमब्रवीत् ॥ १३७
तपोवनस्थो दृष्ट्वा त्वं भर्ता प्राक्कल्पितो मया। तच्छ्वशुर्यमिमं राजन्मा वधीर्भ्रातरं मम ॥ १३८
एवं तयोक्तः सुदृशा विमुच्य जितलज्जितम्। धीरो मन्दरदेवं तं महाराजो जगाद सः ॥ १३९
मुक्तो मया त्वं मा भूत्तलज्जा विद्याधरेश ते। चपलौ किल शूराणां रणे जयपराजयौ ॥ १४०
इति मन्दरदेवोऽसावुक्तो राज्ञा जगाद तम्। किं जीवितमिदानीं मे रक्षितस्याहवे श्रिया ॥ १४१

तदहं यामि तपसे वनस्थस्यान्तिकं पितुः । त्वमेवोभयवेद्यर्धचक्रवर्तीह निर्मितः ॥ १४२
अयमर्थश्च मे भावी पित्रा पूर्वमसूच्यत । इत्युक्त्वा स ययौ मानी पितुः पार्श्वं तपोवनम् ॥ १४३
साधु सम्यङ्महाचक्रवर्तिञ्जित्वा रिपूंस्त्वया । प्राप्तं साम्राज्यमित्यूचुर्गगनस्थाः सुरास्तदा ॥ १४४
गते मन्दरदेवेऽथ निजं धनवती सुतम् । उभे च सेने विदधे स्वशक्त्या लब्धचेतने ॥ १४५

इति सुप्तप्रतिबुद्धा इव सर्वे वैरिणं जितं बुद्ध्वा ।
सचिवादयो विजयिनं नरवाहनदत्तमभिननन्दुस्तम् ॥ १४६
येऽपि च काञ्चनदंष्ट्राशोककरक्ताक्षकालजिह्वाद्याः ।
मन्दरदेवीयास्ते राजानस्तस्य शासनं जगृहुः ॥ १४७
काञ्चनदंष्ट्रालोकनसंस्मृतसमराप्तदृढगदाघातः ।
प्रचुकोप चण्डसिंहः प्रविधुतदृढमुष्टिपीडितासिवरः ॥ १४८

कृतमिह समरेण वत्स कस्त्वां समरमुखे विजयेत किं तु युक्त्या ॥
क्षणमिव विहिता मयैव साभूदुभयबलक्षयरक्षणाय माया ॥ १४९
इति च धनवती तदा ब्रुवाणा निजतनयं प्रशमय्य तं प्रकोपात् ।
बलमखिलमनन्दयत्स्वसिद्ध्या सहनरवाहनदत्तचक्रवर्ती ॥ १५०
प्राप्ते जितप्रणतविद्रुतवैरिवीरवीताहवव्यतिकरोत्तरपार्श्वराज्ये ।
शर्वाचलस्य नरवाहनदत्तदेवः प्रीतिं परामभजताक्षतमित्रवर्गः ॥ १५१

ततोऽरिविजयोत्सवप्रहततारतूर्यं कृती
स तद्युचरसुन्दरीरुचिरनृत्तगीताञ्चितम् ।
प्रियासचिवसंगतः प्रवरराजवृन्दान्वितः
प्रतापमिव वैरिणां मधु पिबन्ननैषीद्दिनम् ॥ १५२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे महाभिषेकलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

अथापरेद्युरुत्थाय ततः कैलाससानुतः । नरवाहनदत्तोऽसौ चक्रवर्ती बलान्वितः ॥ १
राज्ञः काञ्चनदंष्ट्रस्य वचनादग्रगामिनः । प्रायान्मन्दरदेवीयं पुरं विमलसंज्ञकम् ॥ २
संप्राप तच्च सौवर्णप्रांशुप्राकारसुन्दरम् । सुमेरुमिव कैलासं सभाजयितुमागतम् ॥ ३
विवेश चातिगम्भीरमच्युतश्रीविराजितम् । अनन्तरत्ननिलयं निस्तोयमिव सागरम् ॥ ४
तत्रास्थानोपविष्टं तं राजभिर्द्युचरैर्वृतम् । सम्राजमेत्य राजान्तःपुरवृद्धा व्यजिज्ञपन् ॥ ५
गते मन्दरदेवेऽत्र वनं युष्मत्पराजिते । तद्देव्योऽग्निं विविक्षन्ति श्रुत्वा वेत्त्यधुना प्रभुः ॥ ६
इत्युक्तस्तैः स मरणाच्चक्रवर्ती निवार्य ताः । संविभेजे निवासादिदानेन भगिनीरिव ॥ ७
तेन विद्याधराधीशवर्गं निखिलमेव तम् । दत्तानुरागनिगडं स सम्राड् समपादयत् ॥ ८
तं च तत्रामितगतिं राजानं पूर्वकल्पितम् । राज्ये मन्दरदेवस्य कृतज्ञः सोऽभिषिक्तवान् ॥ ९
अर्पयामास तस्मै च तदीयांस्तान्महीक्षितः । राज्ञे काञ्चनदंष्ट्रादीन्भक्तायाव्यभिचारिणे ॥ १०
रेमे च तत्र सप्ताहमुद्यानेषु महर्द्धिषु । कैलासोत्तरदिक्पार्श्वलक्ष्म्याश्लिष्टो नवोढया ॥ ११
ततश्चोभयवेद्यर्धविद्याधरमहीक्षिताम् । चक्रवर्तित्वमासाद्याप्यधिकेच्छुर्बभूव सः ॥ १२
गन्तुं प्रववृते जेतुं वारितोऽपि स मन्त्रिभिः । तद्दिव्यवस्थितालङ्घ्यमेरुभूमीः सुराश्रयाः ॥ १३
अत्यर्थोपचिताः कामं विशेषासादनं विनाः । तेजस्विनो न तिष्ठन्ति दीप्ता दावानला इव ॥ १४
ततस्तं नारदोऽभ्येत्य मुनिरेवमभाषत । नीतिज्ञस्यापि ते कोऽयं राजन्नविषयोद्यमः ॥ १५

प्रवर्तमानो ह्युत्सेकादसाध्ये परिभूयते। दशास्य इव दर्पेण कैलासोन्मूलनोद्यतः॥ १६

दुर्लङ्घ्यो ह्यर्कचन्द्राभ्यामपि मेरुस्तवेह च। विद्याधरेन्द्रताविष्टा शर्वेण न सुरेन्द्रता॥ १७

विद्याधराणां भूमिर्हि हिमवान्विजितस्त्वया। तन्मेरौ देवभूमौ ते किं कार्यं मुञ्च दुर्ग्रहम्॥ १८

पिता मन्दरदेवस्य यस्त्वकम्पनसंज्ञकः। स द्रष्टव्यस्त्वया गत्वा वनस्थः शिवमिच्छता॥ १९

इत्युक्त्वा नारदमुनिः प्रतिपन्नं तथेति तम्। चक्रवर्तिनमामन्त्र्य जगाम स यथागतम्॥ २०

चक्रवर्त्यपि कार्यज्ञो नारदेन च वारितः। ऋषभस्य तथा नाशं देवमायाच्छ्रुतं स्मरन्॥ २१

स विमृश्य स्वयं बुद्ध्या विनिवृत्त्य ततो ययौ। तपोवनस्थितं द्रष्टुं राजर्षिं तमकम्पनम्॥ २२

प्रापत्तपोवनं चास्य योगनिष्ठैर्महर्षिभिः। पद्मासनोपविष्टैश्च ब्रह्मलोकमिवावृतम्॥ २३

तत्र वृद्धं ददर्शैतं जटावल्कलधारिणम्। अकम्पनं मुनिजनैर्महाद्रुममिवाश्रितम्॥ २४

ववन्दे चोपसृत्यात्र पादावस्य तपस्विनः। असावपि कृतातिथ्यो राजर्षिर्निजगाद तम्॥ २५

युक्तं कृतं त्वया राजन्निममागच्छताश्रमम्। उल्लङ्घ्य गच्छतस्ते हि दद्युः शापं महर्षयः॥ २६

इति ब्रुवति राजर्षौ तस्मिंस्तं चक्रवर्तिनम्। तिष्ठंस्तपोवने तत्र स गृहीतमुनिव्रतः॥ २७

आगान्मन्दरदेवोऽपि पितुस्तस्य तदान्तिकम्। स्वस्रा मन्दरदेव्यात्र कुमार्या सहितस्तया॥ २८

नरवाहनदत्तश्च दृष्ट्वा कण्ठे तमग्रहीत्। जितशान्तेषु धीराणां स्नेह एवोचितोऽरिषु॥ २९

अथ मन्दरदेवीं तां भ्रात्रा सममुपागताम्। दृष्ट्वाकम्पनराजर्षिः स सम्राजमुवाच तम्॥ ३०

इयं मन्दरदेवीति नाम्ना राजन्सुता मम। उक्ता च दिव्यवाचैषा महिषी चक्रवर्तिनः॥ ३१

तदेतामुपयच्छस्व चक्रवर्तिन्मयार्पिताम्। इत्युक्तवति राजर्षौ सा जगाद तदात्मजा॥ ३२

इह सन्ति चतस्रो मे वयस्या वरकन्यकाः। एका कनकवत्याख्या कन्या काञ्चनदंष्ट्रजा॥ ३३

द्वितीया कालजिह्वस्य नाम्ना कालवती सुता। तृतीया दीर्घदंष्ट्रस्य श्रुता नाम तनूद्भवा॥ ३४

चतुर्थी पोत्रराजस्य पुत्री नाम्नाम्बरप्रभा। विद्याधरेन्द्रकन्यानामहं तासां च पञ्चमी॥ ३५

भ्रमन्त्यस्ता वयं पञ्च दृष्ट्वा पूर्वं तपोवने। आर्यपुत्रमिमं सोत्का व्यदध्म समयं मिथः॥ ३६

सममस्माभिराहार्यो भर्तायं या पृथक्त्वमुम्। भजेदुद्दिश्य तामात्मा हन्तव्योऽन्याभिराश्विति॥ ३७

तत्सखीभिर्विना ताभिर्युक्तः परिणयो न मे। मादृश्यो हि कथं कुर्युः सत्योल्लङ्घनसाहसम्॥ ३८

एवं तया प्रौढयोक्ते तत्पिताकम्पनः स तान्। विद्याधरेन्द्रांश्चतुरोऽप्याह्वयत्कन्यकापितॄन्॥ ३९

शशंस च यथातत्त्वं स तेभ्यस्तेऽपि तत्क्षणम्। कृतार्थमानिनः कन्यास्तनयास्ताः समानयन्॥ ४०

ततो मन्दरदेवीतः प्रभृत्येताः क्रमेण सः। नरवाहनदत्तोऽस्याः पश्चात्र परिणीतवान्॥ ४१

ताभिः सह च तत्रासीद्वासराणि बहूनि सः। ऋषींस्त्रिसंध्यं प्रणमन्कृतोत्सवपरिच्छदः॥ ४२

राजन्महाभिषेकार्थमृषभाद्रिं व्रजाधुना। इत्युक्तेऽकम्पनेनाथ देवमायोऽप्युवाच तम्॥ ४३

देवैवमेव कार्यं ते यस्मादृषभकादयः। अभ्यषिच्यन्त तत्राद्रौ प्राक्तनाश्चक्रवर्तिनः॥ ४४

तच्छ्रुत्वा निकटे श्लाघ्ये मन्दराद्रौ प्रशंसति। अभिषेकं हरिशिखे वागेवमुदभूद्दिवः॥ ४५

महाभिषेकं सर्वे हि राजन्नृषभपर्वते। पूर्वे प्राप्तास्त्वमप्यत्र गच्छ सिद्धपदं ह्यदः॥ ४६

इत्युक्तो दिव्यया वाचा नत्वा साकम्पनानृषीन्। नरवाहनदत्तोऽतः स प्रतस्थे शुभेऽहनि॥ ४७

प्राप तत्र त्रिशीर्षाख्यगुहाया द्वारमुत्तरम्। सहामितगतिप्रष्ठैः सर्वविद्याधरेश्वरैः॥ ४८

तत्र संपूजितां कालरात्रिं द्वारेण तेन सः। प्रविश्य तां गुहां सम्राड् दक्षिणेन विनिर्ययौ॥ ४९

निर्यातश्च समं सैन्यैर्देवमायस्य मन्दिरे। तदर्थितो विशश्राम दिनेऽस्मिन्सपरिग्रहः॥ ५०

तत्रस्थश्च स कैलासे तस्मिन्संनिहितं हरम्। विचिन्त्य गोमुखसखः स्वैरं द्रष्टुं जगाम तम्॥ ५१

आसाद्य चाश्रमं तस्य सुरभिं वृषभं तथा। दृष्ट्वा प्रणम्य च द्वाःस्थं स नन्दिनमुपेयिवान्॥ ५२

प्रदक्षिणप्रतीतेन मुक्तद्वारश्च तेन सः। प्रविश्य देवीसहितं ददर्श वृषभध्वजम्॥ ५३

दूरादेव कृताह्लादं चूडाचन्द्रकरोत्करैः। इतस्ततो गतैर्गौर्या मुखद्युतिजितैरिव॥ ५४

क्रीडन्तं प्रियया साकमक्षैरक्षैरिवेच्छया । स्वकार्यदत्तस्वातन्त्र्यैर्लोलैर्वशगतैरपि ॥ ५५
दृष्ट्वा च पादयोस्तस्य पपात वरदस्य सः । देव्याः शैलसुतायाश्च चक्रे च द्विःप्रदक्षिणम् ॥ ५६
युक्तं यदागतोऽसीह दोषः स्याद्धि तवान्यथा । भविष्यन्त्यधुना ते तु विद्याः शश्वदभङ्गुराः ॥ ५७
तद्वत्स सिद्धक्षेत्रं तद्गच्छ त्वमृषभाचलम् । महाभिषेकं तत्राशु प्राप्तकालमवाप्नुहि ॥ ५८
इत्यादिष्टश्च देवेन चक्रवर्ती तथेति तम् । नत्वा सभार्यमागात्तद्देवमायस्य मन्दिरम् ॥ ५९
कार्यपुत्र गतोऽभूस्त्वं प्रहृष्टः किल दृश्यसे । इहापि किंस्विन्मिलितास्तवान्याः पञ्च कन्यकाः ॥ ६०
इत्यादिनर्मणा तत्र देवीं मदनमञ्चुकाम् । ब्रुवतीमुक्ततत्त्वार्थो नन्दयन्सुखमास्त सः ॥ ६१
अन्येद्युः सर्वगन्धर्वविद्याधरबलान्वितः । द्विभास्करमिव व्योम कुर्वंस्तेजस्विनात्मना ॥ ६२
विमानवरमारूढः सावरोधः समन्त्रिकः । नरवाहनदत्तोऽतः प्रययावृषभाचलम् ॥ ६३
प्रापच्च तं गिरिं दिव्यं वातधूतजटालतैः । विकीर्णपुष्पैर्दत्तार्घैस्तापसैरिव पादपैः ॥ ६४
तत्र तस्य समाजह्रुस्ते ते विद्याधराधिपाः । महाभिषेकसंभारान्प्रभावसदृशान्प्रभोः ॥ ६५
आययुश्चाभिषेकेऽत्र तस्य प्राभृतपाणयः । दिग्भ्यो विद्याधराः सर्वे भक्तभीतजितादृताः ॥ ६६
अर्धासनेऽभिषेक्तव्या महादेवीपदेऽत्र का । देव देवीति पप्रच्छुस्तं च विद्याधरास्ततः ॥ ६७
समं मयाभिषेक्तव्या देवी मदनमञ्चुका । इति राज्ञोदिते क्षिप्रं ध्यानं ते ग्रुचरा ययुः ॥ ६८
अथोच्चचार गगनादशरीरा सरस्वती । हंहो विद्याधरा नेयं मर्त्या मदनमञ्चुका ॥ ६९
रतिरेषावतीर्णा हि कामस्यास्य भवत्प्रभोः । नासौ कलिङ्गसेनायां जाता मदनवेगतः ॥ ७०
अयोनिजेयं देवैर्हि मायया परिवर्त्य तम् । गर्भं तस्याः प्रसूताया निक्षिप्ता तत्र तत्क्षणम् ॥ ७१
जातो गर्भस्तु यस्तस्याः सोऽयमित्यकसंज्ञकः । स्थितो मदनवेगस्य पार्श्वे धात्रा समर्पितः ॥ ७२
तदेषार्धासनार्हास्य पत्युर्मदनमञ्चुका । अस्या ह्येतद्वरं प्रादात्तपस्तुष्टो हरः पुरा ॥ ७३
इत्युक्त्वा व्यरमत्सा च वाणी विद्याधराश्च ते । तुतुषुः प्रशशंसुश्च देवीं मदनमञ्चुकाम् ॥ ७४
ततः शुभेऽहनि व्यग्रे शान्तिसोमे पुरोहिते । मङ्गल्यतूर्यनादेषु सुगीतेषु ग्रुयोषिताम् ॥ ७५
ब्राह्मणब्रह्मघोषेषु व्याप्तवत्सु दिशो दश । सिंहासनस्थं वामार्धतिष्ठन्मदनमञ्चुकम् ॥ ७६
नरवाहनदत्तं तं नानातीर्थसमुद्भवैः । हेमकुम्भाहृतैस्तोयैरभ्यषिञ्चन्महर्षयः ॥ ७७
चित्रं तस्य जलैर्मूर्ध्नि पतितैर्मन्त्रपावनैः । निरगान्मनसो धौतं गूढं वैरमलं द्विषाम् ॥ ७८
लक्ष्मीस्तदभिषेकाम्बु सामुद्रं बन्धुबुद्धितः । अन्वागतेव तस्याङ्गं साक्षात्तेन सहावृणोत् ॥ ७९
पुष्पमालाततिस्तस्य नाकनारीकरोज्झिता । स्वयं पतन्ती गङ्गेव बहुस्रोता वपुष्यभात् ॥ ८०
सोऽरुणेनाङ्गरागेण प्रतापेनेव भूषितः । उदयस्थोऽम्बुधिजलस्नातो भास्वान्बभौ ततः ॥ ८१
बद्धमन्दारमाल्यश्च सद्रत्नाभरणोज्ज्वलः । आमुक्तदिव्यमुकुटः श्रियं शाक्रीमुवाह सः ॥ ८२
प्राप्ताभिषेका देवी च पार्श्वे मदनमञ्चुका । तस्य दिव्यैरलंकारैः शचीवेन्द्रस्य निर्बभौ ॥ ८३
नदद्दुन्दुभिमेघं ग्रुपतत्कुसुमवृष्टि च । स्वःस्त्रीविद्युद्वृतं चित्रं दुर्दिनं तदभूद्दिनम् ॥ ८४
ततो नगेन्द्रनगरे विद्याधरवराङ्गनाः । नानृत्यन्केवलं यावद्वातोद्धूता लता अपि ॥ ८५
चारणैरत्र मुरजेष्वाहतेषु महोत्सवे । नगोऽप्यवादयदिव प्रतिशब्दवतीर्गुहाः ॥ ८६
दिव्यासवरसक्षीबवल्गद्विद्याधरावृतः । स पर्वतोऽपि पानेन घूर्णमान इवाबभौ ॥ ८७
वर्णितास्याभिषेकस्य शोभानेनैव वीक्ष्य यत् । इन्द्रोऽपि स्वाभिषेकेऽभूद्भग्नमानो विमानगः ॥ ८८
एवं प्राप्तयथाभीष्टचक्रवर्त्यभिषेचनः । नरवाहनदत्तोऽथ स सस्मारोत्सुकः पितुः ॥ ८९
संमन्त्र्य च समं सद्यः सचिवैर्गोमुखादिभिः । सम्राड्राजानमाहूय स वायुपथमादिशत् ॥ ९०
नरवाहनदत्तस्त्वां स्मरत्युत्कण्ठितो भृशम् । इत्युक्त्वाख्यातवृत्तान्तो गच्छ तातमिहानय ॥ ९१
देवीश्च मन्त्रिणश्चास्य तथैवोक्त्वा त्वमानयेः । तच्छ्रुत्वैव तथेत्युक्त्वा व्योम्ना वायुपथो ययौ ॥ ९२
क्षणाच्च प्राप कौशाम्बीं दृष्टः सभयविस्मयैः । पौरैर्विद्याधराणां स सप्तभिः कोटिभिर्वृतः ॥ ९३

दद‍र्शोदयनं तं च वत्सराजं समन्त्रिकम्। देवीभिश्चात्र सहितं यथार्हविहितादरम्॥ ९४
उपविश्याथ पृष्ट्वा च कुशलं तं जगाद सः। नृपं विद्याधरपतिर्दृष्टः सर्वैः सकौतुकम्॥ ९५
नरवाहनदत्तस्ते सूनुराराध्य शंकरम्। साक्षात्कृत्य च तं विद्याः सर्वाः प्राप्यारिदुर्जयाः॥ ९६
हत्वा मानसवेगं च गौरिमुण्डं च दक्षिणे। जित्वा मन्दरदेवं च वेद्यर्धपतिमुत्तरे॥ ९७
आसाद्योभयवेद्यर्धविद्याधरमहीभुजाम्। सर्वेषां शासनभृतां चक्रवर्तिपदं महत्॥ ९८
महाभिषेकमृषभे संप्राप्तः पर्वतेऽधुना। राजन्स्मरति सोत्कस्त्वां सदेवीसचिवादिकम्॥ ९९
अहं च तेन प्रहितो द्रुतमागम्यतामितः। पुण्यवन्तो हि संतानं पश्यन्त्युच्चैः कृतान्वयम्॥ १००
इति वायुपथाच्छ्रुत्वा भृशोत्कण्ठो बभार सः। वत्सराजोऽम्बुदारावहृष्यद्बर्हिणविभ्रमम्॥ १०१
प्रतिपद्य च तद्वाक्यं समं तेनैव तत्क्षणम्। आरुह्य शिबिकां व्योम्ना तद्विद्यानां प्रभावतः॥ १०२
कलिङ्गसेनानुगतः स भार्यासचिवान्वितः। गत्वा संप्राप तं दिव्यमृषभाख्यं महागिरिम्॥ १०३
तत्रापश्यच्च तं पुत्रं दिव्यसिंहासनस्थितम्। विद्याधरेन्द्रमध्यस्थं बहुभार्यासमन्वितम्॥ १०४
पूर्वाद्रिमस्तकासीनं ग्रहग्रामपरिष्कृतम्। शशाङ्कमनुकुर्वन्तं भूरितारावलीवृतम्॥ १०५
तद्दर्शनसुधासारसिक्तः प्रोल्लासिताशयः। कांचिच्चन्द्रोदयाम्भोधिभङ्गीं भेजे स भूपतिः॥ १०६
नरवाहनदत्तोऽपि दृष्ट्वा तं जनकं चिरात्। उत्थाय संभ्रमात्सोत्कः सोऽभ्यगात्सपरिच्छदः॥ १०७
आलिङ्गितश्च तेनाथ पित्राङ्कमधिरोप्य सः। भूयोऽप्यानन्दबाष्पाम्बुपूरेणेवाभ्यषिच्यत॥ १०८
देवी वासवदत्ता च चिरमाश्लिष्य तं सुतम्। तदालोकस्नुतस्तन्यैरसिचत्स्मृतशैशवम्॥ १०९
पद्मावती च यौगन्धरायणाद्याश्च मन्त्रिणः। पैतृका मातुलश्चैव दृष्ट्वा गोपालकश्चिरात्॥ ११०
पपुः सतृष्णया दृष्ट्या तस्यामृतमयं वपुः। चकोरा इव सम्राजो यथार्हकृतसत्कृतेः॥ १११
कलिङ्गसेना तं दृष्ट्वा जामातरमथात्मजाम्। त्रैलोक्येऽपि न माति स्म स्वेष्वङ्गेषु तु का कथा॥ ११२
यौगन्धरायणाद्याश्च मरुभूतिमुखान्सुतान्। दृष्ट्वा प्रभुप्रसादाप्तदिव्यत्वानभ्यनन्दिषुः॥ ११३
आमुक्तदिव्याभरणा देवी मदनमञ्चुका। रत्नप्रभाप्यलंकारवती ललितलोचना॥ ११४
कर्पूरिका शक्तियशा भगीरथयशा अपि। तथा रुचिरदेवस्य भगिनी दिव्यरूपधृत्॥ ११५
वेगवत्यजिनावत्यौ तथा गन्धर्वदत्तया। प्रभावती चात्मनिका वायुवेगयशास्तथा॥ ११६
तत्सख्यः कालिकाद्याश्च चतस्रोऽथ सुलोचना। किं च मन्दरदेव्याद्याः पञ्चान्याश्च वराङ्गनाः॥ ११७
नरवाहनदत्तस्य महिष्यश्चक्रवर्तिनः। प्रणेमुः श्वशुरस्यात्र पादौ वत्सेश्वरस्य ताः॥ ११८
तद्वद्वासवदत्तायाः पद्मावत्यास्तथैव च। ते च हर्षाद्यथौचित्यमाशीर्भिस्ता अवर्धयन्॥ ११९
यथोचितासनासीने वत्सेशेऽन्तःपुरान्विते। नरवाहनदत्तः स्वमारुरोह महासनम्॥ १२०
देवी वासवदत्ता च नवास्तास्तास्तदा स्नुषाः। पश्यन्ती मुमुदे तासां पृच्छन्ती कुलनामनी॥ १२१
नरवाहनदत्तस्य तां ते वत्सेश्वरादयः। दिव्यां विभूतिं पश्यन्तः कृतार्थं जन्म मेनिरे॥ १२२
अथ प्रवृत्ते तत्रैव बन्धुसङ्गमहोत्सवे। प्रतीहारोऽब्रवीद्धीरो रुचिदेवः प्रविश्य सः॥ १२३
आपानभूमिः सज्जेयं तदत्रागम्यतामिति। तच्छ्रुत्वा ते ययुः सर्वे तामापानभुवं शुभाम्॥ १२४
विचित्ररत्नचषकप्रफुल्लविविधाम्बुजाम्। विकीर्णानेककुसुमामुद्याननलिनीमिव॥ १२५
व्याप्तां मत्तासवापूर्णकलशीभिः पुरंध्रिभिः। तन्वतीभिः सुधाहर्तृबाहूत्पन्नामृतभ्रमम्॥ (?) १२६
पपुस्तत्रावरोधस्त्रीलज्जानिगडभेदि ते। स्मरजीवितसर्वस्वं विलाससचिवं मधु॥ १२७
मुखानि मधुना तेषामुत्फुल्लान्यरुणानि च। बालातपेन सरसां सरोजानीव रेजिरे॥ १२८
देवीवृन्दाधरजितैर्भीतैस्तत्संगमादिव। चक्रेऽब्जरागचषकैः स्वरुचा शीधुनिह्नवः॥ १२९
आसन्नकोपकालेऽपि सभ्रूभङ्गारुणेक्षणाः। नरवाहनदत्तस्य तदा देव्यो मदस्पृशः॥ १३०
ततो भोजनभूमिं ते क्रमेणात्र समासदन्। विद्याविभवसंभूतत्रिविधाहारहारिणीम्॥ १३१

१ 'आसन्-अकोपकाले' इति च्छेदः. पुस्तकान्तरे त्वस्माच्छ्लोकादग्रे एकश्लोकस्य त्रुटिचिह्नमस्ति.

आस्तीर्णवस्त्रां पात्राढ्यां सतिरस्करिणीपटाम् । नानाविधास्वादरसां नाट्यवेदीमिव श्रियाम् ॥ १३२
तत्र ते विहिताहारा भास्करे सह संध्यया । विश्रान्तेऽस्तगिरौ शय्यागृहेष्वथ विशश्रमुः ॥ १३३
नरवाहनदत्तश्च विद्यया बहुधा वपुः । विभज्य सर्वदेवीनां संनिधत्ते स्म वेश्मसु ॥ १३४
सत्यतस्त्विन्दुवदनां समदां लोलतारकाम् । रेमे निशामिवादाय कान्तां मदनमञ्चुकाम् ॥ १३५
वत्सेश्वरोऽपि तां रात्रिं सानुगो दिव्यभोगवान् । तथैव तन्वा संप्राप्तजन्मान्तर इवानयत् ॥ १३६
प्रातः प्रबुध्य सर्वे च तैस्तैर्भोगैस्तथैव ते । विद्यासिद्धवरोद्यानमन्दिरादिषु रेमिरे ॥ १३७

इति विविधविहारैरत्र तेषां प्रयातेष्वथ बहुदिवसेषु प्रीतिमान्वत्सराजः ।
निजसुतमुपगम्य स्वां पुरीं गन्तुकामो निखिलखचरराजं प्रह्वमेवं जगाद ॥ १३८

पुत्रैतेषु सचेतनो न रमते दिव्येषु भोगेषु कः
किं त्वाकर्षति जन्मभूमिवसतिस्नेहः स्वको मानुषान् ।
तद्यामः स्वपुरीं वयं श्रियमिमां वैद्याधरीं त्वं पुन-
र्भुङ्क्ष्वैतास्तव दिव्यमानुषतया योग्या यतो भूमयः ॥ १३९

आह्वातव्याः पुनरवसरे पुत्र भूयो वयं ते
जन्मन्येतत्फलमिह हि नस्त्वन्मुखेन्दुं यदेतम् ।
चक्षुःपेयामृतरसमयं कान्तमालोकयामो
दिव्यां लक्ष्मीं यदपि भवतो वीक्ष्य मोदामहे च ॥ १४०

एतद्वचोऽकृतकमेव पितुर्निशम्य वत्सेश्वरस्य नरवाहनदत्तदेवः ।
विद्याधराधिपतिमाशु स देवमायमाहूय बाष्पभरगद्गदमादिदेश ॥ १४१
तातः प्रयाति खलु तां निजराजधानीमम्बान्वितः स्वसचिवादियुतस्तदस्य ।
संपूर्णहेममणिभारसहस्रमग्रे प्रस्थापय द्युचरविष्टिसहस्रहार्यम् ॥ १४२

इत्यादिष्टः स्वामिना प्रीतिपूर्वं तेन प्रह्वो देवमायो जगाद ।
आकौशाम्बि स्वात्मनैव प्रयास्याम्येतत्सिद्ध्यै सानुगो मानदेति ॥ १४३

अथ तस्य चक्रवर्ती वस्त्रालंकारपूजितस्य पितुः ।
वायुपथदेवमायौ सानुचरस्यानुयात्रिकौ स ददौ ॥ १४४
सोऽप्यारूढो दिव्यं वहनं वत्सेश्वरः सपरिवारः ।
दूरानुगतं पुत्रं निवर्त्य तं निजपुरीं प्रययौ ॥ १४५
देवी वासवदत्ता तत्कालोद्भूतशतगुणोत्कण्ठा ।
प्रणतं निवर्त्य रुदती पश्यन्ती तं सुतं कथंचिदगात् ॥ १४६
स च नरवाहनदत्तः सचिवानुगतो गुरूननुव्रज्य ।
बाष्पान्धकारितमुखः प्रत्यागादृषभकं तमेव गिरिम् ॥ १४७

तत्रास्त बालसचिवैः सह गोमुखाद्यैर्विद्याधरेन्द्रनिवहैश्च स चक्रवर्ती ।
सान्तःपुरो मदनमञ्चुकया समेतो दिव्येषु शश्वदुपभोगसुखेष्वतृप्तः ॥ १४८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे महाभिषेकलम्बके द्वितीयस्तरङ्गः ।

**समाप्तश्चायं महाभिषेको नाम पञ्चदशो लम्बकः ।**

---

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## सुरतमञ्जरी नाम षोडशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

पातु वस्ताण्डवोड्डीनगण्डसिन्दूरमण्डनः । वान्ताभिपीतप्रत्यूहप्रताप इव विघ्नजित् ॥ १
एवं तस्मिन्नृषभके पर्वते तस्य तिष्ठतः । नरवाहनदत्तस्य सभार्यस्य समन्त्रिणः ॥ २
प्राप्य विद्याधराधीशचक्रवर्तिश्रियं पराम् । भुञ्जानस्याययौ पुष्णन्सुखानि मधुरेकदा ॥ ३
प्रससाद चिराच्चारु चन्द्रिका मृगलक्ष्मणः । नवीनशाद्वलाश्लिष्टा सस्वेदाभूद्वसुंधरा ॥ ४
आसन्नालिङ्ग्यमानाश्च मुहुर्मलयमारुतैः । कम्पाकुलाः कण्टकिताः सरसा वानराजयः ॥ ५
पुष्पचापप्रतीहारश्चूतयष्टिं विलोकयन् । क्वणन्मानवतीमानं निषिषेधेव कोकिलः ॥ ६
निष्पेतुः पुष्पवल्लीभ्यः सशब्दा भृङ्गराजयः । मारवीरधनुर्मुक्ता इव नाराचपङ्क्तयः ॥ ७
एवं मधुप्रवृत्तिं तां तदा वीक्ष्य व्यजिज्ञपन् । नरवाहनदत्तं तं सचिवा गोमुखादयः ॥ ८
देव पश्यान्य एवायं जातः पुष्पमयोऽधुना । ऋषभाद्रिर्मधूत्फुल्लकाननालीनिरन्तरः ॥ ९
अन्योन्यघट्टितैः पुष्पैः कांस्यतालवतीरिव । संगीता इव भृङ्गीनां विरुतैर्वातवेपिताः ॥ १०
वसन्तसज्जितोद्यानमन्मथास्थानगामिनीः । विलोकय लता राजन्परागपटमालिनीः ॥ ११
अलिमालाश्लथज्येयं दृश्यतां चूतमञ्जरी । विश्रान्तस्य जगज्जित्वा कामस्येव धनुर्लता ॥ १२
तदत्र रुचिरोद्याने देव मन्दाकिनीतटे । मधूत्सवमिमं तावदेहि गत्वोपभुञ्ज्महे ॥ १३
इत्युक्तः सचिवैः सोऽथ सावरोधवधूजनः । नरवाहनदत्तस्तत्ययौ मन्दाकिनीतटम् ॥ १४
तत्र चिक्रीड चोद्याने नानाविहगनादिते । एलालवङ्गबकुलाशोकमन्दारमण्डिते ॥ १५
उपविष्टश्च विपुले चन्द्रकान्तशिलातले । पार्श्वे कृत्वा महादेवीं वामे मदनमञ्चुकाम् ॥ १६
अन्यावरोधसहितस्तैस्तैर्विद्याधरेश्वरैः । चण्डसिंहामितगतिप्रमुखैः परिवारितः ॥ १७
आपानं सेवमानोऽत्र तास्ताः कुर्वन्कथास्तथा । विचार्य तमृतुं सम्राट् सचिवान्स्वानुवाच सः ॥ १८
सुखस्पर्शो मृदुर्वातो दक्षिणो विमला दिशः । पुष्पितानि सुगन्धीनि काननानि पदे पदे ॥ १९
मधुराः कोकिलालापाः पानलीलासुखानि च । सुखं किं न मधौ प्रेयोवियोगस्त्वत्र दुःसहः ॥ २०
अन्यस्यास्तां तिरश्चामप्यत्र कष्टा वियोगिता । तथा च विरहक्लान्तामेतां पश्यत कोकिलाम् ॥ २१
एषा हि नष्टमन्विष्य कूजन्ती सुचिरं प्रियम् । अप्राप्य तं स्थिता चूते मृतेवालीय निःस्वना ॥ २२
इत्युक्तवन्तं सम्राजं मन्त्री तं गोमुखोऽब्रवीत् । सत्यं कालेऽत्र विरहो दुःसहः सर्वदेहिनाम् ॥ २३
तथाहि देव श्रावस्त्यां यद्वृत्तं वच्मि तच्छृणु । तत्रैको राजपुत्रोऽभूद्ग्रामभुग्राजसेवकः ॥ २४
शूरसेनाभिधानस्य तस्य मालवदेशजा । अनुरूपा सुषेणेति भार्याभूज्जीविताधिका ॥ २५

स जातु भूपेनाहूतः कटकं गन्तुमुद्यतः । शूरसेनोऽनुरागिण्या जगदे भार्यया तया ॥ २६
आर्यपुत्र न मुक्त्वा मामेककां गन्तुमर्हसि । नहि शक्ष्याम्यहं स्थातुं क्षणमत्र त्वया विना ॥ २७
एवं तयोक्तः प्रियया शूरसेनो जगाद ताम् । राजाहूतो न गच्छामि कथं तन्वि न वेत्सि किम् ॥ २८
राजपुत्रः परायत्तवृत्तिरस्मि हि सेवकः । तच्छ्रुत्वा साश्रुनयना सा भार्या तमभाषत ॥ २९
गन्तव्यं यद्यवश्यं ते तत्सहिष्ये कथंचन । दिनमप्यनतिक्राममनुपैष्यसि मधौ यदि ॥ ३०
श्रुत्वैतत्सोऽप्यवादीत्तामन्ततो निश्चितं प्रिये । त्यक्त्वापि कार्यमेष्यामि चैत्रस्य प्रथमेऽहनि ॥ ३१
इत्युक्तवान्कथमपि प्रिययानुमतस्तया । राज्ञः समीपं कटकं शूरसेनो जगाम सः ॥ ३२
तद्भार्याप्याशया तस्थौ गणयन्ती दिनानि सा । तदागमावधिमधुप्रारम्भदिवसेक्षिणी ॥ ३३
गतेष्वथ दिनेष्वागात्स मधूत्सववासरः । मन्मथाह्वानमन्त्राभविलसत्कोकिलध्वनिः ॥ ३४
शुश्रुवे कुसुमामोदमाद्यन्मधुकरारवः । कामेनारोप्यमाणस्य कार्मुकस्येव निःस्वनः ॥ ३५
सोऽयं मधूत्सवः प्राप्तो ध्रुवमद्यैष्यति प्रियः । इति तस्मिन्दिने तस्य शूरसेनस्य सा वधूः ॥ ३६
विचिन्त्य विहितस्नाना सुषेणाभ्यर्चितस्मरा । उद्वीक्षमाणा तन्मार्गं तस्थौ रचितमण्डना ॥ ३७
दिनात्ययेऽपि न यदा स तस्याः पतिराययौ । तदा सा निशि नैराश्यविधुरा समचिन्तयत् ॥ ३८
मृत्योः कालोऽयमायातो न त्वायातः पतिः स मे । परसेवैकसक्तानां को हि स्नेहो निजे जने ॥ ३९
इत्येवं चिन्तयन्त्याश्च तस्यास्तद्गतचेतसः । निर्ययुः स्मरदावाग्निदह्यमाना इवासवः ॥ ४०
तावच्च भूपात्कथमप्यात्मानं प्रतिमोच्य सः । शूरसेनोऽनतिक्रामन्दिनं तद्दयितोत्सुकः ॥ ४१
आरुह्य करभश्रेष्ठमुल्लङ्घ्याध्वानमायतम् । आगतः पश्चिमे यामे रात्रेः प्राप निजं गृहम् ॥ ४२
तत्रापश्यद्गतप्राणां प्रियां तां कृतमण्डनाम् । लतामुत्फुल्लकुसुमां वातेनोन्मूलितामिव ॥ ४३
दृष्ट्वैव विह्वलस्यैतां कुर्वतोऽङ्के विनिर्ययुः । प्रलापैः सह तस्यापि प्राणा विरहिणः क्षणात् ॥ ४४
तथा विपन्नौ दृष्ट्वा तौ दंपती कुलदेवता । कृपया जीवयामास देवी चण्डी वरप्रदा ॥ ४५
ततः प्रत्यागतप्राणौ ततः प्रभृति तावुभौ । दृष्टानुरागावन्योन्यमवियुक्तौ बभूवतुः ॥ ४६
इत्थं वसन्तसमये मलयानिलवीजितः । केषां न देहिनां देव दुःसहो विरहानलः ॥ ४७
इत्येवं गोमुखेनोक्ते तदेव किल भावयन् । नरवाहनदत्तोऽभूत्सोऽकस्माद्विमना इव ॥ ४८
महात्मनां विना हेतोर्दुःस्थितः सुस्थितोऽपि वा । सूचयत्यन्तरात्मा हि पुरो भावि शुभाशुभम् ॥ ४९
ततो दिने व्यवसिते सम्राट् संध्यामुपास्य सः । वासवेश्मनि विश्रान्तः प्रविश्य शयनीयके ॥ ५०
स्वप्ने निशावसाने स्वं पितरं कृष्णया स्त्रिया । आकृष्य दक्षिणामाशां नीयमानमवैक्षत ॥ ५१
तद्दृष्ट्वैव प्रबुद्धः संस्तातस्यानिष्टशङ्कया । ध्यातामुपस्थितां विद्यां प्रज्ञप्तिं नाम पृष्टवान् ॥ ५२
ब्रूहि तातस्य वृत्तान्तो वत्सराजस्य को मम । तन्निमित्तं हि दुःस्वप्नदर्शनादस्मि शङ्कितः ॥ ५३
इत्युक्ता तेन विद्या सा रूपिणी तमभाषत । शृणु यद्वत्सराजस्य वृत्तं देव पितुस्तव ॥ ५४
स कौशाम्बीस्थितोऽकस्मादुज्जयिन्याः समागतात् । दूताच्चण्डमहासेनं विपन्नमशृणोन्नृपम् ॥ ५५
तस्याङ्गारवतीं देवीं कृतानुगमनां तथा । तस्मादेव स शुश्राव मोहाद्भूमौ पपात च ॥ ५६
लब्धसंज्ञश्चिरं चैतौ समं वासवदत्तया । देव्या शुशोच श्वशुरौ स्वर्गतौ सपरिच्छदः ॥ ५७
भङ्गुरेऽस्मिन्भवे कस्य स्थिरता स च भूपतिः । अशोच्यो यस्य जामाता भवान्गोपालकः सुतः ॥ ५८
नरवाहनदत्तश्च दौहित्र इति मन्त्रिभिः । प्रबोध्योत्थापितः सोऽथ ददौ श्वशुरयोर्जलम् ॥ ५९
ततः श्वशुर्यं शोकार्तं स्नेहात्पार्श्वस्थितं तदा । गोपालकं स वत्सेशो बाष्पकण्ठोऽभ्यभाषत ॥ ६०
उत्तिष्ठोज्जयिनीं गच्छ राज्यं पालय पैतृकम् । प्रतीक्षन्ते प्रजा हि त्वामिति दूतमुखाच्छ्रुतम् ॥ ६१
तच्छ्रुत्वा स रुदन्वत्सराजं गोपालकोऽब्रवीत् । न देव गन्तुं शक्नोमि त्यक्त्वा त्वां भगिनीं तथा ॥ ६२
न चोत्सहे तातशून्यां स्वपुरीं द्रष्टुमप्यहम् । तत्पालकोऽनुजो मेऽत्र राजास्तु मदनुज्ञया ॥ ६३
एवं वदन्यदा नैच्छद्राज्यं गोपालकस्तदा । सेनापतिं रुमण्वन्तं विसृज्योज्जयिनीं पुरीम् ॥ ६४

वत्सेश्वरः कनिष्ठं तं श्वशुर्यं पालकाभिधम्। दत्ताभ्यनुज्ञं ज्येष्ठेन तस्यां राज्येऽभ्यषेचयत्॥ ६५
आलोक्य चास्थिरं सर्वं विरक्तो विषयेषु सः। यौगन्धरायणादिभ्यः सचिवेभ्योऽब्रवीदिदम्॥ ६६
असारेऽस्मिन्भवे तावद्भावाः पर्यन्तनीरसाः। कृतं च राज्यमस्माभिर्भुक्ता भोगा जिता द्विषः॥ ६७
विद्याधराधिराजत्वं प्राप्तो दृष्टः सुतस्तथा। इदानीं च वयोऽतीतमस्माकं बान्धवैः सह॥ ६८
मृत्यवे दातुमात्ताश्च केशेषु जरसा वयम्। क्लीबराज्यमिवाक्रान्तं शरीरं वलिभिश्च नः॥ ६९
तस्मात्कालंजरगिरौ गत्वा देहमशाश्वतम्। त्यक्त्वेमं साधयाम्यत्र यथोक्तं शाश्वतं पदम्॥ ७०
इत्युक्तास्तेन सचिवा राज्ञा सर्वे विचार्य तत्। देवी वासवदत्ता च समचित्तास्तमब्रुवन्॥ ७१
यथाभिरुचितं देव भवतस्त्वत्प्रसादतः। वयमप्युपयास्यामः परत्राप्युत्तमां गतिम्॥ ७२
इत्यात्मतुल्यैरुक्तस्तैः स राजा कृतनिश्चयः। गोपालकं तं तत्रस्थं श्वशुर्यं धुर्यमभ्यधात्॥ ७३
नरवाहनदत्तश्च त्वं च तुल्यौ सुतौ मम। तदेतां रक्ष कौशाम्बीं राज्यं तुभ्यं मयार्पितम्॥ ७४
एवं वत्सेश्वरेणोक्तस्तं स गोपालकोऽब्रवीत्। युष्माकं या गतिः सा मे नाहं वस्त्यक्तुमुत्सहे॥ ७५
एतदेवानुबन्धेन स जल्पन्स्वसृवत्सलः। वत्सराजेन जगदे कोपं कृत्वैव कृत्रिमम्॥ ७६
अद्यैव त्वमनायत्तो जातो मिथ्यानुवृत्त मे। खपदाच्यवमानस्य कस्याज्ञां को हि मन्यते॥ ७७
इत्युक्तोऽवाङ्मुखो राज्ञा रूक्षं गोपालको रुदन्। वनाय कृतबुद्धिः सन्संप्रत्यत्र न्यवर्तत॥ ७८
ततो राजा गजारूढो देव्या वासवदत्तया। पद्मावत्या च सहितः स प्रतस्थे समन्त्रिकः॥ ७९
कौशाम्ब्या निर्गतं तस्याः साक्रन्दाः साश्रुदुर्दिनाः। सयोषिद्बालवृद्धाश्च पौरास्तमनु निर्ययुः॥ ८०
गोपालको वः पातेति तानाश्वास्य कथंचन। निवर्त्य च स वत्सेशः प्रायात्कालंजरं गिरिम्॥ ८१
प्राप्य तं च समारुह्य प्रणम्य च वृषध्वजम्। सर्वकालप्रियां वीणां कृत्वा घोषवतीं करे॥ ८२
पार्श्वगाभ्यां स देवीभ्यामन्वितो मन्त्रिभिः सह। यौगन्धरायणाद्यैस्तैः पतितोऽभूत्प्रपाततः॥ ८३
पतन्नेव विमानेन भास्वरेण स भूपतिः। आगतेनानुगैः सार्धं द्योतमानो दिवं गतः॥ ८४
एतद्विद्यामुखाच्छ्रुत्वा हा तातेत्यभिधाय सः। नरवाहनदत्तोऽत्र पपात भुवि मूर्च्छितः॥ ८५
लब्धसंज्ञश्च पितरं मातरं पितृमन्त्रिणः। अन्वशोचन्निजामात्यैः प्रमीतपितृकैः सह॥ ८६
स्वरूपज्ञोऽपि संसारस्यैतस्य क्षणभङ्गिनः। इन्द्रजालोपमानस्य कथं देव विमुह्यसि॥ ८७
अनुशोचसि चाशोच्यान्कृतकृत्यान्पितॄन्कथम्। येषां विद्याधरेन्द्रैकचक्रवर्ती भवान्सुतः॥ ८८
इति विद्याधराधीशैर्धनवत्या च बोधितः। स पितृभ्यो जलं दत्त्वा विद्यां पप्रच्छ तां पुनः॥ ८९
मातुलो मे स गोपालः क्वास्ते किमकरोदिति। ततो विद्यापि सा भूयः सम्राजं तमभाषत॥ ९०
गते महापथगिरिं वत्सराजेऽनुशोच्य तम्। भगिनीं चाध्रुवं मत्वा सर्वं स्थित्वा बहिः पुरः॥ ९१
उज्जयिन्यास्तमानाय्य भ्रातरं पालकं च सः। प्रादाद्गोपालकस्तस्मै कौशाम्बीराज्यमप्यदः॥ ९२
राज्यद्वयस्थे तस्मिंश्च सोऽनुजेऽथ तपोवनम्। वैराग्येणासितगिरिं प्रयातः कश्यपाश्रमम्॥ ९३
तत्र वल्कलमादाय तपस्यन्मुनिमध्यगः। मातुलस्तिष्ठति स ते देव गोपालकोऽधुना॥ ९४
श्रुत्वैतद्द्रष्टुमुत्कस्तं मातुलं सपरिच्छदः। नरवाहनदत्तोऽगाद्विमानेनासिताचलम्॥ ९५
तत्रावतार्य गगनाद्वृतो विद्याधरेश्वरैः। अपश्यदाश्रमपदं स मुनेः कश्यपस्य तत्॥ ९६
सप्रेक्षितमिवानेककृष्णसारमृगभ्रमैः। सस्वागताचारमिव क्वणितेन पतत्रिणाम्॥ ९७
जुह्वतामग्निहोत्राणि धूमराजिसमुद्गमैः। प्रदर्शयद्दिवारोहमार्गं दिवि तपस्विनाम्॥ ९८
बहुभूधरनागेन्द्रमाश्रितं कपिलोत्करैः। अपूर्वमिव पातालमूर्ध्ववर्ति वितामसम्॥ ९९
तत्र मध्ये जटालं तं तरुवल्कलवाससम्। मूर्तं शममिवाद्राक्षीन्मातुलं मुनिभिर्वृतम्॥ १००
सोऽपि गोपालको दृष्ट्वा भागिनेयमुपागतम्। उत्थायाश्लिष्य चाङ्के तं चकारोदश्रुलोचनः॥ १०१
अथोभौ तौ नवीभूतशोकौ बन्धूनशोचताम्। स्वजनालोकवातेद्धो दुःखाग्निः कं न तापयेत्॥ १०२
तद्दुःखदर्शनार्तेषु तिर्यक्ष्वप्यत्र तौ ततः। उपेत्याश्वासयामासुर्मुनयः कश्यपादयः॥ १०३

अथ तस्मिन्नहनि गते प्रातर्गोपालकं स तं सम्राट् ।
एहि मदैश्वर्ये त्वं निवसेत्यभ्यर्थयामास ॥ १०४

गोपालकोऽपि तमुवाच स किं न वत्स पर्याप्तमेवममुना तव दर्शनेन ।
स्नेहस्तवास्ति मयि चेत्तदिहैव वर्षाकालं समागतमिमं निवसाश्रमे त्वम् ॥ १०५

इति नरवाहनदत्तस्तेनोक्तो मातुलेन तत्कालम् ।
सपरिच्छदः स तस्मिन्नसितगिरौ कश्यपाश्रमे तस्थौ ॥ १०६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे सुरतमञ्जरीलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

अथासितगिरौ तस्मिन्नास्थानस्थं व्यजिज्ञपत् । नरवाहनदत्तं तं स्वसेनापतिरेकदा ॥ १
अद्याहं देव हर्म्यस्थो रक्षन्सैन्यानि दृष्टवान् । दिव्येन पुंसा नभसि ह्रियमाणां निशि स्त्रियम् ॥ २
क्रन्दन्तीं हार्यपुत्रेति कान्तिसर्वस्वहारिणीम् । लब्धैवानायितां बुद्ध्वा तत्कालबलिनेन्दुना ॥ ३
आः पाप परदारांस्त्वमपहृत्य क्व यास्यसि । नरवाहनदत्तस्य राज्ये देवस्य रक्षितुः ॥ ४
योजनानां सहस्रेषु षष्टौ वैद्याधरे पदे । तिर्यञ्चोऽपि हि नाधर्मं कुर्वन्त्यन्येषु का कथा ॥ ५
इत्युक्त्वैव प्रधाव्याशु सानुगेन मया स्वयम् । संयम्य स पुमान्व्योम्नः सनारीकोऽवतारितः ॥ ६
अवतार्य च पश्यामो यावत्स्यालः स ते प्रभो । भ्राता युष्मन्महादेव्या इत्यकाख्यो नभश्चरः ॥ ७
देव्यां कलिङ्गसेनायां जातो मदनवेगतः । केयं किमेतां हरसीत्युक्तोऽस्माभिश्च सोऽभ्यधात् ॥ ८
इयं मतङ्गदेवस्य विद्याधरपतेः सुता । उत्पन्नाशोकमञ्जर्यां नाम्ना सुरतमञ्जरी ॥ ९
सैषा प्रागेव वाचा मे मात्रा दत्ता सती किल । अन्यस्मै मानुषायात्र स्वपित्रा प्रतिपादिता ॥ १०
अतोऽद्यासौ निजा भार्या यदि प्राप्य हृता मया । तन्मे को दोष इत्युक्त्वा सोऽत्र व्यरमदित्यकः ॥ ११
केनार्ये परिणीता त्वं कथं प्राप्तासि चामुना । इति साथ मया पृष्टावोचत्सुरतमञ्जरी ॥ १२
अस्त्युज्जयिन्यां नृपतिः श्रीमान्पालकसंज्ञकः । कुमारस्तस्य पुत्रोऽस्ति सुनामावन्तिवर्धनः ॥ १३
तेनेह परिणीताहं सुप्ता हर्म्यतलेऽद्य च । आर्यपुत्रस्य सुप्तस्य हृतास्म्येतेन पाप्मना ॥ १४
एवमुक्तवती सा च संयतस्थः स चेत्यकः । मयेह स्थापितौ तौ द्वौ प्रमाणमधुना प्रभुः ॥ १५
एवं हरिशिखात्सेनापतेः श्रुत्वा ससंशयम् । गत्वा गोपालकायैतच्चक्रवर्ती शशंस सः ॥ १६
गोपालकोऽपि सोऽवादीद्वत्सैतद्विदितं न मे । सांप्रतं परिणीतैषा जाने पालकसूनुना ॥ १७
आनीयतां कुमारस्तदुज्जयिन्याः स मन्त्रिणा । समं भरतरोहेण ज्ञास्यामो निश्चयं ततः ॥ १८
तच्छ्रुत्वा मातुलवचश्चक्रवर्ती विसृज्य सः । विद्याधरं धूमशिखं मातुलस्य कनीयसः ॥ १९
पालकस्यान्तिकं राज्ञस्तावानायितवानुभौ । उज्जयिन्याः कुमारं तं तत्सुतं तं च मन्त्रिणम् ॥ २०
प्राप्तौ कृतप्रणामौ च स तौ गोपालकान्वितः । स्नेहादराभ्यां संमान्य प्रकृतं पृच्छति स्म तम् ॥ २१
तत्र स्थिते निशाहीनचन्द्राभेऽवन्तिवर्धने । तथा सुरतमञ्जर्यां पितर्यस्याश्च सेत्यके ॥ २२
सत्सु वायुपथाद्येषु मुनौ तिष्ठति कश्यपे । सोऽन्येषु च जगादैवं मन्त्री भरतरोहकः ॥ २३
आ मूलाच्छृणु देवैतदुज्जयिन्याः किलैकदा । एवं समेत्य विज्ञप्तः सर्वैः पालकभूपतिः ॥ २४
अस्यामुदकदानाख्यो भवत्यद्योत्सवः पुरि । हेतुश्चात्र न चेत्सम्यक्छ्रुतस्तच्छ्रूयतां प्रभो ॥ २५
पूर्वं चण्डमहासेनः पिता ते खड्गमुत्तमम् । प्राप्तुं च भार्यां तपसा देवीं चण्डीमतोषयत् ॥ २६
सा स्वं खड्गं ददौ तस्मै भार्यार्थे चैवमभ्यधात् । अङ्गारकाख्यमसुरं हत्वा तस्याचिरात्सुताम् ॥ २७
पुत्राङ्गारवतीं नाम भव्यां भार्यामवाप्स्यसि । इत्यादिष्टस्तया देव्या तस्थौ राजा स तन्मनाः ॥ २८
अत्रान्तरे चोज्जयिन्यां यो योऽभून्नगराधिपः । स स केनापि सत्त्वेन रात्रौ रात्रावभक्ष्यत ॥ २९
ततश्चण्डमहासेनस्तदन्वेष्टुं स्वयं निशि । स्वैरं भ्रमन्पुरि प्राप पुरुषं पारदारिकम् ॥ ३०

तस्याच्छिनत्स खड्गेन शिरो रचितमण्डनम् । छिन्नकण्ठं च तं सद्यः कोऽप्येत्यादत्त राक्षसः ॥ ३१
सोऽयं पुराधिपानत्ति नूनमत्रेत्युदीर्य सः । आदाय केशेष्वारेभे हन्तुं तं राक्षसं नृपः ॥ ३२
तावत्स राक्षसोऽवादीन्मा राजन्मां वधीर्मृषा । अन्य एव स कोऽपीह यः खादति पुराधिपान् ॥ ३३
कोऽसौ ब्रूहीति राज्ञा तत्पृष्टं रक्षोऽब्रवीत्पुनः । अस्तीहाङ्गारको नाम पातालनिलयोऽसुरः ॥ ३४
स ते पुराधिपानत्ति निशीथेषु परंतप । सर्वतो राजकन्याश्च हठेन हरति प्रभो ॥ ३५
करोत्यङ्गारवत्याश्च ताः सुतायाः परिच्छदम् । तमटव्यां भ्रमन्तं त्वं दृष्ट्वा हत्वा कृती भव ॥ ३६
इत्युक्तवन्तं मुक्त्वा तं राक्षसं स स्वमन्दिरम् । राजा ययावेकदा च जगामाखेटकं ततः ॥ ३७
तत्रापश्यन्महाकायं कोपज्वलितलोचनम् । सूकरं सदरीखण्डमञ्जनाद्रिमिवोद्यतम् ॥ ३८
न वराहो भवेदीदृङ्मायी सोऽङ्गारको नु किम् । इति ध्यायन्स राजा तं क्रोडं बाणैरताडयत् ॥ ३९
स तानगणयन्नेव बाणान्व्याधूय तद्रथम् । गत्वा वराहः सुमहद्विवेश विवरं भुवः ॥ ४०
राजापि वीरस्तत्रैव तस्य पश्चात्प्रविश्य सः । दिव्यं पुरं ददर्शात्र न ददर्श च सूकरम् ॥ ४१
वापीतटोपविष्टश्च तत्रापश्यत्स कन्यकाम् । कन्याशतपरीवारां रतिं रूपवतीमिव ॥ ४२
सा कन्याभ्येत्य पृष्ट्वा च तत्रागमनकारणम् । पश्यन्ती साश्रुनयना जातप्रेमा जगाद तम् ॥ ४३
कष्टं कुत्र प्रविष्टोऽसि वराहो यस्त्वयेक्षितः । स दैत्योऽङ्गारको नाम वज्रकायो महाबलः ॥ ४४
संप्रति त्यक्तवाराहरूपश्रान्तः स्वपित्यसौ । प्रबुध्याहारकाले तु कुर्यादत्यहितं तव ॥ ४५
अहं च सुभगैतस्य नाम्नाङ्गारवती सुता । तव चानिष्टमाशङ्क्य प्राणाः कण्ठागता मम ॥ ४६
इत्युक्तः स तया राजा देव्या दत्तं वरं स्मरन् । कार्यसिद्धिर्ममास्तीति जातास्थः प्रत्युवाच ताम् ॥ ४७
यदि मय्यस्ति ते स्नेहस्तदिदं कुरु मद्वचः । गत्वा रुदिहि पार्श्वेऽस्य प्रबुद्धस्य सतः पितुः ॥ ४८
प्रमत्तं यदि कश्चित्त्वां हन्यातन्मम का गतिः । इति वाच्यश्च मुग्धाक्षि स पृच्छन्कारणं त्वया ॥ ४९
एवं कृते ममाप्यस्ति ध्रुवं श्रेयस्तवापि च । इत्युक्ता तेन राज्ञा सा गत्वा मदनमोहिता ॥ ५०
उपविश्य प्रबुद्धस्य पार्श्वे तस्यारुदत्पितुः । पृष्टा शशंस तस्मै च हेतुं तद्वधजं भयम् ॥ ५१
ततः स दैत्योऽवादीत्तां वज्राङ्गं को हि हन्ति माम् । यद्धि वामकरे मेऽस्ति मर्म रक्षति तद्धनुः ॥ ५२
इत्येतत्तद्वचो राजा प्रच्छन्नः स तदाशृणोत् । सोऽथ दैत्यः प्रववृते स्नात्वा पूजयितुं हरम् ॥ ५३
तत्कालं प्रकटीभूय युद्धायाह्वयते स्म सः । दैत्यं गृहीतमौनं तं राजा रोपितकार्मुकः ॥ ५४
सोऽपि दैत्यः करं वाममुत्क्षिप्य व्यापृतेतरः । संज्ञां तस्याकरोद्राज्ञः प्रतीक्षस्व मनागिति ॥ ५५
तत्क्षणं तेन राज्ञा च करे तत्र स मर्मणि । सिद्धलक्ष्येण बाणेन हतो दैत्योऽपतद्भुवि ॥ ५६
तृषार्तोऽहं हतो येन सोऽब्देऽब्दे चेन्न मां जलैः । तर्पयिष्यति तत्तस्य पञ्च नङ्क्ष्यन्ति मन्त्रिणः ॥ ५७
इत्युक्त्वैव विपन्नेऽस्मिन्दैत्ये तां तत्सुतां नृपः । आदाय सोऽङ्गारवतीमागादुज्जयिनीमिमाम् ॥ ५८
परिणीय च तां देवीं स देवो देव वः पिता । अङ्गारकस्याम्बुदानं प्रतिवर्षमकारयत् ॥ ५९
सर्वे चोदकदानाख्यं कुर्वन्तीह महोत्सवम् । प्राप्तः स चाद्य तत्पित्रा यत्कृतं ते कुरुष्व तत् ॥ ६०
एतत्प्रजावचः श्रुत्वा स तं पालकभूपतिः । पुरि प्रावर्तयत्तत्र जलदानोत्सवं तदा ॥ ६१
तस्मिन्प्रवृत्ते तद्व्यग्रे जने कोलाहलाकुले । अकस्मात्त्रोटितालानो गजोऽत्राधावदुन्मदः ॥ ६२
स वारणोऽङ्कुशं जित्वा व्याधूताधोरणो भ्रमन् । अन्तर्नगर्यां सुबहून्क्षणाद्व्यापादयज्जनान् ॥ ६३
प्रधावितेषु मेण्ठेषु महामात्रान्वितेष्वपि । पौरेषु च न तं कश्चिन्नियन्तुमशकद्गजम् ॥ ६४
क्रमाद्भ्रमति तस्मिंश्च गजे चण्डालवाटकम् । संप्राप्ते निरगात्तस्मादेका चण्डालकन्यका ॥ ६५
जितोऽनया मुखेनेन्दुर्मद्वैरीतीव तुष्टया । भासयन्ती भुवं पादलग्नया कमलश्रिया ॥ ६६
व्यावृत्तचेतसोऽन्येभ्यो भावेभ्यस्तिमितस्थितेः । निद्रेव सर्वलोकस्य दृशोर्विश्रान्तिदायिनी ॥ ६७
सा कन्या वारणेन्द्रं तं संमुखोपागतं करे । करेणाहत्य कुटिलैस्तैः कटाक्षैरताडयत् ॥ ६८
स हस्ती तत्करस्पर्शमोहितो विनताननः । तद्दृष्टिविद्धस्तां पश्यन्पदमप्यत्र नाचलत् ॥ ६९

ततः सा स्वोत्तरीयेण कृतायां तस्य दन्तयोः । उत्पत्यारुह्य दोलायां प्राक्रीडद्वरकन्यका ॥ ७०
दृष्ट्वा तां च स घर्मार्तो तरुच्छायामगाद्द्विपः । एतद्दृष्ट्वा महच्चित्रं पौरास्तत्रैवमब्रुवन् ॥ ७१
अहो दिव्येव काप्येषा कन्या सर्वातिशायिना । रूपेणेव प्रभावेण तिर्यञ्चोऽप्याहृता यया ॥ ७२
अत्रान्तरे च तद्बुद्ध्वा कुमारोऽवन्तिवर्धनः । निर्गतः कौतुकं द्रष्टुमपश्यत्तां स कन्यकाम् ॥ ७३
पश्यतस्तस्य मदनव्याधवागुरया तया । धावितश्चित्तहरिणो राजसूनोरबध्यत ॥ ७४
सापि तं वीक्ष्य तद्रूपहृतचित्ता तदग्रहीत् । गजेन्द्रदन्तदोलाया अवरुह्योत्तरीयकम् ॥ ७५
ततो मेण्ठाधिरूढेऽस्मिन्गजे साथ नृपात्मजम् । सलज्जं सानुरागं च पश्यन्ती स्वगृहानगात् ॥ ७६
अवन्तिवर्धनः सोऽपि प्रशान्ते गजसंभ्रमे । तया हृतेन चित्तेन शून्योऽयासीत्स्वमन्दिरम् ॥ ७७
तत्र संतप्यमानश्च तां विना वरकन्यकाम् । अपृच्छद्विस्मृतारब्धजलदानोत्सवः सखीन् ॥ ७८
जानीथ कस्य तनया किंनामा सा च कन्यका । तच्छ्रुत्वा ते वयस्यास्तं राजपुत्रं बभाषिरे ॥ ७९
अस्तीहोत्पलहस्ताख्यः कोऽपि चण्डालवाटके । मातङ्गस्तत्तनूजा सा नाम्ना सुरतमञ्जरी ॥ ८०
सतां दर्शनमात्रैकफलं तस्या मनोरमम् । चित्रस्थिताया इव तन्नोपभोगक्षमं वपुः ॥ ८१
तच्छ्रुत्वा स वयस्येभ्यः कुमारस्तानभाषत । मन्ये न मातङ्गसुता सा दिव्या कापि निश्चितम् ॥ ८२
नहि चण्डालकन्यायाः सा तादृश्याकृतिर्भवेत् । तद्रूपा सा च भार्या मे न चेत्स्यात्जीवितेन किम् ॥ ८३
इति ब्रुवन्स सचिवैरशक्यविनिवारणः । अत्यर्थं तद्वियोगाग्निसंतप्तोऽभून्नृपात्मजः ॥ ८४
ततोऽवन्तिवती देवी नृपतिः पालकस्तथा । पितरौ तस्य बुद्ध्वा तदभूतां चिरमाकुलौ ॥ ८५
कथं वाञ्छति पुत्रो नावन्त्यजां राजवंशजः । इति चोक्ते तया देव्या स राजा पालकोऽब्रवीत् ॥ ८६
एवं धावति यच्चेतस्तस्यामस्मत्सुतस्य तत् । ध्रुवं कारणमातङ्गी कापि सान्यैव कन्यका ॥ ८७
वक्ति रज्यदरज्यद्वा कार्याकार्ये सतां मनः । अत्र चैषा कथा देवि न श्रुता चेन्निशम्यताम् ॥ ८८
प्राक्प्रसेनजितो राज्ञः सुप्रतिष्ठितसंज्ञके । पुरे कुरङ्गी नाम्नाभूदतिरूपवती सुता ॥ ८९
सा जातूद्याननिर्याता बन्धभ्रष्टेन हस्तिना । उच्चिक्षिपे सवहना धाविलोपरि दन्तयोः ॥ ९०
विद्रुते परिवारेऽस्याः साक्रन्दे तं गजं प्रति । तत्रात्तखड्गश्चण्डालकुमारः कोऽप्यधावत ॥ ९१
स तं लूनकरं खड्गप्रहारेण महागजम् । हत्वा तां मोचयामास प्रवीरो राजकन्यकाम् ॥ ९२
ततो मिलत्परिजना सा जगाम स्वमन्दिरम् । आकृष्टहृदया तस्य वीर्यसौन्दर्यसंपदा ॥ ९३
स मे वारणतस्त्राता भर्ता वा मृत्युरेव वा । इति संचिन्तयन्ती च तस्थौ तद्विरहातुरा ॥ ९४
स चण्डालकुमारोऽपि शनैर्गत्वा निजं गृहम् । तद्रूपहृतचित्तः सन्ध्यायंस्तां पर्यतप्यत ॥ ९५
कुत्राहमन्त्यजन्मायं कुत्र सा राजकन्यका । काकस्य राजहंस्याश्च कीदृशः क्व समागमः ॥ ९६
हास्यमेतच्च शक्नोमि न वक्तुं नाप्युपेक्षितुम् । तस्मान्मरणमेवात्र संकटे शरणं मम ॥ ९७
इत्यालोच्य स गत्वा च निशायां पितृकाननम् । स्नात्वा कृत्वा चितामग्निं प्रज्वाल्यैव व्यजिज्ञपत् ॥ ९८
देव पावक विश्वात्मंस्त्वय्यात्माहुतिदानतः । जन्मान्तरेऽपि सा भूयाद्भार्या राजसुता मम ॥ ९९
इत्युक्तवन्तं हुतभुज्यात्मानं क्षेप्तुमुद्यतम् । प्रकटीभूय साक्षात्तं प्रसन्नोऽग्निरभाषत ॥ १००
मा कृथाः साहसं भार्या भविष्यति तवैव सा । नहि त्वं पूर्वचण्डालो यश्च त्वां वच्मि तच्छृणु ॥ १०१
आस्ते कपिलशर्माख्यो नगरेऽस्मिन्द्विजोत्तमः । तस्याग्न्यगारे प्रत्यक्षः साकारः सन्वसाम्यहम् ॥ १०२
तत्र जात्वन्तिकप्राप्तां तत्सुतां रूपलोभतः । कन्यामकरवं भार्यां वरोत्सारितदूषणाम् ॥ १०३
तस्यां तदैव जातस्त्वं मम वीर्येण पुत्रक । तया च लज्जया रथ्यामुखे क्षिप्तोऽसि तत्क्षणम् ॥ १०४
ततस्त्वं प्राप्य चण्डालैरजाक्षीरेण वर्धितः । तदेवं ब्राह्मणीगर्भसंभूतस्त्वं ममात्मजः ॥ १०५
अतो नास्त्यपवित्रत्वं मत्तेजःसंभवस्य ते । प्राप्स्यस्येव च भार्यां तां कुरङ्गीं राजकन्यकाम् ॥ १०६
इत्युक्त्वान्तर्दधे वह्निः सोऽपि संप्राप्तसंमदः । मातङ्गकृत्रिमसुतो जातास्थः स्वगृहं ययौ ॥ १०७
ततः प्रसेनजिद्राजा स्वप्नेऽग्निप्रेरितो ददौ । अन्विष्टतत्त्वस्तस्मै तां सुतां पावकसूनवे ॥ १०८

एवं भवन्ति प्रच्छन्ना दिव्या देवि सदा भुवि । तदेषा कापि दिव्यैव नान्या सुरतमञ्जरी ॥ १०९
अन्यदेव हि तद्रत्नं मत्सूनोः सा च निश्चितम् । जन्मान्तरप्रियतमा चक्षूरागोपवर्णिता ॥ ११०
एवमस्मासु तिष्ठत्सु राज्ञि ब्रुवति पालके । अवर्णयमहं तत्र कैवर्तीयामिमां कथाम् ॥ १११
अभून्मलयसिंहाख्यो राजा राजगृहे पुरा । तस्य मायावतीत्यासीद्रूपेणाप्रतिमा सुता ॥ ११२
सा क्रीडन्ती मधूद्याने रूपयौवनशालिना । कैवर्तककुमारेण दृष्टा केनापि जातुचित् ॥ ११३
स च तां सुप्रहाराख्यो दृष्ट्वा स्मरवशोऽभवत् । साध्यासाध्यविचारं हि नेक्षते भवितव्यता ॥ ११४
गत्वा च स्वगृहं त्यक्त्वा पाठीनाहरणादि सः । तस्थौ तदेकचित्तः सञ्शय्यायामुज्झिताशनः ॥ ११५
अनुबन्धेन पृष्टश्च स्वाभिप्रायं शशंस सः । मात्रे रक्षितिकानाम्न्यै सापि पुत्रं तमभ्यधात् ॥ ११६
विषादं मुञ्च पुत्र त्वमाहारं भज निश्चितम् । एतत्ते साधयाम्येव स्वयुक्त्याहमभीप्सितम् ॥ ११७
इत्युक्त्वाश्वासिते तस्मिञ्जातास्थे भुक्तभोजने । मत्स्यानादाय हृद्यान्सा ययौ राजसुतागृहम् ॥ ११८
तत्र चेटीभिराख्याता सेवोद्देशात्प्रविश्य सा । दाशी रक्षितिका तस्यै तन्मत्स्यप्राभृतं ददौ ॥ ११९
तेनैव च क्रमेणैतद्ददती सा दिने दिने । वचनाकाङ्क्षिणीं चक्रे तामाराध्य नृपात्मजाम् ॥ १२०
ब्रूहि वाञ्छसि यन्मत्तस्तत्कुर्यामपि दुष्करम् । इति प्रीताथ सावोचत्तां दाशीं राजकन्यका ॥ १२१
ततः सा धीवरी प्राह रहस्तां याचिताभया । उद्यानदृष्टां त्वां देवि विना क्षाम्यति मे सुतः ॥ १२२
आशां प्रदर्श्य च मया प्राणत्यागात्स रक्ष्यते । तत्कृपा मयि चेत्तन्मे सुतं स्पर्शेन जीवय ॥ १२३
एवं तयोक्ता कैवर्तयोषिता सा नृपात्मजा । सलज्जा सानुरोधा च विमृश्यैवमुवाच ताम् ॥ १२४
गुप्तमानय तं तावन्नक्तं मन्मन्दिरं सुतम् । तच्छ्रुत्वैव प्रहृष्टा सा ययौ दाशी सुतान्तिकम् ॥ १२५
नक्तं च सा यथाशक्ति स्वैरं रचितमण्डनम् । तमानिनाय तद्राजकन्यान्तःपुरमात्मजम् ॥ १२६
तत्र तं राजपुत्री सा सुप्रहारं चिरोत्सुकम् । हस्ते गृहीत्वा शयने कृतप्रीतिर्न्यवेशयत् ॥ १२७
आश्वासयामास च तं क्लान्ताङ्गं विरहाग्निना । श्रीखण्डशिशिरस्पर्शकरसंवाहनेन सा ॥ १२८
सोऽपि तेन सुधासिक्त इव दाशीसुतश्चिरम् । कृतार्थमानी विश्रान्तो जह्रे सपदि निद्रया ॥ १२९
सुप्ते चास्मिन्नृपसुता गत्वा सुष्वाप सान्यतः । युक्तिरञ्जितकैवर्तसुता रक्षितविप्लवा ॥ १३०
ततोऽस्य तत्करस्पर्शविगमप्रतिबोधिनः । हस्तोपनतविभ्रष्टां वल्लभां तामपश्यतः ॥ १३१
निधिकुम्भीमिवातीव दरिद्रस्य विषादिनः । दाशसूनोर्निराशस्य सद्यः प्राणा विनिर्ययुः ॥ १३२
तद्बुद्ध्वागत्य निन्दन्ती सात्मानं राजकन्यका । प्रातस्तेन सहारोढुं चितां व्यवसिताभवत् ॥ १३३
ततो मलयसिंहोऽस्याः पिता बुद्ध्वा नृपोऽत्र तत् । एत्यानिवार्यां दृष्ट्वैतामाचम्यैवं वचोऽब्रवीत् ॥ १३४
यदि सत्यमहं भक्तो देवदेवे त्रिलोचने । तन्मे वदत कर्तव्यं लोकपाला यथोचितम् ॥ १३५
इत्युक्तवन्तं राजानं दिव्या वागेवमब्रवीत् । पूर्वभार्येयमेतस्य दाशयूनो भवत्सुता ॥ १३६
ग्रामे नागस्थलाख्ये हि महीधरसुतः पुरा । अभूद्बलधरो नाम ब्राह्मणो गुणवत्तरः ॥ १३७
स गते पितरि स्वर्गं हृतवित्तः स्वगोत्रजैः । विरक्तो भार्यया साकं जगाम द्युनदीतटम् ॥ १३८
देहं त्यक्ष्यन्निराहारः स्थितस्तत्र विलोक्य सः । दाशान्भक्षयतो मत्स्यान्मनसा श्रद्दधे क्षुधा ॥ १३९
ततोऽत्र पञ्चतां यातं तत्संकल्पकलङ्कितम् । स्वभार्या शुद्धसंकल्पा तपःस्थैव तमन्वगात् ॥ १४०
स एष जातः संकल्पदोषाद्दाशकुले द्विजः । भार्यास्य सा च सुतपा जातैषा ते सुता नृप ॥ १४१
तदेतं पूर्वभर्तारं राजन्नेषा त्वदात्मजा । जीवयत्वायुषोऽर्धेन गतायुषमनिन्दिता ॥ १४२
एतत्तपःप्रभावाद्धि तत्तीर्थप्रभयात्तथा । पूतोऽयं तव जामाता भूत्वा राजा भविष्यति ॥ १४३
इत्युक्तो दिव्यया वाचा सुप्रहाराय तां सुताम् । दत्तायुरर्धां च ददौ तस्मै लब्धासवे नृपः ॥ १४४
तद्दत्तैर्भूमिहस्त्यश्वरत्नैर्भूत्वा स भूपतिः । सुप्रहारः कृती तस्थौ प्राप्य भार्यां तदात्मजाम् ॥ १४५
एवं प्राग्जन्मसंबन्धः प्रायः प्रीत्यै शरीरिणाम् । किं चैवं चौरसंबद्धाप्यत्रेयं श्रूयतां कथा ॥ १४६
अयोध्यायामभूद्राजा वीरबाहुरिति श्रुतः । यो ररक्ष स्वसंताननिर्विशेषं सदा प्रजाः ॥ १४७

कदाचित्तं च राजानमेत्य पौरा व्यजिज्ञपन् । चौरा मुष्णन्ति नगरीमिमां प्रतिनिशं प्रभो ॥ १४८
जाग्रद्भिरपि चास्माभिः शक्या लक्षयितुं न ते । तच्छ्रुत्वा स्थापयामास सोऽत्र चारान्नृपो निशि ॥ १४९
तेऽपि प्रापुर्न यच्चौरान्न चाशाम्यदुपद्रवः । तेन राजा स्वयं रात्रौ तदन्वेष्टुं विनिर्ययौ ॥ १५०
एकाकी खड्गहस्तश्च परिभ्राम्यन्स सर्वतः । संचरन्तं ददर्शैकं प्राकारोपरि पूरुषम् ॥ १५१
भयाल्लघुपदन्यासं काकचञ्चललोचनम् । मृगारिमिव पश्यन्तं मुहुर्वलितकंधरम् ॥ १५२
विकोषासिविनिर्यातैर्लक्षितं खड्गरश्मिभिः । तारारत्नापहारार्थमिव सेरण(?)रज्जुभिः ॥ १५३
दृष्ट्वा चाचिन्तयद्राजा चौरोऽयं वेद्मि निश्चितम् । ध्रुवमेकचरेणेयं मुष्यतेऽनेन मे पुरी ॥ १५४
इत्यालोच्य नृपश्चौरं चतुरस्तमुपागमत् । चौरोऽपि स तमप्राक्षीत्सशङ्कं को भवानिति ॥ १५५
ततो राजाब्रवीदेतं बहुव्यसनदुर्भरः । अहं साहसिकश्चौरस्त्वं च मे ब्रूहि को भवान् ॥ १५६
चौरोऽप्युवाचैकचरस्तस्करोऽहं महाधनः । तदेहि मद्गृहं यावद्धनेच्छां पूरयामि ते ॥ १५७
तच्छ्रुत्वा दस्युना तेन समं राजा तथेति सः । ययौ वनान्तस्तद्वेश्म क्ष्मातले खातनिर्मितम् ॥ १५८
अधिष्ठितं वरस्त्रीभिर्भूरिरत्नप्रकाशितम् । सदा नवोपभोगं च भुजंगनगरोपमम् ॥ १५९
ततो गर्भगृहं तस्मिन्प्रविष्टे तस्करे नृपम् । बाह्यस्थानस्थितं दासी तमेका सकृपाभ्यधात् ॥ १६०
कासि प्रविष्टो निर्याहि शीघ्रं विश्वस्तघातकः । हन्यादेकचरो हि त्वां प्रतिभेदभयादयम् ॥ १६१
तच्छ्रुत्वा निर्गतो राजा द्रुतं गत्वा स्वमन्दिरम् । सेनापतिं समाहूय ससैन्यः पुनराययौ ॥ १६२
आगत्य रुद्ध्वा तद्वेश्म शूरानन्तः प्रवेश्य च । हृतार्थसंचयं चौरमवष्टभ्यानिनाय तम् ॥ १६३
गतायां निशि तेनाथ स राज्ञादिष्टनिग्रहः । चौरो विपणिमध्येन वध्यभूमिमनीयत ॥ १६४
नीयमानं च तं तत्र दृष्ट्वा दृष्ट्यनुरागिणी । वणिक्सुतैका पितरं तत्क्षणं स्वमभाषत ॥ १६५
योऽयं वध्यभुवं तात नीयते दत्तडिण्डिमः । असौ चेत्स्यान्न मे भर्ता तन्मृतां विद्धि मामिति ॥ १६६
वीक्ष्याथ दुर्निवारां तां गत्वा भूपं स तत्पिता । द्रव्यकोट्यापि चौरस्य तस्य मुक्तिमयाचत ॥ १६७
भूपोऽपि तस्मै वणिजे चुक्रोध न तु तस्करम् । तं मुमोचाविलम्ब्यैव शूलायां तं न्यवेशयत् ॥ १६८
ततः सा वामदत्ताख्या वणिक्कन्या कलेवरम् । चौरस्यादाय तस्याग्निं प्रविवेशानुरागतः ॥ १६९
एवं प्राग्जन्मसंबन्धपरायत्तेषु जन्तुषु । भावि को वस्त्वतिक्रामेत्को वा किं कस्य वारयेत् ॥ १७०
तस्मात्पुत्रस्य ते कापि पूर्वसंबन्धनिर्मिता । अवन्तिवर्धनस्यैषा राजन्सुरतमञ्जरी ॥ १७१
अन्यथा कथमेतस्य राजसूनोः सुजन्मनः । मातङ्ग्यामिह तस्यां स्यादभिष्वङ्गोऽयमीदृशः ॥ १७२
तस्मादुत्पलहस्तः स मातङ्गस्तत्पिता प्रभो । तां सुतां याच्यतां तावत्पश्यामः किं ब्रवीत्यसौ ॥ १७३
एवमुक्तो मया राजा पालकः प्राहिणोत्तदा । दूतानुत्पलहस्ताय तां कन्यां तत्र याचितुम् ॥ १७४
स च तैर्याचितो दूतैर्मातङ्गो निजगाद तान् । एतन्मेऽभिमतं किं तु यो भोजयति मद्गृहे ॥ १७५
अष्टादशसहस्राणि विप्राणां पुरवासिनाम् । तस्मै मयासौ दातव्या सुता सुरतमञ्जरी ॥ १७६
एतच्छ्रुत्वा वचस्तस्य सप्रतिज्ञं तथैव ते । आगत्य दूता राज्ञे तत्पालकाय न्यवेदयन् ॥ १७७
एतत्सकारणं मत्वा संघाट्य ब्राह्मणान्पुरि । उज्जयिन्यां समाख्यातवृत्तान्तः क्षितिपोऽब्रवीत् ॥ १७८
भुङ्ग्ध्वमुत्पलहस्तस्य मातङ्गस्येह वेश्मनि । अष्टादशसहस्राणि यूयं नेच्छेयमन्यथा ॥ १७९
इत्युक्ता भूभृता भीताश्चण्डालान्नाच्च ते द्विजाः । कर्तव्यमूढाः संश्रित्य महाकालं व्यधुस्तपः ॥ १८०
अन्नमुत्पलहस्तस्य गृहे भुङ्ग्ध्वमशङ्किताः । विद्याधरो ह्ययं नायं चण्डालः सकुटुम्बकः ॥ १८१
इति स्वप्ने समादिष्टा विप्रास्ते तेन शंभुना । उत्थाय गत्वा राज्ञे तदाख्याय पुनरब्रुवन् ॥ १८२
चण्डालवाटादन्यत्र शुद्धमन्नं पचत्वसौ । राजन्नुत्पलहस्तोऽत्र ततस्तद्भुञ्ज्महे वयम् ॥ १८३
तच्छ्रुत्वोत्पलहस्तस्य राजा सोऽन्यं गृहं व्यधात् । प्रीतश्च कारुभिः शुद्धैस्तत्रास्यान्नमपाचयत् ॥ १८४
स्नाते चोत्पलहस्तेऽस्मिञ्शुद्धवस्त्रे पुरः स्थिते । तत्राष्टादशभिर्भुक्तं सहस्रैरग्रजन्मनाम् ॥ १८५
भुक्तेषु तेषु चोपेत्य राजानं राष्ट्रसंनिधौ । प्रणम्योत्पलहस्तोऽसौ पालकं तमभाषत ॥ १८६

अभवद्गौरिमुण्डाख्यो धुर्यो विद्याधरेश्वरः । मतङ्गदेवनामाहं तस्याभूवं समाश्रितः ॥ १८७
अस्यां सुरतमञ्जर्यां सुतायां मम भूपते । उत्पन्नायां स मां गुप्तं गौरिमुण्डोऽब्रवीदिदम् ॥ १८८
नरवाहनदत्ताख्यो योऽयं वत्सेश्वरात्मजः । भविष्यच्चक्रवर्तीह सोऽस्माकं कथ्यते सुरैः ॥ १८९
तद्यावच्चक्रवर्तित्वं न प्राप्तः कण्टकः स नः । तावत्स्वमायया गत्वा तं निपातय मा चिरम् ॥ १९०
इत्यहं गौरिमुण्डेन पापेन प्रेरितस्तदा । तदर्थं नभसा गच्छन्पुरोऽपश्यं महेश्वरम् ॥ १९१
स मां सद्योऽशपत्क्रुद्धः कृत्वा हुंकारमीश्वरः । महात्मनि जने पाप कथं पापं चिकीर्षसि ॥ १९२
तदनेनैव देहेन भार्यादुहितृसंयुतः । गच्छोज्जयिन्यां चण्डालमध्ये निपत दुर्मते ॥ १९३
अष्टादशसहस्राणि विप्राणां पुरवासिनाम् । तनयादानशुल्केन यदा ते भोजयिष्यति ॥ १९४
गृहेषु कश्चिच्छापस्य तदान्तस्ते भविष्यति । दातव्या च त्वया तस्मै सुता तच्छुल्कदायिने ॥ १९५
इत्युक्त्वान्तर्हिते शंभावेषोऽस्मि पतितस्तदा । अन्येषूत्पलहस्ताख्यो न च तैः संकरो मम ॥ १९६
अद्य शान्तः स शापो मे त्वत्पुत्रस्य प्रसादतः । तन्मयेयं सुता दत्ता तस्मै सुरतमञ्जरी ॥ १९७
इदानीं चैष गच्छामि निजं वैद्याधरं पदम् । नरवाहनदत्तस्य सेवार्थं चक्रर्तिनः ॥ १९८
इत्युक्त्वैवार्पितसुतः खमुत्पत्याङ्गनायुतः । आगान्मतङ्गदेवोऽसौ देव त्वच्चरणान्तिकम् ॥ १९९
राजापि पालको ज्ञाततत्त्वो हृष्टस्ततो व्यधात् । तस्याः सुरतमञ्जर्या विवाहं स्वसुतस्य च ॥ २००
तत्पुत्रोऽपि च तां भार्यां प्राप्य विद्याधरीमभूत् । मनोरथाधिकावाप्तिकृतार्थोऽवन्तिवर्धनः ॥ २०१
एकदा च कुमारोऽसौ सुप्तो हर्म्ये समं तया । निशाक्षये प्रबुद्धस्तामकस्मान्नैक्षत प्रियाम् ॥ २०२
विचित्य चैतामप्राप्य तथा क्रन्दन्नतप्यत । यथोपेत्य पिताप्यस्य राजाभूद्भृशविह्वलः ॥ २०३
रक्षितेयं पुरी नास्यां निशायां प्रविशेत्परः । ध्रुवं हृता सा केनापि पापेनाकाशचारिणा ॥ २०४
इत्याद्यस्मासु जल्पत्सु मिलितेष्वत्र तत्क्षणम् । विद्याधरो धूमशिखो यौष्माकोऽवातरद्दिवः ॥ २०५
तेनेह सोऽयमानीतः कुमारोऽवन्तिवर्धनः । अहं चाख्याय वृत्तान्तं मार्गितः पालकान्नृपात् ॥ २०६
सैषा चात्र स्थिता पित्रा समं सुरतमञ्जरी । वृत्तान्त ईदृशश्चास्या देवो जानात्यतः परम् ॥ २०७

इत्थं पालकमन्त्रिणि कथयित्वा भरतरोहके विरते ।
नरवाहनदत्ताग्रे मतङ्गदेवं सभासदोऽपृच्छन् ॥ २०८
कस्मै भवता दत्ता ब्रूहि त्वं सुरतमञ्जरीयमिति ।
सोऽप्याह स्म मयैषा दत्तैवावन्तिवर्धनायेति ॥ २०९
त्वं ब्रूहि हरसि कस्मादेतामिति चेत्यकोऽथ तैः पृष्टः ।
आदौ मह्यं मात्रा वाचा दत्तेयमित्यवादीत्सः ॥ २१०
सति जनके का माता तद्दानेऽप्यस्ति कोऽत्र तव साक्षी ।
तदियं परदारास्ते पापेति तमूचुरित्यकं सभ्याः ॥ २११
इति तैश्च निरुत्तरीकृतस्य प्रसभं निग्रहमित्यकस्य तस्य ।
नरवाहनदत्तचक्रवर्ती कुपितो दुर्विनयात्समादिदेश ॥ २१२
अस्यैकमेतमपराधमिह क्षमस्व स्यालो हि ते मदनवेगसुतः किलासौ ।
इत्यर्थितो मुनिवरैरथ कश्यपाद्यै राजा कथंचिदपभर्त्स्य स तं मुमोच ॥ २१३
तमपि च मातुलपुत्रं निजपत्न्यावन्तिवर्धनं युक्तम् ।
वायुपथहस्तनिहितं सचिवयुतं प्राहिणोत्स्वपुरीम् ॥ २१४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे सुरतमञ्जरीलम्बके द्वितीयस्तरङ्गः ।

तृतीयस्तरङ्गः ।

एवं तत्रासितगिरौ साध्वीं सुरतमञ्जरीम् । इत्यकापहृतां तस्मात्स्यालादप्यपभार्त्सिताम् ॥ १
हृत्वा समर्प्य भर्त्रे च मुनिमध्ये व्यवस्थितम् । नरवाहनदत्तं तं कश्यपर्षिरभाषत ॥ २
नाभून्न भविता राजंश्चक्रवर्ती समस्तव । यस्य धर्मासनस्थस्य न रागादिवशा मतिः ॥ ३
धन्यास्तेऽपि च पश्यन्ति ये त्वां सुकृतिनं सदा । ईदृशेऽपि हि साम्राज्ये नावद्यं किंचिदस्ति ते ॥ ४
आसन्नृषभकाद्या हि पुरान्ये चक्रवर्तिनः । नानाविधैश्च दोषैस्ते ग्रस्ता नष्टाः श्रियश्च्युताः ॥ ५
ऋषभः सर्वदमनस्तृतीयो बन्धुजीवकः । अतिदर्पेण ते सर्वे शक्रान्निग्रहमागताः ॥ ६
जीमूतवाहनोऽप्येत्य पृष्टो विद्याधरेश्वरः । चक्रवर्तिपदप्राप्तिकारणं नारदर्षिणा ॥ ७
आचख्यौ कल्पवृक्षस्य दानं निजतनोस्तथा । तेनाभ्रश्यत्पदात्स्वस्मात्सुकृतोदीरणेन सः ॥ ८
विश्रान्तराख्यो यश्चासीच्चक्रवर्तीह सोऽपि च । इन्दीवराक्षे तनये हृते चेदिमहीभृता ॥ ९
वसन्ततिलकाख्येन तद्दारध्वंसकारिणी । कुपुत्रशोकमोहेन धैर्यहीनो व्यपद्यत ॥ १०
एकस्तारावलोकस्तु भूत्वा राजेन्द्र मानुषः । विद्याधराणां संप्राप्य सुकृतैश्चक्रवर्तिताम् ॥ ११
अनासादितदोषः संश्चिरं साम्राज्यसंपदम् । भुक्त्वावसाने वैराग्यात्स्वयं त्यक्त्वा वनं गतः ॥ १२
इत्थं विद्याधराः प्रायः स्वपदप्राप्तिमोहिताः । नोचिते पथि तिष्ठन्ति रागाद्यन्धाः पतन्ति च ॥ १३
तत्त्वं न्याय्यात्पथः शश्वद्रक्षेः स्खलितमात्मनः । विद्याधरप्रजा चेयं रक्ष्या धर्मव्यतिक्रमात् ॥ १४
कश्यपेनैवमुक्तस्तु सम्राट् श्रद्धिततद्वचः । नरवाहनदत्तस्तमिदं पप्रच्छ सादरम् ॥ १५
कथं तारावलोकेन मानुषेण सता पुरा । प्राप्तं विद्याधरैश्वर्यं भगवन्वर्णयस्व नः ॥ १६
तच्छ्रुत्वा कश्यपोऽवादीच्छ्रूयतां कथयामि वः । चन्द्रावलोक इत्यासीन्नाम्ना शिबिषु भूपतिः ॥ १७
तस्येश्वरस्य मूर्धन्या चन्द्रलेखेत्यभूत्प्रिया । दुग्धाब्धिनिर्मलकुला शुद्धा गङ्गासमस्थितिः ॥ १८
अभूच्च वारणस्तस्य परसेनाविमर्दनः । महान्कुवलयापीड इति ख्यातो महीतले ॥ १९
तत्प्रभावेण भूपालो बलिनापि न शत्रुणा । स पौरस्वामिके राज्ये पर्यभूयत केनचित् ॥ २०
यौवनापगमे चास्य पुत्र एको महीपतेः । उत्पेदे चन्द्रलेखायां देव्यां कल्याणलक्षणः ॥ २१
तारावलोकनामा च क्रमाद्वृद्धिं जगाम सः । दानधर्मविवेकाद्यैः सहजातैर्गुणैः सह ॥ २२
अशिक्षत च निःशेषं वाङ्मयार्थं महामतिः । नाशिक्षत न शब्दार्थमेकं कामप्रदोऽर्थिषु ॥ २३
क्रमाद्युवापि वयसा स्थविरः स विचेष्टितैः । तेजसा सूर्यसंकाशोऽप्यत्यर्थं सौम्यदर्शनः ॥ २४
राकाचन्द्र इवाशेषकलासंदोहसुन्दरः । कंदर्प इव विश्वस्य लोकस्यौत्सुक्यदायकः ॥ २५
संजज्ञे पितृशुश्रूषाजितजीमूतवाहनः । अभिव्यक्तमहाचक्रवर्तिलक्षणलाञ्छितः ॥ २६
ततस्तस्य कृते सूनोः कन्या मद्रेश्वरात्मजा । चन्द्रावलोकेनाजह्रे माद्रीनाम महीभृता ॥ २७
कृतोद्वाहं पिता तं च तद्गुणोत्कर्षतोषितः । यौवराज्ये महाराजस्तदैवाभिषिषेच सः ॥ २८
अभिषिक्तश्च पित्रात्र युवराजस्तदाज्ञया । तारावलोकः सोऽन्नादिदानसत्राण्यकारयत् ॥ २९
शय्योत्थायं च पात्राणि तानि स्वयमवेक्षितुम् । सदा कुवलयापीडमारुह्य गजमभ्रमीत् ॥ ३०
यो यदर्थितवांस्तस्मै तद्ददावपि जीवितम् । तेन तस्य यशो दिक्षु युवराजस्य पप्रथे ॥ ३१
अथ तस्य सुतौ माद्र्यां जायेते स्म यमावुभौ । तौ च नाम्ना करोति स्म स पिता रामलक्ष्मणौ ॥ ३२
अवर्धेतां च तौ पित्रोः स्नेहानन्दाविवार्भकौ । स्वपितामहयोश्चैव प्राणेभ्योऽप्यधिकप्रियौ ॥ ३३
आरोपितगुणावेतौ तत्कोदण्डाविवानतौ । तारावलोको माद्री च न पश्यन्तावतृप्यताम् ॥ ३४
ततः कुवलयापीडं गजं दातृयशः सुतौ । दृष्ट्वा तारावलोकस्य विप्रान्स्वान्रिपवोऽब्रुवन् ॥ ३५
गत्वा कुवलयापीडं गजं तारावलोकतः । याचध्वं यदि तावत्तं युष्मभ्यं स प्रदास्यति ॥ ३६
हरिष्यामस्ततो राज्यं तद्विहीनस्य तस्य तत् । न दास्यत्यथ दातृत्वयशस्तस्य विनङ्क्ष्यति ॥ ३७
इत्युक्तास्तैस्तथेत्युक्त्वा गत्वा ते ब्राह्मणास्ततः । राजसूनुं तारावलोकात्तं दानवीरमयाचिरे ॥ ३८

को नामार्थो गजेन्द्रेण याचितेन द्विजन्मनाम्। तज्जाने निश्चितमिमे प्रयुक्ता मम केनचित्॥ ३९
तद्यदस्तु मया तावद्दातव्योऽयं गजोत्तमः। अप्राप्तकामो ह्यर्थी मे कथं यास्यति जीवतः॥ ४०
इति संचिन्त्य तेभ्यस्तं द्विजेभ्यो वारणोत्तमम्। तारावलोकः स ददौ निष्कम्पेनैव चेतसा॥ ४१
ततस्तैर्नीयमानं तं दृष्ट्वा करिवरं द्विजैः। पौराश्चन्द्रावलोकस्य क्रुद्धा राज्ञोऽन्तिकं ययुः॥ ४२
ऊचुश्च ते सुतेनेदं राज्यं त्यक्तं तवाधुना। मुनिधर्मो गृहीतश्च सर्वसंन्यासकारिणा॥ ४३
यदेतेन श्रियो मूलं गन्धभग्नान्यवारणः। दत्तः कुवलयापीडः पश्यार्थिभ्यो महागजः॥ ४४
तदेतं तपसे पुत्रं वनं प्रस्थापयाथवा। गजं प्रत्याहरान्यं वा राजानं कुर्महे वयम्॥ ४५
इति चन्द्रावलोकस्तैः पौरैरुक्तस्तथैव तत्। स पुत्रं श्रावयामास प्रतीहारमुखेन तम्॥ ४६
सोऽपि तारावलोकस्तच्छ्रुत्वा तत्तनयोऽब्रवीत्। हस्ती तावन्मया दत्तो नास्त्यदेयं च मेऽर्थिषु॥ ४७
ईदृशेन तु राज्येन पौरायत्तेन किं मम। किं चान्यानुपयोगिन्या लक्ष्म्या विद्युद्विलोलया॥ ४८
तन्मे श्रेयो वने वासः सर्वभोज्यफलश्रियाम्। मध्ये तरूणां न पुनर्नृपशूनामिहेदृशाम्॥ ४९
इत्युक्त्वा तुल्यसंकल्पधीरया भार्ययान्वितः। पित्रोः पादावनुध्याय दत्त्वार्थिभ्योऽर्थसंचयम्॥ ५०
गृहीतवल्कलः साकं स पुत्राभ्यां निजात्पुरात्। तारावलोको निरगाद्रुदतः सान्त्वयन्द्विजान्॥ ५१
तं तथाप्रस्थितं दृष्ट्वा पशूनां पक्षिणामपि। करुणं क्रन्दतामश्रुधाराभिर्भूरसिच्यत॥ ५२
सून्वोर्वाहनमात्रैकरथशेषः पथि व्रजन्। सोऽथ तारावलोकोऽन्यै रथाश्वान्याचितो द्विजैः॥ ५३
स तानथ ददौ तेभ्यश्चकर्ष च रथं स्वयम्। सभार्यः सुकुमारौ तौ नेतुं बालौ तपोवनम्॥ ५४
ततोऽटवीमध्यगतं परिश्रान्तमुपेत्य तम्। निरश्वं रथमप्यत्र ययाचे ब्राह्मणोऽपरः॥ ५५
तस्मै तमपि निःशङ्को दत्त्वा पद्भ्यां सपुत्रकः। सभार्यश्च कथंचित्स धीरः प्राप तपोवनम्॥ ५६
तत्र माद्र्या कृतोदारपरिचर्यः स्वभार्यया। तरुमूले कृतावासस्तस्थौ मृगपरिच्छदः॥ ५७
वाताहतिचलत्पुष्पमञ्जरीचारुचामरैः। पृथुच्छायातरुच्छत्रैः पत्रशय्याशिलासनैः॥ ५८
गीतैर्भृङ्गाङ्गनानां च नानाफलरसासवैः। वीरं वैराग्यराज्यस्थं वनान्तास्तं सिषेविरे॥ ५९
एकदा चात्र तत्पत्न्यां माद्र्यां तस्य कृते स्वयम्। आहर्तुं फलपुष्पादि गतायामाश्रमाद्बहिः॥ ६०
उपेत्य ब्राह्मणो वृद्धः कश्चित्तमुटजस्थितम्। तारावलोकं तनयौ ययाचे रामलक्ष्मणौ॥ ६१
वरं पुत्राविमौ नीतौ पारयिष्ये शिशू अपि। न पुनर्भग्नकामोऽयं प्रेषितोऽर्थी कथंचन॥ ६२
विधिर्वीक्षितुकामो हि धैर्यध्वंसं शठो मम। इति संचिन्त्य स ददौ तस्मै विप्राय तौ सुतौ॥ ६३
नीयमानौ च तौ तेन विप्रेण ययतुर्न यत्। तत्स विप्रो लताभिस्तौ बद्धहस्तावताडयत्॥ ६४
निनाय चैतौ क्रन्दतौ नृशंसो जननीं मुहुः। विवृत्य पितरं तं च पश्यन्तौ साश्रुलोचनौ॥ ६५
वत्स तारावलोकोऽत्र पश्यन्नपि न चुक्षुभे। चुक्षुभे त्वस्य धैर्येण भूतग्रामश्चराचरः॥ ६६
अथाहृत्य शनैः पुष्पफलमूलादि सा सती। वनान्तादाययौ माद्री श्रान्ता तं पत्युराश्रमम्॥ ६७
ददर्शाधोमुखं तं च भर्तारं न तु तौ सुतौ। विप्रकीर्णस्थितक्रीडामृण्मयाश्वरथद्विपौ॥ ६८
अनिष्टाशङ्किहृदया हा हतास्मि क्व तौ मम। पुत्रकाविति पप्रच्छ संभ्रान्ता तं पतिं च सा॥ ६९
सोऽप्यवादीच्छनैरेतामनघे तनयौ मया। याचमानाय तौ दत्तौ दरिद्राय द्विजन्मने॥ ७०
तच्छ्रुत्वा त्यक्तमोहा सा साध्वी तमवदत्पतिम्। तर्हि युक्तं कृतं यातु कथमर्थी पराङ्मुखः॥ ७१
एवं तयोक्ते दंपत्योस्तुल्यसत्त्वतया तया। तयोश्चकम्पे भुवनं चचालेन्द्रस्य चासनम्॥ ७२
अथेन्द्रः प्रणिधानेन माद्रीतारावलोकयोः। दानसत्त्वप्रभावेण कम्पितं जगदैक्षत॥ ७३
ततः स ब्राह्मणो भूत्वा गत्वा जिज्ञासुराश्रमम्। तारावलोकं माद्रीं तामेकपत्नीमयाचत॥ ७४
तारावलोकोऽप्येतस्मै दातुं हस्तोदकेन ताम्। निर्विकल्पः प्रववृते वनान्तसहचारिणीम्॥ ७५
किं साधयसि राजर्षे दत्त्वा दारानपीदृशान्। इत्युक्तो द्विजरूपेण तेन शक्रेण सोऽब्रवीत्॥ ७६
न मे साध्यं किमप्यस्ति वाञ्छा त्वेतावती मम। प्राणानपि सदा दद्यां ब्राह्मणेभ्य इति द्विज॥ ७७

तच्छ्रुत्वा निजरूपस्थो भूत्वा शक्रो जगाद तम् । तुष्टोऽस्मि कृतजिज्ञासस्तव तेन वदामि ते ॥ ७८
न ते देया पुनः पत्नी चक्रवर्ती च भाव्यसि । विद्याधराणामचिरादित्युक्त्वान्तर्दधे च सः ॥ ७९
अत्रान्तरे स वृद्धोऽपि ब्राह्मणो दक्षिणार्जितौ । तारावलोकतनयौ गृहीत्वा मार्गमोहतः ॥ ८०
भ्रमंश्चन्द्रावलोकस्य दैवात्तस्य पुरं प्रभोः । प्राप्यापणे तौ विक्रेतुं राजपुत्रौ प्रचक्रमे ॥ ८१
तत्र तौ प्रत्यभिज्ञाय गत्वैवावेद्य भूपतेः । पौराश्चन्द्रावलोकस्य सद्विजौ निन्युरन्तिकम् ॥ ८२
स तौ दृष्ट्वा निजौ पौत्रौ साश्रुः पृष्ट्वा च तं द्विजम् । अभूत्तदुक्तवृत्तान्तः सुखदुःखमयश्चिरम् ॥ ८३
ततः स निजपुत्रस्य सत्त्वोत्कर्षं विभाव्य तम् । त्यक्तराज्यस्पृहः पौरैरर्थ्यमानोऽपि तौ द्विजात् ॥ ८४
क्रीत्वा तस्माद्धनैः पौत्रौ गृहीत्वा सपरिग्रहः । सूनोस्तारावलोकस्य तस्याश्रमपदं ययौ ॥ ८५
तत्रापश्यच्च तं बद्धजटं वल्कलधारिणम् । आशागतैर्महावृक्षमिव भुक्तश्रियं द्विजैः ॥ ८६
दूरादाधाव्य पतितं पुत्रं तं पादयोश्च सः । यदारोपयदुत्सङ्गमभिषिच्याश्रुवारिणा ॥ ८७
विद्याधराधिराज्यार्थमभिषेकपुरःसरे । तस्य सिंहासनारोहे तदेवारम्भतां ययौ ॥ ८८
अथैतत्तनयौ राजा तौ ददौ रामलक्ष्मणौ । सोऽस्मै तारावलोकाय क्रीतावेताविति ब्रुवन् ॥ ८९
कुर्वन्त्यन्योन्यवृत्तान्तकथा यावच्च तत्र ते । तावद्गजश्चतुर्दन्तो लक्ष्मीश्चावातरद्दिवः ॥ ९०
अवतीर्णेषु चान्येषु विद्याधरपतिष्वपि । लक्ष्मीस्तारावलोकं सा पद्महस्ता जगाद तम् ॥ ९१
आरुह्य वारणेऽमुष्मिन्नेहि विद्याधरास्पदम् । तत्साम्राज्यश्रियं भुङ्क्ष्व जितां दानप्रभावतः ॥ ९२
इत्युक्तवत्या लक्ष्म्या स साकं भार्यासुतान्वितः । पितुः प्रणम्य चरणौ पश्यत्स्वाश्रमवासिषु ॥ ९३
आरुह्य तं गजं दिव्यं वृतो विद्याधरेश्वरैः । तारावलोको नभसा ययौ वैद्याधरं पदम् ॥ ९४
तत्रोपभुक्तसाम्राज्यश्रिरं विद्याभिराश्रितः । कालेनोत्पन्नवैराग्यस्तपोवनमशिश्रियत् ॥ ९५
एवं तारावलोकेन मानुषेण सता पुरा । निर्मलैः सुकृतैः प्रापि सर्वविद्याधरेन्द्रता ॥ ९६
अन्ये तु तामवाप्यापि विभ्रष्टाः स्खलितैस्ततः । तद्रक्षेरपचारं त्वं स्वतो वा परतोऽपि वा ॥ ९७

इति नरवाहनदत्तः कश्यपमुनिना कथां समाख्याय ।
अनुशिष्टः स तथेति प्रतिपेदे चक्रवर्ती तत् ॥ ९८

विद्याधराः शृणुत यः कुरुते ममात्र धर्मव्यतिक्रममितः प्रभृति प्रजासु ।
वध्यः स मे नियतमित्यभितो हराद्रिमुद्घोषणां च स ततो भ्रमयांचकार ॥ ९९

अथावनतमस्तकैर्विधृतशासनः खेचरै-
रुवास विलसद्यशाः सुरतमञ्जरीमोचनात् ।
स्वमातुलसमीपगोऽसितगिरौ नयन्प्रावृषं
स तत्र सपरिच्छदो मुनिवरस्य तस्याश्रमे ॥ १००

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे सुरतमञ्जरीलम्बके तृतीयस्तरङ्गः ।

**समाप्तश्चायं सुरतमञ्जरीलम्बकः षोडशः ।**

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## पद्मावती नाम सप्तदशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

देहार्धधृतकान्तोऽपि तपस्वी निर्गुणोऽपि यः । जगत्स्तुत्यो नमस्तस्मै चित्ररूपाय शंभवे ॥ १
चलत्कर्णाग्रविक्षिप्तगण्डोड्डीनालिमण्डलम् । धुन्वानं विघ्नसंघातमिव विघ्नान्तकं नुमः ॥ २
एवं तत्रासितगिरौ कश्यपस्याश्रमे मुनेः । गोपालकस्य निकटे मातुलस्य तपस्यतः ॥ ३
वर्षाकालातिवाहाय निवसन्सचिवैर्युतः । सर्वविद्याधरेन्द्रैकचक्रवर्तिपदे स्थितः ॥ ४
नरवाहनदत्तोऽसौ तैस्तैर्विद्याधराधिपैः । अन्वासितः स्वभार्याभिः पञ्चविंशतिभिर्वृतः ॥ ५
ब्रुवन्कथाः स मुनिभिः सपत्नीकैरपृच्छ्यत । यदा मानसवेगेन देवी मदनमञ्चुका ॥ ६
माययापहृतैषाभूत्तदा विरहनिःसहम् । व्यनोदयत्कथं कस्त्वामिति नः कथ्यतां त्वया ॥ ७
इति तैर्मुनिभिः पृष्टस्तद्भार्याभिश्च तत्र सः । नरवाहनदत्तोऽथ वक्तुमेवं प्रचक्रमे ॥ ८
तदा हृतायां मे तस्यां देव्यां पापेन वैरिणा । मयानुभूतं दुःखं यत्तत्कियत्कथ्यतेऽधुना ॥ ९
न तत्पुरं न चोद्यानं गृहं वा यत्र नाभ्रमम् । चिन्वन्नहमिमामार्तः सर्वे च सचिवा मम ॥ १०
उपविष्टं च सोन्मादमिवोद्याने तरोस्तले । आह स्म लब्धावसरः सान्त्वयन्गोमुखोऽथ माम् ॥ ११
मा गा विक्लवतां देवीमचिरात्प्राप्स्यसि प्रभो । देवा हि शुचरैश्वर्यमादिशंस्तेऽनया सह ॥ १२
तदवश्यं तथा भावि नहि तद्वचनं मृषा । धीराश्च सोढविरहाः प्राप्नुवन्तीष्टसंगमम् ॥ १३
रामभद्रो नलो राजा तवैव च पितामहाः । विषह्य विरहं किं न प्रेयसीभिः समागताः ॥ १४
स मुक्ताफलकेतुश्च चक्रवर्ती शुचारिणाम् । पद्मावत्या न किं प्राप वियुक्तः संगमं पुनः ॥ १५
तथा च शृणु देवाहं तत्कथां कथयामि ते । इत्युक्त्वा गोमुखो मह्यमिमामकथयत्कथाम् ॥ १६
अस्तीह प्रथिता पृथ्व्यां नाम्ना वाराणसी पुरी । द्युसरिद्भूषिता मूर्तिः शांभवीवापवर्गदा ॥ १७
सुरसद्मध्वजपटैर्मरुता नमितोद्धतैः । इहैत मोक्षं यातेति ब्रुवाणेवानिशं जनान् ॥ १८
सितप्रासादशिखरा चन्द्रचूडनिवासभूः । भाति शैवगणाकीर्णा कैलासाद्रिस्थलीव या ॥ १९
तस्यामभूद्ब्रह्मदत्तो नाम राजा पुरा पुरि । शिवैकभक्तो ब्रह्मण्यः शूरो दाता क्षमापरः ॥ २०
न दुर्गेष्वपि चस्खाल न ममज्जाम्बुधिष्वपि । भुवि भ्रमन्ती यस्याज्ञा न द्वीपान्यपि नातरत् ॥ २१
आह्लाददायिनी तस्य चकोरस्येव वल्लभा । आसीत्सोमप्रभा देवी नेत्रपेयास्य साप्यभूत् ॥ २२
शिवभूत्यभिधानश्च मन्त्री तस्याभवद्द्विजः । बृहस्पतिसमो बुद्ध्या सर्वशास्त्रार्थपारगः ॥ २३
स कदाचिन्नृपश्चन्द्रप्रासादे शयने स्थितः । ददर्श हंसयुगलं गगनेनागतं निशि ॥ २४

दीप्तजाम्बूनदमयं राजहंसावलीवृतम् । अभ्रगङ्गाजलोत्क्षिप्तमिव हेमाम्बुजद्वयम् ॥ २५
गते दृष्टिपथात्तस्मिन्नत्याश्चर्ये स भूपतिः । पर्यतप्यत सोत्कण्ठः पुनस्तद्दर्शनं विना ॥ २६
अनिद्र एव नीत्वा तां निशां प्रातः स मन्त्रिणम् । यथा दृष्टं तथाख्याय शिवभूतिमुवाच तम् ॥ २७
तद्यथेष्टं न तौ हेमहंसौ पश्याम्यहं यदि । तत्किमेतेन राज्येन जीवितेनापि वा मम ॥ २८
इति राज्ञोदिते मन्त्री शिवभूतिर्जगाद तम् । अस्त्युपायोऽत्र कश्चित्तं शृणु देव वदामि ते ॥ २९
विचित्रकर्मयोगेन संसारेऽस्मिन्प्रजापतेः । विचित्रो भूतसर्गोऽयमपरिच्छेद्य एव यः ॥ ३०
तत्र दुःखमये मोहादुद्भवत्सुखबुद्धयः । निवासाहारपानादिरसाद्रज्यन्ति जन्तवः ॥ ३१
तेषां चाहारपानादि निवासं च पृथग्विधम् । स्वस्वजात्यनुरूपेण प्रीतिदं विदधे विधिः ॥ ३२
तदेव कारय महद्धंसानामाश्रयं सरः । कमलोत्पलसंछन्नं निर्बाधं रक्षिरक्षितम् ॥ ३३
पक्षिप्रियं च तत्रान्नं प्रक्षेपय सदा तटे । यावदायान्ति तत्राशु नानादिग्भ्योऽम्बुपक्षिणः ॥ ३४
तन्मध्ये नचिरादत्र तौ हंसावप्युपैष्यतः । ततो द्रक्ष्यस्यजस्रं तौ मा कृथा दुर्मनस्कताम् ॥ ३५
इत्युक्ते मन्त्रिणा तेन स राजा तदकारयत् । यथोक्तं क्षणसंपन्नं ब्रह्मदत्तो महासरः ॥ ३६
हंससारसचक्राह्वसंश्रिते तत्र कालतः । आगत्य पद्मखण्डे तद्धंसयुग्ममुपाविशत् ॥ ३७
तदुपेत्य स विज्ञप्तस्तत्सरोरक्षिभिर्नृपः । आगादेतत्सरो हृष्टः सिद्धं मत्वा मनोरमम् ॥ ३८
ददर्श हेमहंसौ च तत्र तौ दूरतोऽर्चयन् । आश्वासयंश्च निक्षिप्य सक्षीराज्यशालितण्डुलान् ॥ ३९
विशुद्धकलधौताङ्गौ मुक्तामणिमयेक्षणौ । प्रवालचञ्चुचरणौ तार्क्ष्यरत्नाग्रपक्षती ॥ ४०
विस्रम्भोपगतौ तौ स हंसौ राजा विभावयन् । मुदा सदावसत्प्रीत्या तत्रैव सरसस्तटे ॥ ४१
एकदा चैकदेशेऽत्र सरोरोधसि पर्यटन् । अम्लायिपुष्परचितां पूजां राजा ददर्श सः ॥ ४२
केन पूजा कृतैषेति पप्रच्छात्र स रक्षिणः । ततस्ते तं सरःपाला नृपमेवं व्यजिज्ञपन् ॥ ४३
त्रिसंध्यं सरसि स्नात्वा हंसावेतौ हिरण्मयौ । इह नित्यमिमां पूजां कृत्वा ध्यानेन तिष्ठतः ॥ ४४
तन्न विद्मो महाराज किमेतन्महदद्भुतम् । एतच्छ्रुत्वा स रक्षिभ्यश्चिन्तयामास भूपतिः ॥ ४५
क्व हंसौ क्वेदृशी चर्या ध्रुवमस्त्यत्र कारणम् । तत्करिष्ये तपस्तावद्यावद्वेत्स्यामि काविमौ ॥ ४६
इति संचिन्त्य नृपतिस्त्यक्ताहारः स भार्यया । मन्त्रिणा च समं चक्रे हरध्यानपरस्तपः ॥ ४७
अथ तौ दिव्यहंसौ तं द्वादशाहमुपोषितम् । उपेत्य व्यक्तया वाचा स्वप्ने राजानमूचतुः ॥ ४८
राजन्नुत्तिष्ठ वक्ष्यावः सभार्यासचिवस्य ते । प्रातः सर्वं यथातत्त्वं विजने पारणे कृते ॥ ४९
इत्युक्त्वा तौ तिरोभूतौ हंसौ राजा प्रबुध्य च । भार्यामन्त्रियुतः प्रातश्चकारोत्थाय पारणम् ॥ ५०
भुक्तोत्तरं च तत्राम्बुलीलागेहान्तरे स्थितम् । नृपं सभार्यामात्यं तं हंसौ तावभ्युपेयतुः ॥ ५१
कौ युवां ब्रूतमित्युक्तौ तेनाभ्यर्च्यैव भूभुजा । क्रमात्तस्मै स्ववृत्तान्तमेवमाचख्यतुश्च तौ ॥ ५२
अस्ति मन्दर इत्यद्रिराजो जगति विश्रुतः । विहरत्सुरसंघातविराजद्रत्नकाननः ॥ ५३
यस्यामृतेन सिक्तेषु मथितक्षीरवारिधेः । जरामृत्युहरं पुष्पफलमूलाम्बुसानुषु ॥ ५४
कैलासाधिककान्तस्य यस्य शृङ्गाग्रभूमयः । नानासद्रत्नरचिता लीलोद्यानानि धूर्जटेः ॥ ५५
तत्र जातु कृतक्रीडो देवोऽवस्थाप्य पार्वतीम् । देवकार्यानुरोधेन केनाप्यन्तर्दधे हरः ॥ ५६
ततस्तद्विरहाक्रान्ता तत्क्रीडाकेतनेषु सा । बभ्रामाश्वास्यमानात्र पार्वती देवतान्तरैः ॥ ५७
एकदा च मधुप्राप्तिसोद्वेगा सा गणैर्वृता । देवी तरुतले यावत्प्रियचिन्ताकुला स्थिता ॥ ५८
तावज्जयासुतां तत्र देव्याश्चामरधारिणीम् । कुमारीं चन्द्रलेखाख्यां साभिलाषावलोकिनीम् ॥ ५९
समानरूपतारुण्यो निकटस्थो गुणोत्तमः । मणिपुष्पेश्वरो नाम साभिलाषो व्यलोकयत् ॥ ६०
तद्दृष्ट्वान्यौ गणौ नाम्ना पिङ्गेश्वरगुहेश्वरौ । बभूवतुः स्मितमुखावन्योन्याननदर्शिनौ ॥ ६१
तौ चालोक्य तथाभूतौ कस्मैतौ हसतोऽपदे । इत्यन्तः कुपिता देवी ददौ दृष्टिमितस्ततः ॥ ६२
तावत्तावत्र चान्योन्यमुखे स्मेरार्पितेक्षणौ । ददर्श चन्द्रलेखां तां मणिपुष्पेश्वरं च तम् ॥ ६३

ततो विरहसोद्वेगा क्रुद्धा देवी जगाद सा। देवस्यासंनिधौ सुष्ठु स्मरप्रेक्षणकं कृतम् ॥ ६४
एताभ्यां हासशीलाभ्यां हसितं प्रेक्ष्य सुष्ठु च। तन्मर्त्ययोनौ कामान्धौ स्त्रीपुंसौ पततामिमौ ॥ ६५
तत्रैव दंपती चैतावविनीतौ भविष्यतः। हासशीलाविमौ क्लेशान्प्राप्स्यतस्तु बहून्भुवि ॥ ६६
ब्राह्मणौ दुःखिनौ पूर्वं तदनु ब्रह्मराक्षसौ। ततः पिशाचकौ पश्चाच्चण्डालौ तस्करौ ततः ॥ ६७
छिन्नपुच्छौ ततः श्वानौ विविधौ च ततः खगौ। भविष्यतो गणावेतौ परिहासापराधिनौ ॥ ६८
आभ्यां हि स्वस्थचित्ताभ्यामेष दुर्विनयः कृतः। इत्यादिष्टवतीं देवीं धूर्जटाख्योऽवदद्गणः ॥ ६९
अत्ययुक्तमिदं देवि न खल्वेते गुणोत्तमाः। इयन्तं शापमर्हन्ति स्वल्पादेवापराधतः ॥ ७०
तच्छ्रुत्वैवाब्रवीत्कोपाद्देवी तमपि धूर्जटम्। मर्त्ययोनावनात्मज्ञ भवानपि पतत्विति ॥ ७१
दत्तशापप्रतापां तां प्रतीहारी जयाम्बिकाम्। जननी चन्द्रलेखायाः पादलग्ना व्यजिज्ञपत् ॥ ७२
प्रसीद देवि शापान्तं कुर्वस्या दुहितुर्मम। एतेषां च स्वभृत्यानामज्ञानविहितागसाम् ॥ ७३
विज्ञप्तेति प्रतीहार्या जयया गिरिजाब्रवीत्। यदा सर्वे मिलिष्यन्ति ज्ञानप्राप्तिवशात्क्रमात् ॥ ७४
ब्रह्मादीनां तपःक्षेत्रे दृष्ट्वा सिद्धीश्वरं तदा। एष्यन्ति पदमस्माकं मुक्तशापा इमे पुनः ॥ ७५
मानुष्ये चन्द्रलेखेयमेतत्कान्तः स धूर्जटः। सुखिनोऽमी भविष्यन्ति त्रयो द्वौ दुःखिनाविमौ ॥ ७६
इत्युक्त्वा विरता यावत्सा देवी तावदाययौ। तत्रासुरः किल ज्ञातहरासंनिधिरन्धकः ॥ ७७
स देवीं प्रेप्सुरुत्सिक्तस्तत्परिच्छदभर्त्सितः। गतो विज्ञाय देवेन ज्ञात्वा तत्कारणं हतः ॥ ७८
कृतकार्योऽन्तिकायातस्तुष्टामुक्तान्धकागमाम्। सोऽथ देवो जगादैवं गिरिजां गिरिजापतिः ॥ ७९
मानसः पूर्वपुत्रस्ते सोऽन्धकोऽद्य हतो मया। त्वगस्थिशेषो भृङ्गी च भविष्यत्यधुनेह सः ॥ ८०
इत्युक्त्वा स समं देव्या तत्रासीद्विहरन्हरः। मणिपुष्पेश्वराद्याश्च पञ्च तेऽवातरन्भुवि ॥ ८१
तत्र तावद्द्वयो राजंस्तस्य पिङ्गेश्वरस्य च। गुहेश्वरस्य चोदन्तं चित्रायितमिमं शृणु ॥ ८२
अस्ति यज्ञस्थलाख्योऽस्मिन्नग्रहारो महीतले। तत्राभूद्यज्ञसोमाख्यो ब्राह्मणो धनवान्गुणी ॥ ८३
तस्य द्वावुदपद्येतां पुत्रौ वयसि मध्यमे। हरिसोमस्तयोर्ज्येष्ठः कनिष्ठो देवसोमकः ॥ ८४
तयोस्तस्य समुत्तीर्णबाल्ययोरुपनीतयोः। विप्रस्यादौ धनं क्षीणं सभार्यस्यायुषा ततः ॥ ८५
ततस्तौ तत्सुतौ दीनौ पितृहीनाववृत्तिकौ। हृताग्रहारौ दायादैर्मन्त्रयामासतुर्मिथः ॥ ८६
भिक्षैकवृत्ती जातौ स्वो न च भिक्षामवाप्नुवः। तद्दूरमपि गच्छावो वरं मातामहं गृहम् ॥ ८७
भ्रष्टौ यद्यपि नौ कोऽत्र श्रद्दध्यात्स्वयमागतौ। तथापि यावः किं कुर्वो नह्यन्यास्त्यावयोर्गतिः ॥ ८८
इति संमन्त्र्य ययतुर्भिक्षमाणौ क्रमेण तौ। तमग्रहारं तद्यत्र मातामहगृहं तयोः ॥ ८९
तत्र तं सोमदेवाख्यं मृतं मातामहं जनात्। पृच्छन्तौ तावबुध्येतां मन्दभाग्यौ सभार्यकम् ॥ ९०
ततश्च तौ यज्ञदेवक्रतुदेवाभिधानयोः। रजोरूक्षौ विविशतुर्विग्नौ मातुलयोर्गृहम् ॥ ९१
तत्रादृत्य समाश्वास्य ताभ्यां क्लृप्ताशनाम्बरौ। सद्विप्राभ्यामधीयानौ यावत्तौ तत्र तिष्ठतः ॥ ९२
तावत्तावप्युपक्षीणधनीभूतावभृत्यकौ। मातुलौ भागिनेयौ तौ प्रीतिपूर्वमवोचताम् ॥ ९३
पुत्रौ दरिद्रीभूतानामस्माकं पशुपालकम्। कर्तुं नास्त्यद्य सामर्थ्यं तद्युवां रक्षकं पशून् ॥ ९४
इत्युक्तौ मातुलाभ्यां तौ बाष्पकण्ठौ तथेति तत्। हरिसोमदेवसोमौ तद्वचोऽभ्युपजग्मतुः ॥ ९५
ततोऽटव्यां पशून्नीत्वा सततं तौ ररक्षतुः। परिश्रान्तौ च सायं तावादायाजग्मतुर्गृहम् ॥ ९६
तथा तयोः पाशुपाल्यं कुर्वतोर्दैवशप्तयोः। अहार्यत पशुः कश्चित्कश्चिद्व्याघ्रैरभक्ष्यत ॥ ९७
ततस्तौ मातुलौ यावदुद्विग्नौ तावदेकदा। धेनुश्छागश्च यज्ञार्थौ द्वौ तयोः क्वापि नेशतुः ॥ ९८
तद्भयात्तान्गृहं नीत्वैवान्यानसमये पशून्। पलायितौ तौ चिन्वन्तौ दूरं विविशितुर्वनम् ॥ ९९
तत्र व्याघ्रार्धजग्धं तं छागं ददृशतुर्निजम्। शोचित्वोपहतात्मानावेवं जगदतुश्च तौ ॥ १००
छागोऽयं मातुलाभ्यां नौ यज्ञार्थं पर्यकल्प्यत। तस्मिन्नष्टे च दुर्वारस्तयोः कोपो भविष्यति ॥ १०१
तदस्य मांसं संस्कृत्य वह्नौ भुक्त्वा हृतक्षुधौ। शेषमादाय गच्छावः क्वाप्यावां भैक्ष्यजीविनौ ॥ १०२

इति संचिन्त्य यावत्तं छागं संस्कुरुतोऽनले । तावदाजग्मतुः पश्चाद्धावन्तौ मातुलौ तयोः ॥ १०३
ताभ्यां छागं पचन्तौ तौ दृष्ट्वावुत्थाय संभ्रमात् । दूरात्तद्दर्शनत्रस्तौ पलाय्य ययतुस्ततः ॥ १०४
युवाभ्यां मांसगृध्नुभ्यां राक्षसं कर्म यत्कृतम् । भविष्यथस्ततो ब्रह्मराक्षसौ पिशिताशनौ ॥ १०५
इति तौ मातुलौ क्रुद्धौ तयोः शापं वितेरतुः । अभूतां द्विजपुत्रौ च सद्यस्तौ ब्रह्मराक्षसौ ॥ १०६
दंष्ट्राविशङ्कटमुखौ दीप्तकेशौ बुभुक्षितौ । प्राणिनः प्राप्य खादन्तावटव्यां भ्रेमतुश्च तौ ॥ १०७
एकदा तापसं हन्तुं योगिनं तावधावताम् । तत्प्रापतुः पिशाचत्वं शप्तौ तेन प्रतिघ्नता ॥ १०८
पिशाचत्वेऽपि तौ हन्तुं हरन्तौ ब्राह्मणस्य गाम् । तन्मन्त्रभग्नौ तच्छापाच्चण्डालत्वमवापतुः ॥ १०९
चण्डालत्वे धनुष्पाणी भ्रमन्तौ क्षुत्प्रिपीडितौ । कदाचिच्चौरपल्लीं तां प्रापतुर्भोजनार्थिनौ ॥ ११०
तत्र दृष्ट्वैव तद्द्वाररक्षकाश्चौरशङ्कया । चौरावप्रभ्य (?) तौ चक्रुश्छिन्नश्रवणनासिकौ ॥ १११
तथाविधौ च तौ बद्धौ निन्युस्ते तस्करास्ततः । पार्श्वं प्रधानचौराणां लगुडाहतिताडितौ ॥ ११२
तत्र पृष्टौ प्रधानैस्तौ चौरैस्तैर्भयविक्लवौ । क्षुद्दुःखावाप्तसंक्लेशं स्ववृत्तान्तमशंसताम् ॥ ११३
ततस्ते कृपया मुख्यचौरा बन्धाद्विमुच्य तौ । ऊचुस्तिष्ठतमश्नीतमिह मा भूद्भयं च वाम् ॥ ११४
अष्टम्यामद्य सेनानीपूजनावसरे युवाम् । अस्माकमतिथी प्राप्तौ संविभागमिहार्हथः ॥ ११५
इत्युक्त्वार्चितदेवीकाश्चौरास्ते स्वाग्रभोजितौ । तत्यजुर्नैव तौ दैवादुत्पन्नप्रीतयोऽन्तिकात् ॥ ११६
ततः क्रमेण कुर्वाणौ चौर्यं तैर्दस्युभिः सह । महासेनापती तेषां संवृत्तौ तौ स्वशौर्यतः ॥ ११७
एकदा चौरचारोक्तं शैवक्षेत्रं महत्पुरम् । सेनापती तौ मुषितुं ससैन्यौ जग्मतुर्निशि ॥ ११८
अनिमित्तेऽपि दृष्टे तावनिवृत्ताववाप्य तत् । लुण्ठयामासतुः कृत्स्नं सदेवभुवनं पुरम् ॥ ११९
ततस्तद्वासिभिर्देवः क्रन्दितः शरणार्थिभिः । चौरांस्तान्विकलानन्धांश्चकार कुपितो हरः ॥ १२०
तदकस्माद्विलोक्यैव मत्वा शार्वमनुग्रहम् । पौराः संभूय दस्यूंस्तान्निजघ्नुर्लगुडाश्मभिः ॥ १२१
अदृश्यमानाश्च गणाश्चौराञ्श्वभ्रेष्ववाक्षिपन् । कांश्चित्कांश्चिदमृद्नंश्च निहत्य भुवि तस्करान् ॥ १२२
तौ च सेनापती यावज्जनो दृष्ट्वा जिघांसति । तावत्तौ समपद्येतां श्वानौ पुच्छविनाकृतौ ॥ १२३
तथाभूतौ च तौ स्मृत्वा पूर्वजातिमशङ्कितम् । नृत्यन्तौ शंकरस्याग्रे तमेव शरणं श्रितौ ॥ १२४
तद्दृष्ट्वा विस्मिताः सर्वे सविप्रवणिजो जनाः । गतचौरभया हृष्टा हसन्तः स्वगृहान्ययुः ॥ १२५
शान्तमोहौ प्रबुद्धौ च श्वानौ तौ शापशान्तये । त्यक्ताहारावथोद्दिश्य शिवं शिश्रियतुस्तपः ॥ १२६
प्रातः कृतोत्सवास्तत्र पौरास्ते पूजितेश्वराः । ध्यानस्थौ ददृशुः श्वानौ दत्तेऽप्यन्ने पराङ्मुखौ ॥ १२७
तथैव दृश्यमानौ तैर्यावत्तौ दिवसान्बहून् । श्वानौ स्थितौ गणास्तावदेवं शंभुं व्यजिज्ञपन् ॥ १२८
देव शप्ताविमौ देव्या पिङ्गेश्वरगुहेश्वरौ । बहुकालं गणौ क्लिष्टौ तत्कृपामेतयोः कुरु ॥ १२९
तच्छ्रुत्वोवाच भगवानिदानीं सारमेयताम् । परित्यज्य गणावेतौ वायसौ भवतामिति ॥ १३०
ततस्तौ वायसीभूतौ बल्यन्नकृतपारणौ । गणौ जातिस्मरौ सुष्ठु शिवैकाग्रौ बभूवतुः ॥ १३१
कालेन भक्तितुष्टस्य निदेशाच्छंकरस्य तौ । भासावभूतां प्रथमं ततोऽपि च शिखण्डिनौ ॥ १३२
ततोऽपि हंसतां प्राप्तौ तौ कालेन गणेश्वरौ । तत्रापि परया भक्त्या तावाराधयतां हरम् ॥ १३३
तीर्थस्नानैर्व्रतैर्ध्यानैः पूजनैस्तोषितेश्वरौ । हेमरत्नमयौ तौ च संजातौ ज्ञानिनौ तथा ॥ १३४
तावावां पार्वतीशापप्राप्तक्लेशपरम्परौ । विद्ध्येतौ हंसतां प्राप्तौ पिङ्गेश्वरगुहेश्वरौ ॥ १३५
जयात्मजाभिलाषी यो मणिपुष्पेश्वरो गणः । देव्या शप्तः स जातस्त्वं ब्रह्मदत्तो नृपो भुवि ॥ १३६
जयासुता सा जातेयं भार्या सोमप्रभा तव । धूर्जटः स च जातोऽयं मन्त्री ते शिवभूतिकः ॥ १३७
अत एव च संप्राप्तज्ञानाभ्यामम्बिकाकृतम् । स्मृत्वा शापान्तमावाभ्यां दत्तं ते निशि दर्शनम् ॥ १३८
तदुपायक्रमात्सर्वे मिलिताः स्म इमेऽधुना । आवां चैव प्रदास्यावो युष्मभ्यं ज्ञानमुत्तमम् ॥ १३९

आयात तत्त्रिदशशैलगतं व्रजामः क्षेत्रं यथार्थमचलेन्द्रसुतापतेस्तत् ।
सिद्धीश्वरं विदधिरे किल यत्र देवा विद्युद्ध्वजासुरविनाशकृते तपांसि ॥ १४०

जघ्नुस्ते च तमसुरं समरे शर्वप्रसादलब्धेन।
विद्याधरेन्द्रपतिना मुक्ताफलकेतुना सहायेन॥ १४१
स च मुक्ताफलकेतुः शापकृतं मर्त्यभावमुत्तीर्य।
तदनुग्रहादवापत्पद्मावत्या समागमं भूयः॥ १४२
तादृशि तत्र क्षेत्रे गत्वा नत्वा हरं प्रयास्यामः।
स्वां गतिमीदृग्विहितो देव्यास्माकं समो हि शापान्तः॥ १४३
इत्युक्तो दिव्याभ्यां हंसाभ्यां ब्रह्मदत्तभूमिपतिः।
सद्योऽभून्मुक्ताफलकेतुकथाश्रवणकौतुकाक्षिप्तः॥ १४४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके प्रथमस्तरङ्गः।

---

द्वितीयस्तरङ्गः।

ततः स ब्रह्मदत्तस्तौ दिव्यहंसौ नृपोऽब्रवीत्। कथं विद्युद्ध्वजं मुक्ताफलकेतुर्जघान तम्॥ १
शापमर्त्यत्वमुत्तीर्य प्राप पद्मावतीं कथम्। एतत्कथयतां तावत्कर्तास्मि प्रकृतं ततः॥ २
तच्छ्रुत्वा तत्कथामेवं तावद्वर्णयतां खगौ। आसीद्विद्युत्प्रभो नाम दैत्येन्द्रो देवदुर्जयः॥ ३
स गत्वा जाह्नवीतीरे सभार्यः पुत्रकाम्यया। ब्रह्माणमाराधयितुं चक्रे वर्षशतं तपः॥ ४
तपस्तुष्टस्य स ततः सुरारिर्ब्रह्मणो वरात्। प्राप विद्युद्ध्वजं नाम त्रिदशावध्यमात्मजम्॥ ५
स बालोऽपि महावीर्यो दैत्यराजसुतो बलैः। रक्ष्यमाणं चतुर्दिक्कं दृष्ट्वा स्वपुरमेकदा॥ ६
वयस्यमेकमप्राक्षीद्भयमत्र कुतः सखे। येनेदं रक्ष्यते नित्यं नगरं सैनिकैरिति॥ ७
ततो वयस्यः सोऽवादीदस्ति नस्त्रिदशेश्वरः। प्रतिपक्षस्तदर्थोऽयं पुररक्षणसंविधिः॥ ८
दन्तिनां दशलक्षाणि रथानां च चतुर्दश। त्रिंशल्लक्षाणि चाश्वानां पत्तीनां दशकोटयः॥ ९
यामे यामेऽभिरक्षन्ति पुरं वारक्रमादिदम्। स च प्रहरवारोऽब्दैस्तेषामायाति सप्तभिः॥ १०
तच्छ्रुत्वा सोऽब्रवीद्विद्युद्ध्वजो धिग्राज्यमीदृशम्। रक्ष्यते यत्किलान्येषां बाहुभिर्न स्वबाहुना॥ ११
तत्कृत्वाहं तपस्तीव्रं करिष्यामि तथा यथा। भुजनिर्जितशत्रोर्मे न स्यादेषा विडम्बना॥ १२
इत्युक्त्वैव वयस्यं तं वारयन्तं निषिध्य सः। विद्युद्ध्वजो ययौ पित्रोरनुक्त्वा तपसे वनम्॥ १३
बुद्ध्वाथ पितरौ स्नेहादन्वागत्य तमूचतुः। क्व बालस्त्वं क्व च तपः कष्टं मा पुत्र साहसम्॥ १४
जितशत्रु च राज्यं नस्त्रैलोक्ये नु ततोऽधिकम्। किं वाञ्छसि वृथात्मानं शोषयन्किं दुनोषि नौ॥ १५
एवं वदन्तौ पितरौ विद्युद्ध्वज उवाच सः। बाल्य एवार्जयिष्यामि दिव्यास्त्राणि तपोबलात्॥ १६
निःशत्रु च जगद्राज्यमेतेनैव न वेद्मि किम्। रक्ष्यते नित्यसंनद्धैः सैन्यैः स्वपुरमेव यत्॥ १७
इत्यादि निश्चयेनोक्त्वा पितरौ च विसृज्य सः। विद्युद्ध्वजोऽसुरश्चक्रे विरिञ्चाराधनं तपः॥ १८
फलाहारोऽम्बुभक्षश्च वायुभुग्वर्जिताशनः। त्रीणि त्रीणि क्रमात्तस्थौ दैत्यो वर्षशतानि सः॥ १९
ततो ब्रह्मा जगत्क्षोभक्षममालोक्य तत्तपः। एत्यास्त्राणि ददौ तस्मै ब्राह्मादीनि तदर्थिने॥ २०
ब्राह्मास्त्रमेतदन्येन नास्त्रेण प्रतिहन्यते। विना पाशुपतं रौद्रमस्त्रमस्मदगोचरम्॥ २१
तदकाले त्वया नैतत्प्रयोक्तव्यं जयैषिणा। इत्युक्त्वा प्रययौ ब्रह्मा स दैत्यश्चागमद्गृहम्॥ २२
ततस्तदुत्सवायातैः सर्वैः स स्वबलैः सह। विद्युद्ध्वजः समं पित्रा प्रायाच्छक्रजिगीषया॥ २३
शक्रस्तदागमं बुद्ध्वा कृतरक्षस्त्रिविष्टपे। सख्या विद्याधरेन्द्रेण सहितश्चन्द्रकेतुना॥ २४
पद्मशेखरसंज्ञेन गन्धर्वाधीश्वरेण च। सदेवलोकपालोऽग्रे युयुत्सुस्तस्य निर्ययौ॥ २५
प्राप विद्युद्ध्वजश्चात्र बलैराच्छादिताम्बरः। ब्रह्मरुद्रादयश्चैतमाहवं द्रष्टुमाययुः॥ २६
ततः प्रववृते युद्धं तयोरुभयसैन्ययोः। परस्परास्त्रसंपातनिरुद्धार्कान्धकारितम्॥ २७
अमर्षवातक्षुभितो वाहिनीशतनिर्भरः। लुठद्वाजिगजग्राहो ववृधे समरार्णवः॥ २८

द्वन्द्वयुद्धेषु देवानां संप्रवृत्तेष्वथासुरैः । शक्रं विद्युत्प्रभोऽप्यागाद्विद्युद्ध्वजपिता क्रुधा ॥ २९
अस्त्रप्रत्यस्त्रयुद्धेन शनैस्तेनामरद्विषा । शक्रोऽभिभूयमानोऽथ तस्मै वज्रमवाक्षिपत् ॥ ३०
वज्राहतः स दैत्योऽत्र पपात गतजीवितः । विद्युद्ध्वजोऽथ तत्क्रोधादभ्यधावच्छतक्रतुम् ॥ ३१
अप्राणसंशये चादौ तस्मै ब्रह्मास्त्रमक्षिपत् । अन्ये च प्राहरन्नन्यैस्तस्मिन्नस्त्रैर्महासुराः ॥ ३२
सोऽथ ध्यात्वेश्वरादिष्टमस्त्रं पाशुपतं क्षणात् । अमोपस्थितमभ्यर्च्य शक्रश्चिक्षेप शत्रुषु ॥ ३३
तेन कालाग्निनास्त्रेण दग्धं तत्सैन्यमासुरम् । विद्युद्ध्वजस्तु बालत्वादहतो मूर्च्छितोऽपतत् ॥ ३४
न हिनस्ति तदस्त्रं हि बालं वृद्धं पराङ्मुखम् । ततो लब्धजया देवाः स्वस्थानान्यखिला ययुः ॥ ३५
सोऽपि विद्युद्ध्वजो ध्वस्तः सुचिराल्लब्धचेतनः । शोचन्पलाय्य मिलितानवोचच्छेषसैनिकान् ॥ ३६
जयिनोऽपि जिताः स्मोऽद्य ब्रह्मास्त्रे प्रत्युतार्जिते । तत्त्यक्ष्याम्याहवे गत्वा शक्रमासाद्य जीवितम् ॥ ३७
हते पितरि शक्ष्यामि न गन्तुं स्वपुरं पुनः । इत्युक्तवन्तं तं मन्त्री वृद्धो वक्ति स्म पैतृकः ॥ ३८
अकालमुक्तं ब्रह्मास्त्रमन्यमुक्तास्त्रमन्थरम् । अन्यास्त्रासहनैशानमहास्त्रव्याहतं हि तत् ॥ ३९
तल्लब्धजयमाक्षेप्तुं नाकाले शत्रुमर्हसि । एवं हि तस्योपचयः स्वनाशश्च कृतो भवेत् ॥ ४०
धीरो हि रक्षन्नात्मानं काले प्राप्य बलं रिपोः । मन्युप्रतिक्रियां कृत्वा विश्वश्लाघ्यं यशोऽश्नुते ॥ ४१
इति वृद्धेन तेनोक्तो विद्युद्ध्वज उवाच सः । तर्ह्यस्मद्राज्यरक्षार्थं यात यूयमहं पुनः ॥ ४२
तमेवाराधयिष्यामि गत्वा सर्वेश्वरं शिवम् । इत्युक्त्वानिच्छतोऽप्येतान्विससर्जैव सोऽनुगान् ॥ ४३
गत्वा च पञ्चभिः सार्धं वयस्यैर्दैत्यपुत्रकैः । कैलासमूले गङ्गायास्तीरे सोऽशिश्रियत्तपः ॥ ४४
घर्मे पञ्चाग्निमध्ये च शीते तस्थौ स वारिणि । एकं सहस्रं वर्षाणां शिवध्यायी फलाशनः ॥ ४५
मूलाशनो द्वितीयं च तृतीयं वारिभोजनः । वायुभक्षश्चतुर्थं च निराहारश्च पञ्चमम् ॥ ४६
वरदानागतं भूयो बहु मेने न पद्मजम् । दृष्टो वरप्रभावस्ते गम्यतामित्युवाच च ॥ ४७
कालं तावन्तमेवान्यन्निराहारस्थितं च तम् । मूर्धोद्गतमहाधूमं साक्षाच्छंभुरुपाययौ ॥ ४८
वृणीष्व वरमित्युक्तस्तेन दैत्यो जगाद सः । वध्यामहं रणे शक्रं त्वत्प्रसादाद्विभो इति ॥ ४९
उत्तिष्ठ न विशेषोऽस्ति जितस्य निहतस्य वा । तदिन्द्रं जेष्यसि रणे तत्पदे च निवत्स्यसि ॥ ५०
इत्युक्त्वान्तर्दधे देवः सोऽपि सिद्धं मनोरथम् । मत्वा विद्युद्ध्वजः कृत्वा पारणं स्वपुरं ययौ ॥ ५१
तत्राभिनन्दितः पौरैस्तेन पित्र्येण मन्त्रिणा । मिलित्वा तत्कृते तप्ततपसा व्यधितोत्सवम् ॥ ५२
आहूयासुरसैन्यानि विहिताहवसंविधिः । इन्द्राय प्राहिणोद्दूतं युधि सज्जो भवेति सः ॥ ५३
चचाल च नभः सेनानादनिर्घातदारितम् । केतुभिश्छादयंस्तन्वन्निरध्रं स्वर्वासिनामिव ॥ ५४
इन्द्रोऽपि तं लब्धवरं विज्ञायागतमाकुलः । संमन्त्र्य देवगुरुणा सुरसैन्यान्युपाह्वयत् ॥ ५५
ततो विद्युद्ध्वजे प्राप्ते तयोरुभयसैन्ययोः । स्वेषां परेषां चाज्ञातविभागोऽभून्महाहवः ॥ ५६
सुबाहुप्रमुखा दैत्याः सहायुध्यन्त वायुभिः । पिङ्गाक्षाद्याः कुबेरैश्च महामायादयोऽग्निभिः ॥ ५७
अयःकायादयः सूर्यैः सिद्धैराकम्पनादयः । अन्ये विद्याधरैर्दैत्या गन्धर्वाद्यैस्ततोऽपरे ॥ ५८
एवमासीन्महायुद्धं तेषां वासरविंशतिम् । एकविंशे दिने दैत्यैरभज्यन्त रणे सुराः ॥ ५९
ते च भग्नाः प्रविविशुः पलाय्यान्तस्त्रिविष्टपम् । ततश्चैरावणारूढो निरगाद्वासवः स्वयम् ॥ ६०
परिवार्य च तं देवसैन्यानि निरगुः पुनः । चन्द्रकेतुप्रभृतिभिः सहैव युचरेश्वरैः ॥ ६१
ततः प्रवृत्ते सङ्ग्रामे हन्यमानासुरामरे । इन्द्रमभ्यद्रवद्विद्युद्ध्वजः पितृवधक्रुधा ॥ ६२
सोऽस्त्राणि तस्य प्रत्यस्त्रैर्दैत्येन्द्रस्य प्रतिघ्नतः । चिच्छेद बाणैः कोदण्डं देवराजो मुहुर्मुहुः ॥ ६३
ततो मुद्गरमादाय महेश्वरवरोद्धुरः । विद्युद्ध्वजस्तं स जवादधावद्वासवं प्रति ॥ ६४
उत्प्लुत्य दन्तयोर्दत्त्वा पादमैरावणस्य च । आरुरोहास्य कुम्भाग्रं यन्तारं विममाथ च ॥ ६५
ददौ च देवराजाय प्रहारं मुद्गरेण सः । देवराजश्च मुशलेनाशु प्रतिजघान तम् ॥ ६६
विद्युद्ध्वजोऽपि भूयस्तं मुद्गरेण जघान यत् । तदिन्द्रः सोऽपतद्वायुरथस्योपरि मूर्च्छितः ॥ ६७

वायुर्मनोजवेनेन्द्रं तं रथेनान्यतोऽहरत्। विद्युद्ध्वजोऽस्य पश्चाच्च दत्तझम्पोऽपतद्भुवि ॥ ६८
अकालोऽयं रणादिन्द्रमपसारयत द्रुतम्। इति तत्क्षणमाकाशादुच्चचार सरस्वती ॥ ६९
ततोऽपसारिते शक्रे वायुना रथवेगतः। विद्युद्ध्वजो रथारूढो यावत्तमनुधावति ॥ ७०
तावदैरावणः क्रुद्धो धावित्वैव निरङ्कुशः। मथ्नन्विद्राव्य सैन्यानि यतः शक्रस्ततो ययौ ॥ ७१
ततो मुक्त्वा रणं देवसैन्येऽपीन्द्रमनुद्रुते। निनाय ब्रह्मभवनं भीतां सुरगुरुः शचीम् ॥ ७२
अथ विद्युद्ध्वजः प्राप्य जयं शून्यामवाप्य च। नदद्भिः सहितः सैन्यैः प्रविवेशामरावतीम् ॥ ७३
इन्द्रोऽपि लब्धसंज्ञः सन्नकालं वीक्ष्य संप्रति। तदेव ब्रह्मभवनं सह सर्वामरैरगात् ॥ ७४
संप्रत्यसौ हरवरप्रभावो मा शुचं कृथाः। प्राप्तासि स्वपदं भूय इत्याश्वास्य पितामहः ॥ ७५
स्वं समाधिस्थलं नाम तस्य सर्वसुखावहम्। ब्रह्मलोकैकदेशस्थं स्थानं वसतये ददौ ॥ ७६
तत्रोवास स देवेन्द्रः शच्यैरावणसंगतः। तद्वाक्याद्वायुलोकं च जग्मुर्विद्याधरेश्वराः ॥ ७७
अधृष्यं सोमलोकं च गन्धर्वपतयो ययुः। अन्यलोकानययुश्चान्ये त्यक्तस्वस्वनिकेतनाः ॥ ७८
विद्युद्ध्वजश्च देवानां भूमिं भ्रमितडिण्डिमः। आक्रम्य बुभुजे राज्यं निर्मर्यादस्त्रिविष्टपे ॥ ७९
अत्रान्तरे कथासंधौ वायुलोके चिरस्थितः। विद्याधरेश्वरश्चन्द्रकेतुरेवं व्यचिन्तयत् ॥ ८०
स्वपदप्रच्युतेनेह मया स्थेयं कियच्चिरम्। नास्ति विद्युद्ध्वजस्याद्याप्यस्मच्छत्रोस्तपःक्षयः ॥ ८१
श्रुतं मया यत्स गतः सुहृन्मे पद्मशेखरः। गन्धर्वेन्द्रः शिवपुरं तपसे सोमलोकतः ॥ ८२
तस्य प्रसादो देवेन कृतः किमु न वेत्यहम्। नाद्यापि जाने तद्बुद्ध्वा ज्ञास्ये कर्तव्यमात्मनः ॥ ८३
इति ध्यायति यावच्च तावदभ्याययौ स तम्। विद्याधरेन्द्रं गन्धर्वराजः प्राप्तवरः सखा ॥ ८४
स तेनाश्लिष्य विहितस्वागतश्चन्द्रकेतुना। पृष्टश्च निजवृत्तान्तं गन्धर्वपतिरभ्यधात् ॥ ८५
गत्वा शिवपुरे शंभुं तपसाहमतोषयम्। स च मामादिशद्गच्छ पुत्रस्ते भवितोत्तमः ॥ ८६
पुनः प्राप्स्यसि राज्यं च कन्यां सर्वोत्तमामपि। विद्युद्ध्वजान्तको यस्या वीरो भर्ता भविष्यति ॥ ८७
इत्यादिष्टो हरेणाहं तवैतद्वक्तुमागतः। गन्धर्वेन्द्रादिति श्रुत्वा चन्द्रकेतुरुवाच सः ॥ ८८
मयाप्येतस्य दुःखस्य शान्त्यै गत्वा महेश्वरः। आराध्यस्तमनाराध्य न सन्तीप्सितसिद्धयः ॥ ८९
इति निश्चित्य तपसे दिव्यं क्षेत्रं त्रिशूलिनः। मुक्तावल्या समं पत्न्या चन्द्रकेतुर्जगाम सः ॥ ९०
सोऽपि स्ववरवृत्तान्तमिन्द्रायोक्त्वा रिपुक्षये। उत्पन्नास्थो ययौ सोमभुवनं पद्मशेखरः ॥ ९१
ततः सुरपतिस्तत्र स समाधिस्थले स्थितः। जातास्थः संक्षये शत्रोरमर्त्यगुरुमस्मरत् ॥ ९२
संस्मृतोपस्थितं तत्र प्रह्वः सत्कृत्य सोऽब्रवीत्। तपस्तुष्टः शिवः पद्मशेखरस्य समादिशत् ॥ ९३
विद्युद्ध्वजस्य हन्तारं भाविजामातरं किल। तदस्य दुष्कृतस्यान्तस्तावन्नः किं त्वहं चिरम् ॥ ९४
निवसन्निह निर्विण्णः स्वपदभ्रंशदुःखितः। तच्चिन्तयात्र भगवन्नपायं शीघ्रकारिणम् ॥ ९५
इति देवगुरुः शक्राद्वचः श्रुत्वा जगाद तम्। कामं तस्य रिपोः प्राप्तो दुष्कृतैस्तपसः क्षयः ॥ ९६
तस्मादवसरोऽस्माकं स्वप्रयत्नविधेरयम्। तदेहि ब्रह्मणे ब्रूमः स उपायं वदिष्यति ॥ ९७
इत्युक्तो गुरुणा शक्रस्तद्युक्तो ब्रह्मणोऽन्तिकम्। ययौ प्रणम्य तस्मै च शशंस स्वमनोगतम् ॥ ९८
ततः स्वयंभूरवदच्चिन्तैषा न ममापि किम्। किं तु शर्वकृतं शर्वेणैव शक्यं व्यपोहितुम् ॥ ९९
स च देवश्चिरं प्राप्यस्तदेव निकटं हरेः। तदभिन्नात्मनो यामः सोऽभ्युपायं वदिष्यति ॥ १००
इति संमन्त्र्य स ब्रह्मा शक्रः सुरगुरुश्च सः। हंसयानमुपारुह्य श्वेतद्वीपमुपागमन् ॥ १०१
यत्र सर्वो जनः शङ्खचक्रपद्मगदाधरः। चतुर्भुजश्च मूर्तौ च चित्ते च भगवन्मयः ॥ १०२
तत्र ते ददृशुर्देवं महारत्नगृहान्तरे। सेविताङ्घ्रिं कमलया शेषशय्यागतं हरिम् ॥ १०३
कृतप्रणामास्तस्मै ते यथार्हं तेन सत्कृताः। देवर्षिवन्दिताश्चात्र यथोचितमुपाविशन् ॥ १०४
भगवत्पृष्टकुशला देवास्ते तं व्यजिज्ञपन्। कुशलं किमिवास्माकं देव विद्युद्ध्वजे सति ॥ १०५
जानात्येव हि तत्सर्वं देवो यत्तेन नः कृतम्। तदर्थश्चागमोऽयं नस्तद्देवो वेत्त्यतः परम् ॥ १०६

एवमुक्तवतो देवांस्तानुवाच जनार्दनः। किं न जानामि यद्ब्रह्मा स्थितिस्तेनासुरेण मे ॥ १०७
किं तु स्वयं यदीशेन कृतं त्रिपुरघातिना। तत्तेनैवान्यथा कर्तुं शक्यते न पुनर्मया ॥ १०८
तत एव च तस्य स्यात्क्षयो दैत्यस्य पाप्मनः। त्वरध्वं यदि तावद्वो वच्म्युपायं निशम्यताम् ॥ १०९
अस्ति माहेश्वरं क्षेत्रं दिव्यं सिद्धीश्वराभिधम्। तत्र संप्राप्यते देवो नित्यसंनिहितो हरः ॥ ११०
एतच्च दर्शितज्वालालिङ्गरूपः स एव मे। पूर्वं प्रजापतेश्च प्राग्महत्त्वमवदद्विभुः ॥ १११
तदेत तत्र गत्वा तं तपसा प्रार्थयामहे। स एवोपद्रवमिमं जगतां शमयिष्यति ॥ ११२
इत्यादिष्टवता तेन देवेन सह विष्णुना। ते तार्क्ष्यहंसयानाभ्यां सर्वे सिद्धीश्वरं ययुः ॥ ११३
असंस्पृष्टे जरामृत्युरोगैः सौख्यैकधामनि। हेमरत्नमया यत्र मृगपक्षिद्रुमा अपि ॥ ११४
तत्रान्तर्दर्शितान्योन्यमूर्तिभेदं क्षणे क्षणे। अन्यान्यरत्नरूपं च लिङ्गमभ्यर्च्य शूलिनः ॥ ११५
तत्परास्ते हरिर्ब्रह्मा देवेन्द्रो दिविषद्गुरुः। तेपिरे हरमुद्दिश्य चत्वारो दुश्चरं तपः ॥ ११६
अत्रान्तरे च तीव्रेण तपसा तोषितः शिवः। चन्द्रकेतोर्वरं तस्य विद्याधरपतेरदात् ॥ ११७
उत्तिष्ठोत्पत्स्यते राजन्महावीरः स ते सुतः। विद्युद्ध्वजं यः समरे युष्मच्छत्रुं हनिष्यति ॥ ११८
शापावतीर्णो मानुष्ये कृतामरहितश्च यः। गन्धर्वराजदुहितुः पद्मावत्यास्तपोबलात् ॥ ११९
पुनः स्वपदमासाद्य तयैव सह भार्यया। सर्वं विद्याधरैश्वर्यं दश कल्पान्करिष्यति ॥ १२०
इति दत्तवरे देवे तिरोभूते सभार्यकः। चन्द्रकेतुस्तदैवागात्स वायुभुवनं पुनः ॥ १२१
तावत्तीव्रतपस्तुष्टस्तत्र सिद्धीश्वरेऽपि तान्। नारायणादींल्लिङ्गान्तर्दृष्टो दृष्टान्हरोऽब्रवीत् ॥ १२२
उत्तिष्ठतालं क्लेशेन युष्मत्पक्ष्येण तोषितः। विद्याधरेश्वरेणाहं तपसा चन्द्रकेतुना ॥ १२३
मदंशसंभवस्तस्य वीरः पुत्रो जनिष्यते। यस्तं विद्युद्ध्वजं दैत्यं हनिष्यत्यचिराद्रणे ॥ १२४
ततोऽन्यदेवकार्यार्थं मानुष्ये शापतश्च्युतम्। पद्मशेखरगन्धर्वसुता तं प्रोद्धरिष्यति ॥ १२५
पद्मावत्याख्यया सार्धं तया गौर्यंशजातया। पत्न्या द्युचरसाम्राज्यं कृत्वा मामेव चैष्यति ॥ १२६
तत्सहध्वं मनागेषः कामः संपन्न एव वः। इत्यच्युतादीनुक्त्वा तान्जगामादर्शनं शिवः ॥ १२७
ततो हृष्टो हरिर्ब्रह्मा शक्रामरगुरू च तौ। जग्मुः स्थानानि तान्येव ते भूयो येभ्य आगताः ॥ १२८
अथ विद्याधरेन्द्रस्य तस्य मुक्तावली प्रिया। चन्द्रकेतोः सगर्भाभूत्काले च सुषुवे सुतम् ॥ १२९
प्रकाशयन्तं ककुभो दुराधर्षेण तेजसा। तामसोपद्रवं हर्तुं बालमर्कमिवोदितम् ॥ १३०
जाते च तस्मिन्नित्यत्र भारती शुश्रुवे दिवः। चन्द्रकेतो सुतोऽयं ते हन्ता विद्युद्ध्वजासुरम् ॥ १३१
नाम्ना च विद्ध्यमुं मुक्ताफलकेतुं द्विषन्तपम्। इत्युक्त्वा चन्द्रकेतुं सा सोत्सवं विरराम वाक् ॥ १३२
पपात पुष्पवृष्टिश्च ज्ञातार्थः पद्मशेखरः। शक्राद्याययतुस्तत्र ये च च्छन्नाः स्थिताः सुराः ॥ १३३
हरप्रसादवृत्तान्तमाचक्षाणाः परस्परम्। अनुभूय प्रमोदं ते स्वस्थानान्येव शिश्रियुः ॥ १३४
स मुक्ताफलकेतुश्च सर्वसंस्कारसंस्कृतः। सहानन्देन देवानां क्रमाद्वृद्धिमुपागमत् ॥ १३५
अथ तस्य दिनैः कन्या पुत्रोत्पत्तेरनन्तरम्। गन्धर्वाधिपतेः पद्मशेखरस्याप्यजायत ॥ १३६
गन्धर्वेन्द्र सुतेयं ते भार्या विद्युद्ध्वजद्विषः। विद्याधरपतेः पद्मावती नाम भविष्यति ॥ १३७
इति तस्यां च जातायां गगनादुदगाद्वचः। ततः पद्मावती सात्र क्रमात्कन्या व्यवर्धत ॥ १३८
सुधांशुलोकसंभूतिसंक्रान्तेन तरङ्गिणा। अमृतेनेव लावण्यविसरेण विराजिता ॥ १३९
सोऽपि बालोऽभवन्मुक्ताफलकेतुर्महामतिः। व्रतोपवासादि तपश्चक्रे शिवमयः सदा ॥ १४०
एकदा ध्याननिष्ठं तं द्वादशाहमुपोषितम्। प्रत्यक्षीभूय भगवाञ्जगाद गिरिजापतिः ॥ १४१
तुष्टोऽस्मि तेऽनया भक्त्या मत्प्रसादेन तत्तव। आविर्भविष्यन्त्यस्त्राणि विद्याः सर्वकलास्तथा ॥ १४२
अपराजितसंज्ञं च खड्गमेतं गृहाण मे। कर्तासि येन साम्राज्यं विपक्षैरपराजितः ॥ १४३
इत्युक्त्वा स विभुस्तस्मै खड्गं दत्त्वा तिरोदधे। स चाशु राजपुत्रोऽभून्महास्त्रबलविक्रमः ॥ १४४
अत्रान्तरे कदाचित्स विद्युद्ध्वजमहासुरः। त्रिदिवस्थो जलक्रीडां चक्रे द्युसरिदम्भसि ॥ १४५

दुदर्श स जलं तस्याः कपिशं पुष्परेणुभिः। मदगन्धानुविद्धं च वीचिविक्षोभितं महत्॥ १४६
ततो भुजमदाध्मातः स जगाद निजानुगान्। ममाप्युपरि कः क्रीडत्यम्भोभिर्यात पश्यत॥ १४७
तच्छ्रुत्वोपरि यातास्ते पश्यन्ति स्मासुरा जले। क्रीडन्तं वृषभं शार्वं सह शाक्रेण दन्तिना॥ १४८
आगत्य च तमूचुस्ते दैत्येन्द्रं देव शांभवः। उपर्येत्य वृषः क्रीडत्यैरावणयुतोऽम्भसि॥ १४९
तन्मात्यैरावणमदव्यामिश्रितमिदं पयः। श्रुत्वेत्यगणयञ्शर्वं मदाञ्चुक्रोध सोऽसुरः॥ १५०
स्वदुष्कृतपरीपाकमूढो भृत्यानुवाच च। यातानयत तौ बद्ध्वा वृषभैरावणाविति॥ १५१
ततो गत्वा जिघृक्षन्ति यावत्तौ ते किलासुराः। तावत्ताञ्जघ्नतुः क्रुद्धौ तौ प्रधाव्य वृषद्विपौ॥ १५२
हतशेषाश्च जगदुर्गत्वा विद्युद्ध्वजाय तत्। स क्रुद्धः प्राहिणोत्तौ प्रत्यासुरं सुमहद्बलम्॥ १५३
मथित्वा तच्च तत्सैन्यं पापपाकागतक्षयम्। वृषो हरान्तिकं प्रायादिन्द्रमैरावणोऽभ्यगात्॥ १५४

इन्द्रोऽथ तस्य दितिजस्य विचेष्टितं तदैरावणानुचररक्षिगणान्निशम्य।
संप्राप्तनाशसमयं तममन्यतारिं गौरीपतेर्भगवतोऽपि कृतावमानम्॥ १५५
आवेद्य तत्कमलजाय ततः समेत्य विद्याधरादिसहितः सह देवसैन्यैः।
हन्तुं रिपुं तमधिरूढसुरेभमुख्यः शक्रः शचीरचितमाङ्गलिकः प्रतस्थे॥ १५६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके द्वितीयस्तरङ्गः।

---

तृतीयस्तरङ्गः।

ततस्त्रिविष्टपं प्राप्य स शक्रः पर्यवेष्टयत्। हरानुग्रहसोत्साहैर्लब्धकालबलैर्बलैः॥ १
तद्दृष्ट्वा निर्ययौ विद्युद्ध्वजः संनद्धसैनिकः। प्रावर्तन्तानिमित्तानि तस्य निर्गच्छतस्तदा॥ २
ध्वजेषु विद्युतः पेतुर्भ्रेमुर्गृध्रास्तथोपरि। अभज्यन्त महाच्छत्राण्यशिवं चारुवञ्शिवाः॥ ३
तान्यरिष्टान्यगणयन्निरगादेव सोऽसुरः। देवासुराणां च ततः प्रावर्तत महाहवः॥ ४
स मुक्ताफलकेतुः किं नाद्याप्येतीति वज्रिणा। पृष्टोऽथ चन्द्रकेतुस्तं खेचरेन्द्रो व्यजिज्ञपत्॥ ५
विस्मृत्य त्वरया तस्य नोक्तमागच्छता मया। स तु बुद्ध्वा ध्रुवं पश्चादागच्छत्येव सत्वरम्॥ ६
एतच्छ्रुत्वा स देवेन्द्रश्चतुरं वायुसारथिम्। श्रीमुक्ताफलकेतुं तमानेतुं प्राहिणोद्रथम्॥ ७
पिता च तत्समं तस्य चन्द्रकेतुःससैनिकम्। आह्वानाय प्रतीहारं विससर्ज रथानुगम्॥ ८
स मुक्ताफलकेतुश्च बुद्ध्वा दैत्याहवे गतम्। पितरं सानुगो गन्तुं तत्रैवाभ्युद्यतोऽभवत्॥ ९
ततो जयगजारूढो जननीकृतमङ्गलः। वायुलोकादुदचलत्स बिभ्रत्खड्गमैश्वरम्॥ १०
प्रस्थितस्यापतत्तस्य पुष्पवृष्टिर्नभस्तलात्। देवाश्च दुन्दुभीञ्जघ्नुर्वायवश्च ववुः शिवाः॥ ११
मिलित्वा परिवव्रुश्च ते तं देवगणास्ततः। आसन्पलाय्य प्रच्छन्ना ये विद्युद्ध्वजभीतितः॥ १२
तेन सैन्येन महता सह गच्छन्ददर्श सः। मार्गे मेघवनं नाम पार्वत्यायतनं महत्॥ १३
तदनुल्लङ्घयन्भक्त्या गजादत्रावतीर्य सः। आहृत्य दिव्यपुष्पाणि देवीं प्रावर्ततार्चितुम्॥ १४
अत्रान्तरे च गन्धर्वपतेः सा प्राप्तयौवना। पद्मावती सुता पद्मशेखरस्य सखीवृता॥ १५
भर्तुः सङ्ग्रामयातस्य श्रेयोर्थं तपसि स्थिताम्। मातरं स्वामनुज्ञाप्य विमानेनेन्दुलोकतः॥ १६
शिवार्थिनी पितुः संख्ये वरस्याभीप्सितस्य च। तदेव तपसे दिव्यं गौर्यायतनमाययौ॥ १७
वरो नाद्यापि ते कश्चिन्निश्चितो यो युधि स्थितः। पितुः श्रेयोनिमित्तं च माता ते संश्रिता तपः॥ १८
त्वं तु कन्या तपः कस्य कृते सखि चिकीर्षसि। इत्युक्ता पथि सख्या सा पद्मावत्यब्रवीदिदम्॥ १९
पितैव सखि कन्यानां दैवतं सर्वसिद्धिकृत्। वरोऽप्यनन्यसामान्यगुणो निश्चित एव मे॥ २०
विद्युद्ध्वजं निहन्तुं यो जातो विद्याधरेन्द्रतः। स मुक्ताफलकेतुर्मे व्यादिष्टः शंभुना पतिः॥ २१
एतन्मयाम्बापृष्टस्य तातस्यैव मुखाच्छ्रुतम्। स च यास्यति यातो वा सङ्ग्रामे मे वरो ध्रुवम्॥ २२
अतो भगवतीं गौरीं तपसाराधयाम्यहम्। विजयाकाङ्क्षिणी तस्य पत्युस्तातस्य चोभयोः॥ २३

एवं वदन्तीं तां राजपुत्रीमाह स्म सा सखी । भाविन्यर्थेऽपि तत्रैष व्यवसायस्तवोचितः ॥ २४
तत्तेऽभिलषितं सिध्यत्विति सख्या तयोदिता । सा गौर्यायतनाभ्यर्णं भव्यं प्राप महत्सरः ॥ २५
उत्फुल्लैः स्वर्णकमलैः प्रतिच्छन्नं प्रभास्वरैः । तन्मुखाम्भोरुहोत्सर्पत्कान्तिविच्छुरितैरिव ॥ २६
तत्रावतीर्य कमलान्यम्बिकाभ्यर्चनाय सा । उच्चित्य गन्धर्वसुता स्नानं यावद्विधित्सति ॥ २७
तावद्देवासुररणं रक्षःस्वामिषगर्धिषु । अभिधावत्सु तेन द्वे राक्षस्यावागते पथा ॥ २८
दंष्ट्राघोरमुखोद्वान्तज्वालापिङ्गोर्ध्वमूर्धजे । धूमश्याममहाकाये लम्बोदरपयोधरे ॥ २९
ताभ्यां दृष्ट्वैव गन्धर्वराजपुत्री निपत्य सा । नक्तंचरीभ्यां जगृहे निन्ये च गगनोन्मुखम् ॥ ३०
तद्विमानाधिदेवश्च राक्षस्यौ यावदेव ते । रुणद्धि यावदार्तश्च क्रन्दत्यस्याः परिच्छदः ॥ ३१
तावद्देवीगृहान्मुक्ताफलकेतुः कृतार्चनः । स निर्गतः श्रुताक्रन्दस्तमेवोद्देशमागमत् ॥ ३२
स दृष्ट्वा राक्षसीयुग्मगृहीतां तां लसद्द्युतिम् । कालमेघावलीमध्यगतां सौदामनीमिव ॥ ३३
पद्मावतीं प्रधाव्यैव महावीरो व्यमोचयत् । क्षिप्त्वा विचेतने भूमौ राक्षस्यौ ते तलाहते ॥ ३४
ददर्श तां च लावण्यरसनिर्झरवाहिनीम् । त्रिवलीलहरीहारिमध्यभागोपशोभिनीम् ॥ ३५
स्वर्वधूसर्गसंप्राप्तकौशलोत्कर्षशालिना । धात्रा समग्रसौन्दर्यसारसंपादितामिव ॥ ३६
दृष्ट्वा च तां स कंदर्पमोहमन्थरितेन्द्रियः । धीरोऽप्यत्र क्षणं तस्थौ चित्रस्थ इव निश्चलः ॥ ३७
राक्षसीसंभ्रमे शान्ते समाश्वस्य क्षणादिव । पद्मावत्यपि तं मुक्ताफलकेतुं ददर्श सा ॥ ३८
जगन्नेत्रोत्सवाकारं स्त्रीजनोन्माददायिनम् । एकीकृत्येन्दुकंदर्पौ विधिनेव विनिर्मितम् ॥ ३९
ततो लज्जानतमुखी सखीं स्वैरमभाषत । भद्रमस्यास्तु यामीतः परपूरुषपार्श्वतः ॥ ४०
एवं वदन्त्यां तस्यां च सा मुक्ताफलकेतुना । बाला किमियमाहेति तेनापृच्छ्यत तत्सखी ॥ ४१
साप्युवाच सुकन्येयं दत्ताशीः प्राणदस्य ते । एह्यन्यपुरुषोपान्ताद्व्रजाव इति वक्ति माम् ॥ ४२
तच्छ्रुत्वा संभ्रमान्मुक्ताफलकेतुरुवाच ताम् । केयं कस्य सुता दत्ता कस्मै वा शुभकर्मणे ॥ ४३
इति पृष्टा च सा तेन तद्वयस्या तमब्रवीत् । इयं पद्मावती नाम कन्या सुभग नः सखी ॥ ४४
गन्धर्वाधिपतेः पद्मशेखरस्यात्मसंभवा । आदिष्टोऽस्याः पतिर्मुक्ताफलकेतुश्च शंभुना ॥ ४५
पुत्रो विद्याधरेन्द्रस्य चन्द्रकेतोर्जगत्प्रियः । सहायो देवराजस्य विद्युद्ध्वजविनाशकृत् ॥ ४६
आकाङ्क्षन्ती जयं तस्य भर्तुः संख्ये पितुस्तथा । गौर्यायतनमत्रैतत्तपोर्थमियमागता ॥ ४७
श्रुत्वैतद्राजपुत्रीं तां चन्द्रकेतुसुतानुगाः । दिष्ट्या देवि स एवायं तव भर्तेत्यनन्दयन् ॥ ४८
ततोऽन्योन्यपरिज्ञानहर्षपूर्णे निजात्मनि । युक्तं तद्यन्न मातः स्म तौ कुमारीवरावुभौ ॥ ४९
यावच्चान्योन्यसप्रेमतिर्यगर्धावलोकितैः । तिष्ठतस्तत्र तौ तावच्छुश्रुवे तूर्यनिःस्वनः ॥ ५०
ततश्च ददृशे सैन्यं वायुयुक्तो रथस्ततः । चन्द्रकेतुप्रतीहारस्तथा च त्वरितागतौ ॥ ५१
तौ च वायुप्रतीहारौ विनयोज्झितवाहनौ । उपगम्यैव तं मुक्ताफलकेतुमवोचताम् ॥ ५२
त्वामाह्वयति देवेन्द्रः पिता चाहवभूमितः । तदिमं रथमारुह्य शीघ्रमागम्यतामिति ॥ ५३
ततः पद्मावतीप्रेमबद्धोऽपि गुरुकार्यतः । स तं ताभ्यां सहाध्यास्त खेचरेन्द्रसुतो रथम् ॥ ५४
बद्ध्वा च शक्रप्रहितं दिव्यं कवचमाशु सः । प्रतस्थे वलितग्रीवं पश्यन्पद्मावतीं मुहुः ॥ ५५
पद्मावती च निर्वर्ण्य सा तमादृष्टिगोचरम् । एकपाणितलाघातहतनक्तंचरीद्वयम् ॥ ५६
तमेव चिन्तयन्ती च स्नात्वाभ्यर्च्याम्बिकाहरौ । तदाप्रभृति तत्रैव तेपे तच्छ्रेयसे तपः ॥ ५७
सोऽपि तद्दर्शनं मुक्ताफलकेतुर्विचिन्तयन् । मङ्गल्यं विजयाशंसि प्राप देवासुराहवम् ॥ ५८
दृष्ट्वा च तं सुसंनद्धंससैन्यं वीरमागतम् । तमेव प्रति सर्वेऽपि तेऽभ्यधावन्महासुराः ॥ ५९
तेषां स शरवर्षेण शिरोभिः शकलीकृतैः । शूरो रणोत्सवारम्भे चक्रे दिग्देवताबलिम् ॥ ६०
हन्यमानं बलं तेन तन्मुक्ताफलकेतुना । दृष्ट्वा विद्युद्ध्वजः क्रोधादधावत्तं प्रति स्वयम् ॥ ६१
स चापतन्नेव शरैर्दैत्यो यत्तेन ताडितः । तत्तमेवाभ्यधावत्तत्सर्वतः सैन्यमासुरम् ॥ ६२

तद्दृष्ट्वा सिद्धगन्धर्वविद्याधरसुरान्वितः । अभिदुद्राव तद्दैत्यसैन्यं सपदि वासवः ॥ ६३
ततः पतदिषुप्रासशक्तितोमरपट्टिशम् । उदभूत्तुमुलं युद्धं निहतासंख्यसैनिकम् ॥ ६४
गजाश्वकायमकरा दन्तिमौक्तिकवालुकाः । प्रवीरमुण्डपाषाणाः प्रावहन्रुधिरापगाः ॥ ६५
शोणितासवमत्तानां भूतानामामिषार्थिनाम् । सोऽभूद्रणोत्सवः प्रीत्यै कबन्धैः सह नृत्यताम् ॥ ६६
तस्मिञ्जयश्रीर्दैत्यानां देवानां चाहवार्णवे । महोर्मिचपला प्रायादितः क्षणमितः क्षणम् ॥ ६७
चतुर्विंशतिमेवं तु युद्धमासीद्दिनानि तत् । प्रेक्ष्यमाणं विमानस्थैः शर्वशौरिपितामहैः ॥ ६८
पञ्चविंशे दिने क्षीणप्राययोः सैन्ययोर्द्वयोः । प्रधानद्वन्द्वयुद्धेषु प्रवृत्तेष्वत्र संगरे ॥ ६९
श्रीमुक्ताफलकेतोश्च तस्य विद्युद्ध्वजस्य च । द्वन्द्वयुद्धं प्रववृते रथस्थद्विरदस्थयोः ॥ ७०
तमोस्त्रं भास्करास्त्रेण ग्रैष्मास्त्रेण च शैशिरम् । कुलिशास्त्रेण शैलास्त्रं नागास्त्रं गारुडेन च ॥ ७१
निवार्य तस्य यन्तारं वारणं चासुरस्य सः । एकैकेनेषुणा मुक्ताफलकेतुरपातयत् ॥ ७२
आरूढस्य रथं तस्य सारथिं तुरगांश्च यत् । सोऽवधीत्तदसौ विद्युद्ध्वजो मायामशिश्रियत् ॥ ७३
अदृश्यः सर्वसैन्येन द्यामारुह्य ववर्ष सः । शिलाश्चास्त्राणि विविधान्यभितः सुरवाहिनीम् ॥ ७४
अभेद्यं शरजालं च यन्मुक्ताफलकेतुना । अरुध्यत स तद्दैत्यो ददाहानलवृष्टिभिः ॥ ७५
अथाभिमन्त्र्य ब्रह्मास्त्रं सानुगं तमरिं प्रति । विश्वक्षयक्षमं मुक्ताफलकेतुर्मुमोच सः ॥ ७६
तेनास्त्रेण ससैन्योऽपि निहतो गतजीवितः । निपपात नभोमध्याद्विद्युद्ध्वजमहासुरः ॥ ७७
शेषाः पलाय्य जग्मुश्च विद्युद्ध्वजसुतादयः । वज्रदंष्ट्रादिसहिता रसातलतलं भयात् ॥ ७८
देवाश्च नादानुपदं जगदुः साधु साध्विति । श्रीमुक्ताफलकेतुं च पुष्पवर्षैरपूजयन् ॥ ७९
ततः शत्रौ हते शक्रः प्राप्तराज्यस्त्रिविष्टपम् । प्राविशत्त्रिषु लोकेषु बभूव च महोत्सवः ॥ ८०
आगाच्छचीं पुरस्कृत्य स्वयं चात्र प्रजापतिः । चूडारत्नोत्तमं मुक्ताफलकेतोर्बबन्ध च ॥ ८१
इन्द्रोऽपि राजपुत्रस्य तस्य राज्यप्रदायिनः । हारं स्वकण्ठतः कण्ठे न्यधाद्विजयशोभिनः ॥ ८२
समुपावेशयत्तं च निजासनसमासने । आनन्दपूर्णगीर्वाणवितीर्णविविधाशिषम् ॥ ८३
विद्युद्ध्वजासुरपुरं प्रतीहारं विसृज्य च । तस्मै दास्यन्नवसरे स्वीचक्रे स्वपुराधिकम् ॥ ८४
ततोऽस्मै राजपुत्राय गन्धर्वः पद्मशेखरः । दित्सुः पद्मावतीं धातुः साकूतं मुखमैक्षत ॥ ८५
स च ज्ञाताशयो धाता गन्धर्वेन्द्रमुवाच तम् । कार्यशेषोऽस्ति कश्चित्तद्विषहस्व मनागिति ॥ ८६
ततो हाहाहुहूगीतैः स्वनिनादानुनादितैः । रम्भादिनृत्यैस्तत्राभूदिन्द्रस्य विजयोत्सवः ॥ ८७
दृष्टोत्सवप्रमोदे च याते धातरि वृत्रहा । संमान्य लोकपालादीन्स्वं स्वं स्थानं विसृष्टवान् ॥ ८८
विससर्ज च गन्धर्वराजं तं पद्मशेखरम् । निजं गन्धर्वनगरं संमान्य सपरिच्छदम् ॥ ८९
श्रीमुक्ताफलकेतुं च चन्द्रकेतुं च सत्कृतौ । प्राहिणोदुत्सवाय स्वं विद्याधरपुरं हरिः ॥ ९०

स च संहृतविश्वकण्टकस्तां बहुविद्याधरराजकानुयातः ।
जनकानुगतः स राजधानीमथ मुक्ताफलकेतुराजगाम ॥ ९१
वररत्नचिता च सा तदानीं ध्वजपट्टांशुकमालिनी प्रविष्टे ।
विबभौ नगरी चिरागतेऽस्मिन्पितृयुक्ते जयभाजि राजपुत्रे ॥ ९२
स च सपदि पितास्य चन्द्रकेतुः पुरि परितोषितबन्धुभृत्यवर्गः ।
जलमिव जलदो वसु प्रवर्षन्सुतविजयोत्सवमूर्जितं ततान ॥ ९३

स च मुक्ताफलकेतुर्विद्युद्ध्वजदमनकीर्तिमपि लब्ध्वा ।
पद्मावतीं विना तां न रतिं लेभे निजेषु भोगेषु ॥ ९४
संयतकाख्येन पुनः शर्वादेशादि शंसिना सख्या ।
आश्वास्यमानचित्तः कृच्छ्रेण स तान्यहान्यनयत् ॥ ९५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके तृतीयस्तरङ्गः ।

चतुर्थस्तरङ्गः ।

अत्रान्तरे स गन्धर्वराजः स्वनगरं पुनः । प्रविष्टो विततस्फूर्जदुत्सवः पद्मशेखरः ॥ १
तज्जयाशंसया तप्ततपसं गिरिजाश्रमे । बुद्ध्वा भार्यामुखात्पद्मावतीमानाययत्सुताम् ॥ २
उपागतां च तपसा विरहेण च तां कृशाम् । तनयां पादपतितां स जगादाशिषं ददन् ॥ ३
वत्से मदर्थं विहितस्तपःक्लेशो महांस्त्वया । तद्विद्याधरराजेन्द्रसुतं विद्युद्ध्वजान्तकम् ॥ ४
जगच्छरण्यं जयिनं व्यादिष्टं शंभुना स्वयम् । श्रीमुक्ताफलकेतुं तं शीघ्रं पतिमवाप्नुहि ॥ ५
इति पित्रोदिते यावदास्ते सा विनतानना । राजानमाह तन्माता तावत्कुवलयावली ॥ ६
कथं स तादृगसुरस्त्रिलोकाभयदायिना । तेनार्यपुत्र निहतो राजपुत्रेण संयुगे ॥ ७
तच्छ्रुत्वा वर्णयामास स राजा तस्य विक्रमम् । राजपुत्रस्य तं तस्यै सदेवासुरसंगरम् ॥ ८
ततः पद्मावतीसख्या सा मनोहारिकाख्यया । तदीया राक्षसीयुग्मवधलीलाप्यकथ्यत ॥ ९
ततस्तस्य सुतायाश्च वृत्तमन्योन्यदर्शनम् । प्रीतिं च बुद्ध्वा तौ तोषं राजा राज्ञी च जग्मतुः ॥ १०
ऊचतुश्च निगीर्णश्च येनासुरचमूचयः । अगस्त्येनेव जलधी राक्षस्यौ तस्य के इति ॥ ११
तया तत्पौरुषोत्कर्षवर्णनावात्यया च सः । पद्मावत्याः प्रजज्वाल सुतरां मदनानलः ॥ १२
ततः पित्रोः सकाशात्सा निर्गता राजकन्यका । शुद्धान्तरत्नप्रासादमारोहत्सोत्सुका क्षणात् ॥ १३
तत्र रत्नोम्भितस्तम्भबद्धमौक्तिकजालके । मणिकुट्टिमविन्यस्तसुखशय्यावरासने ॥ १४
चिन्तितोपनमद्दिव्यनानाभोगमनोरमे । स्थिता साभ्यधिकं तेपे प्रेयोविरहवह्निना ॥ १५
ददर्श च ततः पृष्ठाद्धेमद्रुमलताचितम् । रत्नवापीशताकीर्णं दिव्यमुद्यानमृद्धिमत् ॥ १६
दृष्ट्वा चाचिन्तयच्चित्रमिदमस्मत्पुरोत्तमम् । मज्जन्मभूमेर्भुवनादैन्द्रवादपि सुन्दरम् ॥ १७
हिमाद्रिमौलिमाणिक्यं न च दृष्टमिदं मया । नन्दनाभ्यधिकं यत्र पुरोपवनमीदृशम् ॥ १८
तदत्र गत्वा सच्छायशीतले विजने वरम् । विरहानलसंतापं शमयामि मनागिमम् ॥ १९
इति संचिन्त्य सा बाला शनैरेकाकिनी ततः । युक्त्यावरुह्य गन्तुं तत्पुरोद्यानं प्रचक्रमे ॥ २०
पद्भ्यां गन्तुमशक्ता सा स्वविभूतेरुपस्थितैः । पक्षिभिर्वाहनीभूय तदुद्यानमनीयत ॥ २१
तत्रान्तः कदलीखण्डगृहे पुष्पास्तरोपरि । उपाविशच्छ्रूयमाणे दिव्यगेयादिनिःस्वने ॥ २२
न च सात्र रतिं लेभे न तस्याः शाम्यति स्मरः । विना प्रियेण कामाग्निः प्रत्युतावर्धताधिकम् ॥ २३
ततो दिदृक्षुश्चित्रस्थमपि तं प्रियमुत्सुका । साग्रहीच्चित्रफलकं वर्णवर्तीश्च सिद्धितः ॥ २४
स्रष्टुं द्वितीयं धातापि नेष्टे यत्सदृशं पुनः । तमालिखेयं सोत्कण्ठा सन्नपाणिरहं कथम् ॥ २५
तथाप्यात्मविनोदार्थमालिखामि यथा तथा । इति संचिन्त्य फलके सा तु यावत्तमालिखत् ॥ २६
तावत्तस्यास्तमुद्देशमाययौ चिन्वती सखी । सा मनोहारिका नाम तद्दर्शनविह्वला ॥ २७
सा तामेकाकिनीं तत्र राजपुत्रीं लतागृहे । सचित्रफलकामुत्कामपश्यत्पृष्ठतः स्थिता ॥ २८
पश्यामि तावत्किमियं करोत्येवमिहैकिका । इति संचिन्त्य तस्थौ च छन्ना सा तत्र तत्सखी ॥ २९
तावत्सापि तमुद्दिश्य चित्राभिलिखितं प्रियम् । पद्मावती जगादैवमुदश्रुनयनोत्पला ॥ ३०
दुर्जयानसुरान्हत्वा येनेन्द्रो रक्षितस्त्वया । आलापमात्रेण स मां कथं मारान्न रक्षसि ॥ ३१
कल्पद्रुमोऽप्यदातृत्वं सुगतोऽप्यदयालुताम् । आयाति मन्दपुण्यस्य सुवर्णमपि चाश्मताम् ॥ ३२
स्मरज्वरानभिज्ञश्च नूनं वेत्सि न मद्व्यथाम् । दैत्याजितस्य पुष्पेषुः किं तपस्वी करोति ते ॥ ३३
किं वा वच्मि विधिर्वामो मम येनाश्रुणा दृशौ । पिदधन्नेच्छति प्रायश्चित्रेऽपि तव दर्शनम् ॥ ३४
इत्युक्त्वा राजतनया सा प्रावर्तत रोदितुम् । छिन्नहारगलत्स्थूलमुक्ताभैरश्रुबिन्दुभिः ॥ ३५
तत्क्षणं तामुपासर्पत्सा मनोहारिका सखी । साप्याच्छाद्यैव तच्चित्रं राजपुत्री जगाद ताम् ॥ ३६
इयच्चिरं न दृष्टा त्वं सखि कुत्र स्थितास्यहो । तच्छ्रुत्वा विहसन्ती तां सा मनोहारिकाब्रवीत् ॥ ३७
त्वामेव सखि चिन्वाना चिरं भ्रान्तास्मि तत्त्वया । चित्रं किं छाद्यते दृष्टं मया चित्रमथ श्रुतम् ॥ ३८

एवं तयोक्ता सख्या सा पद्मावत्यश्रुगद्गदम्। लज्जानतमुखी हस्ते गृहीत्वा तामभाषत ॥ ३९
सखि प्रागेव विदितं सर्वं ते किं निगूह्यते। राजपुत्रेण तेनाहं तस्मिन्गौर्याश्रमे तदा ॥ ४०
उद्धृतापि महाघोरराक्षसीवह्निमध्यतः। दुर्वारविरहज्वाले निक्षिप्ता मदनानले ॥ ४१
तन्न जाने क्व गच्छामि कस्मै वच्मि करोमि किम्। आश्रये कमुपायं वा दुर्लभासक्तमानसा ॥ ४२
इति ब्रुवाणां तां राजपुत्रीमाह स्म सा सखी। अभिष्वङ्गोऽनुरूपोऽयं स्थाने ते मनसः सखि ॥ ४३
इतरेतरशोभायै संयोगो युवयोः किल। नवचन्द्रकलाशार्वजटामुकुटयोरिव ॥ ४४
अधृतिश्चात्र मा भूत्ते ध्रुवं स भवतीं विना। न स्थास्यति त्वया किं स तथाभूतो न लक्षितः ॥ ४५
स्त्रियोऽपीच्छन्ति पुंभावं यां दृष्ट्वा रूपलोलुभाः। तस्यास्ते को भवेन्नार्थी तुल्यरूपः स किं पुनः ॥ ४६
शर्वोऽप्यलीकवादी किं येनोक्तौ दंपती युवाम्। अदूरगेऽप्यभीष्टेऽर्थे को वार्तो भजते धृतिम् ॥ ४७
तदाश्वसिहि भावी ते स एव नचिरात्पतिः। न त्वया दुर्लभः कश्चित्त्वं तु सर्वेण दुर्लभा ॥ ४८
इत्युक्ता सा तया सख्या राजपुत्री जगाद ताम्। सखि यद्यपि जानामि तथापि करवाणि किम् ॥ ४९
इदं तु मे तदासक्तं चेतो नोत्सहते क्षणम्। स्थातुं विना तं प्राणेशं क्षमते न च मन्मथः ॥ ५०
तमेव हि स्मरन्त्या मे मनो निर्वाति न क्षणम्। दह्यन्तेऽङ्गानि संतापेनोत्क्रामन्तीव चासवः ॥ ५१
एवं वदन्ती मोहेन मोहिता पुष्पपेलवा। अङ्के तस्या वयस्याया राजपुत्री पपात सा ॥ ५२
अथाम्बुसेककदलीपल्लवानिलवीजनैः। साश्रुराश्वासयामास सा वयस्या क्रमेण ताम् ॥ ५३
मृणालहारवलयं श्रीखण्डार्द्रविलेपनम्। नलिनीदलशय्यां च यानि सा विदधे सखी ॥ ५४
तस्यास्तान्यपि संतापसमासक्तानि संगतः। संतप्य समदुःखत्वमिव शुष्यन्ति भेजिरे ॥ ५५
ततः सा विह्वला पद्मावती तामवदत्सखीम्। क्लिश्नासि किं वृथात्मानं नैवं शाम्यति मे व्यथा ॥ ५६
येन शाम्यति तच्चेत्त्वं कुरुषे तच्छिवं भवेत्। एवमुक्तवतीमार्ता वयस्या तामभाषत ॥ ५७
कुर्यां किं यन्न नामाहं तवार्थे ब्रूहि तत्सखि। तच्छ्रुत्वा सा ह्रिया किंचिदिव राजसुताब्रवीत् ॥ ५८
तमिहानय मे कान्तं गत्वा प्रियसखि द्रुतम्। नान्यथोपशमो मे स्यात्तातश्चैव न कुप्यति ॥ ५९
प्रत्युतेहागतायैव मामेषोऽस्मै प्रदास्यति। एवं तयोक्ता सोत्साहं वयस्या साप्युवाच ताम् ॥ ६०
यद्येवं तद्गृहाण त्वं धैर्यं कार्यमिदं कियत्। एषाहं सखि याम्येव त्वत्प्रियानयनाय यत् ॥ ६१
तत्पितुः खेचरेन्द्रस्य चन्द्रकेतोः पुरोत्तमम्। ख्यातं चन्द्रपुरं नाम निर्वृता भव किं शुचा ॥ ६२
इति साश्वासिता सख्या तया राजसुताभ्यधात्। तदुत्तिष्ठ शिवः पन्था अस्तु ते व्रज सत्वरम् ॥ ६३
त्राता त्रयाणां लोकानां स च सप्रणयं त्वया। मद्गिरा सखि वक्तव्यो वीरः प्राणेश्वरो मम ॥ ६४

तस्मिन्गौर्यायतने तथा परित्राय राक्षसीभयतः।
स्त्रीघ्नेन हन्यमानां रक्षसि मां मकरकेतुना न कथम् ॥ ६५
भुवनोद्धरणसहानां भवादृशामेष नाथ को धर्मः।
आपद्युपेक्ष्यते यत्पूर्वत्रातो जनोऽनुवृत्तोऽपि ॥ ६६

एवं वदेस्त्वं कल्याणि यथा जानासि वा स्वयम्। इति व्याहृत्य सा पद्मावती तां व्यसृजत्सखीम् ॥ ६७
सा च स्वसिद्ध्युपनतं पक्षिवाहनमास्थिता। तन्मनोहारिका प्रायाद्विद्याधरपुरं प्रति ॥ ६८
सा च पद्मावती किंचिदाशालब्धधृतिस्ततः। गृहीतचित्रफलका मन्दिरं प्राविशत्पितुः ॥ ६९
तत्र दासीपरिवृता प्रविश्य निजवासकम्। स्नात्वा गौरीपतिं भक्त्या पूजयित्वा व्यजिज्ञपत् ॥ ७०
भगवंस्त्रिषु लोकेषु त्वदिच्छानुग्रहं विना। न सिद्ध्यतीह कस्यापि बह्वल्पं वापि वाञ्छितम् ॥ ७१
तद्विद्याधरसम्राट्चक्रवर्तिपुत्रं तमीप्सितम्। न दास्यसि पतिं चेन्मे देहं त्यक्ष्यामि तेऽग्रतः ॥ ७२
एवं विहितविज्ञप्तिं शशाङ्कमुकुटस्य ताम्। श्रुत्वा सखेदः साश्चर्यः परिवारजनोऽवदत् ॥ ७३
स्वदेहनिरपेक्षेव किमेवं देवि भाषसे। तवापि किमसुप्राप्यं नास्त्यत्र जगत्त्रये ॥ ७४
त्वदभ्यर्थ्यमानो मुञ्चेद्धि सुगतोऽपि स संयमम्। तदेकः सोऽत्र सुकृती यस्त्वयाप्येवमर्थ्यते ॥ ७५

एतच्छ्रुत्वा गुणाकृष्टा राजपुत्री जगाद सा । समाश्रयः सशङ्काणां देवानामेक एव यः ॥ ७६
अर्केणेव तमो ध्वस्तं येनैकेनासुरं बलम् । प्राणदाता च योऽस्माकं प्रार्थनीयः कथं न सः ॥ ७७
इत्यादि ब्रुवती सोत्का तयैव कथया ततः । अतिष्ठत्सममासेन तत्र दासीजनेन सा ॥ ७८
अत्रान्तरे चन्द्रपुरं सा मनोहारिकापि तत् । विद्याधरेन्द्रनगरं सत्वरं प्राप तत्सखी ॥ ७९
गीर्वाणनगरं कृत्वाप्यसंतोषादिवाद्भुतम् । निर्ममे विश्वकर्मा यदसामान्यविभूतिकम् ॥ ८०
तत्रासंप्राप्य तं मुक्ताफलकेतुं विचिन्वती । खगस्था तत्पुरोद्यानं सा मनोहारिकागमत् ॥ ८१
अतर्क्यसिद्धिविभवं भास्वन्मणिमयद्रुमम् । एकवृक्षोद्गतानेकजातीयकुसुमोत्करम् ॥ ८२
दिव्यगीतरवोन्मिश्रशकुन्तरुतसुन्दरम् । पश्यन्ती तच्च सा रेमे नानारत्नशिलातलम् ॥ ८३
उद्यानपालैर्दृष्टा च विचित्रैः पक्षिरूपिभिः । उपेत्याभ्यर्थ्य सुव्यक्तवचनैः प्रियवादिभिः ॥ ८४
पारिजाततरोर्मूले तार्क्ष्यरत्नशिलासने । उपवेश्योचितैर्भोगैस्तस्याः पूजा व्यधीयत ॥ ८५
अभिनन्द्य च तां पूजां चिन्तयामास तत्र सा । अहो विद्याधरेन्द्राणां चित्राः सिद्धिविभूतयः ॥ ८६
अचिन्त्योपनमद्भोगं येषामुद्यानमीदृशम् । सुरस्त्रीबद्धसंगीतं पतत्रिपरिचारकम् ॥ ८७
इति संचिन्त्य पृष्ट्वा च तानेवोद्यानपालकान् । चिन्वती पारिजातादितरुखण्डमवाप सा ॥ ८८
तत्रान्तश्चन्दनासिक्तकुसुमास्तरशायिनम् । सा मुक्ताफलकेतुं तं सा कल्पकमिवैक्षत ॥ ८९
गौर्याश्रमे दृष्टचरं प्रत्यभिज्ञाय सा च तम् । पश्याम्यस्य किमस्वास्थ्यं छन्नस्थैवेत्यचिन्तयत् ॥ ९०
तावदाश्वासयन्तं तं हिमचन्दनमारुतैः । मित्रं संयतकं मुक्ताफलकेतुरुवाच सः ॥ ९१
अङ्गारास्तुहिने न्यस्ताः कुकूलाग्निश्च चन्दने । मारुते दाववह्निश्च स्मरेण मम निश्चितम् ॥ ९२
विरहार्तस्य संतापं समन्तात्सृजतामुना । तत्किमायासयस्येवमात्मानं निष्फलं सखे ॥ ९३
सुरस्त्रीनृत्तगीतादिविनोदैरपि दूयते । नन्दनाभ्यधिकेऽमुष्मिन्नुद्याने हि मनो मम ॥ ९४
विना पद्मावतीं तां तु पद्मशेखरसंभवाम् । पद्माननां न मे शाम्यत्ययं स्मरशरज्वरः ॥ ९५
न चैतदुत्सहे वक्तुं कस्यचिन्न लभे धृतिम् । एक एव तु तत्प्राप्तावुपायो विद्यते मम ॥ ९६
गच्छामि गौर्यायतनं दृष्टया यत्र मे तया । कटाक्षेपुभिरुत्खाय हृदयं प्रियया हृतम् ॥ ९७
तत्राद्रिराजतनयासंगतस्तत्समागमे । तपसाराधितः शंभुरुपायं मे विधास्यति ॥ ९८
इत्युक्त्वा यावदुत्थातुं राजपुत्रः स इच्छति । सा मनोहारिका तावत्तुष्टात्मानमदर्शयत् ॥ ९९
वयस्य वर्धसे दिष्ट्या सिद्धं तव समीहितम् । पश्येयमागता तस्याः प्रियायास्तेऽन्तिकं सखी ॥ १००
त्वत्पार्श्वस्थेन दृष्टा हि मयासावम्बिकाश्रमे । इति हर्षाच्च तं राजपुत्रं संयतकोऽब्रवीत् ॥ १०१
ततः स स्फूर्जदानन्दविस्मयौत्सुक्यसंकुलाम् । कांचिद्राजसुतोऽवस्थां दध्रे दृष्ट्वा प्रियासखीम् ॥ १०२
नेत्रपीयूषवृष्टिं तां पप्रच्छोपागतां च सः । उपवेश्यान्तिके कान्ताशरीरकुशलं तदा ॥ १०३
अथ सा निजगादैवं मत्सख्याः कुशलं प्रभो । त्वयि नाथे ध्रुवं भावि सांप्रतं दुःखिता तु सा ॥ १०४
यदाप्रभृति दृष्टेन हृतं तस्यास्त्वया मनः । तत आरभ्य विमना न शृणोति न पश्यति ॥ १०५
मृणालहारं दधती बालाहारं विमुच्य सा । लुठत्यम्बुजिनीपत्रशयने शयनोज्झिता ॥ १०६
असहिष्ट न या पूर्वं ह्रिया वरकथामपि । इमामवस्थां सैषाद्य प्राप्ता प्रियतमं विना ॥ १०७
इति तस्या हसन्तीव स्वान्येवाङ्गानि संप्रति । संतापशुष्यच्छ्रीखण्डसितानि कृतिनां वर ॥ १०८
एवं च सा ब्रवीति त्वामित्युदीर्य पपाठ ते । सा मनोहारिका पद्मावतीसंदेशगीतिके ॥ १०९
स तच्छ्रुत्वाखिलं मुक्ताफलकेतुर्गतव्यथः । तां मनोहारिकां हर्षादभिनन्द्याभ्यभाषत ॥ ११०
अमृतेनेव वचसा तव सिक्तमिदं मम । चैतन्यमासीच्छ्वसितं धृतिर्जाता गतः क्लमः ॥ १११
फलितं चाद्य मे पूर्वसुकृतैर्यदहो मयि । गन्धर्वराजतनया साप्येवं पक्षपातिनी ॥ ११२
किंत्वहं शक्नुयां सोढुं कथंचिद्विरहव्यथाम् । शिरीषसुकुमाराङ्गी विषहेत कथं तु सा ॥ ११३
तस्मादहमुपैम्येष तमेव गिरिजाश्रमम् । तत्र त्वमानय सखीं येन स्यात्संगमोऽद्य नौ ॥ ११४

आश्वासय च तां गत्वा कल्याणि त्वरितं सखीम्। इमं च परितुष्टेन वितीर्णं मे स्वयंभुवा ॥ ११५
देहि चूडामणिं तस्यै सर्वदुःखनिबर्हणम्। शक्रात्प्राप्तो मया चायं हारस्ते पारितोषिकः ॥ ११६
इत्युक्त्वा शिरसश्चूडामणिं तस्यै समर्पयत्। हारं च कण्ठात्तत्कण्ठे तं स राजसुतो व्यधात् ॥ ११७
अथ प्रणम्य तं प्रीता सा मनोहारिका ततः। प्रतस्थे विहगारूढा सखीं पद्मावतीं प्रति ॥ ११८
स मुक्ताफलकेतुश्च प्रहर्षापहृतक्लमः। सह संयतकेन स्वं त्वरितं प्राविशत्पुरम् ॥ ११९
सापि पद्मावतीपार्श्वं प्राप्य तस्यै यथेप्सितम्। तं मनोहारिकाचख्यौ तत्प्रियस्मरसंज्वरम् ॥ १२०
प्रणयस्निग्धमधुरं तद्वचश्च यथाश्रुतम्। तं च संगमसंकेतं तदुक्तं गिरिजाश्रमे ॥ १२१
ददौ तत्प्रहितं तं च तस्यै चूडामणिं ततः। पारितोषिकहारं च तद्दत्तं तमदर्शयत् ॥ १२२
ततः पद्मावती सा तामाश्लिष्य कृतिनीं सखीम्। अपूजयद्दिवसस्मार स्मरानलरुजं च ताम् ॥ १२३
बद्ध्वा शिखायामानन्दमिव चूडामणिं च तम्। चक्रे परिकरं गौरीकाननागमनाय सा ॥ १२४
अत्रान्तरे मुनिर्दैवात्तद्गौरीवनमागमत्। दृढव्रतेन शिष्येण सह नाम्ना तपोधनः ॥ १२५
स चात्र तमुवाचैवं मुनिः शिष्यं दृढव्रतम्। दिव्योद्यानेऽहमेतस्मिन्समाधिं विदधे क्षणम् ॥ १२६
द्वारि स्थित्वा प्रवेशोऽत्र न देयः कस्यचित्त्वया। समापितसमाधिश्च पूजयिष्यामि पार्वतीम् ॥ १२७
इत्युक्त्वा मुनिरुद्यानद्वारे शिष्यं निवेश्य तम्। अधस्तात्पारिजातस्य स समाधिमसेवत ॥ १२८
समाधेरुत्थितश्चान्तर्विवेशार्चितुमम्बिकाम्। न च तत्तस्य शिष्यस्य जगाद द्वारवर्तिनः ॥ १२९
तावच्चात्राययौ मुक्ताफलकेतुः प्रसाधितः। आरुह्य दिव्यकरभं सह संयतकेन सः ॥ १३०
प्रविशंश्च तदुद्यानं मुनिशिष्येण तेन सः। मा मा गुरुः समाधौ मे स्थितोऽत्रेति न्यषिध्यत ॥ १३१
विस्तीर्णाभ्यन्तरे जातु प्रिया सा स्यादिहागता। मुनिश्चात्रैकदेशस्थ इत्यालोच्य स सोत्सुकः ॥ १३२
राजपुत्रो व्यतीत्यास्य मुनिपुत्रस्य दृक्पथम्। विवेश व्योममार्गेण तदुद्यानं सुहृद्युतः ॥ १३३
यावच्च वीक्षते तत्स तावत्तत्र विवेश सः। गुरोः समाधिनिष्पत्तिं मुनिशिष्यो निरीक्षितुम् ॥ १३४
स ददर्श गुरुं नात्र ददर्श सवयस्यकम्। श्रीमुक्ताफलकेतुं तु प्रविष्टमपथेन तम् ॥ १३५
ततः स राजपुत्रं तं मुनिशिष्योऽशपत्क्रुधा। सवयस्योऽपि मानुष्यमस्मादविनयाद्व्रज ॥ १३६
इतः समाधिं भङ्क्त्वा यद्गुरुर्मेऽपासितस्त्वया। एवं स दत्तशापस्तं स्वमेवान्वसरद्गुरुम् ॥ १३७
स मुक्ताफलकेतुश्च सिद्धप्राये मनोरथे। शापाशनिनिपातेन विषादमगमत्परम् ॥ १३८
तावत्पद्मावती सात्र प्रियसंगमसोत्सुका। आगाद्विहंगमारूढा समनोहारिकादिका ॥ १३९
स्वयंवरागतां दृष्ट्वा तां शापान्तरितां च सः। सुखदुःखमयीं कष्टां दशां राजसुतो दधौ ॥ १४०
पद्मावत्याश्च तत्कालमदाक्षिण्यं प्रदर्शयत्। पस्पन्दे दक्षिणं चक्षुरकम्पत च मानसम् ॥ १४१
ततोऽत्र सा राजसुता कान्तं विग्नं विलोक्य तम्। किं पूर्वानागतत्वान्मे खिन्नः स्यादित्यचिन्तयत् ॥ १४२
प्रश्रयोपागतां तां च राजपुत्रो जगाद सः। प्रिये मनोरथो भग्नः सिद्धोऽपि विधिनावयोः ॥ १४३
तच्छ्रुत्वा हा कथं भग्न इति तस्यै ससंभ्रमम्। पृच्छन्त्यै स स्वशापं तं राजसूनुरवर्णयत् ॥ १४४
ततो विविग्ना जग्मुस्ते शापदातुर्गुरुं मुनिम्। देवी गृहस्थितं सर्वे शापान्तायानुनाथितुम् ॥ १४५
उपागतांस्तान्प्रणतान्दृष्ट्वा ज्ञानी महामुनिः। स मुक्ताफलकेतुं तं प्रीतिपूर्वमभाषत ॥ १४६
मूर्खेणानेन शप्तस्त्वमप्रेक्षापूर्वकारिणा। न त्वया मे कृतं किंचिदुत्थितोऽहं स्वतस्ततः ॥ १४७
हेतुमात्रमयं चात्र भवितव्यमिदं तव। मानुष्येऽवश्यकार्यं ते देवकार्यं हि विद्यते ॥ १४८
एतां पद्मावतीमेव दैवाद्दृष्ट्वा स्मरातुरः। त्यक्त्वा मर्त्यशरीरं त्वं शीघ्रं शापाद्विमोक्ष्यसे ॥ १४९
अनेनैव च देहेन पुनः प्राणेश्वरीमिमाम्। त्रातासि विश्वत्राता त्वं चिरं शापं हि नार्हसि ॥ १५०
ब्रह्मास्त्रेण हता दैत्या बालवृद्धादयोऽपि यत्। त्वत्प्रयुक्तेन सोऽधर्मलेशो हेतुस्तवात्र च ॥ १५१
तच्छ्रुत्वा तमृषिं पद्मावती सास्रा व्यजिज्ञपत्। भगवन्नार्यपुत्रस्य गतिः सैवास्तु मेऽधुना ॥ १५२
नैतद्विरहिता स्थातुमपि शक्ष्याम्यहं क्षणम्। इत्यर्थितवतीं पद्मावतीं स मुनिरभ्यधात् ॥ १५३

नैतदस्ति तपस्यन्ति त्वं तिष्ठेहैव संप्रति । येनाचिरान्मुक्तशापस्त्वामयं परिणेष्यति ॥ १५४
ततश्चानेन सहिता त्वं मुक्ताफलकेतुना । खेचरासुरसाम्राज्यं दशकल्पान्करिष्यसि ॥ १५५
एतद्दत्तं शिखारत्नं तपःस्थां त्वां च पास्यति । महाप्रभावमुत्पन्नं धातुरेतत्कमण्डलोः ॥ १५६
इति पद्मावतीमुक्तवन्तं दिव्यदृशं मुनिम् । स मुक्ताफलकेतुस्तमेवं प्रार्थयतानतः ॥ १५७
मानुष्ये भगवन्मेऽस्तु भवे भक्तिरभङ्गुरा । पद्मावतीं विनान्यस्यां स्त्रियां मा गाच्च मे मनः ॥ १५८
एवमस्त्विति तेनोक्ते मुनिना सातिदुःखिता । पद्मावती तं तच्छिष्यं शपति स्मापराधिनम् ॥ १५९
आर्यपुत्रस्त्वया मौर्ख्याच्छप्तो यत्तद्भविष्यसि । कामरूपं कामचरं मानुष्येऽस्यैव वाहनम् ॥ १६०
एवं तयाभिशप्तेन विषण्णेनाथ तेन सः । तपोधनः स्वशिष्येण साकमन्तर्दधे मुनिः ॥ १६१
ततः पद्मावतीं मुक्ताफलकेतुरभाषत । स्वपुरं यामि पश्यामि तावत्किं तत्र मे भवेत् ॥ १६२
तच्छ्रुत्वा विरहत्रस्ता वातरुग्णा लतेव सा । पद्मावती पपाताशु सपुष्पाभरणा भुवि ॥ १६३
आश्वास्य च कथंचित्तां क्रन्दन्तीं स सुहृद्युतः । मुहुर्वलितदृङ्मुक्ताफलकेतुरगात्ततः ॥ १६४
पद्मावती च यातेऽस्मिन्विलपन्ती सुदुःखिता । आश्वासयन्तीमवदत्तां मनोहारिकां सखीम् ॥ १६५
सखि जाने मया स्वप्ने देवी दृष्टाद्य पार्वती । सा चोद्यतापि मे कण्ठे क्षेप्तुमुत्पलदामकम् ॥ १६६
आस्तां दास्यामि ते भूय इत्युक्त्वा विरताभवत् । तदयं स प्रियावाप्तिविघ्नो मे सूचितस्तया ॥ १६७
इति तामनुशोचन्तीं सखी वक्ति स्म सा तदा । आश्वासनाय देव्या ते स्वप्नस्तर्ह्येष दर्शितः ॥ १६८
मुनिना च तथैवोक्तं देवादेशस्तथैव च । तदाश्वसिहि भावी ते नचिरात्प्रियसंगमः ॥ १६९
इत्यादिभिः सखीवाक्यैश्चूडामणिवशेन च । पद्मावती धृतिं बद्ध्वा तस्थौ गौर्याश्रमे तदा ॥ १७०

विदधे च तपस्त्रिसंध्यमीशं गिरिजासंगतमत्र पूजयन्ती ।
प्रियचित्रपटं च सा तथैव स्वपुरानायितमात्तदेवबुद्धिः ॥ १७१
अयि निश्चितभाविनीप्सितेऽर्थे वितथं मा स्म कृथास्तपःश्रमं त्वम् ।
इति सास्रमुपेत्य वारयन्तौ विदितार्थौ पितरौ च सैवमाह ॥ १७२
नवभर्तरि देवनिर्मिते मे सहसा संप्रति शापदुःखमाप्ते ।
अहमत्र सुखं कथं वसेयं परमात्मा हि पतिः कुलाङ्गनानाम् ॥ १७३
तपसा च परिक्षयं गतेऽस्मिन्वृजिने तोषमुपागते च शंभौ ।
अचिरात्प्रियसंगमो भवेन्मे न हि किंचित्तपसामसाध्यमस्ति ॥ १७४
इत्थं दृढनिश्चयया पद्मावत्या तया तदा गदिते ।
तन्माता तत्पितरं राजानं कुवलयावली स्माह ॥ १७५
देव तपः कष्टमिदं कुरुतां किं खिद्यतेऽधिकं मिथ्या ।
भवितव्यमेतदस्याः कारणमत्रास्ति वच्मि तच्च शृणु ॥ १७६
देवप्रभाभिधाना सिद्धाधिपकन्यका तपोऽतिमहत् ।
अभिमतभर्तृप्राप्त्यै कुर्वाणा शिवपुरे पुरातिष्ठत् ॥ १७७
तत्र मया सहितैषा द्रष्टुं पद्मावती गता देवम् ।
न त्रपसे पतिहेतोस्तपसा कथमित्युपेत्य तामहसत् ॥ १७८
मूढे हससि शिशुत्वात्त्वमपि तपः क्लेशदायि पतिहेतोः ।
कर्तास्यलमित्येतां साथ रुषा सिद्धकन्यकाभ्यशपत् ॥ १७९
तदवश्यं भोक्तव्यं सिद्धसुताशापकृच्छ्रमनया यत् ।
तत्कोऽन्यथा विधातुं क्षमते तदियं करोतु यत्कुरुते ॥ १८०
इति राज्ञ्या स तयोक्तस्तद्युक्तस्तां कथंचिदामन्त्र्य ।
तनयां चरणावनतां गन्धर्वपतिर्ययौ निजां नगरीम् ॥ १८१

साप्यर्चयन्त्यनुदिनं गगनेन गत्वा सिद्धीश्वरं कमलजादिनिषेवितं तम्।
स्वप्ने हरेण गदितं गिरिजाश्रमेऽत्र पद्मावती नियमजप्यपरावतस्थे ॥ १८२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके चतुर्थस्तरङ्गः।

पञ्चमस्तरङ्गः।

एवं पद्मावती यावत्तत्प्राप्त्यै संश्रिता तपः। तावत्स्वनगरं मुक्ताफलकेतुरवाप्य सः॥ १
ब्रह्मशापवशासन्नमानुष्यावतरो भयात्। विद्याधरेन्द्रतनयः शरणं शिश्रिये शिवम्॥ २
तमर्चयंश्च तद्गर्भगृहाच्छुश्राव भारतीम्। मा भैषीर्न हि ते गर्भवासक्लेशो भविष्यति॥ ३
मानुष्ये नापि ते दुःखं भावि नापि चिरं स्थितिः। जनिष्यसे राजसुतो महाबलपराक्रमः॥ ४
तपोधनान्मुनेः कृत्स्नमस्त्रग्राममवाप्स्यसि। मदीयः किंकराख्यश्च गणस्ते भवितानुजः॥ ५
तत्सहायो रिपूञ्जित्वा कृत्वा कार्यं दिवौकसाम्। कर्तासि खेचरैश्वर्यं पद्मावत्या युतः पुनः॥ ६
एवं श्रुत्वा गिरं बद्धधृतिः शापफलागमम्। प्रतीक्षमाण इव तं तस्थौ राजसुतोऽथ सः॥ ७
अत्रान्तरे कथासंधौ पूर्वस्यां नगरं दिशि। आसीद्देवसभं नाम जितदेवसभं श्रिया॥ ८
तत्र मेरुध्वजो नाम सार्वभौमोऽभवन्नृपः। सहायो देवराजस्य देवासुररणागमे॥ ९
यस्य लोभो यशस्यासीन्न परस्वे महात्मनः। तैक्ष्ण्यं खड्गे न दण्डे तु भयं पापान्न शत्रुतः॥ १०
कुटिलत्वं भ्रुवोः कोपे नाशये यस्य चाभवत्। मौर्वीकिणाङ्के पारुष्यं भुजे न वचने पुनः॥ ११
व्यधाद्युधि न कोषे तु यो दीनारातिरक्षणम्। रतिं च धर्मचर्यासु श्रद्दधे नाङ्गनासु यः॥ १२
तस्याभूतामुभे चिन्ते भूपतेः सततं हृदि। एका पुत्रो न यत्तस्य तावदेकोऽप्यजायत॥ १३
द्वितीया चापि यत्पूर्वं देवासुरमहाहवात्। जग्मुः पातालमसुरा हतशेषाः पलाय्य ये॥ १४
ते निर्गत्य ततो दूरात्सतीर्थायतनाश्रमान्। विनाश्यैव च्छलात्तस्य पातालमसकृद्ययुः॥ १५
न च तान्प्राप स नृपः पातालव्योमचारिणः। तेजस्वी तेन संतेपे निःसपत्नेऽपि भूतले॥ १६
एतच्चिन्ताकुलो जातु शक्रप्रहितसद्रथः। देवास्थानं ययौ सोऽत्र चैत्रशुक्लदिनागमे॥ १७
शक्रस्य वत्सरारम्भे सर्वास्थानं तथाहि तत्। तद्रथेन स याति स्म राजा मेरुध्वजः सदा॥ १८
तदा तु तत्र दिव्यस्त्रीनृत्तगीताकुलेऽपि सः। संमानितोऽपि शक्रेण निःश्वसन्नास्त भूपतिः॥ १९
तद्दृष्ट्वा ज्ञातहृदयो देवराजो जगाद तम्। राजञ्जानाम्यहं यत्ते दुःखं तन्मा च भूत्तव॥ २०
मुक्ताफलध्वजाख्यस्ते शिवांशो जनिता सुतः। एको गणावतारश्च द्वितीयो मलयध्वजः॥ २१
तपोधनान्मुनेर्विद्याः कामरूपं च वाहनम्। मुक्ताफलध्वजः प्राप्स्यत्यस्त्राणि च सहानुजः॥ २२
महापाशुपतास्त्रं च पुनः प्राप्य स दुर्जयः। करिष्यति वशे पृथ्वीं पातालं च हतासुरः॥ २३
त्वं च व्योमचरावेतौ समहास्त्रौ गृहाण मे। वारणं काञ्चनगिरिं तथा काञ्चनशेखरम्॥ २४
इत्युक्त्वास्त्रगजान्दत्त्वा प्रेषितः सोऽथ वज्रिणा। आगान्मेरुध्वजो हृष्टो भूतले नगरं निजम्॥ २५
ते तु च्छलकृतावद्यास्तस्य पातालसंश्रयात्। खेचरत्वं गतस्यापि प्राप्या नासन्किलासुराः॥ २६
ततः शक्राच्छ्रुतस्यासौ राजा पुत्रेच्छुराश्रमम्। तपोधनस्य तस्यैव ययौ दिव्येभवाहनः॥ २७
तत्राभिगम्य तमृषिं शक्रादेशं निवेद्य तम्। भगवन्नादिशोपायं शीघ्रं मेऽत्रेति सोऽब्रवीत्॥ २८
स च तस्याचिरेणेष्टसिद्धये मुनिरादिशत्। व्रतमाराधनं शंभोः सभार्यस्य महीभुजः॥ २९
स तेनाराधयामास व्रतेनोर्वीपतिः शिवम्। तुष्टः स च विभुः स्वप्ने तमेवमवदन्नृपम्॥ ३०
उत्तिष्ठ राजन्प्राप्तासि क्रमेणैवाविलम्बितम्। शेषासुरविनाशाय द्वौ पुत्रावपराजितौ॥ ३१
एतच्छ्रुत्वा प्रबुध्यैव प्रातरुक्त्वा मुनेश्च सः। सभार्यः पारणं कृत्वा राजा स्वपुरमाययौ॥ ३२
तत्र तस्य महादेवी राज्ञी मेरुध्वजस्य सा। ऋतुं दिनैः कतिपयैः प्रतिपेदे सुलक्षणा॥ ३३
तस्याः स गर्भे समभून्मुक्त्वा शापवशेन ताम्। वैद्याधरीं तनुं मुक्ताफलकेतुरतर्कितम्॥ ३४

सा च तस्य तनुस्तत्र निजे चन्द्रपुरे पुरे । विद्याप्रभावादम्लाना तस्थौ बान्धवरक्षिता ॥ ३५
सापि मेरुध्वजस्यात्र राज्ञो देवसभे पुरे । राज्ञी सगर्भा संपद्य नन्दयामास तं पतिम् ॥ ३६
यथा यथा च सा राज्ञी जज्ञे गर्भभरालसा । तथा तथा स सोत्साहस्तस्याः पतिरभून्नृपः ॥ ३७
प्राप्ते च समये पुत्रं सासूत स्मार्कसंनिभम् । बालमेवोग्रमहसं कुमारमिव पार्वती ॥ ३८
बभूव चोत्सवः कृत्स्ने न परं वसुधातले । यावन्नभस्तलेऽप्यासीद्देवप्रहतदुन्दुभौ ॥ ३९
स्वयमागान्मुनिश्चात्र दिव्यदृक्स तपोधनः । दिष्ट्या वर्धयितुं मेरुध्वजं तं पृथिवीपतिम् ॥ ४०
तेन साकं स मुनिना नाम्ना शक्रोदितेन तम् । मुक्ताफलध्वजं चक्रे पुत्रं राजा कृतोत्सवः ॥ ४१
ततो गते मुनौ तस्मिंस्तस्य संवत्सरान्तरे । राज्ञो द्वितीयस्तनयो राज्ञ्यां तस्यामजायत ॥ ४२
तं च नाम्ना स नृपतिश्चकार मलयध्वजम् । तथैव हर्षायातेन तेनैव मुनिना सह ॥ ४३
ततः संयतकः सोऽपि शापात्तन्मन्त्रिणः सुतः । जज्ञे नाम पिता चास्य महाबुद्धिरिति व्यधात् ॥ ४४
ततस्तौ सिंहशावाभाववर्धेतां नृपात्मजौ । क्रमेण तेजसा सार्धं मन्त्रिपुत्रेण तेन च ॥ ४५
गतेष्वथाष्टमात्रेषु वर्षेषु स तपोधनः । एत्योपनयनं चक्रे राजसून्वोस्तयोर्मुनिः ॥ ४६
अष्टौ चान्यानि वर्षाणि विद्यासु च कलासु च । महास्त्रेषु च सर्वेषु विनीयेते स्म तेन तौ ॥ ४७
ततो युवानौ दृष्ट्वा तौ सर्वशस्त्रास्त्रयोधिनौ । पुत्रौ कृतिनमात्मानं मेने मेरुध्वजो नृपः ॥ ४८
अथ तं स्वाश्रमं गन्तुमिच्छन्तं सोऽब्रवीन्मुनिम् । अभीष्टा दक्षिणेदानीं भगवन्गृह्यतामिति ॥ ४९
एषैव दक्षिणाभीष्टा मम त्वत्तो महीपते । असुरान्यज्ञहन्तॄन्यत्सपुत्रो मे हनिष्यसि ॥ ५०
इत्यूचिवांसमवदत्तं महर्षिं स भूपतिः । अत एवाधुना ग्राह्या भगवन्दक्षिणा त्वया ॥ ५१
तदारभस्व यज्ञं त्वं तद्विघ्नायासुराश्च ते । एष्यन्त्यहं च तत्कालं तत्रैष्यामि सपुत्रकः ॥ ५२
पूर्वकालं हि दैत्यास्ते कृत्वा दोषं छलेन वः । खमुत्पत्य निपत्याब्धौ पातालमगमन्मुने ॥ ५३
इदानीं त्विन्द्रदत्तौ मे विद्येते खचरौ गजौ । ताभ्यां सह सपुत्रस्तान्प्राप्स्यामि व्योमगानपि ॥ ५४
तच्छ्रुत्वा स मुनिस्तुष्टस्तमुवाच नराधिपम् । तर्हि त्वं यज्ञसंभारं यथायोग्यं कुरुष्व मे ॥ ५५
यावद्दिग्विश्रुतं गत्वा तत्र यागं समारभे । प्रेषयामि च वो दूतं शिष्यमेतं दृढव्रतम् ॥ ५६
संजातकामगोद्दाममहाबलखगाकृतिम् । मुक्ताफलध्वजस्यास्य भविता सैष वाहनम् ॥ ५७
इत्युक्त्वा स मुनिः प्रायात्स्वाश्रमं स च भूपतिः । प्राहिणोत्सर्वसंभारांस्तस्यानुपदमेव तान् ॥ ५८
प्रारब्धे तेन यज्ञे च मिलद्देवर्षिसंसदि । बुद्ध्वा पातालनिलया दानवाः क्षोभमाययुः ॥ ५९
तज्ज्ञात्वा स मुनिः शिष्यं प्राहिणोत्तं दृढव्रतम् । शापकल्पितपक्षीन्द्ररूपं देवसभं पुरम् ॥ ६०
तत्र प्राप्तं च तं दृष्ट्वा स्मृत्वा मुनिवचश्च सः । सज्जीचकार तौ दिव्यौ राजा मेरुध्वजो गजौ ॥ ६१
आरुरोह तयोर्मुख्यं स काञ्चनगिरिं स्वयम् । कनीयसे च पुत्राय ददौ काञ्चनशेखरम् ॥ ६२
दृढव्रतखगेन्द्रं च तं स मुक्ताफलध्वजः । आरुरोहात्तदिव्यास्त्रो बन्दिवृन्दाभिवन्दितः ॥ ६३
ततस्ते प्रययुर्वीरास्त्रयः खेचरवाहनाः । दत्ताशिषो द्विजवरैः पुरः प्रहितसैनिकाः ॥ ६४
प्राप्तानां चाश्रमं तेषां स मुनिः प्रीतमानसः । अभेद्याः सर्वशस्त्राणां भूयास्तेति वरं ददौ ॥ ६५
तावच्च दानवबलं निहन्तुं यज्ञमाययौ । अभ्यधावच्च तद्दृष्ट्वा मेरुध्वजबलं नदत् ॥ ६६
प्रावर्तत ततो युद्धं दैत्यानां मानुषैः सह । दैत्यास्तु मानुषान्खस्था भूतलस्थान्बबाधिरे ॥ ६७
ततः स पक्षिवहनो दैत्यान्मुक्ताफलध्वजः । प्रधाव्य शरवर्षेण चकर्त च ममाथ च ॥ ६८
तं च दृष्ट्वा विहंगस्थं ज्वलन्तमिव तेजसा । तच्छेषाः प्राद्रवन्दैत्यास्ते नारायणशङ्किताः ॥ ६९
गत्वा भयाच्च पातालं सर्वे त्रैलोक्यमालिने । तत्कालं दैत्यराजाय शशंसुस्ते तथैव तत् ॥ ७०
स तद्बुद्ध्वा द्रुतं चारैरन्विष्य तमवेत्य च । मुक्ताफलध्वजं मर्त्यं मानुषाभिभवाक्षमी ॥ ७१
संघट्य सर्वपातालदानवानसुरेश्वरः । वार्यमाणोऽपि शकुनैर्योद्धुमागात्तमाश्रमम् ॥ ७२
मुक्ताफलध्वजाद्याश्च तत्रैवावहिताः स्थिताः । तमभ्यधावन्दृष्ट्वैव सबलं दानवाधिपम् ॥ ७३

ततः प्रवृत्ते भूयोऽत्र मर्त्यासुरमहाहवे। विमानैराययुर्द्रष्टुं रुद्रेन्द्रप्रमुखाः सुराः॥ ७४
मुक्ताफलध्वजश्चात्र तत्क्षणोपस्थितं पुरः। ददर्शालक्ष्यतेजस्कमस्त्रं पाशुपतं महत्॥ ७५
अतिप्रमाणमुद्वह्निज्वालं त्र्यक्षं चतुर्मुखम्। एकाङ्घ्रिमष्टबाहुं च कल्पान्तानलसंनिभम्॥ ७६
विद्धि मां शंकरादेशादायातं विजयाय ते। इति ब्रुवाणं सोऽभ्यर्च्य राजपुत्रस्तदग्रहीत्॥ ७७
तावच्च गगने तैस्तैरसुरैरस्त्रवृष्टिभिः। मेरुध्वजबलं तान्यदधःस्थितमबाध्यत॥ ७८
ततस्तद्रक्षितुं चित्रयोधी मुक्ताफलध्वजः। शरजालं ददौ मध्ये युयुधे चासुरैः सह॥ ७९
पितृभ्रातृयुतं दृष्ट्वा तं नभश्चरवाहनम्। त्रैलोक्यमाली दैत्येन्द्रः पन्नगास्त्रं मुमोच सः॥ ८०
तस्मान्निर्गच्छतोऽसंख्यान्घोरानाशीविषानहीन्। गरुडैर्गारुडास्त्रोत्थैरर्दयन्मलयध्वजः॥ ८१
ततो यद्यत्स दैत्येन्द्रः सपुत्रोऽस्त्रमवासृजत्। मुक्ताफलध्वजस्तत्तन्निरास्यत्तस्य हेलया॥ ८२
अथ क्रुद्धः स देवारिस्तत्पुत्रोऽन्ये च दानवाः। आग्नेयादीनि युगपत्तस्मिन्नस्त्राणि चिक्षिपुः॥ ८३
तानि तस्याग्रतो दृष्ट्वा स्थितं पाशुपतं ज्वलत्। भीतान्यस्त्राणि सर्वाणि विमुखानि क्षणाद्ययुः॥ ८४
ततस्ते यावदिच्छन्ति भीता दैत्याः पलायितुम्। तावत्तदाशयं बुद्ध्वा वीरो मुक्ताफलध्वजः॥ ८५
बबन्ध तेषामूर्ध्वं च चतुर्दिक्कं च तत्क्षणम्। शरजालं स दुर्भेदं वज्रपञ्जरसंनिभम्॥ ८६
तत्रान्तर्भ्रमतस्तांश्च शकुन्तानिव दानवान्। पित्रा भ्रात्रा च सहितः स जघान शितैः शरैः॥ ८७
निपेतुश्च कराः पादाः शरीराणि शिरांसि च। छिन्नानि तेषां दैत्यानामवहंश्चास्त्रनिम्नगाः॥ ८८
साधुवादे ततो दत्ते पुष्पवर्षानुगे सुरैः। मोहनास्त्रं ददौ तेषां द्विषां मुक्ताफलध्वजः॥ ८९
तेन संमोहितान्भूमौ पतितांस्तान्सराजकान्। असुरान्वारुणास्त्रेण पाशबद्धांश्चकार सः॥ ९०
तपोधनोऽथ सोऽवादीन्मेरुध्वजनृपं मुनिः। न वध्यमासुरं सैन्यं हतशेषमिदं खलु॥ ९१
स्वीकृतेन ह्यनेनैव प्रवेक्ष्यध्वं रसातलम्। दैत्येन्द्रस्तु सपुत्रोऽयं बद्ध्वा नीत्वा समन्त्रिकः॥ ९२
महासुरैर्दुष्टनागैर्युक्तो मुख्यैश्च राक्षसैः। स्थाप्यो देवसभासन्ने श्वेतशैलगुहान्तरे॥ ९३
इत्युक्तो मुनिना दैत्ययोधान्मेरुध्वजोऽब्रवीत्। मा भैष्ट यूयं नास्माभिर्वध्या सभ्रातृकस्य तु॥ ९४
मुक्ताफलध्वजस्यास्य वर्तध्वं शासनेऽधुना। इत्युक्ता दानवा राज्ञा हृष्टास्तत्प्रतिपेदिरे॥ ९५
ततः स राजा तं दैत्यराजं त्रैलोक्यमालिनम्। पुत्रादिभिस्तैः सहितं श्वेतशैलमनाययत्॥ ९६
तद्गुहाभ्यन्तरे तं च स्थापयामास संयतम्। भूरिशूरबलोपेतप्रधानामात्यरक्षितम्॥ ९७
ततो निवृत्ते सङ्ग्रामे मुक्तमन्दरवृष्टिषु। वैमानिकेषु यातेषु प्रवृत्ते जगदुत्सवे॥ ९८
स तत्र पुत्रौ वक्ति स्म राजा मेरुध्वजो जयी। इहैव यज्ञरक्षार्थमहं तिष्ठामि संप्रति॥ ९९
युवां प्रयातं पातालमेतैः स्वैः सैनिकैः सह। प्राप्तदैत्यविमानौघैः शेषासुरबलेन च॥ १००
आश्वास्य स्थापयित्वा च वशे पातालवासिनः। प्रधानाधिष्ठितान्कृत्वा स्वीकृत्येहागमिष्यथः॥ १०१
एतच्छ्रुत्वा तथेत्याशु दिव्यकामगवाहनः। मुक्ताफलध्वजो वीरः स चापि मलयध्वजः॥ १०२
रसातलं विविशतुः ससैन्यौ भ्रातरावुभौ। सह दानवसैन्येन प्रणतेनाग्रयायिना॥ १०३
हत्वा च रक्षिणः स्थानस्थानेषु परिपन्थिनः। अदातामत्र तौ शेषजनस्याभयडिण्डिमम्॥ १०४
विश्वस्तप्रणते चैतौ जने सप्त रसातलान्। स्वीचक्रतुः पुरशतैर्नानारत्नमयैर्युताम्॥ १०५
बुभुजाते च तात्रम्यानुद्यानैः सर्वकामदैः। दिव्यासवभृतानेकरत्नसोपानवापिकैः॥ १०६
तत्राद्भुताकृती तौ च ददृशुर्दानवाङ्गनाः। तत्कन्याश्च तरुण्यन्तर्मायाच्छादितविग्रहाः॥ १०७
आरेभे च तदा तत्र भर्तुर्बद्धस्य शर्मणे। तपः स्वयंप्रभा नाम भार्या त्रैलोक्यमालिनः॥ १०८
तस्याः सुते च त्रैलोक्यप्रभात्रिभुवनप्रभे। आरेभाते तपस्तद्वत्कुमार्यौ श्रेयसे पितुः॥ १०९
तौ च राजसुतौ तत्र पाताले सकलं जनम्। लब्धप्रशमनस्वस्थं संमान्य विविधैः प्रियैः॥ ११०
स्थापयित्वा च सङ्ग्रामसिंहादीनधिकारिणः। तपोवनाश्रमपदं पितुः पार्श्वमुपेयतुः॥ १११
तावत्तत्र मुनेर्यज्ञः स समाप्तिमुपाययौ। गन्तुं प्रारेभिरे देवाः स्वधिष्ण्यान्यृषयस्तथा॥ ११२

ततो मेरुध्वजः शक्रं परितुष्टं व्यजिज्ञपत् । आगम्यतां मन्नगरं देव तुष्टोऽसि चेन्मयि ॥ ११३
तच्छ्रुत्वा तत्प्रियायागान्मुनिमामन्त्र्य वासवः । राज्ञा तेन सपुत्रेण सह देवसभं पुरम् ॥ ११४
तत्र चोपाचरत्तं स राजा लोकद्वयेश्वरः । तथा शक्रं यथा दिव्यं सुखं विसस्मरति स्म सः ॥ ११५
ततः प्रीतः स शक्रोऽपि तं सपुत्रं महीपतिम् । दिव्यात्मवाहनारूढं निनाय स्वं त्रिविष्टपम् ॥ ११६
तत्र नारदरम्भादिसंगीतसुखसुन्दरे । स विश्रमय्य तं मेरुध्वजं समलयध्वजम् ॥ ११७
मुक्ताफलध्वजं चेन्द्रः पारिजातमयीः स्रजः । दत्त्वा सदिव्यमुकुटाः संमान्य प्राहिणोद्गृहम् ॥ ११८
ते चागत्यात्र भूलोके पाताले च गतागतम् । कुर्वाणाश्चक्रिरे राज्यं नृदेवा लोकयोर्द्वयोः ॥ ११९
ततो मेरुध्वजो मुक्ताफलध्वजमुवाच सः । विजिताः शत्रवः पुत्र युवानौ भ्रातरौ युवाम् ॥ १२०
स्वाधीना राजकन्याश्च मया ताश्च गवेषिताः । वर्तन्ते प्राप्तकालस्तत्क्रियतां दारसंग्रहः ॥ १२१
इति पित्रोदितेऽवादीत्सोऽथ मुक्ताफलध्वजः । न मे परिणये तात मनस्तावत्प्रवर्तते ॥ १२२
अहं तपश्चरिष्यामि संप्रत्याराधितुं हरम् । एष वत्सस्तु कुरुतां विवाहं मलयध्वजः ॥ १२३
एतच्छ्रुत्वैव मलयध्वजस्तं सोऽनुजोऽब्रवीत् । विवाहो मम युक्तः किमार्ये त्वय्यपरिग्रहे ॥ १२४
राज्यं वा त्वय्यराज्यस्थे तव मार्गानुगो ह्यहम् । इत्युक्ते तेन मलयध्वजेनोवाच भूपतिः ॥ १२५
मेरुध्वजस्तं तनयं ज्येष्ठं मुक्ताफलध्वजम् । युक्तमेवामुना तावदनुजेन तवोदितम् ॥ १२६
त्वं त्वयुक्तं वदस्येतन्नव एवात्र यौवने । को नाम कालस्तपसो भोगकालो ह्ययं तव ॥ १२७
तदकालोचितः पुत्र मुच्यतामेष दुर्ग्रहः । इति तेनोच्यमानोऽपि राज्ञा ज्येष्ठः सुतोऽत्र च ॥ १२८
नाङ्गीचक्रे यदा संप्रत्युद्वाहं निश्चयेन सः । तदा स नृपतिस्तूष्णीं तस्थौ कालं प्रतीक्षितुम् ॥ १२९
अत्रान्तरे च पाताले भार्यां त्रैलोक्यमालिनः । स्वयंप्रभामूचतुस्तां तपःस्थे ते स्वकन्यके ॥ १३०
आवयोरम्ब सप्ताष्टवर्षयोः संयतः पिता । राज्यभ्रंशश्च संवृत्तः कस्मादकृतपुण्ययोः ॥ १३१
अष्टमं वर्षमेतच्च तपस्यन्त्योर्न नौ हरः । प्रसीदति न तातोऽयं मुच्यतेऽद्यापि बन्धनात् ॥ १३२
तद्यावदावयोर्न स्याद्रिपोः परिभवोऽथवा । निर्लक्षणामिमां तावदनले जुहुवुस्तनुम् ॥ १३३
इत्युक्ता दुहितृभ्यां सा जगादैवं स्वयंप्रभा । पुत्र्यौ प्रतीक्ष्यतां तावदुदयो ह्यस्ति नः पुनः ॥ १३४
तपःस्थितां हि मां स्वप्ने जाने देवोऽब्रवीच्छिवः । वत्से कुर्या धृतिं राज्यं पुनः प्राप्स्यति ते पतिः ॥ १३५
मुक्ताफलध्वजश्चैष तथैव मलयध्वजः । दुहित्रोस्तव भर्तारौ राजपुत्रौ भविष्यतः ॥ १३६
मानुषाविति मा चैतौ विज्ञासीरेतयोर्यतः । एको विद्याधरवरो द्वितीयो मामको गणः ॥ १३७
इत्यादिष्टेश्वरेणाहं प्रबुद्धा रजनीक्षये । इत्याशयैतया चैष सोढः क्लेशो महान्मया ॥ १३८
तस्मादावेदयाम्येतदर्थं युष्मत्पितुः प्रभोः । तदिच्छया यतिष्ये च युष्मदुद्वाहसिद्धये ॥ १३९
एवमाश्वास्य सा राज्ञी कन्यके स्वे स्वयंप्रभा । उवाचेन्दुमतीं नाम वृद्धामन्तःपुरस्त्रियम् ॥ १४०
आर्यपुत्रस्य निकटं श्वेतशैलगुहां व्रज । निपत्य पादयोस्तं च विज्ञापय गिरा मम ॥ १४१
निर्मितास्मि महाराज धात्रान्येनैव दारुणा । त्वद्वियोगाग्निनाद्यापि न दह्ये ज्वलतापि या ॥ १४२
आत्मा तु न मया त्यक्तः पुनस्त्वद्दर्शनाशया । इत्युक्त्वा मामकं शार्वं स्वप्नादेशं निवेदयेः ॥ १४३
ततः कन्याविवाहार्थं पृच्छेस्तं यच्च वक्ष्यति । तत्त्वयागत्य मे वाच्यं विधास्येऽहं तथाविधम् ॥ १४४
इत्युक्त्वेन्दुमतीं तां सा प्रैषयत्सापि निर्गता । पातालात्प्राप तच्छैलगुहाद्वारं सुरक्षितम् ॥ १४५
रक्षिणोऽभ्यर्थ्य तत्रान्तः प्रविश्यालोक्य संयतम् । त्रैलोक्यमालिनं तं सा साश्रुर्जग्राह पादयोः ॥ १४६
तत्पृष्टकुशला तच्च शनैस्तस्मै शशंस सा । कृत्स्नं स्वभार्यासंदेशं ततो राजा जगाद सः ॥ १४७
यः प्रोक्तो राज्यलाभो नः शर्वेणास्तु तथैव सः । मेरुध्वजस्यात्मजयोः कन्यादाने तु का कथा ॥ १४८
इहैवाहं विपद्येय न तु दद्यां निजात्मजे । शत्रुभ्यां मानुषाभ्यां च संयतः सन्नुपायनम् ॥ १४९
इत्युक्त्वेन्दुमती राज्ञा प्रेषिता तेन सा ततः । एत्य स्वयंप्रभायै तत्तत्पत्न्यै तद्वचोऽभ्यधात् ॥ १५०
श्रुत्वा ततस्ते त्रैलोक्यप्रभात्रिभुवनप्रभे । दैत्येन्द्रकन्ये जननीमूचतुस्तां स्वयंप्रभाम् ॥ १५१

आवयोर्यौवनभयादग्निरेवाधुना गतिः। तदम्बास्यां चतुर्दश्यां तत्प्रवेशं विदध्वहे ॥ १५२
कृतनिश्चययोरेवं तयोः साप्यकरोत्तदा। निश्चयं मरणायैव तन्माता सपरिच्छदा ॥ १५३
प्राप्तायां च चतुर्दश्यां ताः पापरिपुनामनि। तीर्थे सर्वाश्चिताश्चक्रुरर्चित्वा हाटकेश्वरम् ॥ १५४
तावन्मेरुध्वजो राजा तिथौ तस्यां सपुत्रकः। सभार्यश्चाययौ तावद्धाटकेश्वरमर्चितुम् ॥ १५५
स पापरिपुतीर्थं तत्स्नानार्थं सानुगो व्रजन्। दूराद्ददर्श तत्तीरे वनान्तर्धूममुद्गतम् ॥ १५६
धूमोद्गमः कुतोऽत्रेति पृच्छन्तं तं च भूपतिम्। ऊचुः सङ्ग्रामसिंहाद्याः पातालाधिकृता निजाः ॥ १५७
त्रैलोक्यमालिनो भार्या महाराज स्वयंप्रभा। दुहितृभ्यां कुमारीभ्यां सहात्र तपसि स्थिता ॥ १५८
नूनं ता अग्निकार्यादि किंचिदत्राद्य कुर्वते। यदि वातितपःखिन्नाः कुर्वन्त्यग्निप्रवेशनम् ॥ १५९
तच्छ्रुत्वा सह पुत्राभ्यां पत्न्या तैश्चाधिकारिभिः। द्रष्टुं स राजा तत्रागान्निपिद्धान्यपरिच्छदः ॥ १६०
ददर्श चात्र प्रच्छन्नः स्थितस्ते दैत्यकन्यके। समातृके पूजयन्त्यौ सुसमिद्धं चितानलम् ॥ १६१
मुखलावण्यसंदोहनिःस्यन्दैर्दिक्षु सर्वतः। चन्द्रबिम्बशतानीव रचयन्त्यौ रसातले ॥ १६२
लोलहाराम्बुपूराभ्यां कामस्येवाभिषेचनम्। कुचकाञ्चनकुम्भाभ्यां कुर्वत्यौ त्रिजगज्जये ॥ १६३
बिभ्राणे जघनाभोगं विपुलं बद्धमेखलम्। नक्षत्रमालाङ्कमिव स्मरद्विपशिरःस्थलम् ॥ १६४
वहन्त्यौ केशपाशौ च पन्नगाविव निर्मितौ। धात्रा लावण्यसर्वस्वनिधानं रक्षितुं तयोः ॥ १६५
दृष्ट्वा ते चिन्तयामास स राजा जातविस्मयः। अहो विश्वसृजः सृष्टिर्लसन्नवनवाद्भुता ॥ १६६
तदेतयोर्न रम्भापि नोर्वशी न तिलोत्तमा। रूपे भजति तुल्यत्वमसुराधिपकन्ययोः ॥ १६७
इति चिन्तयतस्तस्य राज्ञः सा दैत्यकन्यका। ज्येष्ठार्चयित्वा त्रैलोक्यप्रभा वह्निं व्यजिज्ञपत् ॥ १६८
उक्तः स्वप्नहरादेशो यतः प्रभृति मेऽम्बया। ततः प्रभृति बद्धैव भर्तृबुद्धिर्यतो मया ॥ १६९
तस्मिन्गुणनिधौ राजपुत्रे मुक्ताफलध्वजे। तत्स एव पतिर्भूयाद्भगवन्मेऽन्यजन्मनि ॥ १७०
इह जन्मनि तातेन संयतस्थेन मानिना। दित्सिताप्यम्बया तस्मै दातुं नाङ्गीकृतास्मि यत् ॥ १७१
तच्छ्रुत्वा तद्वदेवात्र सापि त्रिभुवनप्रभा। वव्रे हुताशान्मलयध्वजं जन्मान्तरे पतिम् ॥ १७२
ततो मेरुध्वजो राजा स तच्छ्रवणहर्षुलः। तद्भार्या च महादेवी परस्परमवोचताम् ॥ १७३
प्राप्नुयातामिमे भार्ये यद्यस्मत्तनयाविमौ। तदेताभ्यामवाप्तं स्याल्लोकद्वयजयात्फलम् ॥ १७४
तद्यावदस्मिन्ननले नात्मानं क्षिपतः क्षणम्। तावत्किं नोपसृत्यैते वारयामः समातृके ॥ १७५
एवं देव्या सहालोच्य राजावोचदुपेत्य ताः। मा कार्ष्ट साहसं दुःखं शमयिष्याम्यहं हि वः ॥ १७६
श्रुत्वैतच्छ्रोत्रपीयूषवर्षाभं भूपतेर्वचः। दृष्ट्वा च तं ताः सकलाः प्रणेमुरसुराङ्गनाः ॥ १७७
पश्यन्त्योऽपि वयं पूर्वं मायाच्छन्ना न लक्षिताः। लोकद्वयेश्वरेणेह दृष्टाः स्मोऽद्य पुनस्त्वया ॥ १७८
त्वद्दृष्टानां च दुःखान्तो भवत्येवाचिरेण नः। किं पुनः स्वगिरा दत्ते देवेनाभ्यर्थिते वरे ॥ १७९
तद्गृहीतार्घ्यपाद्यादि कृतासनपरिग्रहाः। भवन्तो हि जगत्पूज्या अयं चास्माकमाश्रमः ॥ १८०
इति स्वयंप्रभामुक्तवतीमाह हसन्नृपः। जामातृभ्यां त्वयैताभ्यां पाद्यार्घ्यं दीयतामिति ॥ १८१
ततः स्वयंप्रभावादीत्तदेताभ्यां वृषध्वजः। देवो दापयितार्घादि युष्माभिस्तद्य गृह्यताम् ॥ १८२
मेरुध्वजो जगादाथ सर्वमात्तमिदं मया। यूयं च मरणोद्योगान्निवर्तध्वमितोऽधुना ॥ १८३
प्रविश्य तिष्ठतैकस्मिन्स्वपुरे सर्वकामदे। ततोऽहमेव ज्ञास्यामि यथा वः कुशलं भवेत् ॥ १८४
इत्युक्तवन्तं राजानं सा जगाद स्वयंप्रभा। देवादेशान्निवृत्ताः स्मः शरीरत्यागनिश्चयात् ॥ १८५
कारास्थे तु प्रभौ युक्ता कथं नः स्वगृहस्थितिः। तदिहैव वयं तावत्तिष्ठामो देव संप्रति ॥ १८६
यावद्देवः स्वयं दत्तं वरं नः पालयिष्यति। ससुतामात्यमस्माकं मोचयिष्यति च प्रभुम् ॥ १८७
मुक्तस्त्वदधिकारी सन्स च राज्यं करिष्यति। अर्पयिष्यति राज्यं च तुभ्यमेव त्वदिच्छया ॥ १८८
समयप्रतिबन्धं च स करिष्यति तादृशम्। अन्तरस्था वयं चात्र सह पातालवासिभिः ॥ १८९
पातालेभ्योऽस्मदीयानि रत्नानि स्वीकुरुष्व च। एवमुक्तवतीं तां स राजा मेरुध्वजोऽब्रवीत् ॥ १९०

विज्ञास्याम्यहमेवैतत्स्मर्तव्यं स्ववचस्तु वः । इत्युक्त्वा स नृपः स्नात्वा हाटकेशमपूजयत् ॥ १९१
दैत्यराजसुते ते च तयोरेवं स्वदृष्टयोः । तत्पुत्रयोस्तदेकाग्रगतचित्ते बभूवतुः ॥ १९२

अथ स रसातलनिलयैर्निखिलैस्त्रैलोक्यमालिनो मुक्तिम् ।
प्रणिपत्य याच्यमानो राजा मेरुध्वजः सुकृती ॥ १९३

छत्रैः स्वयशःशुभ्रैः स्थगयन्नाशाः सदारसुतभृत्यः ।
निर्गत्यासुरलोकात्तस्मादागान्निजं नगरम् ॥ १९४

तत्रास्य पुत्रो मलयध्वजस्तां कनीयसीं दानवराजपुत्रीम् ।
ध्यायन्ननिद्रोऽपि निमीलिताक्षः स्मरज्वरार्तो रजनीं निनाय ॥ १९५

स धैर्यजलधिस्तु तामपि विचिन्त्य मुक्ताफल-
ध्वजोऽसुरपतेः सुतां दृढनिबद्धभावां युवा ।
मुनीन्द्रमनसामपि स्मरविकारदां ज्यायसीं
पुरार्थितवरो मुनेर्न खलु चुक्षुभे चेतसा ॥ १९६

मेरुध्वजस्तु तमवेत्य सुतं निषिद्धदारक्रियं स्मरवशं मलयध्वजं च ।
कन्याप्रदानविमुखं च महासुरं तमासीदुपायघटनाकुलचित्तवृत्तिः ॥ १९७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके पञ्चमस्तरङ्गः ।

---

षष्ठस्तरङ्गः ।

ततो मेरुध्वजो राजा तं तथा मलयध्वजम् । पश्यन्स्मरज्वराक्रान्तं देवीं स्वामेवमब्रवीत् ॥ १
पातालदृष्टे त्रैलोक्यमालिनस्ते सुते न चेत् । भार्ये मत्पुत्रयोः स्यातां तन्मया किं कृतं भवेत् ॥ २
तयोः कनिष्ठां च विना पुत्रो मे मलयध्वजः । लज्जानिगूढकामाग्निः पुटपाकेन पच्यते ॥ ३
तदर्थं च मयाद्यापि मोक्षस्त्रैलोक्यमालिनः । प्रतिश्रुतोऽपि तत्पक्ष्यै सत्वरं न विधीयते ॥ ४
बन्धमुक्तो दुहितरावसुरत्वाभिमानतः । पुत्राभ्यां मानुषाभ्यां मे स दद्यान्नहि जातुचित् ॥ ५
तदेतमर्थं सान्त्वेन ब्रूमस्तस्याधुना वरम् । इत्यालोच्य समं देव्या स प्रतीहारमादिशत् ॥ ६
श्वेतशैलगुहां गत्वा प्रीत्या मद्वचनेन तम् । त्रैलोक्यमालिनं ब्रूहि दैत्येन्द्रं संयतस्थितम् ॥ ७
दैवयोगादिह क्लिष्टा यूयं दैत्यपते चिरम् । तदिदानीं मम वचः कृत्वा क्लेशं शमं नय ॥ ८
देहि दृष्ट्यानुरागिण्यौ मत्सुताभ्यां स्वकन्यके । इतो मुक्तः स्वराज्यं च विहितप्रत्ययः कुरु ॥ ९
इत्युक्त्वा प्रेषितो राज्ञा गत्वा तत्र गुहान्तरे । दैत्येन्द्रायाब्रवीत्तस्मै क्षत्ता राजवचः स तत् ॥ १०
मानुषाभ्यामहं कन्ये न दास्यामीति तेन च । प्रत्युक्तः स तथैवेत्य क्षत्ता राजानमभ्यधात् ॥ ११
अथोपायं विचिन्वाने तस्मिन्मेरुध्वजे नृपे । दिवसेषु च यातेषु विज्ञाततदुदन्तया ॥ १२
पातालात्प्रेषिता भूयः सा स्वयंप्रभया तया । आगादिन्दुमती तत्र दूती संदेशहारिणी ॥ १३
सा चागत्य प्रतीहार्या मुखेनावेदितात्मका । प्रविवेश महादेव्या निकटं तत्कृतादरा ॥ १४
प्रणिपत्याब्रवीत्तां च देवि देवी स्वयंप्रभा । विज्ञापयति किं वस्तद्विस्मृतं वचनं निजम् ॥ १५
अब्धयः कुलशैलाश्च भवन्ति प्रलयेऽन्यथा । भवादृशां तु वचनं न तदाप्यन्यथा भवेत् ॥ १६
यद्यप्युपगतं नास्मत्स्वामिना कन्यकार्पणम् । तत्स बद्धो दुहितरौ कथं दद्यादुपायनम् ॥ १७
औचित्येनोपकाराय युष्माभिश्चेत्स मुच्यते । तन्निश्चितं सुतादानात्कुर्याद्वः प्रत्युपक्रियाम् ॥ १८
सकन्यापि त्यजेत्प्राणानन्यथा सा स्वयंप्रभा । तेन न स्यात्सुताप्राप्तिर्न च वः सत्यपालनम् ॥ १९
तत्कुरुष्व तथा देवि समयप्रत्ययादिना । यथा राजा विमुञ्चेत्तं प्रभुं नः सर्वसिद्धये ॥ २०
स्वयंप्रभाविसृष्टं च गृहाणेदं विभूषणम् । दिव्यैस्तैस्तैश्चितं रत्नैः खेचरत्वादिदायिभिः ॥ २१
एवमुक्तवतीमिन्दुमतीं राज्ञी जगाद सा । दुःखितायाः कथं तस्या मयैतद्गृह्यतामिति ॥ २२

अगृहीते त्वयैतस्मिन्नस्माकमधृतिर्भवेत् । गृहीते तु निजं दुःखं शान्तं मन्यामहे वयम् ॥ २३
इतीन्दुमत्या राज्ञी सा तया यत्नेन बोधिता । आश्वासहेतोस्तस्यास्तद्रत्नाभरणमग्रहीत् ॥ २४
इहैव तावत्तिष्ठार्ये राजा यावदुपैष्यति । इत्युक्त्वा तां च तत्रैव राज्ञी स्थापयति स्म सा ॥ २५
तावत्स राजा तत्रागादुत्थायेन्दुमती च सा । राज्ञीनिवेदिता भूपं प्रणनाम तदादृता ॥ २६
स्वयंप्रभावितीर्णं च चूडारत्नं समर्पयत् । विषरक्षोजरारोगहरं तस्मै नृपाय सा ॥ २७
स्वसत्यमनुपाल्यैतद्ग्रहीष्यामीति वादिनम् । नृपमिन्दुमती सा तमेवं प्रौढा व्यजिज्ञपत् ॥ २८
देवेन प्रतिपन्नं चेत्सत्यं पालितमेव तत् । अस्मिन्गृहीते त्वस्माकमाश्वासः सुतरां भवेत् ॥ २९
एवं तयोक्ते साधूक्तमित्युक्त्वैवास्य भूपतेः । चूडारत्नं तदादाय राज्ञी मूर्ध्नि बबन्ध सा ॥ ३०
ततः स्वयंप्रभावाक्यं यथा राज्ञ्यै निवेदितम् । तथा शशंस सा राज्ञे तस्मायिन्दुमती पुनः ॥ ३१
ततो राज्ञ्या तथैवोक्तोऽवादीदिन्दुमतीं नृपः । इहैवाद्य प्रतीक्षस्व प्रातर्वक्ष्याम्यहं तव ॥ ३२
इत्युक्त्वा तां निशां नीत्वा प्रातराहूय मन्त्रिणः । स तामिन्दुमतीमेवं राजा मेरुध्वजोऽब्रवीत् ॥ ३३
एभिर्मन्मन्त्रिभिः साकं राज्ञे त्रैलोक्यमालिने । आवेद्य गत्वा पातालादानयासुरयोषितः ॥ ३४
स्वयंप्रभाद्याः सर्वांश्च मुख्यान्पातालवासिनः । हाटकेश्वरसंबन्धि मुद्रितं कोषवारि च ॥ ३५
अस्मद्वशे वर्तितव्यं नित्यं त्रैलोक्यमालिना । सभृत्यबन्धुना भाव्यं नागैश्वासस्यघातिभिः ॥ ३६
अत्रार्थे भर्तृचरणान्स्पृष्ट्वा मन्मन्त्रिसंनिधौ । स्वयंप्रभाद्याः शपथैरन्तरस्था भवन्तु नः ॥ ३७
पातालवासिनः सन्तु तद्व्रतप्रतिभुवोऽखिलाः । अपत्यानि च सर्वेऽपि स्थापयन्तु सराजकाः ॥ ३८
सराजकाश्च लिखितं कुर्वन्तु निखिला अपि । हाटकेश्वरसर्वाङ्गवारिकोषं पिबन्तु च ॥ ३९
ततो मोक्ष्याम्यहं कारागृहात्त्रैलोक्यमालिनम् । इत्युक्त्वेन्दुमतीं राजा सामात्यां विससर्ज सः ॥ ४०
सा गत्वा मन्त्रिसहितां प्रोच्य त्रैलोक्यमालिने । तच्छ्रद्धिता तथैवेन्दुमती पातालमाविशत् ॥ ४१
स्वयंप्रभादीनानीय कोपवारि च सा ततः । राजोक्तं तदमात्याग्रे सर्वान्सर्वमकारयत् ॥ ४२
विहितप्रत्ययं तं च मुमोच सपरिच्छदम् । त्रैलोक्यमालिनं मेरुध्वजः कारागृहान्नृपः ॥ ४३
आनीय च गृहं सम्यक्संमान्य सपरिग्रहम् । स्वीकृतासुररत्नौघः स्वराज्ये विससर्ज तम् ॥ ४४
सोऽपि त्रैलोक्यमाली स्वं पुनरेत्य रसातलम् । प्राप्तराज्यो ननन्द स्वैः सहितो भृत्यबान्धवैः ॥ ४५
मेरुध्वजश्च पातालप्रभवैरर्थसंचयैः । पृथिवीं पूरयामास प्रावृड्घन इवाम्बुभिः ॥ ४६
अथ त्रैलोक्यमाली स संमन्त्र्य निजभार्यया । कन्यारत्नद्वयं दित्सुस्तत्सुताभ्यां स्ववेश्मनि ॥ ४७
नृपं मेरुध्वजं नेतुं तं निमन्त्र्य सबान्धवम् । स्मृतोपकारो दैत्येन्द्रः पातालात्स्वयमाययौ ॥ ४८
आगत्य तं च राजानं कृतातिथ्यमुवाच सः । युष्माभिर्नातिनिर्वृत्या तदा दृष्टं रसातलम् ॥ ४९
परिचर्यापरेष्वस्मास्विदानीमेत्य दृश्यताम् । कन्यारत्ने मदीये च गृह्येतां सुतयोः कृते ॥ ५०
इत्युक्तेऽसुरराजेन तेन मेरुध्वजोऽथ सः । तत्रैवानाययामास भार्यां पुत्रौ च तावुभौ ॥ ५१
तेभ्योऽसुरेन्द्रवाक्यं तत्कन्यादानान्तमब्रवीत् । ततो जगाद तं ज्येष्ठः पुत्रो मुक्ताफलध्वजः ॥ ५२
विवाहं न करिष्येऽहमनाराधितशंकरः । उक्तं मया प्राक्क्षन्तव्यमेतस्मान्मेऽपराधतः ॥ ५३
मयि प्रयाते भवनं करोतु मलयध्वजः । विना पातालकन्यां तां नास्त्येवास्य हि निर्वृतिः ॥ ५४
तच्छ्रुत्वा स कनीयांस्तमवादीन्न त्वयि स्थिते । अयशस्यमधर्म्यं च करोम्यार्याहमीदृशम् ॥ ५५
ततो मेरुध्वजे राज्ञि प्रयत्नाद्बोधयत्यपि । मुक्ताफलध्वजो नैच्छत्स्वविवाहक्रियां यदा ॥ ५६
तदा त्रैलोक्यमाली तं खिन्नमामन्त्र्य भूपतिम् । ययौ स्वमेव पातालं सानुगः स यथागतम् ॥ ५७
तत्र वृत्तान्तमावेद्य भार्यां पुत्रं च सोऽभ्यधात् । न्यक्कारैकपरोऽस्माकं कीदृशः पश्यतं विधिः ॥ ५८
मानुषौ नाद्य गृह्णीतः कन्ये मे प्रार्थितावपि । पूर्वं ये प्रार्थिते ताभ्यां दातुं नाङ्गीकृते मया ॥ ५९
तच्छ्रुत्वा तौ जगदतुः को जानाति कथं विधेः । चेतस्येतत्स्थितं किं हि शांभवं स्याद्वचोऽन्यथा ॥ ६०
इत्यादि तेषां वदतां बुद्ध्वा ते तत्र चक्रतुः । कन्ये प्रतिज्ञां त्रैलोक्यप्रभात्रिभुवनप्रभे ॥ ६१

द्वादशाहं निराहारस्थितयोरावयोर्यदि । देवो विवाहसंपत्तिप्रसादं न करिष्यति ॥ ६२
ततश्च कार्यमावाभ्यां सहैवाग्निप्रवेशनम् । न तु धार्यं निकारार्थं वृत्त्यर्थं वा शरीरकम् ॥ ६३
एवं नियम्य देवस्य पुरतस्तस्थतुश्च ते। निराहारे जपध्यानपरे दैत्येन्द्रकन्यके ॥ ६४
तद्बुद्ध्वा च तयोर्माता पिता च दितिजेश्वरः । तथैवात्र निराहारावास्तां दुहितृवत्सलौ ॥ ६५
ततः स्वयंप्रभा सा तां तन्मातेन्दुमतीं पुनः । मेरुध्वजमहादेव्यै वक्तुं तत्पाह्विणोद्रुतम् ॥ ६६
तया गत्वा तदाख्यातं स्वस्वामिगृहसंकटम् । राज्ञ्यै तस्यै विवेदाथ राजा मेरुध्वजोऽपि तत् ॥ ६७
ततस्तदनुरोधात्तौ जहतुस्तत्र दंपती । आहारं तौ च तत्पुत्रौ पितृभक्त्यनुरोधिनौ ॥ ६८
एवं लोकद्वये राजगृहयोः संकटस्थयोः । मुक्ताफलध्वजोऽनश्नन्ध्यातवाञ्शरणं शिवम् ॥ ६९
षड्रात्रे च गते राजपुत्रः प्रातः प्रबुध्य सः । पूर्वं संयतकं मित्रं महाबुद्धिमभाषत ॥ ७०
सखे स्वप्नेऽद्य जानेऽहमारूढो वाहने निजे । तपोधनमुनिप्रत्ते कामरूपे मनोगतौ ॥ ७१
विमानतामुपगते निर्वेदान्मेरुपार्श्वगम् । गौरीशायतनं दिव्यमतिदूरमितो गतः ॥ ७२
तत्रापश्यमहं कांचिद्दिव्यकन्यां तपःकृशाम् । तामुद्दिश्याब्रवीन्मां च जटाभृत्पुरुषो हसन् ॥ ७३
एकस्याः कन्यकायास्त्वं पलाय्यैवमिहागतः । इहैषा च द्वितीया ते संप्राप्ता पश्य तिष्ठति ॥ ७४
तदाकर्ण्य वचस्तस्य तत्कन्यारूपदर्शने । अतृप्त एव सहसा प्रबुद्धोऽस्मि निशाक्षये ॥ ७५
तस्मात्तत्रैव गच्छामि प्राप्तुं तां दिव्यकन्यकाम् । प्राप्स्यामि चेन्न तां तत्र प्रवेक्ष्यामि हुताशनम् ॥ ७६
तां तथोपनतां हित्वा दैत्यकन्यां मनो मम । रज्यते स्वप्नदृष्टायामस्यां किं क्रियते विधेः ॥ ७७
जाने च तत्र यातस्य निश्चितं शुभमस्ति मे । इत्युक्त्वा तत्स सस्मार मुनिदत्तं स्ववाहनम् ॥ ७८
तदारुह्य विमानत्वं प्राप्तं सख्या समं च सः । मनःसंकल्पितस्थानप्रापकं कामरूपकृत् ॥ ७९
मुक्ताफलध्वजः प्रायाद्दिव्यं गौरीशधाम तत् । प्राप्य तच्च यथा स्वप्ने दृष्टं पश्यञ्जहर्ष सः ॥ ८०
ततः प्रववृते तत्र स सिद्धोदकनामनि । तीर्थे स्नानादिकं कर्तुं सख्येकपरिचारकः ॥ ८१
तावत्तं क्वाप्यविज्ञातगतं बुद्ध्वा स तत्पिता । राजा मेरुध्वजो भार्यासुतादिसहितस्तदा ॥ ८२
उपवासकृशो दुःखक्षोभं स्वपुरगो दधौ । तथा तदैव पातालेऽप्येतत्सर्वमबुध्यत ॥ ८३
ततस्त्रैलोक्यमाली स गृहीत्वा ते स्वकन्यके । सोपवासः सभार्यादिस्तत्रैवागान्नृपान्तिकम् ॥ ८४
चतुर्दश्यां गतः सोऽद्य नूनं क्वाप्यर्चितुं हरम् । तत्प्रतीक्षामहे तावदिहैवैतद्दिनं वयम् ॥ ८५
प्रातर्यत्र स तत्रैव यास्यामो नागतो यदि । ततो यद्भवतीत्येव सर्वे ते निश्चयं व्यधुः ॥ ८६
अत्रान्तरे मेघवने तस्मिन्गौर्याश्रमे स्थिता । सापि पद्मावती तस्मिन्दिनेऽवादीन्निजाः सखीः ॥ ८७
सख्यः स्वप्नेऽद्य जाने मां सिद्धीश्वरगतां पुमान् । जटाधरोऽब्रवीत्कोऽपि देवागाराद्विनिर्गतः ॥ ८८
दुःखं समाप्तमासन्नो भर्त्रा ते पुत्रि संगमः । इत्येवोक्त्वा गतेऽस्मिन्मे गते निद्रानिशे अपि ॥ ८९
तदेत तत्र गच्छाम इत्युक्त्वा सा जगाम तत् । मेरुपार्श्वस्थितं पद्मावती गौरीशकेतनम् ॥ ९०
तत्र सिद्धोदके स्नान्तं दूरान्मुक्ताफलध्वजम् । दृष्ट्वा सविस्मया सा तं स्वसखीरेवमब्रवीत् ॥ ९१
सदृशो मे प्रियस्यायं पुमान्पश्यत कीदृशः । आश्चर्यं किं स एव स्यान्नास्त्येतन्मानुषो ह्ययम् ॥ ९२
तच्छ्रुत्वा तं च दृष्ट्वा ताः सख्यस्तामेवमब्रुवन् । न केवलं सुसदृशो देव्ययं प्रेयसस्तव ॥ ९३
यावदेतद्वयस्योऽयं त्वत्कान्तसुहृदः किल । तस्य संयतकस्यापि पश्य सादृश्यमश्नुते ॥ ९४
यत्त्वया वर्णितं देवि यथाद्य स्वप्नदर्शनम् । तथा जानीमहे व्यक्तं शापान्मानुषतां गतौ ॥ ९५
तावेवैताविहानीतावीश्वरेण स्वयुक्तितः । मानुषागमनं देवभूमावस्यां कुतोऽन्यथा ॥ ९६
एवं सखीभिरुक्ता सा पद्मावत्यर्चितेश्वरा । तस्थौ देवान्तिके छन्ना तं जिज्ञासितुमुत्सुका ॥ ९७
तावत्स्नात्वार्चितुं देवं तत्र मुक्ताफलध्वजः । आगतः सर्वतो वीक्ष्य महाबुद्धिमुवाच तम् ॥ ९८
तदेवायतनं चित्रमिदं स्वप्ने यदीक्षितम् । लिङ्गान्तर्दृश्यगौरीशमूर्ति रत्नमयं मया ॥ ९९
तानेव चैतान्पश्यामि स्वप्नदृष्टानिहाधुना । प्रदेशान्दिव्यविहगस्फुरद्रत्नप्रभद्रुमान् ॥ १००

तत्कालदृष्टां दिव्यां तु कन्यां पश्यामि नेह ताम्। अप्राप्तया तया चेह देहं त्यक्ष्यामि निश्चितम्॥ १०१
इत्युक्ते तेन सख्यस्तामूचुः पद्मावतीं रहः। शृणु नूनमिह स्वप्ने दृष्ट्वा त्वामयमागतः॥ १०२
त्वद्दर्शनेनैव विना त्यक्तुं प्राणान्समीहते। तन्निगूढस्थिता एव पश्यामो देवि निश्चयम्॥ १०३
इति च्छन्नासु तास्वत्र स्थितास्वन्तः प्रविश्य सः। मुक्ताफलध्वजो देवमर्चयित्वा विनिर्ययौ॥ १०४
निर्गत्य यावत्कुरुते भक्तितस्त्रिः प्रदक्षिणम्। तावत्स च सखा चास्य जातिं सस्मरतुर्निजाम्॥ १०५
हर्षाच्च पूर्ववृत्तान्तं यावदन्योन्यमाहतुः। तावत्पद्मावती दृष्टिगोचरं सा ययौ तयोः॥ १०६
मुक्ताफलध्वजः पूर्वजन्मवृत्तं स्मरंश्च सः। तां दृष्ट्वैव तमाह स्म वयस्यं हर्षनिर्भरः॥ १०७
दृष्टा सेयमिह स्वप्ने देवी पद्मावती मया। दिष्ट्या प्राप्ता च तदिमामाशु संभावयाम्यहम्॥ १०८
इत्युक्त्वोपेत्य साश्रुस्तामवोचद्देवि माधुना। क्वापि यासीरहं मुक्ताफलकेतुः स ते प्रियः॥ १०९
दृढव्रतस्य शापेन मानुषीभूय संस्मृता। जातिर्मयाद्येत्युक्त्वा तामैच्छदाश्लेष्टुमुत्सुकः॥ ११०
सा तूद्भ्रान्ता तिरोभूय तत्रासीत्साश्रुलोचना। सोऽपि राजसुतोऽपश्यंस्तां मोहादपतद्भुवि॥ १११
ततः सदुःखमाकाशे तद्वयस्यो जगाद सः। यदर्थं स तपःक्लेशो देवि पद्मावति त्वया॥ ११२
अनुभूतः कथं प्राप्तं तमेवं नाभिभाषसे। अहं संयतकः सोऽपि वयस्यो दयितस्य ते॥ ११३
तद्युष्मदर्थं शप्तस्य किं मे नालपसि प्रियम्। इत्युक्त्वा स समाश्वास्य तमुवाच नृपात्मजम्॥ ११४
तथानुरागोपगता दैत्यराजसुता त्वया। यत्त्यक्ता तस्य पापस्य तवागतमिदं फलम्॥ ११५
तच्छ्रुत्वा सा सखीराह च्छन्ना पद्मावती तदा। शृणुतासुरकन्यासु न किलायं प्रवर्तते॥ ११६
ततः सख्योऽपि तामूचुः सर्वं संवादि दृश्यते। किं न स्मरसि यत्तेन शापकाले प्रियेण ते॥ ११७
मानुष्ये मे मनोऽन्यत्र मा गात्पद्मावतीं विना। इत्यर्थितो वरस्तस्मान्मुनेः पूर्वं तपोधनात्॥ ११८
तत्प्रभावादयं नूनमन्यस्त्रीषु न रज्यते। श्रुत्वैतद्राजपुत्री सा संजज्ञे संशयाकुला॥ ११९
मुक्ताफलध्वजः सोऽपि दृष्टनष्टप्रियस्ततः। चक्रन्द हा प्रिये पद्मावति किं नैतदीक्षसे॥ १२०
विद्याधरत्वे यत्प्राप्तः शापो मेघवने मया। त्वदर्थमिह चाद्याहं मृत्युं प्राप्स्याम्यसंशयम्॥ १२१
इत्यादि क्रन्दितं तस्य श्रुत्वा पद्मावती सखीः। प्राह सर्वाणि संवादीन्यभिज्ञानानि यद्यपि॥ १२२
तथापि पारम्पर्येण श्रुतान्येतानि जातुचित्। आभ्यां भवेयुरिति मे न चेतोऽभ्येति निश्चयम्॥ १२३
तन्नार्तमस्य शक्नोमि वचः श्रोतुं व्रजाम्यहम्। तद्गौर्यायतनं तावत्पूजाकालश्च तत्र मे॥ १२४
इत्युक्त्वा ससखीका सा पद्मावत्यम्बिकाश्रमम्। तज्जगामार्चयित्वा च देवीमेवं व्यजिज्ञपत्॥ १२५
स सिद्धीश्वरदृष्टश्चेत्सत्यं पूर्वप्रियो मम। तत्तथा कुरु येन स्याच्छीघ्रमेतेन संगमः॥ १२६
इति पद्मावती यावत्साकाङ्क्षा तत्र तिष्ठति। मुक्ताफलध्वजस्तावत्सोऽपि सिद्धीश्वरे स्थितः॥ १२७
पूर्वं संयतकं मित्रं महाबुद्धिमुवाच तम्। जाने सा स्वास्पदं याता तद्गौर्यायतनं सखे॥ १२८
तदेहि यावत्तत्रैवेत्युक्त्वारुह्य मनोगतौ। तस्मिन्विमाने सोऽप्यागादम्बिकाश्रममेव तत्॥ १२९
दूराद्दृष्ट्वावतीर्णं तं विमानेन नभस्तलात्। सख्यः पद्मावतीमूचुर्देवि पश्येदमद्भुतम्॥ १३०
स इहाप्येष दिव्येन विमानेनागतः किल। मानुषस्यापि दिव्योऽस्य प्रभावः कथमीदृशः॥ १३१
ततः पद्मावती स्माह सख्यः स्मरथ किं न तत्। यत्स शापप्रदातास्य मया शप्तो दृढव्रतः॥ १३२
मानुषत्वेऽवतीर्णस्य वाहनं कामरूपभृत्। इच्छानुगतमस्यैव भविष्यति भवानिति॥ १३३
तत्तेन मुनिशिष्येण वाहनेनैष निश्चितम्। विमानरूपं दधता स्वेच्छं भ्रमति सर्वतः॥ १३४
एवं तयोक्ते सख्यस्तामूचुरेवमवैषि चेत्। तन्न संभावयस्येतं कस्माद्देवि किमीक्षसे॥ १३५
एतत्सखीवचः श्रुत्वा पद्मावत्यवदत्पुनः। एवं संभाव्यते सख्यो निश्चयोऽद्यापि नास्ति मे॥ १३६
सत्यं स एव यदि वा भवत्येष तथापि मे। अभिगम्योऽन्यदेहस्थः स्वदेहानाश्रितः कथम्॥ १३७
तच्छन्ना एव पश्यामस्तावदस्येह चेष्टितम्। इत्युक्त्वा राजपुत्री सा छन्नैवासीत्सखीवृता॥ १३८
तावत्तत्रावतीर्यैव विमानादम्बिकाश्रमे। मुक्ताफलध्वजः सोत्को वयस्यं तमुवाच सः॥ १३९

अमुत्र राक्षसीत्रस्ता पूर्वं संभाविता मया । स्वयंवरागता चेह दृष्टोद्यानान्तरे पुनः ॥ १४०
इह चावाप्तशापं मामनुसर्तुमनास्तदा । प्रिया पद्मावती कृच्छ्रान्मुनीन्द्रेण निवर्तिता ॥ १४१
सैवाद्य पश्य मे मित्र दृष्टिमार्गात्पलायते । एतत्तस्य वचः श्रुत्वा पद्मावत्यब्रवीत्सखीः ॥ १४२
सत्यं सख्यः स एवायं पूर्वदेहमनाश्रितम् । कथं तूपैम्यमुं तन्मे सोऽत्र सिद्धीश्वरो गतिः ॥ १४३
तेनैव दत्तः स्वप्नो मे स एव च करिष्यति । उपायमिति निश्चित्य सागात्सिद्धीश्वरं पुनः ॥ १४४
पूर्वदेहस्थितेनैव प्रियेण मम संगमम् । कुरु वा देहि वा मृत्युं तृतीया न गतिर्मम ॥ १४५
इति विज्ञापयामास सा तमभ्यर्च्य धूर्जटिम् । ससखीका च तत्रैव तस्थौ देवकुलाङ्गने ॥ १४६
तावद्गौर्याश्रमे तत्र तां स मुक्ताफलध्वजः । अन्विष्याप्राप्य चोद्विग्नस्तमवादीद्वयस्यकम् ॥ १४७
इतः प्राप्ता न सा यावो धाम तच्छांभवं पुनः । ततोऽपि चेन्न लप्स्ये तां प्रवेक्ष्याम्यग्निमेव तत् ॥ १४८
तच्छ्रुत्वा स सखावोचद्भावि कल्याणमेव ते । न मृषा स्यान्मुनिवचः स्वप्नादेशश्च शांभवः ॥ १४९
इत्याश्वासयता तेन सख्या मुक्ताफलध्वजः । सह सिद्धीश्वरं प्रायाद्विमानमधिरुह्य सः ॥ १५०
प्राप्तं दृष्ट्वात्र तं पद्मावती तस्थावलक्षिता । पश्यतेहैव संप्राप्त इति चोवाच सा सखीः ॥ १५१
सोऽपि प्रविश्य देवाग्रं दृष्ट्वा प्रत्यग्रपूजितम् । मुक्ताफलध्वजो देवं वयस्यं तमभाषत ॥ १५२
सखे केनापि पश्यायमधुनैवार्चितो विभुः । नूनं सैव प्रिया मेऽत्र स्थिता क्वाप्यर्चितस्तया ॥ १५३
इत्युक्त्वा सोऽत्र चिन्वानो यदा न प्राप तां तदा । चक्रन्द हा प्रिये पद्मावतीति विरही मुहुः ॥ १५४
पिकीरुते तदालापबुद्ध्या तत्कबरीधिया । बर्हिबर्हे सरसिजे तन्मुखभ्रान्तितस्तथा ॥ १५५
धावन्स्मरज्वरावेशविवशस्तेन कृच्छ्रतः । आश्वास्य जगदे सख्या राजपुत्रोऽनुनीय सः ॥ १५६
बहूपवासक्लान्तेन किमारब्धमिदं त्वया । जितभूलोकपातालं किमात्मानमुपेक्षसे ॥ १५७
त्वय्यन्तिकमनायाते पिता मेरुध्वजस्तव । राजा त्रैलोक्यमाली च श्वशुरो दानवेश्वरः ॥ १५८
त्वदर्थिनी च त्रैलोक्यप्रभा सापि तदात्मजा । माता च ते विनयवत्यनुजो मलयध्वजः ॥ १५९
अनिष्टाशङ्किनः सर्वे सोपवासा जहत्यसून् । तदेहि तावद्गत्वा तान्रक्षावोऽवसितं ह्यहः ॥ १६०
इति तं वादिनं प्राह मित्रं मुक्ताफलध्वजः । त्वमेव मद्विमानेन गत्वाश्वासय तानिति ॥ १६१
ततस्तं स सखावोचत्स ममोपनमेत्कथम् । शापेन मुनिशिष्यो यस्तव वाहनतां गतः ॥ १६२
इत्युक्तवन्तं सुहृदं राजपुत्रोऽब्रवीत्स तम् । तर्हि तिष्ठ सखे तावत्पश्यावः किं भवेदिह ॥ १६३
एवं श्रुत्वा तदालापं पद्मावत्यवदत्सखीः । जानेऽभिज्ञानसंवादैः स पूर्वप्रिय एष मे ॥ १६४
कामं मानुषदेहस्थः शापेनैवं कदर्थ्यते । सिद्धकन्योपहासाच्च शापदोषो ममाप्ययम् ॥ १६५
इति यावच्च सा वक्ति तावदालोहितच्छविः । वियोगिवनदावाग्निरुदगान्मृगलाञ्छनः ॥ १६६
पूरयामास च शनैर्जगज्ज्योत्स्ना समन्ततः । कंदर्पदहनज्वाला तं च मुक्ताफलध्वजम् ॥ १६७
ततस्तत्कालचक्राह्व इव क्रन्दन्नृपात्मजः । छन्नस्थयैव जगदे पद्मावत्या स विप्रया ॥ १६८
राजपुत्र स एव त्वं यदि मे पूर्ववल्लभः । तथाप्यन्यशरीरस्थो ममासि परपूरुषः ॥ १६९
अहं ते परदाराश्च तदाक्रन्दसि किं मुहुः । उपायो भवितावश्यं सत्यं चेत्तन्मुनेर्वचः ॥ १७०
एतच्छ्रुत्वा वचस्तस्यास्तामपश्यंश्च सोऽभ्यगात् । मुक्ताफलध्वजो हर्षविषादविषमां दशाम् ॥ १७१
जगाद च मया देवि स्मृतप्राक्तनजन्मना । दृष्ट्वा त्वं प्रत्यभिज्ञाता स्वामेव दधती तनुम् ॥ १७२
त्वं तु वैद्याधरे देहे वर्तमानं विलोक्य माम् । अधुना परिजानीषे मर्त्यदेहगतं कथम् ॥ १७३
तदवश्यं मया त्याज्यमिदं हतशरीरकम् । इत्युक्त्वा सोऽभवत्तूष्णीं छन्नासीत्सापि तत्प्रिया ॥ १७४
ततो भूयिष्ठयातायां रात्रौ निद्रागते श्रमात् । पूर्वसंयतके तस्मिन्महाबुद्धौ वयस्यके ॥ १७५
अप्राप्यां तेन देहेन जानन्पद्मावतीं स ताम् । मुक्ताफलध्वजो दारूण्याहृत्याग्निमदीपयत् ॥ १७६
भगवंस्त्वत्प्रसादेन प्राक्तनीं तां तनुं श्रितः । प्राप्यासमचिरेणैव प्रियां पद्मावतीमहम् ॥ १७७
इति ब्रुवन्प्रणम्यैव लिङ्गमूर्तिं स शंकरम् । जुहाव ज्वलिते तस्मिन्नग्नौ राजसुतस्तनुम् ॥ १७८

तावत्प्रबुद्धः स महाबुद्धिर्मुक्ताफलध्वजम् । तमपश्यन्विचित्यापि पश्यन्नग्निमुदर्चिषम् ॥ १७९
विचिन्त्य तं हुतात्मानं वयस्यं विरहाकुलम् । अग्नौ तत्रैव तच्छोकात्सोऽप्यात्मानमपातयत् ॥ १८०
तद्दृष्ट्वा सापि दुःखार्ता पद्मावत्यब्रवीत्सखीः । धिगहो हृदयं स्त्रीणां कठिनं कुलिशादपि ॥ १८१
पश्यन्त्या वैशसमिदं नोत्क्रान्तं यन्ममासुभिः । तत्कियच्चिरमात्मानमधन्यो धार्यते मया ॥ १८२
नास्ति मेऽद्यापि दुःखान्तो मदपुण्यैर्मुनेरपि । वचस्तस्यान्यथा जातं तच्छ्रेयो मरणं मम ॥ १८३
परपूरुषमध्ये तु प्रवेष्टुमनलेऽत्र मे । न युक्तं तदनायासः पाश एव हि मे गतिः ॥ १८४
इत्युक्त्वा साग्रतः शंभोरुपेत्याशोकपादपे । पाशं विधातुं लतया राजपुत्री प्रचक्रमे ॥ १८५
आशाप्रदर्शिभिर्वाक्यैर्यावत्तां स सखीजनः । वारयत्याययौ तावन्मुनिः सोऽत्र तपोधनः ॥ १८६
मा पुत्रि साहसं न स्यादसत्यं तद्वचो मम । धीरा भवाधुनैवेह प्राप्तं पश्यसि तं प्रियम् ॥ १८७
त्वदीयेनैव तपसा तस्य शापक्षयोऽचिरात् । संवृत्तस्तदनास्थेयं स्वतपस्येव ते कथम् ॥ १८८
प्रत्यासन्ने विवाहे च का तवेयं विषादिता । प्रणिधानादवेत्याहमिदं सर्वमिहागतः ॥ १८९
इति तं व्याहरन्तं च दृष्ट्वा मुनिमुपागतम् । प्रणम्य दोलारूढेव साभूत्पद्मावती क्षणम् ॥ १९०

अथ मर्त्यदेहदाहाद्वैद्याधरमात्मदेहमाश्रित्य ।
सवयस्यो मुक्ताफलकेतुः सोऽत्राययौ प्रियस्तस्याः ॥ १९१

तं वीक्ष्य चातकवधूरिव नूतनाभ्रं राकाशशाङ्कमुदितं च कुमुद्वतीव ।
विद्याधरेन्द्रतनयं गगनागतं सा पद्मावती हृदि दधौ कमपि प्रमोदम् ॥ १९२

स च मुक्ताफलकेतुर्मुमुदे दृष्ट्वैव तामवेक्ष्य पिबन् ॥
चिरमरुभूमिभ्रमणश्रान्तः पान्थो यथा सरितम् ॥ १९३
तौ च शापरजनीक्षयादुभौ चक्रवाकवदवाप्तसंगमौ ।
जग्मतुस्तपनतेजसो मुनेस्तस्य पादपतनेन तृप्तताम् ॥ १९४
यद्युवामिह पुनः समागतौ तीर्णशापमुदितौ स एव मे ।
चेतसोऽद्य परितोष इत्यसावभ्यनन्ददथ तौ महामुनिः ॥ १९५
यातायां निशि चेन्द्रवारणगतस्तत्रैव सोऽप्याययौ
चिन्वन्दारकनिष्ठपुत्रसहितो मेरुध्वजो भूपतिः ।
त्रैलोक्यप्रभया समं तनयया त्रैलोक्यमाली तथा
दैत्यानामधिपो विमानवहनः सान्तःपुरः सानुगः ॥ १९६

ततः स मुक्ताफलकेतुमेतयोः प्रदर्श्य वृत्तान्तमवर्णयन्मुनिः ।
यथा स कार्यार्थमवाप शापतो मनुष्यतां मुक्तिमुपागतस्ततः ॥ १९७
बुद्ध्वा तदग्नौ पतनोन्मुखास्ते मेरुध्वजाद्या मुनिनोपदिष्टम् ।
सिद्धोदकस्नानहरार्चनादि कृत्वा विशोकाः सहसा बभूवुः ॥ १९८

त्रैलोक्यप्रभया पुनरत्र तया जातिमाशु संस्मृत्य ।
समचिन्त्यत सिद्धाधिपकन्या देवप्रभास्मि सा हन्त ॥ १९९
विद्याधराधिनाथः पतिरस्तु ममेति या तपस्यन्ती ।
पद्मावत्युपहसिता प्राविशमनलं स्वकामनासिद्ध्यै ॥ २००
जातास्म्यस्मिंश्च ततो दितिजकुले यत्र चानुरक्तास्मि ।
सोऽप्येष राजपुत्रः प्राप्तो वैद्याधरीं पुनः स्वतनुम् ॥ २०१
न च युज्यतेऽन्यरूपो देहेनानेन समभिगन्तुमयम् ।
तदिमामेतत्प्राप्त्यै तनुं जुहोम्यासुरीं पुनर्ज्वलने ॥

एवं विमृश्य हृदि तच्च निवेद्य पित्रोर्मुक्ताफलध्वजहुताशमनुप्रविष्टाम् । २०२
आदाय तां करुणयार्पितपूर्वदेहामाविर्बभूव हुतभुक्स्वयमब्रवीच्च ॥ २०३

भो मुक्ताफलकेतो त्वामियमुद्दिश्य मयि विमुक्ततनुः ।
तदिमां सिद्धेशसुतां गृहाण देवप्रभां भार्याम् ॥ २०४
इत्येतदुक्त्वैव तिरोहितेऽनले ब्रह्मात्र सेन्द्रैरमरैः सहाययौ ।
गन्धर्वराजः सह चन्द्रकेतुना विद्याधरेन्द्रेण च पद्मशेखरः ॥ २०५
प्रह्वाय सर्वैरभिनन्दिताय तैर्गन्धर्वराड्व्यग्रपरिग्रहस्ततः ।
प्रादात्स मुक्ताफलकेतवे सुतां पद्मावतीं तां विधिवद्विभूतिमान् ॥ २०६
स चात्र विद्याधरराजपुत्रश्चिरोत्सुकस्तां दयितामवाप्य ।
मेने फलं जन्मतरोरवाप्तमुवाह तामप्यथ सिद्धकन्याम् ॥ २०७
स च तया दितिजेश्वरकन्यया विधिवदत्र पितृप्रवितीर्णया ।
नृपसुतः समयुज्यत कान्तया त्रिभुवनप्रभया मलयध्वजः ॥ २०८
ततः कृतित्वादभिषिच्य पुत्रं सद्वीपपृथ्वीवलयैकराज्ये ।
मेरुध्वजः स्वे मलयध्वजं तं वनं सदारस्तपसे जगाम ॥ २०९
त्रैलोक्यमाली सपरिग्रहश्च प्रायात्पदं स्वं दितिजाधिराजः ।
शक्रोऽथ मुक्ताफलकेतवे तां ददौ स विद्युद्ध्वजराज्यलक्ष्मीम् ॥ २१०
मुक्ताफलकेतुरयं भुङ्क्तां विद्याधरासुरैश्वर्यम् ।
स्वपदानि यान्तु च सुरा इत्थं वागुच्चचार दिवः ॥ २११
तामाकर्ण्य ययुस्ततः प्रमुदितास्ते ब्रह्मशक्रादयः
शापान्मुक्तवता तपोधनमुनिः शिष्येण साकं ययौ ।
श्रीमुक्ताफलकेतुना च सहितो भार्याद्वयभ्राजिना
पुत्रेणाथ स चन्द्रकेतुरगमद्वैद्याधरं स्वं पदम् ॥ २१२
भुक्त्वा च तत्र गगनेचरचक्रवर्तिलक्ष्मीं सुतेन सह तेन चिरं स राजा ।
तस्मिन्निवेश्य निजराज्यधुरं विरक्तो देव्या समं मुनितपोवनमाश्रितोऽभूत् ॥ २१३
स च मुक्ताफलकेतुः प्रागिन्द्राद्दसुरराज्यमासाद्य ।
प्राप्य पुनश्च पितुस्तद्विद्याधरचक्रवर्तित्वम् ॥ २१४
पद्मावत्या सहितो दशकल्पान्मूर्तयेव निर्वृत्या ।
भेजे सुसमृद्धोभयसाम्राज्यसुखश्रियं सुकृती ॥ २१५
आलोच्य भावानवसाननीरसान्संश्रित्य चान्ते स मुनीन्द्रकाननम् ।
ज्योतिः परं प्राप्य तपःप्रकर्षतः सायुज्यमीशस्य जगाम धूर्जटेः ॥ २१६
एवं हंसयुगान्निशम्य सरसामेतां कथां तन्मुखा-
ज्ज्ञानं प्राप्य च लब्धदिव्यगतिकः स ब्रह्मदत्तो नृपः ।
तद्भार्यासचिवौ च तौ च विहगौ गत्वैव सिद्धीश्वरं
त्यक्त्वा शापतनूः शिवानुचरतां प्रापुर्निजां तेऽखिलाः ॥ २१७
इत्यहमाकर्ण्य कथां गोमुखतो मदनमञ्चुकाविरहे ।
हे मुनयः क्षणमात्रं धृत्वा चेतो विनोदितवान् ॥ २१८
एवं कथितकथे किल नरवाहनदत्तचक्रवर्तिनि ते ।
गोपालकेन सहिताः परितुतुषुः कश्यपाश्रमे मुनयः ॥ २१९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके षष्ठस्तरङ्गः ।

**समाप्तोऽयं पद्मावतीलम्बकः सप्तदशः ।**

---

॥ श्रीः ॥

# महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## विषमशीलो नामाष्टादशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

### प्रथमस्तरङ्गः ।

चन्द्राननार्धदेहाय चन्द्रांशुसितभूतये । चन्द्रार्कानलनेत्राय चन्द्रार्धशिरसे नमः ॥ १

करेण कुञ्चिताग्रेण लीलयोन्नमितेन यः । भाति सिद्धीरिव ददत्स पायाद्वो गजाननः ॥ २

ततोऽसितगिरौ तत्र कश्यपस्याश्रमे मुनेः । नरवाहनदत्तस्तान्मुनीनेवमभाषत ॥ ३

अन्यच्च देवीविरहे नीत्वाहं सानुरागया । वेगवत्या यदा न्यस्तो विद्याहस्तेऽभिरक्षितुम् ॥ ४

तदा शरीरत्यागैषी विरही परदेशगः । वनान्ते दृष्टवानस्मि भ्रमन्कण्वं महामुनिम् ॥ ५

स मां पादानतं दृष्ट्वा प्रणिधानादवेत्य च । दुःखितं स्वाश्रमं नीत्वा सदयो मुनिरभ्यधात् ॥ ६

सोमवंशोद्भवो वीरो भूत्वा किं नाम मुह्यसि । देवादेशे ध्रुवेऽनास्था का भार्यासंगमे तव ॥ ७

असंभाव्या अपि नृणां भवन्तीह समागमाः । तथा हि विक्रमादित्यकथामाख्यामि ते शृणु ॥ ८

अस्त्यवन्तिषु विख्याता युगादौ विश्वकर्मणा । निर्मितोज्जयिनी नाम पुरारिवसतिः पुरी ॥ ९

सतीव या पराधृष्या पद्मिनीवाश्रिता श्रिया । सतां धीरिव धर्माढ्या पृथ्वीव बहुकौतुका ॥ १०

महेन्द्रादित्य इत्यासीद्राजा तस्यां जगज्जयी । मघवेवामरावत्यां विपक्षबलसूदनः ॥ ११

नानाशस्त्रायुधः शौर्ये रूपे तु कुसुमायुधः । योऽभून्मुक्तकरस्त्यागे बद्धमुष्टिकरस्त्वसौ ॥ १२

तस्य पृथ्वीपतेर्भार्या नाम्नाभूत्सौम्यदर्शना । शचीवेन्द्रस्य गौरीव शंभोः श्रीरिव शार्ङ्गिणः ॥ १३

महामन्त्री च सुमतिर्नाम तस्याभवत्प्रभोः । वज्रायुधाभिधानश्च प्रतीहारः क्रमागतः ॥ १४

तैः समं स नृपः शासद्राज्यमाराधयन्हरम् । नानाव्रतधरः शश्वदभवत्पुत्रकाम्यया ॥ १५

अत्रान्तरे च गीर्वाणगणसंश्रितकंदरे । अन्यदिग्जयसानन्दकौबेरीहाससुन्दरे ॥ १६

स्थितं कैलासशैलेन्द्रे पुरारिं पार्वतीयुतम् । उपाजग्मुः सुराः सेन्द्रा म्लेच्छोपद्रवदुःखिताः ॥ १७

प्रणामानन्तरासीनास्ते कृतस्तुतयोऽमराः । पृष्टागमनकार्यास्ते देवमेवं व्यजिज्ञपन् ॥ १८

ये त्वया देव निहता असुरा ये च विष्णुना । ते जाता म्लेच्छरूपेण पुनरद्य महीतले ॥ १९

व्यापादयन्ति ते विप्रान्घ्नन्ति यज्ञादिकाः क्रियाः । हरन्ति मुनिकन्याश्च पापाः किं किं न कुर्वते ॥ २०

भूलोकाद्देवलोकश्च शश्वदाप्यायते प्रभो । ब्राह्मणैर्हुतमग्नौ हि हविस्तृप्त्यै दिवौकसाम् ॥ २१

म्लेच्छाक्रान्ते च भूलोके निर्वषट्कारमङ्गले । यज्ञभागादिविच्छेदाद्देवलोकोऽवसीदति ॥ २२

तदुपायं कुरुष्वात्र तं कंचिदवतारय । प्रवीरं भूतले यस्तान्म्लेच्छानुत्सादयिष्यति ॥ २३

इति देवैः स विज्ञप्तः पुरारातिरुवाच तान् । यात यूयं न चिन्तात्र कार्या भवत निर्वृताः ॥ २४

अचिरेण करिष्येऽहमत्रोपायमसंशयम् । इत्युक्त्वा व्यसृजद्देवान्स्वधिष्ण्यान्यम्बिकापतिः ॥ २५

गतेषु तेषु चाहूय माल्यवत्संज्ञकं गणम् । सपार्वतीको भगवानेवमादिशति स्म सः ॥ २६
पुत्रावतर मानुष्ये जायस्व च महापुरि । उज्जयिन्यां सुतः शूरो महेन्द्रादित्यभूपतेः ॥ २७
स च राजा ममैवांशस्तद्भार्या चाम्बिकांशजा । तयोर्गृहे समुत्पद्य कुरु कार्यं दिवौकसाम् ॥ २८
म्लेच्छान्व्यापादयाशेषांस्त्रयीधर्मविघातिनः । सप्तद्वीपेश्वरो राजा मत्प्रसादाच्च भाव्यसि ॥ २९
यक्षराक्षसवेताला अपि स्थास्यन्ति ते वशे । भुक्त्वा मानुषभोगांश्च पुनरस्मानुपैष्यसि ॥ ३०
इत्यादिष्टः पुरजिता माल्यवान्सोऽब्रवीद्गणः । अलङ्घ्या युष्मदाज्ञा मे भोगा मानुष्यके तु के ॥ ३१
यत्र बन्धुसुहृद्भृत्यविप्रयोगाः सुदुःसहाः । धननाशजरारोगाद्युद्भवा यत्र च व्यथा ॥ ३२
इति तेन गणेनोक्तो धूर्जटिः प्रत्युवाच तम् । गच्छ नैतानि दुःखानि भविष्यन्ति तवानघ ॥ ३३
मत्प्रसादेन सुखितः सर्वकालं भविष्यसि । इत्युक्तः शंभुना सोऽभूदहृश्यो माल्यवांस्ततः ॥ ३४
गत्वा चोज्जयिनीं तस्य महेन्द्रादित्यभूभुजः । देव्या ऋतुजुषो गर्भे समभूत्स गणोत्तमः ॥ ३५
तत्कालं च निशाकान्तकलाकलितशेखरः । देवो महेन्द्रादित्यं तं नृपं स्वप्ने समादिशत् ॥ ३६
तुष्टोऽस्मि तव तद्राजन्स ते पुत्रो भविष्यति । आक्रमिष्यति सद्वीपां पृथिवीं विक्रमेण यः ॥ ३७
यक्षरक्षःपिशाचादीन्पातालाकाशगानपि । वीरः करिष्यति वशे म्लेच्छसंघान्हनिष्यति ॥ ३८
भविष्यत्यत एवैष विक्रमादित्यसंज्ञकः । तथा विषमशीलश्च नाम्ना वैषम्यतोऽरिषु ॥ ३९
इत्युक्त्वान्तर्हिते देवे प्रबुध्य स महीपतिः । प्रातः स्वसचिवेभ्यस्तं हृष्टः स्वप्नं न्यवेदयत् ॥ ४०
तेऽपि स्वप्ने हरादेशं पुत्रप्राप्तिफलं क्रमात् । तस्मै शशंसुः सचिवा राज्ञे प्रमुदितास्तदा ॥ ४१
तावदेत्य फलं साक्षाद्राज्ञेऽन्तःपुरचेटिकाः । अदर्शयदिदं देव्यै स्वप्ने शंभुरदादिति ॥ ४२
ततः स राजा मुमुदे सचिवैरभिनन्दितः । सत्यं मम सुतो दत्तः शर्वेणेति मुहुर्वदन् ॥ ४३
अथ राज्ञी सगर्भा सा जज्ञे तस्योर्जितद्युतिः । प्राची प्रातरिवोदेष्यत्सहस्रकरमण्डला ॥ ४४
चकाशे सा च कुचयोः श्यामया चूचुकत्विषा । गर्भस्थस्येव सम्राजः स्तन्यरक्षणमुद्रया ॥ ४५
स्वप्ने सप्तापि जलधीनुत्ततार च सा तदा । प्रणम्यमाना निखिलैर्यक्षवेतालराक्षसैः ॥ ४६
प्राप्ते च समये पुत्रं सा सूते स्म महस्विनम् । नभोऽर्केणेव बालेन येनाभास्यत वासकम् ॥ ४७
जाते च तस्मिन्निपतत्पुष्पवृष्टिप्रहासिनी । द्यौरराजत गीर्वाणदुन्दुभिध्वनिनादिनी ॥ ४८
क्षीबेव भूताविष्टेव वातक्षोभावृतेव च । तत्कालमुत्सवानन्दव्याकुला साभवत्पुरी ॥ ४९
तदा च तत्राविरतं वसु राजनि वर्षति । सौगतव्यतिरेकेण नासीत्कश्चिदनीश्वरः ॥ ५०
नाम्ना तं विक्रमादित्यं हरोक्तेनाकरोत्पिता । तथा विषमशीलं च महेन्द्रादित्यभूपतिः ॥ ५१
गतेष्वन्येषु दिवसेष्वत्र तस्य महीभुजः । सुमतेर्मन्त्रिणः पुत्रो जज्ञे नाम्ना महामतिः ॥ ५२
क्षत्तुर्वज्रायुधस्यापि पुत्रो भद्रायुधोऽजनि । श्रीधरोऽजायत सुतो महीधरपुरोधसः ॥ ५३
तैस्त्रिभिर्मन्त्रितनयैः सह राजसुतोऽत्र सः । ववृधे विक्रमादित्यस्तेजोवीर्यबलैरिव ॥ ५४
उपनीतस्य विद्यासु गुरवो हेतुमात्रताम् । ययुस्तस्याप्रयासेन प्रादुरासन्स्वयं तु ताः ॥ ५५
ददृशे स प्रयुञ्जानो यां यां विद्यां कलां तथा । सैव सैवासमोत्कर्षा तस्य तज्ज्ञैरबुध्यत ॥ ५६
दिव्यास्त्रयोधिनं तं च पश्यन्राजसुतं जनाः । मन्दादरोऽभूद्रामादिधनुर्धरकथास्वपि ॥ ५७
आक्रान्तोपनतैर्दत्ताः कन्या रूपवतीर्नृपैः । आजहार पिता तस्य तास्ताः श्रिय इवापराः ॥ ५८
ततश्च यौवनस्थं तं विलोक्य प्राज्यविक्रमम् । अभिषिच्य सुतं राज्ये यथाविधि जनप्रियम् ॥ ५९
महेन्द्रादित्यनृपतिः सभार्यासचिवोऽपि सः । वृद्धो वाराणसीं गत्वा शरणं शिश्रिये शिवम् ॥ ६०
सोऽपि तद्विक्रमादित्यो राज्यमासाद्य पैतृकम् । नभो भास्वानिवारेभे राजा प्रतपितुं क्रमात् ॥ ६१
दृष्ट्वैव तेन कोदण्डे नमत्यारोपितं गुणम् । तच्छिक्षयेवोच्छिरसोऽप्यानमन्सर्वतो नृपाः ॥ ६२
दिव्यानुभावो वेतालराक्षसप्रभृतीनपि । साधयित्वानुशास्ति स्म सम्यगुन्मार्गवर्तिनः ॥ ६३
प्रसाधयन्त्यः ककुभः सेनास्तस्य महीतले । निश्चेरुर्विक्रमादित्यस्यादित्यस्येव रश्मयः ॥ ६४

महावीरोऽप्यभूद्राजा स भीरुः परलोकतः । शूरोऽपि चाचण्डकरः कुभर्ताप्यङ्गनाप्रियः ॥ ६५
स पिता पितृहीनानामबन्धूनां स बान्धवः । अनाथानां च नाथः स प्रजानां कः स नाभवत् ॥ ६६
श्वेतद्वीपस्य दुग्धाब्धेः कैलासहिमशैलयोः । निर्माणे तद्यशो नूनमुपमानमभूद्विधेः ॥ ६७
एकदा च तमास्थानगतं भद्रायुधो नृपम् । प्रविश्य विक्रमादित्यं प्रतीहारो व्यजिज्ञपत् ॥ ६८
प्रेषितस्य ससैन्यस्य दक्षिणाशाविनिर्जये । पार्श्वं विक्रमशक्तेर्यो देवेन प्रेषितोऽभवत् ॥ ६९
स दूतोऽनङ्गदेवोऽयमागतो द्वारि तिष्ठति । सद्वितीयो मुखं चास्य हृष्टं वक्ति शुभं प्रभो ॥ ७०
प्रविशत्विति राज्ञोक्ते सद्वितीयं स तत्र तम् । प्रावेशयत्प्रतीहारोऽनङ्गदेवं सगौरवम् ॥ ७१
प्रविष्टः सप्रणामं च जयशब्दमुदीर्य सः । उपविष्टोऽग्रतो दूतस्तेनापृच्छयत भूभुजा ॥ ७२
कच्चिद्विक्रमशक्तिः स सेनानी कुशली नृपः । कच्चिन्न्याघ्रबलाद्याश्च नृपाः कुशलिनोऽपरे ॥ ७३
अन्येषां राजपुत्राणां प्रधानानां च तद्बले । कच्चिच्छिवं गजाश्वस्य रथपादातकस्य च ॥ ७४
इति भूमिभृता पृष्टोऽनङ्गदेवो जगाद सः । शिवं विक्रमशक्तेश्च सैन्यस्य सकलस्य च ॥ ७५
सापरान्तश्च देवेन निर्जितो दक्षिणापथः । मध्यदेशः ससौराष्ट्रः सवङ्गाङ्गा च पूर्वदिक् ॥ ७६
सकश्मीरा च कौबेरी काष्ठा च करदीकृता । तानि तान्यपि दुर्गाणि द्वीपानि विजितानि च ॥ ७७
म्लेच्छसंघाश्च निहताः शेषाश्च स्थापिता वशे । ते ते विक्रमशक्तेश्च प्रविष्टाः कटके नृपाः ॥ ७८
स च विक्रमशक्तिस्तै राजभिः सममागतः । इतः प्रयाणकेष्वास्ते द्वित्रेष्वेव खलु प्रभो ॥ ७९
एवमाख्यातवन्तं तं तुष्टो वस्त्रैर्विभूषणैः । ग्रामैश्च विक्रमादित्यो दूतं राजाभ्यपूरयत् ॥ ८०
अथ पप्रच्छ नृपतिः स तं दूतवरं पुनः । अनङ्गदेव के देशा गतेनात्र विलोकिताः ॥ ८१
त्वया कुत्र च किं दृष्टं कौतुकं भद्र कथ्यताम् । इत्युक्तो भूभृतानङ्गदेवो वक्तुं प्रचक्रमे ॥ ८२
इतो देवाज्ञया देव गत्वाहं प्राप्तवान्क्रमात् । पार्श्वे विक्रमशक्तेस्तं सेनासमुदयं तव ॥ ८३
मिलितानन्तनागेन्द्रसश्रीकहरिशोभितम् । समुद्रमिव विस्तीर्णं सपक्षक्ष्माभृदाश्रितम् ॥ ८४
उपागतश्च तत्राहं तेन विक्रमशक्तिना । प्रभुणा प्रेषित इति प्रणतेनातिसत्कृतः ॥ ८५
तावत्तिष्ठामि विजयस्वरूपं प्रविलोकयन् । सिंहलेश्वरसंबन्धी दूतस्तावदुपागमत् ॥ ८६
राज्ञो हृदयभूतस्तेऽनङ्गदेवः स्थितोऽन्तिके । इति मे कथितं दूतैस्त्वत्पार्श्वप्रहितागतैः ॥ ८७
तदेतं त्वरयानङ्गदेवं प्रहिणु मेऽन्तिकम् । कल्याणमस्य वक्ष्यामि राजकार्यं हि किंचन ॥ ८८
इति स्वप्रभुवाक्यं च स दूतः सिंहलागतः । मत्संनिधाने वक्ति स्म तस्मै विक्रमशक्तये ॥ ८९
ततो विक्रमशक्तिर्मामवदद्गच्छ सत्वरम् । सिंहलेशान्तिकं पश्य त्वन्मुखे किं ब्रवीति सः ॥ ९०
अथाहं सिंहलाधीशदूतेन सह तेन तत् । अगच्छं सिंहलद्वीपं वहनेनाब्धिवर्त्मना ॥ ९१
राजधानीं च तत्राहमपश्यं हेमनिर्मिताम् । विचित्ररत्नप्रासादां गीर्वाणनगरीमिव ॥ ९२
तस्यां च वीरसेनं तमद्राक्षं सिंहलेश्वरम् । वृतं विनीतैः सचिवैः सुरैरिव शतक्रतुम् ॥ ९३
स मामुपेतमादृत्य पृष्ट्वा च कुशलं प्रभोः । राजा विश्रमयामास सत्कारेणात्र भूयसा ॥ ९४
अन्येद्युरास्थानगतो मामाहूय स भूपतिः । युष्मासु दर्शयन्भक्तिमवोचन्मन्त्रिसंनिधौ ॥ ९५
अस्ति मे दुहिता कन्या मर्त्यलोकैकसुन्दरी । नाम्ना मदनलेखेति तां च राज्ञे ददामि वः ॥ ९६
तस्यानुरूपा भार्या सा स तस्याश्चोचितः पतिः । एतदर्थं त्वमाहूतस्त्वत्स्वाम्यर्थं प्रतीप्सता ॥ ९७
गच्छ च स्वामिने वक्तुं मद्दूतेन सहाग्रतः । अहं तवैवानुपदं प्रहेष्याम्यत्र चात्मजाम् ॥ ९८
उक्त्वेत्यानाययामास स राजा तत्र तां सुताम् । भूषिताभरणाभोगां रूपलावण्ययौवनैः ॥ ९९
उपवेश्य च तामङ्के दर्शयित्वा जगाद माम् । त्वत्स्वामिने मया दत्ता कन्येयं गृह्यतामिति ॥ १००
अहं च राजपुत्रीं तां दृष्ट्वा तद्रूपविस्मितः । प्रतीप्सितैषा राजार्थं मयेति मुदितोऽब्रवम् ॥ १०१
अचिन्तयं च नाश्चर्यविधौ तृप्यत्यहो विधिः । तदुत्तमामिमां चक्रे यत्कृत्वापि तिलोत्तमाम् ॥ १०२
ततोऽहं सत्कृतस्तेन राज्ञा प्रस्थितवांस्ततः । द्वीपाद्धवलसेनेन तद्दूतेन सहामुना ॥ १०३

आरुह्य वहनं चावां व्रजावो यावदम्बुधौ। तावद्दृष्टवन्तौ स्वस्तन्मध्ये पुलिनं महत्॥ १०४
तन्मध्येऽद्भुतरूपे द्वे अपश्याव च कन्यके। एकां प्रियंगुश्यामाङ्गीमन्यां चन्द्रामलद्युतिम्॥ १०५
स्वस्ववर्णोचितोपात्तवस्त्राभरणशोभिते। सरत्नकंकणक्काणवितीर्णकरतालिके॥ १०६
प्रनर्तयन्त्यौ पुरतः क्रीडाहरिणपोतकम्। अपि जाम्बूनदमयं सजीवं रत्नचित्रितम्॥ १०७
तद्दृष्ट्वान्योन्यमावाभ्यां विस्मिताभ्यामभण्यत। अहो किमिदमाश्चर्यं स्वप्नो माया भ्रमो नु किम्॥ १०८
काब्धावकाण्डे पुलिनं केदृश्यौ तत्र कन्यके। क चेदृग्रत्नचित्राङ्गो जीवन्हेममृगोऽनयोः॥ १०९
इत्यादि वदतोरेव देव साश्चर्यमावयोः। वायुः प्रावर्तताकस्माद्वातुमुद्वेल्लिताम्बुधिः॥ ११०
तेनास्मद्वहनं वेल्लद्वीचिन्यस्तमभज्यत। मकरैर्भक्ष्यमाणाश्च ममज्जुस्तद्गता जनाः॥ १११
आवां च ताभ्यां कन्याभ्यामेत्यैवालम्ब्य बाहुषु। उत्क्षिप्य पुलिनं नीतावप्राप्तमकराननौ॥ ११२
ऊर्मिभिः पूर्यमाणे च तस्मिन्रोधसि विह्वलौ। आश्वास्यावां गुहागर्भमिव ताभ्यां प्रवेशितौ॥ ११३
ततो वीक्षावहे तावद्दिव्यं नानाद्रुमं वनम्। नाम्भोधिर्न तटं नापि मृगशावो न कन्यके॥ ११४
चित्रं किमेतन्मायेयं नूनं कापीति वादिनौ। क्षणं भ्रमन्तौ तत्रावामपश्याव महत्सरः॥ ११५
स्वच्छगम्भीरविस्तीर्णमाशयं महतामिव। तृष्णासंतापशमनं निर्वाणमिव मूर्तिमत्॥ ११६
तत्र च स्नातुमायातां साक्षादिव वनश्रियम्। परिवारावृतां कांचिदपश्याव वराङ्गनाम्॥ ११७
कर्णीरथावतीर्णा च तत्रोचितसरोरुहा। स्नात्वा सरस्यनुध्यानमकरोत्सा पुरद्विषः॥ ११८
तावदुद्गम्य सरसो विस्मयेन सहावयोः। साक्षादुपागान्निकटं तस्या लिङ्गाकृतिः शिवः॥ ११९
दिव्यरत्नमयं तं सा तैस्तैः स्वविभवोचितैः। अभ्यर्च्य विविधैर्भोगैर्वीणामादत्त सुन्दरी॥ १२०
आलम्ब्य दक्षिणं मार्गं स्वरतालपदैस्तथा। अवधानेन सा सम्यग्गायन्ती तामवादयत्॥ १२१
यथा तच्छ्रवणाकृष्टहृदया गगनागताः। तत्र सिद्धादयोऽप्यासन्निःस्पन्दा लिखिता इव॥ १२२
उपसंहृतगान्धर्वा ततः शंभोर्विसर्जनम्। साकरोत्स च तत्रैव देवः सरसि मग्नवान्॥ १२३
अथोत्थाय समारुह्य वहनं सपरिच्छदा। शनैर्गन्तुं प्रवृत्ताभूत्सा ततो हरिणेक्षणा॥ १२४
केयमित्यसकृद्यत्नादावयोः पृच्छतोरपि। नोत्तरं तत्परिजनः कोऽप्यदादनुगच्छतोः॥ १२५
ततोऽस्य सिंहलद्वीपपतिदूतस्य तावकम्। प्रभावं दर्शयिष्यंस्तामित्युच्चैरहमब्रवम्॥ १२६
भोः शुभे विक्रमादित्यदेवाङ्घ्रिस्पर्शशापिता। त्वं मया यद्यनाख्याय ममात्मानं गमिष्यसि॥ १२७
तच्छ्रुत्वा परिवारं सा निवार्यैवावरुह्य च। वहनान्मामुपागम्य गिरा मधुरयाभ्यधात्॥ १२८
कच्चिच्छ्रीविक्रमादित्यदेवः कुशलवान्प्रभुः। किं वा पृच्छामि विदितं सर्वं मेऽनङ्गदेव यत्॥ १२९
प्रदर्श्य मायामानीतो मयैव हि भवानिह। राज्ञोऽर्थे तस्य स हि मे मान्यस्त्राता महाभयात्॥ १३०
तदेहि मद्गृहं तत्र सर्वं वक्ष्याम्यहं तव। याहं यथा च राजा मे मान्यः कार्यं च तस्य यत्॥ १३१

इत्युक्त्वा विनयेन मुक्तवहना पद्भ्यां व्रजन्ती पथि
प्रह्वा सा नयति स्म तौ सुवदना स्वर्गोपमं स्वं पुरम्।
नानारत्नविचित्रहेमरचितं द्वारेषु नानायुधै-
र्नानारूपधरैश्च वीरपुरुषैरध्यासितं सर्वतः॥ १३२

तत्रावृते वरवधूभिरशेषदिव्यभोगौघसिद्धिभिरिवाकृतिशालिनीभिः।
स्नानानुलेपनसदम्बरभूषणैस्तौ संमान्य विश्रमयति स्म च सांप्रतं सा॥ १३३

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके प्रथमस्तरङ्गः।

---

## द्वितीयस्तरङ्गः।

इत्युक्त्वा विक्रमादित्यदेवायास्थानवर्तिने। अनङ्गदेवः पुनरप्येवं कथयति स्म सः॥ १
ततो भुक्तोत्तरं सा मां सखीमध्यस्थिताब्रवीत्। अनङ्गदेव सर्वं ते कथयाम्यधुना शृणु॥ २

एषाहं धनदभ्रातुर्मणिभद्रस्य गेहिनी । दुन्दुभेर्यक्षराजस्य सुता मदनमञ्जरी ॥ ३
साहं तीरेषु सरितां शैलेषूपवनेषु च । मनोहरेषु व्यहरं भर्त्रा सह सुखं सदा ॥ ४
एकदा च गताभूवमुज्जयिन्यामहं किल । उद्यानं मकरन्दाख्यं विहर्तुं वल्लभान्विता ॥ ५
तत्र दैवादुपस्त्यैकः खण्डकापालिकाधमः । विहारश्रमसंसुप्तप्रबुद्धां पश्यति स्म माम् ॥ ६
स कामवशगः पापो भार्यात्वे होमकर्मणा । मन्त्रेण मां साधयितुं प्रावर्तिष्ट श्मशानगः ॥ ७
तदहं स्वप्रभावेण बुद्ध्वा भर्त्रे न्यवेदयम् । तेनाप्यावेदितं भ्रातुर्ज्यायसो धनदस्य तत् ॥ ८
धनाध्यक्षेण गत्वा च विज्ञप्तः कमलोद्भवः । स चापि भगवानेवं ब्रह्मा ध्यात्वा तमभ्यधात् ॥ ९
सत्यं स भ्रातृजायां ते कपाली हर्तुमुद्यतः । यक्षसाधनमन्त्राणां शक्तिस्तेषां हि तादृशी ॥ १०
तया तु विक्रमादित्यो मन्त्रेणाकृष्यमाणया । आक्रन्दनीयो नृपतिः स रक्षिष्यति तां ततः ॥ ११
एतद्ब्रह्मवचोऽभ्येत्य मद्भर्त्रे धनदोऽब्रवीत् । मद्भर्ता मह्यमाह स्म कुमन्त्रचकितात्मने ॥ १२
तावच्च क्रमसिद्धेन मन्त्रेणाकृष्टवान्स माम् । होमं कुर्वञ्श्मशानस्थः खण्डकापालिकः स्वतः ॥ १३
अहं च मन्त्राकृष्टा तद्वित्रस्ता पितृकाननम् । प्रापमस्थिकपालाढ्यं भैरवं भूतसेवितम् ॥ १४
तत्रापश्यं च तं दुष्टकापालिकमहं तदा । हुताग्निमर्चितोत्तानशवाधिष्ठितमण्डलम् ॥ १५
स च कापालिकः प्राप्तां दृष्ट्वा मां दर्पमोहितः । अगात्कथंचिदाचान्तुं नदीं दैवाददूरगाम् ॥ १६
तत्क्षणं संस्मृतब्रह्मवचनाहमचिन्तयम् । किं नाक्रन्दामि राजानं स रात्रौ जात्विह भ्रमेत् ॥ १७
इत्येतच्चिन्तयित्वोच्चैस्तत्राक्रन्दितवत्यहम् । परित्रायस्व मां देव विक्रमादित्य भूपते ॥ १८
जगद्रक्षामणे पश्य बलात्कुलवधूं सतीम् । गृहिणीं मणिभद्रस्य धनाध्यक्षानुजन्मनः ॥ १९
दुन्दुभेस्तनयां यक्षीं नाम्ना मदनमञ्जरीम् । कापालिकोऽयं त्वद्राज्ये मां ध्वंसयितुमुद्यतः ॥ २०
इत्याक्रन्दितवत्येव ज्वलन्तमिव तेजसा । कृपाणपाणिमायान्तं तमद्राक्षमहं नृपम् ॥ २१
स च मामवदद्भद्रे मा भैषीर्निर्वृता भव । अहं कापालिकादस्माद्रक्षामि भवतीं शुभे ॥ २२
को हि राज्ये ममाधर्ममीदृशं कर्तुमीश्वरः । इत्युक्त्वाग्निशिखं नाम वेतालं स समाह्वयत् ॥ २३
स चाहूतो ज्वलन्नेत्रः पांशुरूर्ध्वशिरोरुहः । उपेत्यैवाब्रवीद्भूपं किं करोम्यादिशेति तम् ॥ २४
अथ राजाब्रवीदेष परदारापहारकृत् । पापः कापालिको हत्वा भवता भक्ष्यतामिति ॥ २५
ततः सोऽग्निशिखस्तस्मिञ्शवेऽर्चामण्डलस्थिते । प्रविश्याधावदुत्थाय प्रसारितभुजाननः ॥ २६
अग्रहीज्जङ्घयोः पश्चात्तं चाचान्तपरागतम् । कापालिकं स वेतालः पलायनपरायणम् ॥ २७
नभसि भ्रामयित्वा च क्षिप्रमास्फोट्य च क्षितौ । देहं मनोरथं चैव सममस्य व्यचूर्णयत् ॥ २८
हतं कापालिनं दृष्ट्वा भूतेष्वामिषगर्धिषु । आगाद्यमशिखो नाम वेतालस्तत्र दुर्मदः ॥ २९
एत्यैव तदगृह्णात्स कापालिककलेवरम् । ततः सोऽग्निशिखः पूर्वो वेतालस्तमभाषत ॥ ३०
अरे श्रीविक्रमादित्यदेवस्यादेशतो मया । कापालिकोऽयं निहतो दुराचार त्वमस्य कः ॥ ३१
एतच्छ्रुत्वा यमशिखः प्राह त्वं ब्रूहि तर्हि मे । किंप्रभावः स राजेति ततः सोऽग्निशिखोऽब्रवीत् ॥ ३२
तत्प्रभावं न चेद्वेत्सि तदहं शृणु वच्मि ते । इहाभूड्डाकिनेयाख्यः सुधीरः कितवः पुरि ॥ ३३
स जातु हृतसर्वस्वः कितवैर्द्यूतमायया । अधिकावर्जितान्यार्थनिमित्तं तैरबध्यत ॥ ३४
अस्वत्वाददतं च तैरेव लगुडादिभिः । ताड्यमानोऽवतस्थे च ग्रावभूतो मृतो यथा ॥ ३५
ततः स सभ्यैः सर्वैस्तैर्नीत्वा पापैः स चिक्षिपे । महान्धकूपे संभाव्य जीवतोऽस्मात्प्रतिक्रियाम् ॥ ३६
स च तत्रातिगम्भीरे कितवो डाकिनेयकः । कूपे भ्रष्टो ददर्शोऽग्रौ महान्तौ पुरुषावुभौ ॥ ३७
तौ च तं पतितं साश्रा दृष्ट्वा भीतमपृच्छताम् । कस्त्वं कुतश्च कूपेऽस्मिन्पतितोऽस्युच्यतामिति ॥ ३८
अथाश्वस्य स्ववृत्तान्तं द्यूतकारो निवेद्य सः । तावप्यपृच्छद्भूतं मे कौ कुतश्च युवामिह ॥ ३९
तच्छ्रुत्वा तौ जगदतुः पुरुषाववटस्थितौ । आवामस्याः पुरो भद्र श्मशाने ब्रह्मराक्षसौ ॥ ४०
अगृह्णीव च तावावामिहैव पुरि कन्यके । मुख्यमन्त्रिसुतामेकामन्यां मुख्यवणिक्सुताम् ॥ ४१

न च मोचयितुं कश्चित्ते शक्नोति स्म कन्यके । मान्त्रिको दीप्तमन्त्रोऽपि पृथ्व्यामस्मत्सकाशतः ॥ ४२
बुद्ध्वाथ विक्रमादित्यदेवस्तत्पितृवत्सलः । तत्रागाद्यत्र कन्ये ते पित्रोः सख्यात्सह स्थिते ॥ ४३
तं दृष्ट्वैव नृपं मुक्त्वा कन्यके ते पलायितुम् । इच्छन्तावपि नैवावां ततो गन्तुमशक्नुवः ॥ ४४
आपश्याव दिशः सर्वा ज्वलन्तीस्तस्य तेजसा । ततोऽबध्नात्स नृपतिर्दृष्ट्वा नौ स्वप्रभावतः ॥ ४५
जातमृत्युभयौ दीनौ वीक्ष्य चैवं समादिशत् । भोः पापावन्धकूपान्तर्वसतं वत्सरावधि ॥ ४६
मुक्ताभ्यां च ततः कार्यं भवद्भ्यां नेदृशं पुनः । करिष्यतश्चेत्तदहं निग्रहीष्यामि वां ततः ॥ ४७
इत्यादिश्यान्धकूपेऽत्र तेनावां क्षपिताविमौ । राज्ञा विषमशीलेन कृपया न विपादितौ ॥ ४८
अष्टभिर्दिवसैः कूपनिवासस्यास्य चावयोः । अवधिः पूर्यते वर्षादितो मुच्यावहे ततः ॥ ४९
तद्भक्ष्यं किंचिदेतानि यद्यहानि ददासि नौ । तदुद्धृत्यामुतः कूपात्त्वां क्षिपावो बहिः सखे ॥ ५०
अङ्गीकृत्य न चेद्दास्यस्यावाभ्यां भक्ष्यमुद्धृतः । ततस्त्वां भक्षयिष्यावो निश्चितं निर्गतावितः ॥ ५१
इत्युक्त्वा ब्रह्मरक्षोभ्यां ताभ्यां स कितवस्ततः । तथेति प्रतिपन्नार्थः कूपाद्बहिरुदस्यत ॥ ५२
स कूपादुद्गतोपश्यंस्तदर्थप्राप्तिमन्यथा । पणायितुं महामांसं श्मशानं प्राविशन्निशि ॥ ५३
तत्कालं तिष्ठता तत्र स दृष्टः कितवो मया । गृह्णातु कश्चिद्विक्रीणे महामांसमिति ब्रुवन् ॥ ५४
अहं गृह्णामि किं मूल्यं मार्गसीत्युदिते मया । रूपप्रभावौ स्वौ देहि मह्यमित्यब्रवीच्च सः ॥ ५५
वीर किं कुरुषे ताभ्यामित्युक्तश्च मया पुनः । उक्त्वा कृत्स्नं स्ववृत्तान्तमेवं स कितवोऽभ्यधात् ॥ ५६
तत्त्वद्रूपप्रभावाभ्यां तानाकृष्य ददाम्यहम् । कितवान्ब्रह्मरक्षोभ्यां भक्ष्यं सभ्ययुतानरीन् ॥ ५७
तच्छ्रुत्वा धैर्यतुष्टेन तस्मै द्यूतकृते मया । दत्तौ रूपप्रभावौ स्वावाभाष्य दिनसप्तकम् ॥ ५८
ताभ्यामाकृष्य कूपे तान्क्रमात्क्षिप्त्वापकारिणः । नयति स्म स सप्ताहाद्ब्रह्मराक्षसभक्ष्यताम् ॥ ५९
ततो मया स्वीकृतयोः स्वयो रूपप्रभावयोः । सोऽब्रवीड्डाकिनेयो मां द्यूतकारो भयाकुलः ॥ ६०
नाद्य दत्तं मया भक्ष्यमष्टमं तदहस्तयोः । तन्मां निर्गत्य तौ ब्रह्मराक्षसौ भक्षयिष्यतः ॥ ६१
तदत्र किं मया कार्यं ब्रूहि मित्रं हि मे भवान् । इत्युक्तवन्तं तमहं संस्तवप्रीतितोऽब्रवम् ॥ ६२
यद्येवं तत्त्वया ताभ्यां राक्षसाभ्यां हि खादिताः । कितवास्ते तवार्थे तौ राक्षसावद्म्यहं पुनः ॥ ६३
तत्तौ दर्शय मे मित्रेत्युक्तवांस्तेन तत्क्षणम् । नीतस्तत्कूपनिकटं कितवेन तथेत्यहम् ॥ ६४
अवाङ्मुखश्च यावत्तं कूपं पश्याम्यशङ्कितः । तावत्तेनास्मि दत्वार्धचन्द्रं क्षिप्तस्तदन्तरे ॥ ६५
कूपान्तः पतितस्याथ रक्षोभ्यां भक्ष्यबुद्धितः । गृहीतस्य समं ताभ्यां बाहुयुद्धमभून्मम ॥ ६६
यदातिवर्तितुं बाहुबलं नाशकतां मम । युद्धं त्यक्त्वा तदा कस्त्वमिति तौ मामपृच्छताम् ॥ ६७
ततो मया डाकिनेयवृत्तान्तात्प्रभृति स्वके । वृत्तान्ते कथिते मैत्रीं कृत्वा मां वदतः स्म तौ ॥ ६८
अहो तवावयोस्तेषां कितवानां च कीदृशी । अवस्था विहिता तेन कितवेन दुरात्मना ॥ ६९
येषां न मैत्री न घृणा नोपकारः स्पृशेन्मनः । तेषु च्छलैकविज्ञेषु विश्वासः कितवेषु कः ॥ ७०
साहसं नैरपेक्ष्यं च कितवानां निसर्गजम् । ठिण्ठाकरालस्य कथा तथा च श्रूयतां त्वया ॥ ७१
अस्यामेवोज्जयिन्यां स द्यूतकारोऽभवत्पुरि । पूर्वं ठिण्ठाकरालाख्यो विषमोऽन्वर्थनामकः ॥ ७२
तस्य हारयतो नित्यं द्यूते ये जयिनोऽपरे । ते प्रत्यहं द्यूतकाराः कपर्दकशतं ददुः ॥ ७३
तेनापणात्स गोधूमचूर्णं क्रीत्वा दिनात्यये । चकारापूपिकाः कापि मृदित्वा कर्परेऽम्भसा ॥ ७४
गत्वा श्मशाने पक्त्वा ताश्चिताग्नावेत्य चाग्रतः । महाकालस्य तद्दीपघृताभ्यक्ता अभक्षयत् ॥ ७५
तत्रैव च महाकालदेवागाराङ्गणे सदा । उपधानीकृतभुजः स सुष्वाप क्षितौ निशि ॥ ७६
एकदा रजनौ तत्र महाकालनिकेतने । मातृमण्डलयक्षादिप्रतिमास्तस्य पश्यतः ॥ ७७
स्फुरन्तीर्मन्त्रसांनिध्यान्मतिरेवमजायत । न करोमि किमर्थार्थमुपायमिह युक्तितः ॥ ७८
सिद्धश्चेद्भद्रमथवा न सिद्धः का क्षतिर्मम । इत्यालोच्याब्रवीद्द्यूतायाक्षिपन्देवताः स ताः ॥ ७९
एत भोः सह युष्माभिर्दीव्याम्यहमेव च । सभ्यस्तथा पातयिता जितं सद्यश्च दीयते ॥ ८०

इत्युक्तास्तेन तास्तूष्णीं यत्तस्थुस्तदपातयत्। ठिण्ठाकरालः स पणं कृत्वा चित्रा वराटिकाः ॥ ८१
अङ्गीकृतं पातनं स्यात्कितवेनानिषेधता। इति द्यूते हि सर्वत्र स्थितिर्द्यूतकृतां सदा ॥ ८२
ततो जित्वा बहु स्वर्णं देवतास्ता जगाद सः। जितं प्रयच्छत धनं मह्यमाभाषितं यथा ॥ ८३
इत्युच्यमानाः कितवेनासकृत्तेन ता यदा। देवता नालपन्किंचित्तदा वक्ति स्म स क्रुधा ॥ ८४
यदि स्थिताः स्थ तूष्णीं तत्क्रियते कितवस्य यत्। अदत्तहारितार्थस्य शिलाभूतस्य तिष्ठतः ॥ ८५
यमदंष्ट्राग्रतीक्ष्णेन क्रकचेनाङ्गपाटनम्। तदहं वः करिष्यामि नह्यपेक्षास्ति कापि मे ॥ ८६
इत्युक्त्वा यावदादाय क्रकचं सोऽभिधावति। तावत्तस्मै ददुः स्वर्णं देवतास्ता यथाजितम् ॥ ८७
हारयित्वा च तत्प्रातर्नक्तमेत्य तथैव सः। आचकर्ष हठद्यूतेनार्थं मातृगणात्पुनः ॥ ८८
एवं स कुरुते यावत्प्रत्यहं तावदेकदा। जगाद देवी चामुण्डा मातृस्ताः खिन्नमानसाः ॥ ८९
इतोऽहं निर्गतो द्यूतादित्याहूतो ब्रवीति यः। स नाक्षेप्य इति द्यूते शैलीयं मातृदेवताः ॥ ९०
तस्मादाह्वयमानं तं तदेवोक्त्वा निरस्यत। इति चामुण्डयोक्तास्ता देव्यश्चेतसि तद्दधुः ॥ ९१
निशि प्राप्तं कृताह्वानं कितवं तं च देवने। निर्गताः स्म इतो द्यूतादित्यूचुः सर्वदेवताः ॥ ९२
एवं निराकृतष्ठिण्ठाकरालस्ताभिरेव सः। तत्प्रभुं तं महाकालमेवाह्वयत देवितुम् ॥ ९३
सोऽपि लब्धावकाशं तं मत्वा हठदुरोदरे। निर्गतोऽहमितो द्यूतादिति देवः किलाब्रवीत् ॥ ९४
अक्षीणदोषाद्विषमादिष्टानिष्टभयोज्झितात्। दुर्जनाद्बत देवा अप्यशक्ता इव बिभ्यति ॥ ९५
तथा दुरोदराचारभग्नकैतवयुक्तिना। तेन ठिण्ठाकरालेन खिन्नेनैवमचिन्त्यत ॥ ९६
अहो द्यूतस्थितिं देवैः शिक्षित्वास्मि निराकृतः। तदेतमेव देवेशमिदानीं शरणं श्रये ॥ ९७
इत्याकलय्य हृदये परिगृह्यैव पादयोः। स्तुवंष्ठिण्ठाकरालस्तं महाकालं व्यजिज्ञपत् ॥ ९८
देव्या द्यूतजितेष्विन्दुवृषकुञ्जरचर्मसु। जानुन्यस्तकपोलं ते नौमि नग्नाङ्गमासितम् ॥ ९९
यदिच्छामात्रतस्तास्ता विभूतीर्ददते सुराः। यो निरीहो जटाभस्मकपालैकपरिग्रहः ॥ १००
स सलोभोऽद्य जातस्त्वं मन्दपुण्ये कथं मयि। यदल्पहेतोर्मामेवं हा वञ्चयितुमीहसे ॥ १०१
कल्पवृक्षोऽप्यधन्यानां नाशां पूरयति ध्रुवम्। यद्बिभर्षि न मां नाथ भृतविश्वोऽपि भैरव ॥ १०२
तत्प्रपन्नस्य मे कष्टव्यसनाविष्टचेतसः। व्यतिक्रममपि स्थाणो भगवन्क्षन्तुमर्हसि ॥ १०३
त्र्यक्षस्त्वं तादृगेवाहं भस्माङ्गे ते ममापि तत्। त्वं कपाले यथा भुङ्क्षे तथैवाहं दयस्व मे ॥ १०४
युष्माभिः सममालप्य कथं नु कितवैरहम्। सहालपिष्यामि पुनस्तन्मामापन्नमुद्धर ॥ १०५
इत्यादि तावदस्तौषीत्कितवस्तं स भैरवम्। तावत्स परितुष्यैवं देवः साक्षादुवाच तम् ॥ १०६
ठिण्ठाकराल तुष्टोऽस्मि तव मा स्माधृतिं कृथाः। अहं दास्यामि ते भोगानिहैवास्स्व ममान्तिके ॥ १०७
इति देवाज्ञया तत्र तस्थौ स कितवस्तदा। तत्प्रसादादुपनतां भुञ्जानो भोगसंपदम् ॥ १०८
एकदा च महाकालतीर्थेऽत्र स्नातुमागताः। रात्रावप्सरसो दृष्ट्वा स देवो व्यादिदेश तम् ॥ १०९
आसां स्नातुं प्रवृत्तानां सर्वासां सुरयोषिताम्। तटन्यस्तानि वासांसि लघु हृत्वा त्वमानय ॥ ११०
यावदेता न दास्यन्ति तुभ्यमेतां कलावतीम्। अप्सरःकन्यकां तावदासां वस्त्राणि मा मुचः ॥ १११
एवं स भैरवेणोक्तो गत्वामरमृगीदृशाम्। ठिण्ठाकरालः स्नान्तीनां तासां वस्त्राण्यपाहरत् ॥ ११२
मुञ्च मुञ्चाम्बराण्यस्मान्मा स्म कार्षीर्दिगम्बराः। इति ब्रुवाणाश्च स ता व्याजहार हरौजसा ॥ ११३
कन्यां कलावतीमेतां यदि मह्यं प्रयच्छथ। तदहं वो विमोक्ष्यामि वासांस्येतानि नान्यथा ॥ ११४
तच्छ्रुत्वा तं दुराधर्षं दृष्ट्वा स्मृत्वा च तादृशम्। शक्रशापं कलावत्यास्ताश्चैतत्प्रतिपेदिरे ॥ ११५
ददुः कलावतीं तां च तस्मायुज्झितवाससे। ठिण्ठाकरालाय ततो विधिनालम्बुषासुताम् ॥ ११६
अथाप्सरःसु यातासु कलावत्या तया सह। तस्थौ ठिण्ठाकरालोऽसौ देवेच्छानिर्मितास्पदः ॥ ११७
कलावती च देवेन्द्रमुपस्थातुमगाद्दिवा। त्रिदिवं रजनौ तं च सदा पतिमुपाययौ ॥ ११८
त्वत्प्राप्तिहेतुना शक्रशापेन मम वल्लभ। वरायितमिति प्रीत्या कदाचिद्ब्रुवती च सा ॥ ११९

तेन ठिण्ठाकरालेन पत्या तच्छापकारणम्। पृष्टा सती सुरवधूः कलावत्यब्रवीदिदम्॥ १२०
दृष्ट्वोद्याने सुराज्ञातु मर्त्यभोगाः स्तुता मया। निन्दन्त्या दिविषद्भोगान्दृष्टिमात्रोपभोगदान्॥ १२१
तद्बुद्ध्वा देवराजो मामशपद्गच्छ भोक्ष्यसे। मर्त्येन परिणीता त्वं भोगांस्तान्मानुषानिति॥ १२२
तेनायमावयोर्जातः संयोगोऽन्योन्यसंमतः। श्वश्च नाकाच्चिरेणैष्याम्यहं मा भूच्च तेऽधृतिः॥ १२३
रम्भा नवप्रयोगं हि नर्तिष्यति हरेः पुरः। आ तत्समाप्तेरस्माभिः स्थातव्यं तत्र च प्रिय॥ १२४
ततष्ठिण्ठाकरालस्तां प्रेमदुर्ललितोऽभ्यधात्। अहं द्रक्ष्यामि तन्नृत्यं गुप्तं तत्रैव मां नय॥ १२५
एतच्छ्रुत्वा कलावत्या तया स जगदे पतिः। युज्यते कथमेतन्मे कुप्येद्बुद्ध्वा हि देवराट्॥ १२६
एवमुक्तोऽपि निर्बन्धं यदा तस्याश्चकार सः। तदा कलावती स्नेहान्नेतुं तं प्रत्यपद्यत॥ १२७
प्रातः प्रभावगूढं तं कृत्वा कर्णोत्पलान्तरे। ठिण्ठाकरालमनयत्सा महेन्द्रस्य मन्दिरम्॥ १२८
सुरेभशोभितद्वारं नन्दनोद्यानसुन्दरम्। दृष्ट्वा ठिण्ठाकरालस्तद्देवमानी तुतोष सः॥ १२९
ददर्श चात्र वृत्रारेरास्थाने त्रिदशाश्रिते। प्रगीतस्वर्वधूसार्थं रम्भानृत्तोत्सवाद्भुतम्॥ १३०
नारदादिप्रणीतानि सर्वातोद्यानि चाशृणोत्। प्रसन्ने हि किमप्राप्यमस्तीह परमेश्वरे॥ १३१
ततः प्रेक्षणकस्यान्ते तत्रोत्थाय प्रवृत्तवान्। दिव्यश्छागाकृतिर्भण्डो नर्तितुं दिव्यभङ्गिभिः॥ १३२
ठिण्ठाकरालो दृष्ट्वा तं परिज्ञाय व्यचिन्तयत्। अहो एतमहं पश्याम्युज्जयिन्यामजं पशुम्॥ १३३
इहेन्द्रस्य पुरश्चायमीदृशो भण्डनर्तकः। अतर्क्या दिव्यमायेयं विचित्रा बत काचन॥ १३४
एवं ठिण्ठाकरालस्य तस्य चिन्तयतो हृदि। नृत्तान्ते छागभण्डस्य शक्रास्थानं न्यवर्तत॥ १३५
ततः कलावती हृष्टा सा कर्णोत्पलसंश्रितम्। ठिण्ठाकरालं स्वस्थानमानिनाय तथैव तम्॥ १३६
ठिण्ठाकरालश्चान्येद्युरुज्जयिन्यां तमागतम्। दृष्ट्वा छागाकृतिं दर्पाद्देवभण्डमभाषत॥ १३७
अरे ममाग्रतो नृत्य नृत्यसीन्द्राग्रतो यथा। अन्यथा न क्षमिष्ये ते तन्नृत्तं भण्ड दर्शय॥ १३८
तच्छ्रुत्वा विस्मितश्छागस्तूष्णीमेव बभूव सः। कुतोऽयं मानुषोऽप्येवं मां जानातीति चिन्तयन्॥ १३९
निर्बन्धेनोच्यमानो यन्नैव च्छागो ननर्त सः। तस्य ठिण्ठाकरालस्तं लगुडैर्मूर्ध्न्यताडयत्॥ १४०
ततः स गत्वा शक्राय तथैव च्छागलोऽखिलम्। स्रवद्रक्तेन शिरसा यथावृत्तं न्यवेदयत्॥ १४१
इन्द्रोऽपि प्रणिधानेन बुबुधे तद्यथा दिवम्। ठिण्ठाकरालमानैषीद्रम्भानृत्ते कलावती॥ १४२
यथा च च्छागनृत्तं तद्दृष्टं तेनापराधिना। ततः कलावतीमेवमाहूयेन्द्रः शशाप सः॥ १४३
नृत्तार्थमस्य च्छागस्य येनावस्था कृतेदृशी। रागात्तं मानुषं गुप्तं यदिहानीतवत्यसि॥ १४४
तद्गच्छ नरसिंहेन राज्ञा नागपुरे पुरे। देवागारे कृते स्तम्भे भव त्वं सालभञ्जिका॥ १४५
इत्युक्तवान्कलावत्या मात्रालम्बुषया तया। शक्रोऽनुनाथितः कृच्छ्राद्देवं शापान्तमादिशत्॥ १४६
यदा बह्वब्दनिष्पन्नं देववेश्म विनश्य तत्। भविष्यति समं भूमेरस्याः शापक्षयस्तदा॥ १४७
इतीन्द्रशापशापान्तावेवं साश्रुः शशंस सा। तस्मै कलावती ठिण्ठाकरालाय सवाच्य तम्॥ १४८
दत्त्वा स्वाभरणं तस्मै तिरोभूय विवेश च। गत्वा नागपुरे देवगृहस्तम्भाग्रपुत्रिकाम्॥ १४९
ठिण्ठाकरालोऽपि ततस्तद्वियोगविषाहतः। न ददर्श न शुश्राव लुलोठ भुवि मूर्च्छितः॥ १५०
अहो रहस्यं मत्वापि मूढेनाविष्कृतं मया। निसर्गचपलानां हि मादृशां संयमः कुतः॥ १५१
तदिदानीमयं प्राप्तो वियोगो विषमो मया। इत्यादिलब्धसंज्ञश्च कितवो विललाप सः॥ १५२
क्षणाच्चाचिन्तयत्कालो वैक्लव्यस्यैष नैव मे। गृहीतधैर्यः शापान्तहेतोस्तस्या न किं यते॥ १५३
इत्यालोच्य विचार्याथ प्रव्राड्वेषं विधाय सः। साक्षसूत्राजिनजटं धूर्तो नागपुरं ययौ॥ १५४
तत्राटव्यां चतसृषु न्यधाद्दिक्षु पुराद्बहिः। कान्तालंकारकलशाश्निखाय चतुरो भुवि॥ १५५
पञ्चमं च महारत्नसंपूर्णं निचखान सः। नगरान्तर्निशि स्वैरं देवाग्रापणभूतले॥ १५६
एवं कृत्वा स तत्रासीन्नद्यास्तीरे कृतोटजः। आश्रित्य कैतवतपः कृतकध्यानजप्यवान्॥ १५७
कुर्वन्दिनस्य त्रिः स्नानं भुञ्जानो भैक्ष्यमम्बुभिः। प्रक्षाल्य दृषदि प्राप स महातापसप्रथाम्॥ १५८

क्रमाच्छ्रुतिपथायातो राज्ञा सोऽभ्यर्थितोऽपि यत् । नागात्तदन्तिकं तस्य राजा तत्पार्श्वमाययौ ॥ १५९
स्थित्वा कथाभिश्च चिरं सायं तस्मिन्नियियासति । राज्यकस्माच्छिवा चक्रे शब्दं तत्र विदूरतः ॥ १६०
तच्छ्रुत्वा तापसच्छद्मा कितवो हसति स्म सः । किमेतदिति पृष्टश्च किमनेनेत्यभाषत ॥ १६१
निर्बन्धाच्च नृपे पृच्छत्युवाचैवं स मायिकः । अटव्यां नगरस्यास्य पूर्वतो वेतसीतले ॥ १६२
रत्नाभरणपूर्णोऽस्ति कलशस्तद्गृहाण तम् । इत्युक्तं मे रुतज्ञस्य नृपते शिवयैतया ॥ १६३
उक्त्वैवं कौतुकाविष्टं नीत्वा तं तत्र भूपतिम् । खात्वा स भूमिमुद्धृत्य तस्मै तं कलशं ददौ ॥ १६४
ततः स लब्धाभरणः संजातप्रत्ययो नृपः । ज्ञानिनं सत्यवाचं तं मेने निःस्पृहतापसम् ॥ १६५
आनीय स्वाश्रमं तं च मुहुर्नत्वा च पादयोः । स ययौ मन्दिरं नक्तं सामात्यस्तद्गुणान्स्तुवन् ॥ १६६
एवं क्रमात्तमायान्तं धूर्तो रुतमिषान्नृपम् । सोऽन्यांस्त्रीन्रत्नकलशान्दिग्भ्योऽन्याभ्यो व्यलम्भयत् ॥ १६७
ततः स राजा पौराश्च मन्त्रिणोऽन्तःपुराणि च । तत्तापसैकभक्तानि तन्मयान्येव जज्ञिरे ॥ १६८
एकदा नीयमानश्च देवागारेक्षणाय सः । राज्ञा कुतापसोऽश्रौषीदापणे काकवाशितम् ॥ १६९
ततोऽब्रवीत्तं राजानं श्रुता काकस्य वाक्त्वया । आपणेऽत्रैव देवाग्रे निखातो भुवि तिष्ठति ॥ १७०
सद्रत्नपूर्णः कलशः कस्मात्सोऽपि न गृह्यते । इत्येतदुक्तं काकेन तद्देहि स्वीकुरुष्व तत् ॥ १७१
इत्युक्त्वा तत्र नीत्वा तं भूमेरुद्धृत्य भूभृते । सद्रत्नकलशं प्रादात्स तस्मै कूटतापसः ॥ १७२
ततोऽतिपरितोषात्स स्वयं हस्तेऽवलम्ब्य तम् । कपटज्ञानिनं राजा देवागारं प्रविष्टवान् ॥ १७३
तत्र स्तम्भे समाधूय परिव्राट् सालभञ्जिकाम् । अनुप्रविष्टां प्रियया कलावत्या ददर्श ताम् ॥ १७४
कलावती च तत्सालभञ्जिकारूपधारिणी । दुःखिता तं पतिं दृष्ट्वा प्रारेभे तत्र रोदितुम् ॥ १७५
तद्दृष्ट्वा सानुगो राजा सविस्मयविषादवान् । ज्ञान्याभासमपृच्छत्तं किमिदं भगवन्निति ॥ १७६
ततो विपण्णविभ्रान्त इव धूर्तो जगाद सः । एहि स्वभवनं तत्र वच्म्यवक्तव्यमप्यदः ॥ १७७
इत्युक्त्वा स नृपं नीत्वा राजधानीमुवाच तम् । अस्थाने कुमुहूर्ते च देवागारमिदं त्वया ॥ १७८
यत्कृतं तत्तृतीयेऽह्नि भविष्यत्यहितं तव । अतस्त्वद्दर्शनात्सैषा प्रारोदीत्स्तम्भपुत्रिका ॥ १७९
तच्छरीरेण चेत्कृत्यं तव निर्लोठ्य तन्नृप । अद्यैवैतद्द्रुतं देवकुलं भूमिसमं कुरु ॥ १८०
सुस्थाने सुमुहूर्ते च कुर्वन्यत्र सुरालयम् । अनिमित्तं शमं यातु सराष्ट्रस्यास्तु ते शिवम् ॥ १८१
इत्युक्तस्तेन स नृपः समाज्ञाप्य भयात्प्रजाः । एकाह्नैव तद्देवगृहं भूमिसमं व्यधात् ॥ १८२
स्थानान्तरे च प्रारेभे कर्तुं देवकुलं पुनः । अहो विश्वास्य वञ्च्यन्ते धूर्तैश्छद्मभिरीश्वराः ॥ १८३
सिद्धकार्यस्ततस्त्यक्त्वा प्रव्राड्रूपं पलाय्य सः । ठिण्ठाकरालः कितवः प्रायादुज्जयिनीं ततः ॥ १८४
कलावती च तद्बुद्ध्वा शापमुक्ताभ्युपेत्य तम् । मार्गे दृष्ट्वा समाश्वास्य द्रष्टुमिन्द्रमगाद्दिवम् ॥ १८५
इन्द्रोऽपि विस्मितो बुद्ध्वा तन्मुखात्तस्य तत्पतेः । मायां तां द्यूतकारस्य जहास च तुतोष च ॥ १८६
ततः पार्श्वस्थितः शक्रं तमुवाच बृहस्पतिः । विचित्रमायाः कितवा ईदृशा एव सर्वदा ॥ १८७
पुराकल्पे तथा चाभून्नगरे कितवः क्वचित् । कुट्टिनीकपटो नाम कपटद्यूतकोविदः ॥ १८८
परलोकगतं तं च धर्मराजः किलाब्रवीत् । कल्पं नरकवासस्ते कितवास्ति स्वपातकैः ॥ १८९
एकं तु दिनमिन्द्रत्वमस्ति दानवशात्तव । दत्तं ब्रह्मविदे ह्येकं सुवर्णं जातुचित्त्वया ॥ १९०
तद्ब्रूहि पूर्वं किं भुङ्क्षे नरकं किमुतेन्द्रताम् । तच्छ्रुत्वा कितवोऽवोचद्भुञ्जे प्रागिन्द्रतामिति ॥ १९१
ततः स धर्मराजेन प्रेषितः कितवो दिवि । एकाहमिन्द्रमुत्थाप्य देवै राज्येऽभ्यषिच्यत ॥ १९२
संप्राप्तदेवराज्यः सन्नानाय्य कितवान्सखीन् । सवेश्याश्च दिवं देवानादिदेशाधिपत्यतः ॥ १९३
नीत्वास्मान्सर्वतीर्थेषु सर्वान्स्नपयत क्षणात् । दिव्येष्वपि च भौमेषु सप्तद्वीपगतेष्वपि ॥ १९४
अनुप्रविश्य चाद्यैव भूपतीन्निखिलान्भुवि । प्रयच्छत महादानान्यस्मदर्थमनारतम् ॥ १९५
इत्यादिष्टाः सुरास्तेन सर्वं चक्रुस्तदैव तत् । धूतपापः स तैः पुण्यैर्धूर्तः प्रापेन्द्रतां स्थिराम् ॥ १९६
तद्वयस्याश्च वेश्याश्च ये तेनानायिता दिवम् । अमरत्वं ययुस्तेऽपि तत्प्रसादाद्धतांहसः ॥ १९७

द्वितीयेऽह्नि स्थिरप्राप्तदेवराज्यं स्वबुद्धितः। कितवं धर्मराजाय चित्रगुप्तः शशंस तम् ॥ १९८
ततः सुचरितं बुद्ध्वा धर्मराजो विसिस्मिये। अहो बत द्यूतकृता वञ्चिताः स्म इति ब्रुवन् ॥ १९९
ईदृशाः कितवा वत्रिन्नित्युक्त्वा विरते गुरौ। ठिण्ठाकरालं स्वामिन्द्रोऽनैपीत्प्रेष्य कलावतीम् ॥ २००
तत्र तद्बुद्धिधैर्याभ्यां तुष्टः संमान्य देवराट्। दत्त्वा कलावतीं चक्रे तं स पार्श्वस्थमात्मनः ॥ २०१
ततः स देववद्वीरः कलावत्या समं सुखी। ठिण्ठाकरालो न्यवसच्छंकरानुग्रहाद्दिवि ॥ २०२
तदीदृग्द्यूतकाराणां मायासाहसयोर्गतिः। तदग्निशिख वेताल किं चित्रं कितवेन यत् ॥ २०३
डाकिनेयेन निक्षिप्तः कूपेऽस्मिन्मायया भवान्। तत्त्वं निर्याहि मित्रावां निरेष्यावोऽवटादितः ॥ २०४
इत्युक्तो ब्रह्मरक्षोभ्यां निर्गत्याहं ततोऽवटात्। रात्रावस्यां पुरि प्राप्तं क्षुधार्तः पथिकं द्विजम् ॥ २०५
तं च गृह्णामि धावित्वा विप्रं यावज्जिघृत्सया। तावच्छ्रीविक्रमादित्यदेवमाक्रन्दति स्म सः ॥ २०६
श्रुत्वैव च स निर्गत्य राजा ज्वलनसंनिभः। आः पाप मा वधीर्विप्रमित्याराग्प्रतिहत्य माम् ॥ २०७
प्रावर्तत शिरश्छेत्तुमालेख्यपुरुषस्य यत्। तेन मे छेदमागच्छन्कण्ठोऽभूत्स्रुतशोणितः ॥ २०८
ततोऽञ्जलिग्रस्तेनैव रक्षितोऽस्म्युज्झितद्विजः। एवंप्रभावो देवोऽसौ विक्रमादित्यभूपतिः ॥ २०९
तदाज्ञया हतश्चायं खण्डकापालिको मया। तदेतं मम वेताल भक्ष्यं यमशिख त्यज ॥ २१०
एवमग्निशिखेनोक्तोऽप्याक्षिपत्तस्य पाणिना। दर्पाद्यमशिखः खण्डकापालिककलेवरम् ॥ २११
ततः श्रीविक्रमादित्यः प्रकाशयात्मानमत्र सः। आलिख्य पुरुषं भूमौ पाणिं तस्यासिनाच्छिनत् ॥ २१२
तेन च्छिन्नो यमशिखस्यापतत्तस्य यत्करः। तत्स तं कुणपं त्यक्त्वा पलाय्यैवागमद्भयात् ॥ २१३
अभक्षयच्चाग्निशिखः कुणपं तं कपालिनः। अहं च निर्भयोऽद्राक्षं सर्वं राजौजसा तु तत् ॥ २१४
एवमाख्याय सा यक्षवधूर्मदनमञ्जरी। त्वत्प्रभावं महाराज तत्र मामवदत्पुनः ॥ २१५
ततो वक्ति स्म मधुरं स राजानङ्गदेव माम्। यक्षि कापालिकान्मुक्ता गच्छ भर्तृगृहानिति ॥ २१६
ततः प्रणम्य तमहं गृहं स्वमिदमागता। चिन्तयन्त्युपकारस्य निष्कृतिं तस्य भूपतेः ॥ २१७
एवं प्राणाः कुलं भर्ता दत्ता मे प्रभुणा तव। त्वदाख्याता च तस्यैषा संवदिष्यति मत्कथा ॥ २१८
अद्य ज्ञातं च यत्तस्य राज्ञस्त्रैलोक्यसुन्दरी। प्रेषिता सिंहलेन्द्रेण तनया सा स्वयंवरा ॥ २१९
तां च हर्तुं कृता बुद्धिः सर्वैः संभूय राजभिः। हत्वा विक्रमशक्तिं तं तत्सामन्तं समत्सरैः ॥ २२०
तस्माद्विक्रमशक्तेस्त्वं गत्वा तद्विदितं कुरु। येन तेषामवहितः प्रतीकारे स तिष्ठति ॥ २२१
अहं च तत्करिष्यामि प्रयत्नं येन तानरीन्। हत्वा स विक्रमादित्यदेवो विजयमाप्स्यति ॥ २२२
एतदर्थमिहानीतो मया त्वं निजमायया। येन राज्ञः ससामन्तस्यैतत्सर्वं वदिष्यसि ॥ २२३
प्राभृतं च प्रहेष्यामि त्वत्प्रभोस्तस्य तादृशम्। दद्यां तदुपकारस्य लेशतो येन निष्कृतिम् ॥ २२४
एवं वदति यावत्सा तावत्ते तत्र कन्यके। आगते समृगे ये द्वे दृष्टे अस्माभिरम्बुधौ ॥ २२५
एका चन्द्रावदाताङ्गी प्रियङ्गुश्यामलापरा। सरित्पतेः कृतोपासे जाह्नवीयमुने इव ॥ २२६
निषण्णयोस्तयोस्तां च यक्षीं देवास्मि पृष्टवान्। देवि के कन्यके एते सौवर्णोऽयं मृगश्च कः ॥ २२७
तच्छ्रुत्वा सा महाराज यक्षिणी मामभाषत। अनङ्गदेव यदि ते कौतुकं वच्मि तच्छृणु ॥ २२८
विघ्नायाजग्मतुः पूर्वं प्रजासर्गे प्रजापतेः। घोरौ घण्टनिघण्टाख्यौ दानवौ देवदुर्जयौ ॥ २२९
तयोर्विनाशकामश्च विधाता कन्यके इमे। जगदुन्मादनोद्दामरूपशोभे विनिर्ममे ॥ २३०
दृष्ट्वैवात्यद्भुते चैते हरन्तौ तौ महासुरौ। परस्परं युध्यमानौ जग्मतुर्द्वावपि क्षयम् ॥ २३१
ततो ब्रह्मा धनाध्यक्षायैते कन्ये समर्पयत्। त्वया योग्याय कस्मैचिद्भर्त्रे देये इमे इति ॥ २३२
धनदोऽप्यर्पयदिमे मद्भर्त्रे स्वानुजन्मने। मद्भर्ता चार्पयन्मह्यं तथैव वरकारणम् ॥ २३३
मया श्रीविक्रमादित्यश्चानयोश्चिन्तितो वरः। देवावतारो ह्युचितः स एव पतिरेतयोः ॥ २३४
एवंरूपे इमे कन्ये मृगस्याख्यायिकां शृणु। जयन्तो नाम तनयो दयितोऽस्ति शचीपतेः ॥ २३५
स भ्राम्यमाणः स्वःस्त्रीभिर्व्योम्नि जातु शिशुर्भुवि। राजपुत्रानधोऽद्राक्षीत्क्रीडतो मृगपोतकैः ॥ २३६

ततः स बालभावेन क्रीडामृगशिशुं विना। हेवाकी त्रिदिवं गत्वा प्रारोदीत्पितुरग्रतः॥ २३७
तेन तस्य कृते शक्रोऽकारयद्विश्वकर्मणा। सुधासेकार्पितप्राणं हेमरत्नमयं मृगम्॥ २३८
अथ तेन स चिक्रीड जयन्तः संतुतोष च। सोऽप्यत्र तस्थौ विहरन्नाके हरिणपोतकः॥ २३९
कालेनेन्द्रजितान्वर्थनाम्ना रावणसूनुना। सोऽपहृत्य मृगो निन्ये लङ्कां स्वनगरीं दिवः॥ २४०
गते च काले हतयोः सीताहरणमन्युना। रामलक्ष्मणवीराभ्यां रावणेन्द्रजितोस्तयोः॥ २४१
लङ्काराज्येऽभिषिक्तस्य राक्षसेन्द्रस्य मन्दिरे। विभीषणस्य सोऽतिष्ठद्रत्नहेममृगोऽद्भुतः॥ २४२
विभीषणश्च तं मह्यमुत्सवे जातुचिद्गृहान्। नीतायै भर्तृबान्धव्यान्मृगं संमानयन्नदात्॥ २४३
सोऽयं मृगशिशुर्दिव्यो वर्ततेऽद्य गृहे मम। मया च त्वत्प्रभोरेष कर्तव्योऽयमुपायनम्॥ २४४
इति सा यावदाख्याति यक्षिणी मे कथाक्रमम्। तावत्कमलिनीकान्तो रविरस्तमुपाययौ॥ २४५
ततस्तया समादिष्टे धाम्नि संध्याविधेः परम्। सिंहलेश्वरदूतोऽयमहं च शयितावुभौ॥ २४६
प्रातः प्रबुद्धौ पश्यावो यावदावामनीकिनीम्। प्राप्तौ विक्रमशक्तेस्तां सामन्तस्य तव प्रभो॥ २४७
ततो विचिन्त्य यक्षिण्यास्तत्प्रभावविजृम्भितम्। पार्श्वं विक्रमशक्तेर्द्रागगतावावां सविस्मयौ॥ २४८
स च दृष्ट्वैव संमान्य कुशलं परिपृच्छ्य च। सिंहलेश्वरसंदेशं यावन्नौ प्रष्टुमिच्छति॥ २४९
तावत्ते यक्षिणीप्रोक्तस्वरूपे दिव्यकन्यके। मृगपोतश्च संप्राप्तास्तत्र यक्षचमूवृताः॥ २५०
तान्दृष्ट्वा दुष्टभूतादिमायाशङ्की स संशयात्। देव विक्रमशक्तिर्मां किमेतदिति पृष्टवान्॥ २५१
ततः ससिंहलाधीशकार्यं तस्मायहं क्रमात्। यक्षिणीकन्यकायुग्ममृगोदन्तमवर्णयम्॥ २५२
यक्षीमुखाच्छ्रुतं तं च सर्वेषामैकमत्यतः। राजद्विष्टोद्यमं राज्ञां तस्यावोचमहं ततः॥ २५३
ततः स संमान्यावां च दिव्यकन्ये च ते उभे। प्रहृष्टः सैन्यमकरोत्सामन्तः सज्जमाहवे॥ २५४
क्षणाच्चाश्रावि देवात्र सैन्यतूर्यमहारवः। क्षणाच्चादर्शि सम्लेच्छं प्रतिराजबलं महत्॥ २५५
अन्योन्यदर्शनक्रोधादभिधावितयोस्तयोः। प्रावर्तत द्वयोर्युद्धमस्मत्सैन्यारिसैन्ययोः॥ २५६
ततो यक्षीविसृष्टैस्तैर्यक्षैरस्मद्विषद्बलम्। अन्यैरस्मद्भटाविष्टैरन्यैः सख्यादहन्यत॥ २५७
सैन्यरेणुगणाकीर्णं खड्गधारानिरन्तरम्। सशूरगर्जितं घोरमुदभूद्रणदुर्दिनम्॥ २५८
छेदोच्छलद्भिर्द्विषतां निपतद्भिश्च मूर्धभिः। अशोभत जयश्रीर्नः क्रीडन्ती कन्दुकैरिव॥ २५९
क्षणाच्च हतशेषास्ते राजानो भग्नसैनिकाः। त्वत्सामन्तस्य कटकं प्रणताः शरणं श्रिताः॥ २६०
ततो चितासु सद्वीपास्वाशासु चतसृष्वपि। उत्सादितेषु म्लेच्छेषु सर्वभूमीश्वर त्वया॥ २६१
निजेन भर्त्रा सहिता प्रकटीभूय यक्षिणी। देव विक्रमशक्तिं तं मां चैवं वदति स्म सा॥ २६२
मया यदेतद्विहितं सेवामात्रं भवत्प्रभोः। तदावेद्यं पुनश्चैवं स विज्ञाप्यो गिरा मम॥ २६३
त्वयैते परिणेतव्ये कन्यके देवनिर्मिते। द्रष्टव्ये च प्रसादेन लालनीयोऽप्ययं मृगः॥ २६४
मदीयं प्राभृतं ह्येतदित्युक्त्वा रत्नसंचयम्। दत्त्वा यक्षी तिरोऽभूत्सा भर्त्रा सह सहानुगा॥ २६५
अन्येद्युः परिवारेण विभवेन च भूयसा। आगान्मदनलेखा सा सिंहलेश्वरकन्यका॥ २६६
कृत्वा प्रत्युद्गमं साथ तेन विक्रमशक्तिना। प्रावेश्यत स्वकटकं प्रणतेन प्रहर्षतः॥ २६७
द्वितीयेऽह्नि गृहीत्वा तां ते चोभे दिव्यकन्यके। हेमरत्नमृगं तं च त्रिजगन्नेत्रकौतुकम्॥ २६८
सिद्धकार्य इहागन्तुं देवपाददिदृक्षया। ततो विक्रमशक्तिः स चलितो राजभिः सह॥ २६९
स चेह निकटप्राप्तः सामन्तो देव वर्तते। आवेदनाय देवस्य तेनावां प्रेषितौ पुरः॥ २७०
तदेव सिंहलेन्द्रस्य यक्षिण्याश्चानुरोधतः। तत्कन्याहरिणान्देवः प्रत्युद्यातु नृपानपि॥ २७१
इत्युक्तोऽनङ्गदेवेन विक्रमादित्यभूपतिः। कृतं दुःसाध्यमपि तद्यक्षिणीरक्षणं स्मरन्॥ २७२
नामन्यत तृणायापि श्रुत्वा तत्प्रत्युपक्रियाम्। बहु कृत्वापि मन्यन्ते स्वल्पमेव महाशयाः॥ २७३
हृष्टश्च सिंहलाधीशदूतयुक्तं पुनः स तम्। अनङ्गदेवं हस्त्यश्वग्रामरत्नैरपूरयत्॥ २७४

नीत्वा दिनं तदथ सिंहलराजपुत्र्यास्तस्यास्तयोः कमलजोद्भवकन्ययोश्च।

प्रत्युद्गमाय स महीपतिरुज्जयिन्याः सैन्यैर्गजाश्ववहनैः सममुच्चचाल ॥ २७५
सत्कुञ्जरोऽञ्जनगिरिर्जयवर्धनस्य मत्तद्विपो रणभटस्य च कालमेघः ।
सङ्ग्रामसिद्धिरपि सिंहपराक्रमस्य वीरस्य विक्रमनिधे रिपुराक्षसश्च ॥ २७६
पवनजवो जयकेतोर्वल्लभशक्तेः समुद्रकल्लोलः ।
अश्वौ बाहुसुबाह्वोः शरवेगो गरुडवेगश्च ॥ २७७
श्यामा कुवलयमाला कोङ्काणी कीर्तिवर्मणस्तुरगी ।
कर्का गङ्गालहरी सुसैन्धवी समरसिंहस्य ॥ २७८
इति हस्त्यश्वं राजसु तेष्वपि चलितेषु विभजतामभितः ।
शुश्रुविरेऽत्र च राजनि चलिते दण्डाधिकारिणां वाचः ॥ २७९
भूमिः सैन्यमयी तदुत्थितमहाशब्दैकमय्यो दिशः
संसर्पद्ध्वजिनीविमर्दविलसद्धूलीमयी द्यौरपि ।
सर्वस्याद्भुततत्प्रभावमहिमव्याहारमय्यो गिर-
स्तस्मिन्राज्ञि पथि प्रयाति सकलद्वीपाधिनाथेऽभवन् ॥ २८०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके द्वितीयस्तरङ्गः ।

तृतीयस्तरङ्गः ।

ततः स विक्रमादित्यो जयसैन्यमवाप तत् । अधिष्ठितं स्वसेनान्या तेन विक्रमशक्तिना ॥ १
अग्रागतेन तेनैव सोत्केन प्रणतात्मना । सराजकेन सहितः स्वबलं स विवेश च ॥ २
गौडः शक्तिकुमारोऽयं कर्णाटोऽयं जयध्वजः । लाटो विजयवर्मायं काश्मीरोऽयं सुनन्दनः ॥ ३
गोपालः सिन्धुराजोऽयं भिल्लो विन्ध्यबलोऽप्ययम् । निर्मूकः पारसीकोऽयं नृपः प्रणमति प्रभो ॥ ४
इत्यास्थाने नृपान्सोऽत्र प्रतीहारनिवेदितान् । सम्राट् संमानयामास सामन्तान्सैनिकानपि ॥ ५
सिंहलेन्द्रसुतादिव्यकन्याहेममृगांश्च तान् । यथार्हं सत्करोति स्म स सविक्रमशक्तिकान् ॥ ६
तैः समं सबलोऽन्येद्युः प्रतस्थे च ततः कृती । स राजा विक्रमादित्यः प्राप चोज्जयिनीं पुरीम् ॥ ७
संमानितविसृष्टेषु स्वदेशानथ राजसु । जगदानन्दिनि प्राप्ते वसन्तसमयोत्सवे ॥ ८
लतासु पुष्पाभरणैर्मण्डनं कुर्वतीष्विव । तन्वतीष्विव संगीतं भृङ्गयोषित्सु गुञ्जितैः ॥ ९
नृत्यन्तीष्विव चाश्लिष्टमरुत्सु वनराजिषु । पिकेषु कलशब्देषु मङ्गलानि पठत्स्विव ॥ १०
सोऽत्र ता विक्रमादित्यः परिणिन्ये शुभेऽहनि । सिंहलेश्वरकन्यां तां ते च द्वे दिव्यकन्यके ॥ ११
सिंहलेश्वरकन्याया ज्येष्ठो भ्राता सहागतः । सिंहवर्मा ददौ वेश्यां महान्तं रत्नसंचयम् ॥ १२
तत्कालमेत्य च तयोर्यक्षिणी दिव्यकन्ययोः । असंख्यान्रत्नराशीन्सा ददौ मदनमञ्जरी ॥ १३
शक्ताहं गन्तुमानृण्यं देव त्वत्सुकृतस्य किम् । किं तु दर्शयितुं भक्तिं नैतत्किंचित्कृतं मया ॥ १४
तत्प्रसादोऽनयोः कार्यः कन्ययोर्हरिणस्य च । इत्युक्त्वा च तिरोऽभूत्सा यक्षी राज्ञाभिपूजिता ॥ १५
ततः संप्राप्य भार्यास्ताः सद्वीपां च महीं कृती । शशास विक्रमादित्यो राजा राज्यमकण्टकम् ॥ १६
सुखितश्चास्त विहरंस्तदा चोद्यानभूमिषु । ग्रीष्मे जलेषु सरसां धारायन्त्रगृहेषु च ॥ १७
वर्षास्वन्तःपुरेषूद्यन्मृदङ्गरवहारिषु । शरदीन्दूदयापानहृद्यहर्म्यतलेष्वपि ॥ १८
आस्तीर्णसुखशय्येषु कालागुरुसुगन्धिषु । वासवेश्मसु हेमन्ते स नृपोऽन्तःपुरैर्वृतः ॥ १९
तस्येदृशस्य राज्ञश्च नगरस्वामिसंज्ञकः । बभूव ग्रामशतभुक्तिचित्रकृज्जितविश्वकृत् ॥ २०
स व्यहेन व्यहेनास्मै राज्ञे प्राभृतपुत्रिकाम् । लिखित्वान्यान्यया रूपभङ्ग्या चित्रकरो ददौ ॥ २१
एकदा चोत्सववशाद्विस्मृत्य लिखिता नै सा । तेन चित्रकृता दैवात्पुत्रिका नृपतेः कृते ॥ २२
प्राप्ते च प्राभृतदिने स्मृत्वा यावत्समाकुलः । आस्ते चित्रकरो हा किं ढौकयेयं प्रभोरिति ॥ २३
तावद्दूरागतः कोऽपि पान्थोऽकस्मात्तमभ्यधात् । स चास्य पुस्तिकां हस्ते न्यस्यैव काप्यगाल्लघु ॥ २४

कौतुकाच्च स यावत्तामुद्घाटयति चित्रकृत्। तावद्ददर्श तत्रान्तश्चित्रस्थां पुत्रिकां पटे ॥ २५
दृष्ट्वैवाद्भुतरूपां तां नीत्वा नृपतये ददौ। प्राभृतं प्रत्युतेदृक्षे सिद्धमद्येति हर्षुलः ॥ २६
नृपतिस्तां तु दृष्ट्वैव साश्चर्यः स जगाद तम्। न भद्र तव रेखेयं रेखेयं विश्वकर्मणः ॥ २७
मानुषो हि कुतो वेत्ति लिखितुं रूपमीदृशम्। तच्छ्रुत्वा चित्रकृद्राज्ञे यथावृत्तं शशंस सः ॥ २८
ततः सोऽनन्यदृग्राजा तां पश्यन्पुत्रिकां सदा। स्वप्ने द्वीपान्तरेऽद्राक्षीत्तद्रूपामेव कन्यकाम् ॥ २९
संगमं भजते यावत्सोत्कः सोत्सुकया तया। तावत्प्रबोधितः सोऽभूद्यामिकेन निशाक्षये ॥ ३०
प्रबुद्धो भग्नतत्स्वप्नसमागमसुखश्च सः। यामिकं तं क्रुधा राजा नगर्या निरकालयत् ॥ ३१
क पान्थः पुस्तिका कास्य क तस्यां चित्रपुत्रिका। तस्या एव सजीवायाः स्वप्ने संदर्शनं क च ॥ ३२
तदेषा दैवघटना कन्या सास्तीति वक्ति मे। न च जानामि तद्द्वीपं प्राप्नुयां तत्कथं नु ताम् ॥ ३३
इत्यादि चिन्तयन्सोऽथ सर्वत्रारतिमान्नृपः। स्मरज्वरेण जज्वाल पर्याकुलपरिच्छदः ॥ ३४
ससंतापश्च विजने क्षत्त्रा भद्रायुधेन सः। शनैस्तत्कारणं पृष्टो जगादैवं महीपतिः ॥ ३५
शृणु तद्वच्मि ते मित्र ज्ञातं तावदिदं त्वया। यच्चित्रपुत्रिका तेन दत्ता चित्रकरेण मे ॥ ३६
तां चिन्तयंश्च सुप्तोऽहं स्वप्ने जानामि वारिधिम्। उत्तीर्य प्राप्य नगरं प्रविष्टोऽस्म्यतिसुन्दरम् ॥ ३७
तत्रापश्यमहं बह्वीः सायुधाः कन्यकाः पुरः। ता मां दृष्ट्वा जहि जहीत्युच्चैः कलकलं व्यधुः ॥ ३८
ततः ससंभ्रमा कापि जाने मामेत्य तापसी। प्रवेश्यैव निजं गेहं संक्षेपादिदमब्रवीत् ॥ ३९
पुरुषद्वेषिणी पुत्र राजपुत्रीयमागता। इतो मलयवत्याख्या विहरन्ती यदृच्छया ॥ ४०
दृष्टमात्रं च पुरुषं कन्याभिर्घातयत्यसौ। एताभिस्तेन रक्षार्थं मयेह त्वं प्रवेशितः ॥ ४१
इत्युक्त्वा तापसी सद्यः स्त्रीवेषं सा व्यधान्मम। अवध्याः कन्यकास्तास्तु मत्वा सोढं मयापि तत् ॥ ४२
यावत्प्रविष्टामत्रैव सकन्यां तां नृपात्मजाम्। पश्यामि तावच्चित्रस्था या मयादर्शि सैव सा ॥ ४३
अचिन्तयं च धन्योऽहं यच्चित्रलिखितामिमाम्। दृष्ट्वा पुनश्च पश्यामि साक्षात्प्राणसमामिति ॥ ४४
राजपुत्री च सा तावत्तापसीं तां सकन्यका। दृष्टोऽस्माभिः प्रविष्टोऽत्र पुमान्कोऽपीत्यभाषत ॥ ४५
पुमान्कुतः प्राघुणिका स्थितैषा मे स्वसुः सुता। इति तां तापसी सापि प्रत्यवोचत्प्रदर्श्य माम् ॥ ४६
ततः सा राजतनया स्त्रीरूपमपि वीक्ष्य माम्। विस्मृत्य पुरुषद्वेषं सद्यः स्मरवशाभवत् ॥ ४७
आसीत्कण्टकिता किंचिच्चिन्तयन्तीव निश्चला। लब्धच्छिद्रेण कामेन कीलितेव समं शरैः ॥ ४८
क्षणाच्च तापसीं तां सा व्याहरद्राजकन्यका। तदार्ये त्वत्स्वसृसुता ममापि प्राघुणी न किम् ॥ ४९
आयातु मद्गृहमियं प्रहेष्याम्यर्चितामिमाम्। इत्युक्त्वादाय पाणौ मामनैषीत्सा स्वमन्दिरम् ॥ ५०
अहं च लब्धचित्तोऽस्या जाने तत्र तथेत्यगाम्। अन्वमन्यत मां सापि विदग्धा वृद्धतापसी ॥ ५१
ततोऽहं स्थितवांस्तत्र राजपुत्र्या तया सह। क्रीडन्त्या कन्यकान्योन्यविवाहादिविनोदनैः ॥ ५२
न च मामसुचत्पार्श्वात्क्षणं सा मद्गतेक्षणा। यत्र नाहं न सा तस्यै काचनारोचत क्रिया ॥ ५३
अथ ताः कन्यकाः कृत्वा वधूं तां राजकन्यकाम्। मां वरं चावयोर्जाने विवाहं क्रीडया व्यधुः ॥ ५४
कृतोद्वाहौ ततश्चावां प्रविष्टौ वासकं निशि। निःशङ्का तत्र मां सा च कण्ठे राजसुताग्रहीत् ॥ ५५
तत्कालं च मयात्मानं प्रकाश्यालिङ्गितैव सा। सिद्धेष्टहृष्टा दृष्ट्वा मामासील्लज्जानता क्षणम् ॥ ५६
प्रवर्तयामि सुरते यावच्चैतां हृतत्रपाम्। तावत्प्रबोधितोऽस्मीह यामिकेन दुरात्मना ॥ ५७
तद्भद्रायुध नेदानीं चित्रे स्वप्ने च दृष्टया। तया मलयवत्याहं विना जीवितुमुत्सहे ॥ ५८
इत्युक्तवन्तं राजानं सत्यस्वप्नमवेत्य सः। भद्रायुधः प्रतीहारस्तमाश्वास्यैवमुक्तवान् ॥ ५९
कृत्स्नं चेत्स्मर्यते सम्यक्तत्तदालिख्यतां पटे। देवेन नगरं यावदुपायोऽत्र निरूप्यते ॥ ६०
इति भद्रायुधेनोक्तः स राजा लिखति स्म तत्। पटे पुरवरं सर्वं तद्वृत्तान्तं च तत्क्षणम् ॥ ६१
तं चित्रपटमादाय प्रतीहारस्तदैव सः। मठं नवं कारयित्वा तत्र भित्तावलम्बयत् ॥ ६२
मठे चात्राकरोद्दूरदेशादागतबन्दिनाम्। सत्रे षड्रसमाहारं सवस्त्रयुगकाञ्चनम् ॥ ६३

यश्चित्रस्थमिदं वेत्ति पुरं कोऽपि स एति चेत् । ममावेद्य इति प्रादादाज्ञां च मठवर्तिनाम् ॥ ६४
अत्रान्तरे ग्रीष्मवनं मल्लिकामोदिमारुतम् । छायानिषण्णपथिकं दृष्ट्वा पुष्पितपाटलम् ॥ ६५
आजगामाम्बुदश्यामो गुरुगम्भीरगर्जितः । केतकोद्दामदशनः प्रावृट्कालमदद्विपः ॥ ६६
तत्कालं तस्य पौरस्त्यपवनेद्ध इवाययौ । वृद्धिं विरहदावाग्निर्विक्रमादित्यभूपतेः ॥ ६७
हिमं हारलते देहि सिञ्च चित्राङ्गि चन्दनैः । पत्रलेखेऽब्जिनीपत्रशयनं शिशिरं कुरु ॥ ६८
कंदर्पसेने कदलीदलैर्वितर मारुतम् । इति तद्वारनारीणां तदा शुश्रुविरे गिरः ॥ ६९
क्रमाच्च विद्युद्विषमः शशामास्य घनागमः । राज्ञः सविरहज्वालो न पुनर्मदनज्वरः ॥ ७०
पान्थाः पथि प्रवर्तन्तां दूरस्थानां प्रवृत्तयः । प्रियाः प्रियाणां श्रूयन्तां जायन्तां तत्समागमाः ॥ ७१
इत्यादिशन्तीव ततः कलहंसरवैः शरत् । आगात्फुल्लाम्बुजमुखी सकाशकुसुमस्मिता ॥ ७२
तस्यां दूरागतो बन्दी तत्र क्षत्तृकृते मठे । भोजनार्थी विवेशैको निशम्य ख्यातिमेकदा ॥ ७३
नाम्ना शम्बरसिद्धिः स मठेऽत्र कृतभोजनः । आत्तवस्त्रयुगश्चित्रपटं भित्तौ ददर्श तम् ॥ ७४
विभाव्य तत्र चित्रस्थं नगरं तत्स विस्मितः । जगाद बन्दी केनेदमहो आलिखितं पुरम् ॥ ७५
यदेकेन मया दृष्टं लिखितं येन तेन च । द्वितीयेनेति जानेऽहं नापरेणेति केनचित् ॥ ७६
एतच्छ्रुत्वा मठजनेनोक्तं भद्रायुधस्य तत् । तत्तेन स्वयमेत्यासौ बन्दी निन्ये नृपान्तिकम् ॥ ७७
किं त्वया नगरं सत्यं तद्दृष्टमिति भूभृता । तत्र शम्बरसिद्धिः स परिपृष्टोऽब्रवीदिदम् ॥ ७८
दृष्टं मया तन्मलयपुरं नाम महापुरम् । भ्रमता भुवमुत्तीर्य वारिधिं द्वीपमध्यगम् ॥ ७९
तस्मिन्मलयसिंहाख्यो नगरेऽस्ति महीपतिः । तस्यास्ति नाम्ना मलयवतीत्यनुपमा सुता ॥ ८०
पुरुषद्वेषिणी सा च स्वप्ने जातु कथंचन । विहारनिर्गता कंचिन्महापुरुषमैक्षत ॥ ८१
तेनालोकितमात्रेण स भीत इव तत्क्षणम् । निर्ययौ मनसस्तस्याः पुरुषद्वेषदुर्ग्रहः ॥ ८२
नीत्वाथ तं स्वभवनं स्वप्न एव विधाय च । विवाहं तेन सहिता वासवेश्म विवेश सा ॥ ८३
तत्र तेन समं यावत्सेवते सुरतोत्सवम् । तावद्वासस्थया दास्या सा निशान्ते प्रबोधिता ॥ ८४
ततो निर्वास्य कोपात्तां दासीं स्वप्नावलोकितम् । तं स्मरन्ती प्रियतमं प्राज्वलद्विरहाग्निना ॥ ८५
अपश्यन्ती गतिं कांचित्स्मरेण विवशीकृता । उत्थायोत्थाय शयने स्रस्ताङ्गी न्यपतत्परम् ॥ ८६
मूकेव भूताक्रान्तेव तमःसंमोहितेव च । नोत्तरं पृच्छतः किंचिद्ददौ परिजनस्य सा ॥ ८७
विज्ञाय पित्रा मात्रा च ततः पृष्टातिकृच्छ्रतः । शशंस स्वप्नवृत्तान्तं सा तमाप्तसखीमुखे ॥ ८८
ततः पित्रा कृताश्वासा प्रतिज्ञामकरोच्च सा । विशाम्यग्निं तमाप्नोमि षड्भिर्मासैर्न चेदिति ॥ ८९
पञ्च मासा गताश्चाद्य तस्याः को वेत्ति भावि किम् । इतीदृक्तत्र वृत्तान्तः पुरे परिगतो मया ॥ ९०
एवं तेन ससंवादमुक्ते शम्बरसिद्धिना । जातार्थनिश्चये हृष्टे राज्ञि भद्रायुधोऽभ्यधात् ॥ ९१
सिद्धं कार्यं स देशो हि त्वद्वशः सनृपः प्रभो । तत्तत्र गम्यतां यावन्मासः षष्ठो न यात्यतः ॥ ९२
इति तेनोदिते श्रुत्वा तदाख्यातार्थविस्तरम् । कृत्वा शम्बरसिद्धिं तमग्रे भूरिधनार्चितम् ॥ ९३
रविरश्मिषु संपातं पाण्डिमानं घनेषु च । सरित्तोयेषु कार्श्यं च निरस्येव निजं नृपः ॥ ९४
निरातङ्कः स संपद्य तदैव दयितां प्रति । प्रतस्थे विक्रमादित्यः सैन्येन लघुना वृतः ॥ ९५
गत्वा क्रमेण तीर्णाब्धिर्यावत्प्राप्तः पुरं स तत् । तावद्ददर्श तत्राग्रे जनं कोलाहलाकुलम् ॥ ९६
एषा मलयवत्यद्य पूर्णे षाण्मासिकेऽवधौ । अप्राप्तदयिता वह्निं राजपुत्री विविक्षति ॥ ९७
इत्यत्र शुश्राव जनात्पृष्टादथ स भूपतिः । उपागाच्च स तं देशं रचिता यत्र तच्चिता ॥ ९८
तद्दर्शनादपसृते जने तत्र ददर्श तम् । दृशोरकाण्डपीयूषवर्षं सा राजकन्यका ॥ ९९
सोऽयं प्राणेश्वरः स्वप्नपरिणेता ममागतः । तत्तातस्योच्यतां शीघ्रमिति स्माह च सा सखीः ॥ १००
ताभिर्गत्वा तथैवोक्तस्तत्पिता सोऽथ भूपतिः । निर्दुःखो जातहर्षस्तं प्रह्वो राजानमभ्यगात् ॥ १०१
तत्कालमुत्क्षिप्य भुजं तेन शम्बरसिद्धिना । उच्चैरवसरज्ञेन बन्दिनेदमपठ्यत ॥ १०२

जय निजतेजःसाधितभूतगण म्लेच्छविपिनदावाग्ने।
जय देव सप्तसागरसीममहीमानिनीनाथ ॥ १०३
जय विजितसकलपार्थिवविनतशिरोधारितातिगुर्वाज्ञ।
जय विषमशील विक्रमवारिनिधे विक्रमादित्य ॥ १०४

इत्युक्ते बन्दिना तं स विक्रमादित्यमागतम्। बुद्ध्वा मलयसिंहोऽत्र राजा जग्राह पादयोः ॥ १०५
विवेश च कृतातिथ्यस्तेन साकं स्वमन्दिरम्। तया मलयवत्या च दुहित्रा मृत्युमुक्तया ॥ १०६
ददौ च तां सुतां तस्मै विक्रमादित्यभूभृते। स राजा तेन जामात्रा मन्वानः कृतकृत्यताम् ॥ १०७
यथा चित्रे तथा स्वप्ने यथा स्वप्ने तथैव ताम्। विलोक्य साक्षान्मलयवतीमङ्कगतां प्रियाम् ॥ १०८
स चापि विक्रमादित्यस्तदद्भुतममन्यत। फलं शैलसुताकान्तप्रसादसुरशाखिनः ॥ १०९

अथ तामादाय वधूं निर्वृतिमिव रूपिणीं स मलयवतीम्।
उत्तीर्य वारिराशिं सोत्कलिकं सुचिरविरहमिव ॥ ११०
तत्तत्प्राभृतहस्तैः प्रणम्यमानः पदे पदे भूपैः।
निजनगरीमुज्जयिनीं प्रत्यागाद्विक्रमादित्यः ॥ १११

प्रभावमालोक्य च तत्र तस्य तं यथेच्छसत्यीकृतचित्रकौतुकम्।
विसिस्मिये को न जहर्ष को न वा चकार को वा न महोत्सवं जनः ॥ ११२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके तृतीयस्तरङ्गः।

---

चतुर्थस्तरङ्गः।

ततोऽस्य विक्रमादित्यस्यैकदात्र कथान्तरे। राज्ञी कलिङ्गसेनाख्या सपत्नीरेवमब्रवीत् ॥ १
राज्ञा मलयवत्यर्थे यत्कृतं न तदद्भुतम्। सदा विषमशीलो हि देवोऽयं प्रथितो भुवि ॥ २
अहं न परिणीता किमवस्कन्द्यामुना बलात्। मद्रूपां पुत्रिकां दृष्ट्वा गतेनानङ्गनिघ्नताम् ॥ ३
एतन्निमित्तमाख्याता कथा कार्पटिकेन या। देवसेनेन मे तां वः कथयामि निशम्यताम् ॥ ४
परिणीतास्म्यविधिना कथं राज्ञेति दुःखिताम्। मामेत्याश्वासयन्नेवं स हि कार्पटिकोऽब्रवीत् ॥ ५
मा स्म मन्युं कृथा देवि श्रद्धया परया ह्यसि। परिणीतातिसंरम्भादत्रामूलात्कथां शृणु ॥ ६
अहं कार्पटिको भूत्वा सेवां कुर्वन्भवत्प्रभोः। अटव्यां दूरतोऽद्राक्षं महान्तं क्रोडमेकदा ॥ ७
दंष्ट्राविशङ्कटमुखं तमालश्यामलच्छविम्। कृष्णपक्षं शशिकलाः खादन्तमिव रूपिणम् ॥ ८
एत्य चावेदितो देवि मया राज्ञे तथैव सः। राजापि तद्रसाकृष्टो निरगान्मृगयाकृते ॥ ९
मृगाटवीं च संप्राप्य कुर्वन्व्याघ्रमृगक्षयम्। आवेदितं मया दूराद्वराहं पश्यति स्म तम् ॥ १०
दृष्ट्वाद्भुतं च तं मत्वा कंचित्कारणसूकरम्। रत्नाकराख्यमारोहदश्वमुच्चैःश्रवःसुतम् ॥ ११
मध्याह्ने हि सदा भानुर्मुहूर्तं व्योम्नि तिष्ठति। तत्कालं चारुणेनाश्वा मुच्यन्ते स्नानपानयोः ॥ १२
एकदोच्चैःश्रवा मुक्तस्तदा रविरथाद्वने। दृष्टामुपेत्य राज्ञोऽश्वां तं तुरंगमजीजनत् ॥ १३
तस्मिन्नारुह्य वाताश्वे जवादन्वपतच्च तम्। वराहं विद्रुतं राजा भूमिं दूरादवीयसीम् ॥ १४
तत्र दृष्टिपथात्सोऽस्य नष्टोऽभूत्क्वापि सूकरः। उच्चैःश्रवःसुतादश्वात्तस्मादपि जवाधिकः ॥ १५
ततो राजा तमप्राप्य दूरोज्झितपरिच्छदः। एकमन्वागतं दृष्ट्वा मामेवं परिपृष्टवान् ॥ १६
अपि जानासि कियतीं वयं भूमिमुपागताः। तच्छ्रुत्वा देवि राजानं प्रत्यवोचमहं तदा ॥ १७
योजनानां शतानि त्रीण्यागताः स्मः प्रभो इति। ततो राजाब्रवीत्तर्हि त्वं पद्भ्यां कथमागतः ॥ १८
एवं सविस्मयेनाहं राज्ञा पृष्टस्तमब्रवम्। देवास्ति पादलेपो मे वृत्तान्तं चात्र तं शृणु ॥ १९
पूर्वं भार्यावियोगेन तीर्थयात्राविनिर्गतः। पथि देवकुलं सायं सोद्यानं प्राप्तवानहम् ॥ २०
तत्र चाहं निशां नेतुं प्रविष्टोऽपश्यमन्तरे। स्त्रियमेकामतिथ्यं च तत्रातिथ्याद्धृतस्तया ॥ २१

रात्रौ च सा नभस्येकमोष्ठं कृत्वापरं भुवि । व्यात्तास्या प्राह मामीदृग्दृष्टं क्वापि मुखं त्वया ॥ २२
ततोऽसिधेनुमाकृष्य सभ्रूभङ्गमबिभ्यता । त्वया चेदृक्पुमान्दृष्टः क्वापीत्युक्ता मयापि सा ॥ २३
अथ सौम्यवपुर्भूत्वा साब्रवीन्मामवैकृता । यक्षी चण्ड्यभिधानाहं तुष्टा धैर्येण चास्मि ते ॥ २४
तदिदानीं मम ब्रूहि किं प्रियं करवाणि ते । एवमुक्तवतीं तां च यक्षिणीमहमभ्यधाम् ॥ २५
परितुष्टासि चेत्सत्यं तत्कुरुष्व तथा मम । अक्लेशेन यथा तीर्थान्यटेयं निखिलान्यपि ॥ २६
एवं मयोक्ता यक्षी सा पादलेपमदान्मम । तेन तीर्थान्यहं भ्रान्तस्त्वं चेहायानुधावितः ॥ २७
तेनैव प्रत्यहं चाहमिहागत्याटवीभुवि । भुक्त्वा फलान्युज्जयिनीमेत्य सेवां करोमि ते ॥ २८
इति देवि मया राजा विज्ञप्तोऽन्तरमन्यत । प्रसन्नदृष्टिकथितं योग्यं मामनुयायिनम् ॥ २९
भूयो मयैवं विज्ञप्तो राजा देवानयाम्यहम् । सुस्वादूनि फलानीह भुज्यन्ते प्रभुणा यदि ॥ ३०
नाहं भोक्ष्ये न मे किंचिदुपयुक्तं भवान्पुनः । भुङ्क्तां किंचित्परिश्रान्त इति राजादिशच्च माम् ॥ ३१
ततः कर्कटिकां तत्र संप्राप्याहमभक्षयम् । तया चाजगरोऽभूवमहं भक्षितमात्रया ॥ ३२
दृष्ट्वा चाजगरीभूतमकस्मादेवि मां तदा । देवो विषमशीलोऽभूत्सविषादः सविस्मयः ॥ ३३
एकाकी चात्र वेतालं भूतकेतुं समस्मरत् । प्राङ्नेत्ररोगाद्दृष्ट्यैव मोचयित्वा वशीकृतम् ॥ ३४
स वेतालः स्मृतायातः प्रह्वो राजानमब्रवीत् । किं स्मृतोऽस्मि महाराज निदेशो दीयतामिति ॥ ३५
अथ राजाब्रवीदेतं भद्र कार्पटिकं मम । सहसाजगरीभूतं प्रापय प्रकृतिं निजाम् ॥ ३६
वेतालोऽप्यवदद्देव नास्ति शक्तिर्ममेदृशी । शक्तयो नियता वारि वैद्युताग्निं नु हन्ति किम् ॥ ३७
ततो राजाब्रवीत्तर्हि यामः पल्लीमिमां सखे । अतो बुध्येत भिल्लेभ्यः कोऽप्युपायः कदाचन ॥ ३८
इत्यालोच्य सवेतालो राजा पल्लीं जगाम ताम् । तत्र साभरणं दृष्ट्वा तं चौराः पर्यवारयन् ॥ ३९
किरतां शरवर्षाणि तेषां पञ्चशतानि च । भूतकेतुः स वेतालो राजादेशादभक्षयत् ॥ ४०
शेषाः पलाय्य गत्वा तत्स्वसेनापतयेऽब्रुवन् । एकाकिकेसरी नाम स चागात्सबलः क्रुधा ॥ ४१
भृत्यस्यैकस्य च मुखाद्बुद्ध्वा प्रत्यभिजानतः । सेनापतिः स राजानमेत्य जग्राह पादयोः ॥ ४२
ततो निवेदितात्मानं प्रह्वं प्रत्यभिनन्द्य तम् । पृष्ट्वा च कुशलं राजा सेनापतिमभाषत ॥ ४३
मम कार्पटिको भुक्त्वा फलं कर्कटिकां वने । गतोऽजगरतां तस्य युक्तिं तन्मुक्तये कुरु ॥ ४४
एतद्राजवचः श्रुत्वा सेनापतिरुवाच सः । देवानुगोऽयं मत्पुत्रायास्मै तं दर्शयत्विति ॥ ४५
ततः स तेन तत्पुत्रो वेतालेन सहैत्य माम् । ओषधीरसनस्येन पूर्ववन्मानुषं व्यधात् ॥ ४६
उपागच्छाम च ततो हृष्टा राजान्तिकं वयम् । राजा च तमुदन्तं मां पादानतमबोधयत् ॥ ४७
एकाकिकेसरी सोऽथ भिल्लसेनापतिर्निजम् । गृहमभ्यर्थ्य राजानमनैषीदस्मदन्वितम् ॥ ४८
अपश्याम च तत्तस्य सदनं शबरीवृतम् । दन्तिदन्तचितोत्तुङ्गभित्ति व्याघ्रच्छदच्छवि ॥ ४९
वासांसि बर्हिपिच्छानि हारा गुञ्जाफलस्रजः । मातङ्गमदनिष्यन्दो यत्र स्त्रीणां च मण्डनम् ॥ ५०
तत्र सेनापतेर्भार्या परिचर्यां व्यधात्स्वयम् । राज्ञो मृगमदामोदिवासा मुक्ताद्यलंकृता ॥ ५१
स्नातभुक्तस्ततो राजा तत्र वृद्धांस्तदात्मजान् । सेनापतिं च तरुणं दृष्ट्वा तं परिपृष्टवान् ॥ ५२
सेनापते ममाश्चर्यमिदं तावत्त्वयोच्यताम् । तरुणस्त्वं त्वदीयास्तु पुत्रा वृद्धा अमी कथम् ॥ ५३
एवं स राज्ञा गदितः शबरेन्द्रोऽब्रवीदिदम् । महत्येषा कथा देव श्रूयतां यदि कौतुकम् ॥ ५४
चन्द्रस्वामीति विप्रोऽहं मायापुर्यां पुरावसम् । सोऽहं वनमगां जातु दार्वर्थं पितुराज्ञया ॥ ५५
तत्र मे मर्कटो मार्गं रुद्ध्वातिष्ठदबाधकृत् । आर्तेन चक्षुषा पश्यन्मार्गमन्यं प्रदर्शयन् ॥ ५६
न खादत्येष मां तावत्तद्गच्छामि वरं पथा । एतत्प्रदर्श्यमानेन पश्याम्यस्याशयं कपेः ॥ ५७
इत्यालोच्याथ तेनाहं मार्गेण प्रस्थितोऽभवम् । स च मे मर्कटोऽग्रेऽग्रे प्रायात्पश्यन्विवृत्य माम् ॥ ५८
गत्वा च दूरमारोहज्जम्बूवृक्षं स मर्कटः । तत्पृष्ठे च लताजालघने दृष्टिमदामहम् ॥ ५९
लतावलयबद्धाङ्गीमपश्यं चात्र वानरीम् । एतदर्थमनेनाहमानीत इति चाविदम् ॥ ६०

ततोऽहं वृक्षमारुह्य वल्लीवलयपाशकम् । छित्त्वा परशुना तं च वानरींताममोचयम् ॥ ६१
अथावतीर्य वृक्षात्तौ वानरो वानरी च सा । अवतीर्णस्य मे पादावगृह्णीतामुभावपि ॥ ६२
स्थापयित्वा च मे पादलग्नां तां वानरीं क्षणम् । गत्वा स कपिरानीय मह्यं दिव्यमदात्फलम् ॥ ६३
तदादाय गृहीत्वाहमिन्धनान्यागमं गृहम् । तत्र चाभक्षयं भार्यासहितस्तत्फलोत्तमम् ॥ ६४
तस्मिन्भुक्ते जरारोगौ सभार्यस्य गतौ मम । ततस्तत्रोदभूदस्मद्देशे दुर्भिक्षविप्लवः ॥ ६५
तदाक्रान्तश्च तत्रत्यो जनो यातो यतस्ततः । अहं दैवादिमं देशं सभार्यः प्राप्तवान्क्रमात् ॥ ६६
इह काञ्चनदंष्ट्राख्यस्तदाभूच्छबराधिपः । तस्य शस्त्रमुपादाय भृत्यतामहमाश्रयम् ॥ ६७
आयोधनेषु दृष्ट्वा च तेषु तेष्वग्रयायिनम् । सोऽथ काञ्चनदंष्ट्रो मां सेनापत्येऽभिषिक्तवान् ॥ ६८
एकभक्त्या च स मया ततोऽत्याराधितः प्रभुः । मह्यमेवान्तकालेऽत्र राज्यं प्रादादपुत्रकः ॥ ६९
इहस्थस्य च मे यातान्यब्दानां सप्तविंशतिः । शतानि न जरा चास्ति मम तत्फलभक्षणात् ॥ ७०
एवं स्वोदन्तमाख्याय स राजानं सविस्मयम् । एकाकिकेसरी भूयो भिल्लराजो व्यजिज्ञपत् ॥ ७१
तन्मया वानरफलाद्यत्कृतं चिरजीवितम् । पूर्णं ततोऽद्य संप्राप्तं फलं त्वत्पाददर्शनम् ॥ ७२
अतोऽहमर्थये देव यो गृहागमनान्मयि । दर्शितोऽनुग्रहोऽद्यायं परितोषं स नीयताम् ॥ ७३
भार्यायां क्षत्रियायां मे देवोत्पन्नास्ति कन्यका । अनन्यतुल्या रूपेण नाम्ना मदनसुन्दरी ॥ ७४
कन्यारत्नं च तद्देवादृते नान्यत्र शोभते । तत्प्रयच्छामि तां तुभ्यमुद्वहस्व यथाविधि ॥ ७५
दासोऽहं च धनुर्लक्षद्वयेनानुगतः प्रभो । इति तेनार्थितो राजा स तथेत्यन्वमन्यत ॥ ७६
शुभे लग्ने च तां तस्य तनयां परिणीतवान् । मुक्ताकस्तूरिकाभारभृतोष्ट्रशतदायिनः ॥ ७७
सप्तरात्रमुषित्वा च राजा प्रस्थितवांस्ततः । तया मदनसुन्दर्या सभिल्लानीकया सह ॥ ७८
अत्रान्तरेऽश्वापहृते राज्ञि तन्मृगयावने । स्थितमस्मद्बलं खिन्नं क्षत्ता भद्रायुधोऽभ्यधात् ॥ ७९
अलं विषादेनायाति नचिरादेव वः प्रभुः । नास्य दिव्यप्रभावस्य किंचिदत्यहितं भवेत् ॥ ८०
किं न स्मरथ यद्गत्वा पातालात्परिणीय च । नागकन्यां सुरूपाख्यामेककः स इहागतः ॥ ८१
गन्धर्वलोकं गत्वा च वीरः प्रत्यागतस्ततः । तारावलीमुपादाय गन्धर्वाधिपकन्यकाम् ॥ ८२
इत्युक्त्वाश्वासिताः सर्वे तेन भद्रायुधेन ते । अतिष्ठन्नटवीद्वारे राज्ञो मार्गावलोकिनः ॥ ८३
राजापि स्पष्टमार्गेण समं शबरसैनिकैः । तस्यां मदनसुन्दर्यां प्रक्रामन्त्यां यथेच्छया ॥ ८४
प्राविशत्तुरगारूढः सवेतालो मया सह । वनं तत्पूर्वदृष्टस्य वराहस्य दिदृक्षया ॥ ८५
प्रविष्टस्य च तत्रागाद्वराहस्तस्य सोऽग्रतः । दृष्ट्वैव च स राजा तमवधीत्पञ्चभिः शरैः ॥ ८६
हतस्य तस्य धावित्वा वेतालेन विदारितात् । उदरादेवि निरगादकस्मात्सुभगः पुमान् ॥ ८७
को भवानिति यावत्तं राजा पृच्छति विस्मयात् । जङ्गमाद्रिनिभस्तावदागात्तत्र वनद्विपः ॥ ८८
आपतन्तं तमारण्यं राजा दृष्ट्वैव कुञ्जरम् । एकेनैव पृषत्केन मर्माहतमपातयत् ॥ ८९
तस्यापि पाटितात्तेन वेतालेनोदरान्तरात् । पुरुषो निरगाद्दिव्यः स्त्री च सर्वाङ्गसुन्दरी ॥ ९०
प्रष्टुकामं च राजानं वराहोदरनिर्गतः । स पुमानवदद्राजन्स्वोदन्तं शृणु वच्मि ते ॥ ९१
आवां देवकुमारौ द्वौ भद्राख्योऽयमहं शुभः । तौ भ्रमन्तावपश्याव कण्वं ध्यानस्थितं मुनिम् ॥ ९२
गजसूकरयो रूपमावाभ्यां क्रीडया कृतम् । कृत्वा च त्रासितो मोहान्महर्षिः शपति स्म नौ ॥ ९३
अटव्यामीदृशावेव भवतं गजसूकरौ । विक्रमादित्यभूपेन हतौ मुक्तिमवाप्स्यथः ॥ ९४
इत्यावां मुनिशापेन गजसूकरतां गतौ । त्वयाद्य मोचितौ स्त्री तु स्वोदन्तं वक्त्वियं स्वयम् ॥ ९५
एतं च सूकरं कण्ठे पृष्ठे च स्पृश वारणम् । कृपाणचर्मणी दिव्ये तवैतौ हि भविष्यतः ॥ ९६
इत्युक्त्वा सद्वितीयः स तिरोऽभूत्तौ च भूपतेः । क्रोडद्विपौ करस्पृष्टौ संपन्नौ खड्गचर्मणी ॥ ९७
ततः सा स्त्री स्ववृत्तान्तं पृष्टा सत्येवमब्रवीत् । भर्याहं धनदत्ताख्यस्योज्जयिन्यां वणिक्पतेः ॥ ९८
सा हर्म्यतलसुप्ताहमागत्यानेन दन्तिना । निगीर्यैवमिहानीता न चास्यान्तः पुमानभूत् ॥ ९९

भिन्नोदरात्तु निर्यातः पुमानस्मान्मया सह । एवमुक्तवतीं राजा दीनां तामवदत्स्त्रियम् ॥ १००
धीरा भव गृहान्भर्तुर्भवतीं प्रापयाम्यहम् । समं मद्वरोधेन गच्छ प्रक्रमनिर्भया ॥ १०१
इत्युक्त्वानायायित्वा तां वेतालेन समर्पयत् । राज्ञ्यै मदनसुन्दर्यै प्रक्रामन्त्यै पृथक्पथा ॥ १०२
प्रत्यागतेऽथ वेताले तत्रापश्याव कानने । अकस्माद्राजकन्ये द्वे भूरिभव्यपरिच्छदे ॥ १०३
आनाययच्च मां प्रेष्य तयो राजा महत्तरान् । कुतः के कन्यके चैते इति पृष्टाश्च तेऽब्रुवन् ॥ १०४
अस्ति द्वीपं कटाहाख्यं केतनं सर्वसंपदाम् । अन्वर्थनामा तत्रास्ति नृपतिर्गुणसागरः ॥ १०५
तस्याजनि महादेव्यां नाम्ना गुणवती सुता । निर्मातुरेव धातुर्या रूपेणाश्चर्यदायिनी ॥ १०६
तस्याश्च सिद्धैरादिष्टः सप्तद्वीपेश्वरः पतिः । ततश्च तत्पिता राजा सोऽमन्त्रयत मन्त्रिभिः ॥ १०७
विक्रमादित्यदेवोऽस्या योग्यो मे दुहितुर्वरः । तत्पाणिग्रहणायैतां तस्यैव प्रेषयाम्यहम् ॥ १०८
इति संमन्त्र्य वहने जलधौ सपरिच्छदाम् । आरोप्य सधनां तां च स राजा व्यसृजत्सुताम् ॥ १०९
सुवर्णद्वीपनिकटं प्राप्तं दैवाद्ग्यगीर्यत । सराजकन्यं सजनं वहनं शफरेण तत् ॥ ११०
स चाब्धिवेलया नीत्वा विधिगत्येव रोधसि । क्षिप्तस्तद्द्वीपसंलग्नो महामत्स्योऽवसन्नवान् ॥ १११
दृष्ट्वैव तत्र धावित्वा नानाप्रहरणो जनः । व्यापाद्याश्चर्यमत्स्यस्य तस्योदरमपाटयत् ॥ ११२
निरगाच्च ततः पूर्णं जनैस्तद्वहनं महत् । बुद्ध्वैतद्विस्मयादागात्तत्र तद्द्वीपभूपतिः ॥ ११३
स चन्द्रशेखरो राजा गुणसागरभूभृतः । स्यालो जनाद्वहनगाद्यथातत्त्वमबुध्यत ॥ ११४
ततो बुद्ध्वा गुणवतीं भागिनेयीं स तां नृपः । प्रवेश्य राजधानीं स्वामानन्दादुत्सवं व्यधात् ॥ ११५
अन्येद्युश्च सुतां चन्द्रवतीं नाम स भूपतिः । विक्रमादित्यदेवाय दातुं प्राक्परिकल्पिताम् ॥ ११६
गुणवत्या तया साकं तत्कृते विभवोत्तराम् । प्रास्थापयत्प्रवहणे सुमुहूर्तेऽधिरोपिताम् ॥ ११७
ते इमे तीर्णजलधी प्रक्रामन्त्यौ क्रमादिह । राजकन्ये उभे प्राप्ते वयं परिकरोऽनयोः ॥ ११८
इह प्राप्तांश्च नः क्रोडवारणावभ्यधावताम् । सुमहान्तौ ततोऽस्माभिरेवमाक्रन्दितं प्रभो ॥ ११९
आगते विक्रमादित्यदेवस्यैते स्वयंवरे । कन्यके लोकपालास्तत्तस्य धर्मेण रक्षत ॥ १२०
तच्छ्रुत्वावोचतां तौ नः क्रोडेभौ व्यक्तया गिरा । धीरा भवत भीर्नास्ति राजनामग्रहेण वः ॥ १२१
इहैव तं च राजानमागतं द्रक्ष्यथाधुना । इत्युक्त्वा तौ गजक्रोडौ दिव्यौ कौचिदितो गतौ ॥ १२२
एषोऽस्मदीयवृत्तान्त इत्युक्ते तैर्महत्तरैः । अयं स एव राजेति देवि तानहमब्रवम् ॥ १२३
ततस्ते पादपतिता हृष्टास्ते राजकन्यके । तस्मै गुणवतीचन्द्रवत्यौ राज्ञे समर्पयन् ॥ १२४
राजाप्यादिश्य वेतालं सुन्दर्यौ ते अनाययत् । सार्धं मदनसुन्दर्या समं तिस्रोऽपि यान्त्विति ॥ १२५
स्वयं च तेन वेतालेनागतेन ततः क्षणात् । मया च सहितः प्रायादुत्पथेनैव देवि सः ॥ १२६
गच्छतां च वनेऽस्माकं रविरस्तमुपागमत् । तत्कालं तत्र चास्माभिरश्रावि मुरजध्वनिः ॥ १२७
कुतो मुरजशब्दोऽयमिति राजनि पृच्छति । वेतालः सोऽब्रवीद्देवकुलं देवात्र विद्यते ॥ १२८
दिव्यकौतूहलं तच्च निर्मितं विश्वकर्मणा । तत्रैष मुरजध्वानः संध्याप्रेक्षणके प्रभो ॥ १२९
इत्युक्तवान्स वेतालो राजा चाहं च कौतुकात् । तत्रागच्छाम संयम्य तुरगं प्रविशाम च ॥ १३०
अपश्यामार्चितं चात्र तार्क्ष्यरत्नमयं महत् । लिङ्गं तदग्रे चोदग्रदीपकं प्रेक्षणीयकम् ॥ १३१
अनृत्यन्सुचिरं तत्र दिव्यरूपा वरस्त्रियः । चतुर्विधेन वाद्येन गानगान्धर्वयोगिना ॥ १३२
प्रेक्ष्यान्ते दृष्टमस्माभिस्तत्राश्चर्यं प्रविश्य यत् । स्तम्भस्थपुत्रिकास्वन्तर्नर्तक्यो लयमागताः ॥ १३३
गायना वादकाद्याश्च चित्रस्थपुरुषेष्वपि । तद्दृष्ट्वा विस्मिते राज्ञि स वेतालोऽब्रवीदिदम् ॥ १३४
मायेयमीदृशी दिव्या विश्वकर्मकृताक्षया । सततं हि भवत्येतत्संध्ययोरुभयोरपि ॥ १३५
इत्युक्ते तेन तत्रान्तर्भ्रमन्तौ वयमेकतः । सविशेषामपश्याम रूपेण स्तम्भपुत्रिकाम् ॥ १३६
राजा तु तां विलोक्यैव तल्लावण्यविमोहितः । शून्यः स्तब्धः क्षणं सोऽपि स्तम्भोत्कीर्ण इवाभवत् ॥ १३७
अब्रवीच्च न पश्यामि रूपेणानेन चेदहम् । सजीवामङ्गनां तन्मे किं राज्यं किं च जीवितम् ॥ १३८

एतच्छ्रुत्वा स वेतालोऽवादीन्नैतद्दुरासदम् । कलिङ्गसेना नामास्ति कलिङ्गाधिपतेः सुता ॥ १३९
तां दृष्ट्वा रूपकारेण तद्रूपघटनेप्सुना । वर्धमानपुरीयेण कृतेयं सालभञ्जिका ॥ १४०
तद्गत्वोज्जयिनीं तस्मात्कालिङ्गान्नृपतेः प्रभो । तामर्थयस्व तत्कन्यां विक्रमेण हराथवा ॥ १४१
इति वेतालवचनं न्यधाद्राजा तथा हृदि । ततो नीत्वात्र तां रात्रिं प्रातः संप्रस्थिता वयम् ॥ १४२
यान्तश्चाशोकवृक्षस्य तलेऽपश्याम पूरुषौ । भव्यौ द्वौ तौ च राजानमुत्थायानमतां ततः ॥ १४३
कौ युवां किमरण्यस्थाविति राज्ञोक्तयोस्तयोः । एको वक्ति स्म देवैतच्छ्रूयतां कथयाम्यहम् ॥ १४४
धनदत्ताभिधानोऽहमुज्जयिन्यां वणिक्सुतः । सोऽहं हर्म्यतले जातु संसुप्तो भार्यया सह ॥ १४५
प्रातः प्रबुध्य पश्यामि यावत्सा तत्र नास्ति मे । भार्या हर्म्ये न चान्येषु प्रासादोपवनादिषु ॥ १४६
न तस्याश्चित्तमन्यादृक्क्रूप्तोऽत्र प्रत्ययस्तथा । यदि साध्व्यसि तदियं न म्लायेद्ध्रुवमित्यसौ ॥ १४७
माला मह्यं तया दत्ता सा चाम्लानैव वर्तते । तन्न जाने क्व याता सा नीता भूतादिना नु किम् ॥ १४८
इति संचिन्तयंश्चिन्वन्नाक्रन्दन्विलपन्रुदन् । अतिष्ठं तद्वियोगाग्निज्वलितोऽहमभोजनः ॥ १४९
बान्धवाश्वासितः किंचित्कृताहारोऽथ दुःखितः । ब्राह्मणान्भोजयन्नासं देवागारे कृतस्थितिः ॥ १५०
तत्र जातु परिश्रान्तो विप्रो मामयमभ्यधात् । मया विश्रमितश्चायं स्नानाहारादिना तदा ॥ १५१
कुतस्त्वमिति पृष्टश्च भुक्तोत्तरमसौ मया । वाराणसीसमीपस्थाद्ग्रामादस्मीत्यभाषत ॥ १५२
मद्भृत्याख्यातमद्दुःखस्तत एषोऽब्रवीत्पुनः । आत्मावसादितो मित्र किमनुद्योगिना त्वया ॥ १५३
व्यवसायी हि दुष्प्रापमपि प्राप्नोति तत्सखे । उत्तिष्ठ तव भार्यां तामन्विष्यावः सखास्मि ते ॥ १५४
कथं सान्विष्यते यस्या दिङ्मात्रं नैव बुध्यते । इत्युक्तवन्तमथ मां प्रीत्या भूयोऽब्रवीदयम् ॥ १५५
मैवं किं केसटो न प्रागसंभाव्यसमागमाम् । प्राप रूपवतीं भार्यां तथा चैतत्कथां शृणु ॥ १५६
पुरे पाटलिपुत्रेऽभूद्धनाढ्यब्राह्मणात्मजः । केसटाख्यो द्विजयुवा रूपे काम इवापरः ॥ १५७
स भार्यां सदृशीं प्रेप्सुः पित्रोरविदितो गृहात् । निर्गत्य देशान्बभ्राम तांस्तांस्तीर्थापदेशतः ॥ १५८
क्रमाच्च नर्मदातीरं प्राप्तो जातु ददर्श सः । महान्तमागतं तेन जन्ययात्राजनं पथा ॥ १५९
दृष्ट्वा च दूरात्तन्मध्यादेत्यैकस्तं द्विजाग्रणीः । संभाष्य केसटं वृद्धः प्राह सप्रणयं रहः ॥ १६०
त्वत्तोऽहमर्थये किंचिल्लीलासाध्यं च तत्तव । मम तूपकृतिः पूर्णा करोषि यदि वच्मि तत् ॥ १६१
तच्छ्रुत्वा केसटोऽवादीदार्य शक्यं ब्रवीषि चेत् । तन्निश्चितं मया कार्यं भवतूपकृतिस्तव ॥ १६२
ततो वृद्धद्विजोऽवादीच्छृणु पुत्रास्ति मे सुतः । स चाग्रणीर्विरूपाणां सुरूपाणां भवानिव ॥ १६३
दन्तुरश्चिपिटघ्राणः कृष्णः कातरलोचनः । पृथूदरो वक्रपादः शूर्पकर्णपुटश्च सः ॥ १६४
तादृशस्य कृते स्नेहात्कृत्वा रूपाभिवर्णनम् । ब्राह्मणाद्रत्नदत्ताख्यात्कन्यका याचिता मया ॥ १६५
सा च रूपवती नाम पित्रा दातुं प्रतिश्रुता । तेनान्वर्थाभिधा तस्मै सोऽद्य पाणिग्रहस्तयोः ॥ १६६
तदर्थमागता एते वयं दृष्टे च मत्सुते । न संबन्धी सुतां दद्यादारम्भोऽयं वृथा भवेत् ॥ १६७
उपायं ध्यायता चात्र मया लब्धो भवानिह । तद्वाचा प्रतिपन्नं द्रागिदं मे वाञ्छितं कुरु ॥ १६८
अस्माभिः सममागत्य कन्यां तां परिणीय च । मत्पुत्राय प्रयच्छाद्य वध्वास्त्वं ह्यनुरूपकः ॥ १६९
तच्छ्रुत्वा तं तथेत्युक्तवन्तमादाय केसटम् । नौभिः स नर्मदां तीर्त्वा पारं वृद्धद्विजो ययौ ॥ १७०
प्राप्य चैकं पुरं सोऽथ व्यश्रमत्सानुगो बहिः । आकाशपथिकोऽस्ताद्रौ तावदर्कोऽप्युपाविशत् ॥ १७१
प्रसर्पति ततो ध्वान्ते जलोपान्ते स केसटः । उपस्प्रष्टुं गतोऽद्राक्षीद्राक्षसं घोरमुत्थितम् ॥ १७२
भक्षयाम्यहमेष त्वां क्व मे केसट यास्यसि । इत्युक्तवन्तं च स तं राक्षसं केसटोऽभ्यधात् ॥ १७३
मा स्म मां भक्षयेस्तावत्त्वामुपैष्याम्यहं पुनः । ब्राह्मणस्य प्रतिज्ञातं कार्यं निर्वाह्य निश्चितम् ॥ १७४
तच्छ्रुत्वा कारयित्वा च शपथं सोऽथ राक्षसः । मुमोच केसटं सोऽपि तज्जन्यबलकं ययौ ॥ १७५
ततः स वृद्धविप्रस्तं वरमण्डनमण्डितम् । आदाय केसटं जन्यैः समं तत्प्राविशत्पुरम् ॥ १७६
तत्र सज्जितवेदीकं रत्नदत्तगृहं च सः । प्रावेशयत्केसटं तं विविधातोद्यनादितम् ॥ १७७

केसटश्च स तां सम्यगुपयेमे वराननाम् । कन्यां रूपवतीं तत्र पित्रा प्रत्तमहाधनाम् ॥ १७८
ननन्द स्त्रीजनश्चात्र तुल्यौ वीक्ष्य वधूवरौ । सा च रूपवती प्राप्तं दृष्ट्वा तं तादृशं वरम् ॥ १७९
तस्याः सख्योऽपि तं दृष्ट्वा जज्ञिरे जातमन्मथाः । विषादविस्मयाक्रान्तः स त्वासीत्केसटस्तदा ॥ १८०
रात्रौ च शयनीये तं चिन्तासक्तं पराङ्मुखम् । प्रियं रूपवतीं दृष्ट्वा व्याजसुप्तं चकार सा ॥ १८१
निशीथे सोऽथ सुप्तां तां मत्वा निर्गत्य केसटः । राक्षसस्यान्तिकं तस्य सत्यं पालयितुं ययौ ॥ १८२
सापि रूपवती स्वैरमुत्थायानुपलक्षिता । सकौतुका तं भर्तारमन्वियाय पतिव्रता ॥ १८३
प्राप्तं च केसटं तत्र राक्षसः स जगाद तम् । साधु भोः पालितं सत्यं महासत्त्वोऽसि केसट ॥ १८४
पुरं पाटलिपुत्रं तद्देसटश्च पिता त्वया । पवित्रितस्तदायाहि यावत्त्वां भक्षयाम्यहम् ॥ १८५
तच्छ्रुत्वा सहसोपेत्य रूपवत्यभ्यधादिदम् । मां खाद भक्षिते ह्यस्मिन्पत्यौ का मे गतिर्भवेत् ॥ १८६
भिक्षा ते गतिरित्युक्ते रक्षसा साप्युवाच तम् । को मे भिक्षां महासत्त्व दास्यतीह स्त्रिया इति ॥ १८७
यो न दास्यति भिक्षां ते याचितस्तस्य यास्यति । शतधा शिर इत्युक्ते राक्षसेन च साब्रवीत् ॥ १८८
तर्हि त्वमेव मे देहि भर्तृभिक्षामिमामिति । अददच्च ममाराशु शीर्णमूर्धा स राक्षसः ॥ १८९
साथ केसटमादाय तच्चारित्रातिविस्मितम् । आगाद्रूपवती वेश्म तावच्चाक्षीयत क्षपा ॥ १९०
श्वोभूते च कृताहारं तज्जन्यबलकं ततः । प्रस्थाय नर्मदातीरं संप्राप सवधूवरम् ॥ १९१
ततो वधूं रूपवतीं नावमारोप्य सानुगाम् । स मुख्यवृद्धविप्रोऽन्यां नावमारोहदात्मना ॥ १९२
केसटं तु पृथङ्नावि स्वीकृत्याभरणादि सः । आरोपयच्छठः कृत्वा नाविकैः सह संविदम् ॥ १९३
ततः स सवधूजन्यः पारं तीर्त्वा ययौ द्विजः । नदीमध्येन दूरं तु दाशैर्निन्ये स केसटः ॥ १९४
तत्र क्षिप्त्वा महत्योघे नावं तां केसटं च ते । वृद्धद्विजादात्तधना वाहुतीर्णापगा ययुः ॥ १९५
केसटस्तु सनौकोऽपि नद्या हृत्वोत्तरङ्गया । क्षिप्तोऽम्बुधौ वातवशान्न्यस्तोऽभूदूर्मिणा तटे ॥ १९६
तत्रायुषः सशेषत्वात्समाश्वस्य व्यचिन्तयत् । अहो प्रत्युपकारोऽयं कृतस्तेन द्विजेन मे ॥ १९७
किं वा तेनैव नाख्याता तस्य निर्धर्ममूर्खता । युनक्ति भार्यया पुत्रं परेण परिणाय्य यत् ॥ १९८
इति संचिन्तयन्यावदास्ते तत्र स विह्वलः । विचरत्खेचरीचक्रा तावत्तस्याययौ क्षपा ॥ १९९
तस्यां विनिद्रस्तुर्ये स यामे कलकलं दिवि । श्रुत्वा ददर्श सुभगं खाद्भ्रष्टं पुरुषं पुरः ॥ २००
त्रस्तश्चिरादविकृतं तं विभाव्य स केसटः । को भवानिति पप्रच्छ ततस्तं सोऽब्रवीत्पुमान् ॥ २०१
त्वं मे ब्रूहि भवान्कोऽत्र ततो वक्ष्याम्यहं तव । तच्छ्रुत्वा केसटस्तस्मै स्ववृत्तान्तमवर्णयत् ॥ २०२
ततः स पुरुषोऽवादीत्तुल्यावस्थोऽसि तर्हि मे । तदिदानीं स्ववृत्तान्तं तव वच्मि सखे शृणु ॥ २०३
अस्ति वेणानदीतीरे पुरं रत्नपुराख्यया । तत्र कंदर्पनामाहमाढ्यपुत्रो गृही द्विजः ॥ २०४
सोऽहं प्रदोषे तोयार्थी वेणामवतरन्नदीम् । तस्यां स्खलित्वा पतितो वार्योघेण हृतोऽभवम् ॥ २०५
दूरं नीत्वा तया रात्र्या तेनाहं च दिनागमे । आयुर्बलात्कच्छगते तरुखण्डे निवेशितः ॥ २०६
शाखावलम्बेनारुह्य रोधस्याश्वस्य चान्तिके । मातृदेवगृहं शून्यं तत्रापश्यमहं महत् ॥ २०७
तस्मिन्प्रविश्य दृष्ट्वान्तः स्फुरन्तीरिव तेजसा । मातॄरहं शान्तभयो नत्वा स्तुत्वा व्यजिज्ञपम् ॥ २०८
भगवत्यः परित्राणं कुरुध्वं कृपणस्य मे । अहमेष हि युष्माकं प्राप्तोऽद्य शरणागतः ॥ २०९
इति विज्ञप्य नद्योघपरिक्लिष्टस्य तत्र मे । विश्राम्यतः शनैर्मित्र विश्रान्तिं वासरोऽप्यगात् ॥ २१०
आगात्तारास्थिमालाढ्या ज्योत्स्नाभूतिसिता ततः । शशिशुभ्रकपाला च रौद्री रजनितापसी ॥ २११
तत्कालं चात्र जानामि ततो मातृगणान्तरात् । निर्गत्य योगिनीग्रामः परस्परमभाषत ॥ २१२
अद्य चक्रपुरेऽस्माभिर्गन्तव्यं चक्रमेलके । इह च श्वापदाकीर्णे रक्षास्य ब्राह्मणस्य का ॥ २१३
तदेष स्थाप्यतां नीत्वा यत्रैतस्य शुभं भवेत् । आनेष्यामः पुनश्चैनमेषोऽस्मान्शरणं श्रितः ॥ २१४
इत्युक्त्वा खेन नीत्वा मामलंकृत्य निधाय च । पुरे क्वापि गृहे कस्याप्याढ्यविप्रस्य ता गताः ॥ २१५
तत्र पश्यामि यावच्च कन्योद्वाहाय सज्जिता । वेदी लग्नश्च संप्राप्तो न जन्यबलकं पुनः ॥ २१६

ततस्तत्र स्थितं दिव्यवरवेषं विलोक्य माम्। अयं तावद्वरः प्राप्त इति सर्वोऽब्रवीज्जनः ॥ २१७
ततो नीत्वैव मां वेदीमानीयालंकृतां सुताम्। गृहस्थोऽत्र स विप्रस्तां मह्यं प्रादाद्यथाविधि ॥ २१८
दिष्ट्या तुल्यवरप्राप्तेरस्याः सुमनसोऽधुना। सौन्दर्यं सफलीभूतमित्यन्योन्यं स्त्रियोऽभ्यधुः ॥ २१९
ततः कृतविवाहोऽत्र तया सुमनसा सह। महोपचारसुखितः प्रासादे सुप्तवानहम् ॥ २२०
अथास्मिन्पश्चिमे यामे योगिन्यश्चक्रमेलकात्। आगत्य ताः स्वयुक्त्या मां हृत्वैवोदपतन्नभः ॥ २२१
यान्तीनां नभसा तासामन्याभिर्मजिहीर्षुभिः। साकं प्रवृत्तयुद्धानामहं हस्तादिह च्युतः ॥ २२२
न च तद्वेद्मि नगरं यत्र सा सुमना मया। परिणीता न जाने च किमिदानीं भविष्यति ॥ २२३
इत्येष विधिना दत्ता या मे दुःखपरम्परा। सा सुखान्तैव संपन्ना ममाद्य त्वत्समागमात् ॥ २२४
इत्युक्तवन्तं कंदर्पं केसटस्तमुवाच सः। मा भैषीर्मित्र नेदानीं योगिन्यः प्रभवन्ति ते ॥ २२५
अस्ति मे तादृशी शक्तिः काप्यप्रतिहता यतः। सहैव च भ्रमिष्यावो विधिः श्रेयो विधास्यति ॥ २२६
अन्योन्यं वदतोरेवं व्यतीयाय तयोर्निशा। प्रातस्ततः प्रयातः स्म तौ च तीर्णाम्बुधी उभौ ॥ २२७
क्रमाद्भीमपुरं नाम नगरं प्रापतुश्च तौ। सह केसटकंदर्पौ रत्ननद्याः समीपगम् ॥ २२८
तत्र तौ तन्नदीतीरे श्रुत्वा कलकलं तदा। गत्वा ददृशतुर्मत्स्यमापूरिततटद्वयम् ॥ २२९
समुद्रवेलया क्षिप्तं बद्धं कायमहत्तया। मांसार्थिभिः पाट्यमानं नानाशस्त्रकरैर्जनैः ॥ २३०
पाट्यमानस्य निरगादुदरात्तस्य चाङ्गना। साश्चर्यजनदृष्टा च सा भीताशिश्रियत्तटम् ॥ २३१
ततस्तां वीक्ष्य कंदर्पो हृष्टोऽभापत केसटम्। वयस्य सेयं सुमना यामहं परिणीतवान् ॥ २३२
न जाने पुनरेतस्या वासो मत्स्योदरे कथम्। तत्तूष्णीमिह तिष्ठावो यावद्व्यक्तिर्भविष्यति ॥ २३३
तथेति केसटेनोक्ते तत्रावस्थितयोस्तयोः। का त्वं किमेतदिति सा पृष्टाभूत्सुमना जनैः ॥ २३४
ततः कृच्छ्रेण सावादीदहं रत्नाकरे पुरे। जयदत्ताभिधानस्य विप्रचूडामणेः सुता ॥ २३५
सुमना इति नाम्नास्मि साहं भव्येन केनचित्। परिणीतानुरूपेण निशि ब्राह्मणसूनुना ॥ २३६
तद्रात्रावेव सुप्ताया गतः क्वापि स मे पतिः। यत्नान्विष्टोऽपि मत्पित्रा न च प्राप्तः कुतोऽपि सः ॥ २३७
ततोऽस्मि पतिता नद्यां तद्वियोगाग्निशान्तये। निगीर्णानेन मत्स्येन संप्राप्तेह विधेर्वशात् ॥ २३८
इति तां वादिनीमेवं निर्गत्य जनमध्यतः। आश्लिष्य यज्ञस्वामीति विप्र एकोऽब्रवीदिदम् ॥ २३९
एह्येहि पुत्रि भवती भगिनीदुहिता मम। यज्ञस्वामीति हि भ्राता सोदर्यो मातुरस्मि ते ॥ २४०
तच्छ्रुत्वा मुखमुद्धाट्य सुमनास्तमवेक्ष्य सा। मातुलं प्रत्यभिज्ञाय सास्रा जग्राह पादयोः ॥ २४१
क्षणं त्यक्त्वाश्रु चावादीत्तं तु काष्ठानि देहि मे। आर्यपुत्रवियुक्ताया अग्नेरन्या न मे गतिः ॥ २४२
बोध्यमानापि सा तस्मान्निश्चयान्न चचाल यत्। तत्परीक्षिततच्चित्तः कंदर्पस्तामुपाययौ ॥ २४३
तमुपागतमालोक्य प्रत्यभिज्ञाय धीमती। सुमनाः पादयोस्तस्य पतित्वा प्ररुरोद सा ॥ २४४
जनेन पृच्छ्यमाना च तेन सा मातुलेन च। अयं स मम भर्तेति निजगाद मनस्विनी ॥ २४५
ततः सर्वेषु हृष्टेषु यज्ञस्वामी निनाय ताम्। स्वगृहं तत्पतिं तं च कंदर्पं केसटान्वितम् ॥ २४६
तत्र तान्वर्णितस्वस्ववृत्तान्तान्सकुटुम्बकः। उपचारेण महता प्रीत्या परिचचार सः ॥ २४७
गतेष्वहःसु कंदर्पं केसटोऽत्र जगाद तम्। अभीष्टभार्याप्राप्त्या त्वं प्राप्तस्तावत्कृतार्थताम् ॥ २४८
तत्सभार्योऽधुना गच्छ निजं रत्नपुरं पुरम्। अकृतार्थो गमिष्यामि न स्वदेशमहं पुनः ॥ २४९
तीर्थान्येव भ्रमन्देहं क्षपयिष्याम्यमुं सखे। तच्छ्रुत्वा केसटं यज्ञस्वामी तत्र स्थितोऽवदत् ॥ २५०
किमुद्वेगाद्वदस्येवं सर्वं जीवद्भिराप्यते। कुसुमायुधवृत्तान्तं तथा च शृणु वच्मि ते ॥ २५१
देवस्वामीत्यभूत्खण्डपुराख्ये नगरे द्विजः। तस्यातिरूपा कन्याभून्नाम्ना कमललोचना ॥ २५२
शिष्यश्च विप्रपुत्रोऽभून्नाम्नास्य कुसुमायुधः। स शिष्यः सा च तत्कन्या प्रीतावास्तां परस्परम् ॥ २५३
एकदा निश्चिता दातुं पित्रान्यस्मै वराय सा। कन्या सखीमुखेनाशु तं स्माह कुसुमायुधम् ॥ २५४
तातो मां दातुमन्यस्मै प्रतिपन्नो भवांश्च मे। पूर्वसंकल्पितो भर्ता तद्युक्त्या हर मामितः ॥ २५५

ततोऽस्याः सोऽपहाराय कृतसंविद्बहिर्निशि । अस्थापयद्वेगसरीं भृत्यं च कुसुमायुधः ॥ २५६
स्वैरं निर्गत्य चारूढा तस्यां भृत्येन तेन सा । न तस्य निकटं निन्ये निन्ये स्वीकर्तुमन्यतः ॥ २५७
दूरं नीता च सा तेन रात्रौ कमललोचना । प्राप्यैकं नगरं प्रातस्तमाह स्म च सा सती ॥ २५८
त्वत्स्वामी क स मद्भर्ता तं प्रापयसि किं न माम् । तच्छ्रुत्वा स शठोऽवादीदेकिकां तां विदेशगाम् ॥ २५९
अहं त्वां परिणेष्यामि किं तेन स कुतोऽधुना । श्रुत्वैतत्साब्रवीत्प्राज्ञा त्वं हि मे सुतरां प्रियः ॥ २६०
त्वमेवात्र न किं सद्यः परिणेयोऽस्यहो मम । ............................॥ २६१
ततस्तां नगरोद्याने स्थापयित्वैव दुर्मतिः । स विवाहोपकरणं जगामानेतुमापणम् ॥ २६२
तावत्पलाय्य गत्वा सा कन्या वेगसरीयुता । मालाकारस्य कस्यापि वृद्धस्य प्राविशद्गृहम् ॥ २६३
तत्रोक्तनिजवृत्तान्ता तस्थौ सा तेन सत्कृता । सोऽप्यप्राप्य कुभृत्यस्तामुद्यानाद्विमुखो ययौ ॥ २६४
गत्वा चोवाच पृच्छन्तं प्रभुं तं कुसुमायुधम् । ऋजुस्त्वं वेत्सि न स्त्रीणां कुटिलानां हि चेष्टितम् ॥ २६५
नैव सा निरगात्तावद्दृष्टो यावदहं जनैः । तत्रान्यैस्तैरवष्टब्धो हृता वेगसरी च सा ॥ २६६
दैवात्कथंचिदधुना पलाय्याहमिहागतः । तच्छ्रुत्वा विमृशंस्तूष्णीमासीत्स कुसुमायुधः ॥ २६७
एकदा प्रेरितः पित्रा विवाहाय व्रजंश्च सः । तत्राप नगरं यत्र स्थिता कमललोचना ॥ २६८
तत्रावासितजन्यौघमुद्याने निकटस्थिते । एकं भ्रमन्तं कमललोचना सा ददर्श तम् ॥ २६९
शशंस मालाकाराय तस्मै सा यद्गृहे स्थिता । सोऽपि गत्वोक्तवृत्तान्तस्तं तस्याः पतिमानयत् ॥ २७०
तत्संभृतोपकरणस्ततः सुचिरकाङ्क्षितः । वरवध्वोस्तयोः सद्यो विवाहो निरवर्तत ॥ २७१
अथ तं पापभृत्यं स निगृह्य कुसुमायुधः । परिणीयापि कमललोचनाप्राप्तिकारणम् ॥ २७२
द्वितीयामपि कन्यां तां यद्विवाहार्थमागमत् । ताभ्यां वधूभ्यां सहितो हृष्टः स्वं देशमाययौ ॥ २७३
इत्थं भवति भव्यानामचिन्त्योऽपि समागमः । तत्केसट त्वमप्येवमचिरात्प्राप्स्यसि प्रियाम् ॥ २७४
एवं तेनोदिते यज्ञस्वामिना तस्थुरस्य ते । कान्यप्यहानि कंदर्पसुमनःकेसटा गृहे ॥ २७५
प्रस्थिताश्च स्वदेशं ते ततः प्राप्य महाटवीम् । जज्ञिरेऽन्योन्यविभ्रष्टा वन्येभापातसंभ्रमात् ॥ २७६
तेषां स केसटो गच्छन्नेकाकी दुःखितः क्रमात् । प्राप्य काशिपुरीं मित्रं कंदर्पं प्राप्तवांस्ततः ॥ २७७
तेन साकं ययौ तच्च निजं पाटलिपुत्रकम् । पित्राभिनन्दितस्तत्र कंचित्कालमुवास सः ॥ २७८
अवर्णयद्रूपवतीविवाहप्रभृति स्वकम् । कंदर्पोदन्तपर्यन्तं पित्रोर्वृत्तान्तमत्र सः ॥ २७९
अत्रान्तरे सा सुमना हस्तिभीतिपलायिता । वनं विवेश तत्रास्या ययौ चास्तं दिवाकरः ॥ २८०
हा हार्यपुत्र हा तात हाम्बेत्यत्र निशागमे । शोचन्ती दावदहने क्षेप्तुं तनुमियेष सा ॥ २८१
तावत्तद्योगिनीचक्रं कंदर्पस्य कृपापरम् । योगिनीस्ता विजित्यान्यास्तत्प्रापायतनं निजम् ॥ २८२
तत्र संस्मृत्य कंदर्पं स्वविज्ञानादवेत्य च । भार्यां तस्य वने भ्रष्टां मन्त्रयांचक्रिरे च ताः ॥ २८३
कंदर्पः पुरुषो धीरो वाञ्छितं प्राप्नुयात्स्वयम् । तद्भार्या तु वने भ्रष्टा ध्रुवं बाला त्यजेदसून् ॥ २८४
तत्तां रत्नपुरं नीत्वा क्षिपामो येन तत्र सा । कंदर्पस्य पितुर्गेहे सपत्न्या सह तिष्ठति ॥ २८५
इति संमन्त्र्य गत्वा तद्वनमाश्वास्य चात्र ताम् । योगिन्यस्ताः सुमनसं नीत्वा रत्नपुरे जहुः ॥ २८६
गतायां निशि सा तत्र भ्रमन्ती सुमनाः पुरे । उच्यमानं जनेनेदं शुश्राव परिधावता ॥ २८७
एषानङ्गवती भार्या कंदर्पस्य द्विजन्मनः । पत्यौ क्वापि गते कालं कंचित्तत्प्राप्तिवाञ्छया ॥ २८८
स्थिता साध्वी तमप्राप्य निराशा निर्गताधुना । अग्निं प्रवेष्टुं दुःखिभ्यां श्वशुराभ्यामनुद्रुता ॥ २८९
एतच्छ्रुत्वैव सुमना तच्चितास्थानमाशु सा । गत्वानङ्गवतीमेवं तामुपेत्य न्यवारयत् ॥ २९०
आर्ये मा साहसं कार्षीः स हि जीवति ते पतिः । इत्युक्त्वा मूलतः कृत्स्नं तद्वृत्तान्तं शशंस सा ॥ २९१
अदर्शयच्च कंदर्पदत्तं रत्नाङ्गुलीयकम् । ततः सर्वेऽभ्यनन्दंस्तां सत्यं विज्ञाय तद्वचः ॥ २९२
अथानङ्गवतीं तुष्टां वधूं सुमनसं च ताम् । संपूज्य कंदर्पपिता गृहे तुष्टो न्यवेशयत् ॥ २९३
तावत्स सुमनःप्राप्त्यै भ्रान्तुं पाटलिपुत्रकात् । कंदर्पोऽनिच्छतोऽनुक्त्वा केसटस्य ययौ ततः ॥ २९४

केसटोऽपि गते तस्मिन्दुःखी रूपवतीं विना । गृहादविदितः पित्रोः प्रायाद्भ्रान्तुमितस्ततः ॥ २९५
कंदर्पोऽपि भ्रमन्दैवात्तत्प्राप नगरं किल । यत्र रूपवतीं तां स केसटः परिणीतवान् ॥ २९६
जनकोलाहलं श्रुत्वा किमेतदिति तत्र तम् । कंदर्पं परिपृच्छन्तं पुमानेकोऽब्रवीदिदम् ॥ २९७
एषा रूपवतीं भर्त्रा केसटेन विनोद्यता । मर्तुं कलकलस्तेन शृणु वृत्तान्तमत्र च ॥ २९८
इत्युक्त्वा केसटोद्वाहराक्षसोदन्तकौतुकम् । रूपवत्याश्रितं प्रोच्य स पुमानब्रवीत्पुनः ॥ २९९
ततस्तं वञ्चयित्वैव वृद्धविप्रः स केसटकम् । आदाय तां रूपवतीं पुत्रार्थं प्रययौ ततः ॥ ३००
केसटस्तु न विज्ञातः क यातः परिणीय ताम् । रूपवत्यप्यपश्यन्ती केसटं साब्रवीत्पथि ॥ ३०१
आर्यपुत्रं न पश्यामि किं सर्वेषु व्रजत्स्विह । तच्छ्रुत्वा दर्शयन्पुत्रं तं स वृद्धद्विजोऽभ्यधात् ॥ ३०२
सोऽयं मत्तनयः पुत्रि भर्ता ते दृश्यतामिति । ततो रूपवती वृद्धांस्तत्रस्थानब्रवीत्क्रुधा ॥ ३०३
कोऽयं कुरूपो भर्ता मे मरिष्याम्येव निश्चितम् । येन ह्यः परिणीतास्मि तं प्राप्स्यामि न चेत्पतिम् ॥ ३०४
एवं वदन्ती त्यक्तान्नपाना राजभयेन सा । पितुरेव गृहं तेन वृद्धविप्रेण नायिता ॥ ३०५
तत्रोक्ततद्विजव्याजां शोचंस्तामवदत्पिता । कोऽसाविति कथं ज्ञेयः परिणेता स पुत्रि ते ॥ ३०६
ततो रूपवती स्माह तात पाटलिपुत्रकात् । देसटाख्यद्विजसुतः केसटाख्यः स मत्पतिः ॥ ३०७
रक्षोमुखान्मया ह्येतच्छ्रुतमित्यभिधाय सा । कृत्स्नं तस्मै समाचख्यौ वृत्तान्तं पतिरक्षसोः ॥ ३०८
ततः स तत्पिता गत्वा दृष्ट्वा रक्षो मृतस्थितम् । संजातप्रत्ययोऽतुष्यद्दंपत्योस्तत्त्वतस्तयोः ॥ ३०९
पतिप्राप्त्याशयाश्वास्य सुतां तां प्राहिणोच्च सः । अन्वेषन्केसटपितुः पार्श्वं पाटलिपुत्रकम् ॥ ३१०
ते तत्र गत्वा नचिरादागत्यैवमिहाब्रुवन् । दृष्टः पाटलिपुत्रस्थः सोऽस्माभिर्भर्तृदेसटः ॥ ३११
केसटः क स ते पुत्र इति पृष्टश्च तत्र सः । सबाष्पमब्रवीदस्मान्केसटोऽत्र कुतः सुतः ॥ ३१२
स ह्यागतोऽपि कंदर्पनाम्नि मित्रे सहागते । इतो रूपवतीदुःखात्काप्यनुक्त्वैव मे गतः ॥ ३१३
एतत्तस्य वचः श्रुत्वा क्रमाद्वयमिहागताः । इत्युक्तेऽन्वेषकैः रूपवती पितरमभ्यधात् ॥ ३१४
नास्त्यार्यपुत्रप्राप्तिर्मे तदग्निं प्रविशाम्यहम् । भर्त्रा विनाकृता तात तिष्ठेयं हि कियच्चिरम् ॥ ३१५
एवं ब्रुवाणा न यदा निषेद्धुं तेन पारिता । तदा रूपवती साद्य निर्गता मर्तुमग्निना ॥ ३१६
तस्याः सख्यावुभे कन्ये तद्वन्मर्तुं विनिर्गते । एका शृङ्गारवत्याख्या ह्यनुरागवती परा ॥ ३१७
तद्विवाहे स ताभ्यां हि दृष्टः प्राक्केसटो युवा । तद्रूपहृतचित्ताभ्यां भर्तृत्वे पर्यकल्प्यत ॥ ३१८
इत्थं कोलाहलमिदं जनस्यात्रेति तेन सः । कंदर्पः पुरुषेणोक्तो ययौ तासां चितान्तिकम् ॥ ३१९
ततो दूरात्कलकलं निवार्योपेत्य च द्रुतम् । अवोचदग्निमर्चन्तीमेवं रूपवतीं स ताम् ॥ ३२०
अलं ते साहसेनार्ये जीवत्येव स केसटः । स भर्ता तव मित्रं मे कंदर्पं मामवेहि च ॥ ३२१
इत्यूचिवान्वृद्धविप्रच्छद्मनौकाधिरोहणात् । आरभ्य केसटोदन्तं कथयामास सोऽखिलम् ॥ ३२२
ततः संवादसंजातप्रत्यया सा पितुर्गृहम् । हृष्टा रूपवती ताभ्यां सखीभ्यां प्राविशत्सह ॥ ३२३
कंदर्पोऽपि च तत्पित्रा प्रीत्योपचरितस्तदा । सुरक्षितश्च तत्रैव तस्थौ तदनुरोधतः ॥ ३२४
तावत्स केसटो दैवात्प्राप रत्नपुरं भ्रमन् । कंदर्पस्य गृहं तत्र तद्भार्ये यत्र ते स्थिते ॥ ३२५
परिभ्रमन्तं तं तत्र हर्म्यात्कंदर्पभार्यया । दृष्ट्वा सुमनसा हर्षादूचिरे श्वशुरादयः ॥ ३२६
आर्यपुत्रसुहृत्सोऽयं संप्राप्तः केसटोऽधुना । अस्मात्प्रवृत्तिर्बुध्येत शीघ्रं संभाव्यतामिति ॥ ३२७
ततो गत्वैव तैरुक्त्वा यथावस्तु स केसटः । आनीतस्तां सुमनसं दृष्ट्वाहृष्यदुपागताम् ॥ ३२८
विश्रान्तश्च क्षणात्पृष्टस्तस्यै वन्येभसंभ्रमात् । आरभ्य कंदर्पगतं स्वं च वृत्तान्तमब्रवीत् ॥ ३२९
सत्कृतो दिवसान्कांश्चिदास्ते यावच्च तत्र सः । लेखहस्तः पुमांस्तावदागात्कंदर्पपार्श्वतः ॥ ३३०
यत्र रूपवतीं नाम त्वत्सुहृत्परिणीतवान् । केसटस्तत्र कंदर्पः स्थितो रूपवती च सा ॥ ३३१
इति चोवाच स पुमाल्लेखार्थोऽभूत्तथैव च । कंदर्पपित्रे स्वोद्वाहं केसटोऽवर्णयच्च सः ॥ ३३२
ततः कृतोत्सवोऽन्येद्युः कंदर्पानयनाय सः । तत्पिता प्राहिणोद्दूतं प्रियाप्राप्त्यै च केसटम् ॥ ३३३

केसटोऽपि ययौ साकं लेखहारेण तेन सः । तं देशं यत्र सा रूपवती पितृगृहे स्थिता ॥ ३३४
तत्र संभावयामास स तां रूपवतीं चिरात् । सोत्सवां हृतसंतापस्तोयदश्चातकीमिव ॥ ३३५
कंदर्पेण समागम्य परिणिन्ये च ते अपि । रूपवत्या वयस्ये द्वे पूर्वोक्ते प्रेरितस्तया ॥ ३३६
ते चानुरागशृङ्गारवत्यौ रूपवतीं च ताम् । आदायापृष्टकंदर्पः स्वदेशं केसटो ययौ ॥ ३३७
कंदर्पोऽपि सदूतस्तद्गत्वा रत्नपुरं ततः । संजग्मे सुमनोनङ्गवतीभ्यां बन्धुभिस्तदा ॥ ३३८

निजनिजदेशगतौ तौ रूपवतीसुमनसौ प्रिये प्राप्य ।
केसटकंदर्पावथ भुञ्जानौ तस्थतुर्भोगान् ॥ ३३९

इति विधुरविधातृविप्रयुक्ताः पुनरपि यान्ति समागमं प्रियाभिः ।
अकलितगहनावधीनि दुःखान्यपि विषमाण्यवतीर्य धीरसत्त्वाः ॥ ३४०

तच्छीघ्रमुत्तिष्ठ सुखे व्रजावश्विन्वंस्त्वमप्याप्स्यसि जातु भार्याम् ।
को वेद दैवस्य गतिं यथैव मृतापि भार्याधिगता सजीवा ॥ ३४१

इत्येवमाख्याय कथामनेन प्रोत्साहितश्चानुगतश्च सख्या ।
भ्रमन्भुवं प्रापमिमामथात्र सक्रोडमद्राक्षमहं गजेन्द्रम् ॥ ३४२

उद्गीर्य तेन च गजेन पुनर्निगीर्णां तामेव चित्रमवशां स्ववधूमपश्यम् ।
तं चिन्वतापि करिणं चिरदृष्टनष्टं दृष्टा मयाद्य सुकृतैरिह देवपादाः ॥ ३४३

एवं तस्योक्तवतो वणिक्सुतस्याथ विक्रमादित्यः ।
आनाय्य तां स राजा गजवधलब्धां समर्पयद्भार्याम् ॥ ३४४

तौ च विचित्रसमागममुदितावन्योन्यकथितवृत्तान्तौ ।
श्रीविषमशीलसंस्तुतिमुखरमुखौ दंपती तदाभूताम् ॥ ३४५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके चतुर्थस्तरङ्गः ।

---

पञ्चमस्तरङ्गः ।

ततः स विक्रमादित्यो राजा तस्य सहागतम् । वणिक्पुत्रस्य सुहृदं तमेवं परिपृष्टवान् ॥ १
प्राप्ता मृतापि जीवन्ती मया भार्येति यत्त्वया । उक्तं कथं तदिति नः कथ्यतां भद्र विस्तरात् ॥ २
इत्युक्तस्तेन राज्ञा स वणिक्सूनोः सखाब्रवीत् । कौतुकं यदि तद्देव श्रूयतां कथयाम्यदः ॥ ३
ब्रह्मस्थलाग्रहाराग्र्यनिवासी द्विजपुत्रकः । चन्द्रस्वामीत्यहं भार्या सुरूपा चास्ति मे गृहे ॥ ४
एकदा मयि कार्यार्थं ग्रामं पित्राज्ञया गते । तां मे कापालिकोऽद्राक्षीद्भार्यां भिक्षार्थमागतः ॥ ५
तेन दृष्ट्वैव सा जातज्वरा सायं व्यपद्यत । ततो मद्बन्धुभिर्नीत्वा नक्तमारोपिता चिताम् ॥ ६
प्रज्वलन्त्यां चितायां च ग्रामात्तत्राहमागमम् । अश्रौषं च यथावृत्तं स्वजनात्क्रन्दतः पुरः ॥ ७
गते मयि चितोपान्तमागात्कापालिकश्च सः । अंसस्थनृत्यत्खट्वाङ्गः स्फूर्जड्डमरुकारवः ॥ ८
भस्मक्षेपेण शमिते चिताग्नौ देव तेन सा । उदतिष्ठच्चितामध्यादक्षताङ्गी मदङ्गना ॥ ९
स चादाय कपाली तां सिद्ध्याकृष्टानुधाविताम् । प्राद्रवल्लघु तां चाहमन्वगां सधनुःशरः ॥ १०
स च गङ्गातटे प्राप्य गुहां भूमौ निधाय तत् । खट्वाङ्गमब्रवीद्दर्पादन्तःस्थे कन्यके उभे ॥ ११
युवां प्राप्ते अपि मया नोपभुक्ते यया विना । सैषाद्य हस्ते प्राप्ता मे प्रतिज्ञा सिद्धिमागता ॥ १२
इति ताभ्यां स मद्भार्यां यावद्दर्शयति ब्रुवन् । तावत्तत्तस्य खट्वाङ्गं गङ्गायामहमक्षिपम् ॥ १३
रे कापालिक भार्यां मे जिहीर्षुर्न भवस्ययम् । इत्याक्षिपं च तमहं भ्रष्टखट्वाङ्गसिद्धिकम् ॥ १४
अपश्यन्सोऽथ खट्वाङ्गं पलायनपरः शठः । धनुराकृष्य काण्डेन दिग्धेन निहतो मया ॥ १५
पापसिद्ध्यैकसंतोषविडम्बितशिवागमाः । पाखण्डिनः पतन्त्येवं प्रागेव पतिता अपि ॥ १६
अथादाय स्वभार्यां तामन्ये द्वे ते च कन्यके । गृहमागतवानस्मि दत्ताश्चर्यः स्वबन्धुषु ॥ १७

तत्र पृष्टे स्ववृत्तान्ते कन्ये ते वदतः स्म मे । वाराणस्यां सुते आवां क्षितिभृत्सार्थवाहयोः ॥ १८
सिद्धियुक्त्या हृते चावामेतयैव कपालिना । त्वत्प्रसादाच्च मुक्ते स्वः पापादस्माददूषिते ॥ १९
इत्युक्तवत्यौ चान्येद्युर्नीत्वा वाराणसीं मया । अर्पिते ते स्वबन्धूनां तद्वृत्तान्तमुदीर्य तम् ॥ २०
आगच्छंश्च ततोऽपश्यमिमं भार्यावियोगिनम् । वणिक्पुत्रं ततोऽनेन मिलित्वाहमिहागतः ॥ २१
कापालिकगुहालब्धेनाङ्गरागेण रञ्जितात् । क्षालितादपि देहान्मे दृश्यतां वाति सौरभम् ॥ २२
इत्थं मृतोत्थिता प्राप्ता मया भार्येति वादिनम् । विप्रं तं सवणिक्पुत्रं सत्कृत्य प्राहिणोन्नृपः ॥ २३
ततो गुणवतीचन्द्रवतीमदनसुन्दरीः । आनीयादाय च समं मिलित्वा च स्वसैनिकैः ॥ २४
आगात्स विक्रमादित्यभूभृदुज्जयिनीं पुरीम् । तस्यां गुणवतीचन्द्रवत्यौ च परिणीतवान् ॥ २५
संस्मरन्नथ तां विश्वकर्मदेवगृहे स्थिताम् । स्तम्भस्थपुत्रिकां राजा स प्रतीहारमादिशत् ॥ २६
कलिङ्गसेनात्कन्यां तां प्राप्तुं दूतो विसृज्यताम् । यस्याः प्रतिकृतिर्दृष्टा सा मया स्तम्भपुत्रिका ॥ २७
इति राज्ञा समादिष्टः क्षत्तानीय तदग्रतः । प्राहिणोद्दत्तसंदेशं दूतं नाम्ना सुविग्रहम् ॥ २८
गत्वा कलिङ्गविषयं दृष्ट्वा तं च यथोचितम् । कलिङ्गसेनं राजानमेवं दूतो जगाद सः ॥ २९
देवः श्रीविक्रमादित्यस्त्वामादिशति भूपते । वेत्थ त्वं भुवि यद्रत्नं तदस्मानुपगच्छति ॥ ३०
तवास्ति कन्यारत्नं च तदस्मभ्यं समर्पय । अस्मत्प्रसादाच्च निजं भुङ्क्ष्व राज्यमकण्टकम् ॥ ३१
एतच्छ्रुत्वा स कालिङ्गः क्रुद्धो राजाभ्यभाषत । को नाम विक्रमादित्यः स एवाज्ञां ददाति नः ॥ ३२
मार्गत्युपायनं कन्यां दर्पान्धोऽधः पतिष्यति । एतत्कलिङ्गसेनात्स श्रुत्वा दूतः समभ्यधात् ॥ ३३
भृत्योऽप्येवमनात्मज्ञः कथमोजायसे प्रभोः । किं मूढ तत्प्रतापाग्नौ शलभायितुमिच्छसि ॥ ३४
इत्युक्त्वा तत आगत्य स दूतस्तन्न्यवेदयत् । वचः कलिङ्गसेनोक्तं विक्रमादित्यभूभृते ॥ ३५
ततो विषमशीलोऽसौ क्रुद्धः प्रायाद्बलैः सह । सभूतकेतुवेतालः कालिङ्गं प्रति तं प्रभुः ॥ ३६
देह्याशु कन्यामिति तं कालिङ्गं ब्रुवतीष्विव । सेनारवप्रतिरवैर्दिक्षु तद्देशमाप च ॥ ३७
दृष्ट्वाथ युद्धसंनद्धं रुद्ध्वा तं च नृपं बलैः । राजा स विक्रमादित्यो मनस्येवमचिन्तयत् ॥ ३८
एतत्सुतां विना तावन्मम नास्त्येव निर्वृतिः । तत्कथं श्वशुरं हन्मि युक्तिमत्र करोमि किम् ॥ ३९
इत्यालोच्य सवेतालो राजा तत्सिद्ध्यलक्षितः । सुप्तस्य प्राविशद्रात्रौ कलिङ्गेशस्य वासकम् ॥ ४०
अरे विषमशीलेन विगृह्य स्वपिषीति तम् । प्रबोध्य तत्र वित्रस्तं वेतालः सोऽब्रवीद्धसन् ॥ ४१
स चोत्थाय कलिङ्गेन्द्रो दृष्ट्वा दर्शितसाहसम् । परिज्ञाय च राजानं रौद्रवेतालसंगतम् ॥ ४२
इदानीं वशगोऽहं ते देवादिश करोमि किम् । इति विज्ञापयामास भीतस्तच्चरणानतः ॥ ४३
मया चेत्प्रभुणा कार्यं तव तद्देहि मे सुताम् । कलिङ्गसेनामिति तं राजापि प्रत्यभाषत ॥ ४४
तथेति प्रतिपेदे च कलिङ्गाधिपतिः स तत् । राजापि वेतालयुतः स्वमागाच्छिबिरं कृती ॥ ४५
अन्येद्युश्च कलिङ्गेन्द्रः स देवि त्वामदात्पिता । राज्ञे विषमशीलाय विधिवद्विभवोत्तरम् ॥ ४६
एवं गाढानुरागेण राज्ञा देहपणेन च । परिणीतासि विधिवद्देवि नारिजिगीषया ॥ ४७
इति कार्पटिकस्याहं देवसेनस्य वक्त्रतः । श्रुत्वावमानप्रभवं हे सख्यो मन्युमत्यजम् ॥ ४८
इत्थं विवाहिता स्तम्भपुत्रिकादर्शनादहम् । चित्रावलोकनाच्चैषा राज्ञा मलयवत्यपि ॥ ४९
एवं कलिङ्गसेना सा विक्रमादित्यवल्लभा । भर्तृप्रभावमाख्याय स्वसपत्नीरनन्दयत् ॥ ५०
स चैवं विक्रमादित्यः सर्वाभिस्ताभिरन्वितः । तया मलयवत्या च तस्थौ साम्राज्यसुस्थितः ॥ ५१
अथैकदा राजपुत्रः कोऽप्यागाद्दक्षिणापथात् । कृष्णशक्त्यभिधानोऽत्र परिभूतः स्वगोत्रजैः ॥ ५२
स सिंहद्वारमागत्य राज्ञः कार्पटिकव्रतम् । शिश्रिये राजपुत्राणामन्वितः पञ्चभिः शतैः ॥ ५३
द्वादशाब्दान्मया सेवा विक्रमादित्यभूपतेः । कार्येति प्रतिजज्ञे च वार्यमाणोऽपि भूभुजा ॥ ५४
निश्चयेन च तस्यात्र तिष्ठतः सानुयायिनः । सिंहद्वारे नृपसुतस्यैकादश समा ययुः ॥ ५५
प्राप्ते च द्वादशे वर्षे तस्य देशान्तरस्थिता । भार्या चिरवियोगार्ता प्राहिणोल्लेखपत्रिकाम् ॥ ५६

वीरचर्यागते रात्रौ प्रच्छन्ने राज्ञि शृण्वति। दीपेनावाचयत्तस्यामार्यां स लिखितामिमाम्॥ ५७

संतप्तायततरलास्तव विरहे नाथ कठिनहृदयायाः।
निर्यान्त्यविरतमेते निःश्वासा मे न तु प्राणाः॥ ५८

इति वाचयतस्तस्मात्सम्राट् कार्पटिकान्मुहुः। श्रुत्वा स राजधानीं स्वां गत्वा राजा व्यचिन्तयत्॥ ५९
सीदत्कलत्रः क्लिष्टोऽयं बत कार्पटिकश्चिरम्। असिद्धकार्यः पूर्णेऽस्मिन्द्वादशेऽब्दे त्यजेदसून्॥ ६०
तद्विलम्बो न कार्योऽस्य मयेत्यालोच्य भूपतिः। आनाययत्कार्पटिकं दासीं प्रेष्य तदैव सः॥ ६१
शासनं लेखयित्वा च तमेवं स समादिशत्। ओंकारपीठमार्गेण भद्र गच्छोत्तरां दिशम्॥ ६२
तत्रामुना शासनेन ग्रामं भुङ्क्ष्व मदर्पितम्। नाम्ना तं खण्डवटकं पृच्छन्गच्छन्नवाप्स्यसि॥ ६३
इत्युक्त्वा शासनं तस्मै प्रददौ तत्स भूपतिः। सोऽप्यनावेद्य भृत्येभ्यो ययौ कार्पटिको निशि॥ ६४
का जिगीषा ममैकेन ग्रामेण व्रीडदायिना। तथाप्याज्ञा प्रभोः कार्येत्यसंतुष्टः क्रमाद्व्रजन्॥ ६५
ओंकारपीठतो गत्वा दूरेऽरण्ये ददर्श सः। क्रीडन्तीः कन्यका बह्वीः पृच्छति स्म ततश्च ताः॥ ६६
अपि जानीथ भोः खण्डवटकं क भवेदिह। एतच्छ्रुत्वा तमूचुस्तास्तन्न जानीमहे वयम्॥ ६७
गच्छाग्रे योजनेष्वत्र दशमात्रेषु नः पिता। सौम्य तिष्ठति तं पृच्छ विद्याद्ग्रामं स जातु तम्॥ ६८
एवमुक्तः स कन्याभिस्ताभिर्गत्वा ददर्श तम्। कार्पटी पितरं तासां राक्षसं भीषणाकृतिम्॥ ६९
इह क खण्डवटकं ब्रूहि भद्रेति तं च सः। पप्रच्छ सोऽपि तं धैर्यमोहितो राक्षसोऽब्रवीत्॥ ७०
किं तत्र ते तद्धि पुरं चिरशून्यं तथापि चेत्। यासि तच्छृणु मार्गोऽयं पुरतस्ते द्विधा गतः॥ ७१
तत्र वामेन गच्छेस्त्वं पथा यावदवाप्स्यसि। प्रतोलीं खण्डवटकस्योच्चप्राकारहारिणीम्॥ ७२
इत्युक्तो रक्षसा गत्वा प्रतोलीं तामवाप्य सः। विवेश शून्यं भयदं दिव्यं हृद्यं च तत्पुरम्॥ ७३
सप्तकक्षावृतं तत्र राजवेश्म प्रविश्य च। आरुरोह स हर्म्याग्रं मणिकाञ्चननिर्मितम्॥ ७४
तत्र रत्नासनं दृष्ट्वा तस्मिन्नुपविवेश च। तावच्च राक्षसोऽभ्येत्य वेत्रहस्तस्तमभ्यधात्॥ ७५
भो मानुष किमत्र त्वमुपविष्टो नृपासने। तच्छ्रुत्वा कृष्णशक्तिः स धीरः कार्पटिकोऽब्रवीत्॥ ७६
अहमत्र प्रभुर्यूयं करदाश्च कुटुम्बिनः। विक्रमादित्यदेवेन विलब्धाः शासनेन मे॥ ७७
तच्छ्रुत्वा शासनं दृष्ट्वा राक्षसस्तं प्रणम्य सः। उवाच राजा त्वमिह प्रतीहारस्तवास्मि च॥ ७८
सर्वत्र विक्रमादित्यदेवस्याज्ञा ह्यखण्डिता। इत्युक्त्वा प्रकृतीः सर्वा आजुहाव स राक्षसः॥ ७९
आययुर्मन्त्रिणश्चात्र तथा राजपरिच्छदः। अपूरि चतुरङ्गेण बलेन नगरं च तत्॥ ८०
सर्वैः प्रणम्यमानोऽथ हृष्टः कार्पटिकोऽत्र सः। चक्रे राजोपचारेण कृत्स्नाः स्नानादिकाः क्रियाः॥ ८१
ततः स राजा भूत्वात्र सविस्मयमचिन्तयत्। अहो प्रभावः कोऽप्येष विक्रमादित्यभूपतेः॥ ८२
गाम्भीर्यगरिमा चित्रमपूर्वस्तस्य च प्रभोः। ददाति यद्ग्राममिति ब्रुवन्राज्यमपीदृशम्॥ ८३
इति चित्रीयमाणोऽत्र राज्यं कुर्वन्नुवास सः। तत्सखीन्विक्रमादित्योऽप्युज्जयिन्यां पुपोष तान्॥ ८४
दिनैश्च विक्रमादित्यं प्रणन्तुं स उपाययौ। सोत्कः कार्पटिको राजा सैन्यकम्पितभूतलः॥ ८५
आगतं विक्रमादित्यः पादानतमुवाच तम्। पत्न्याः प्रहितलेखाया निःश्वासान्गच्छ वारय॥ ८६
इत्युक्त्वा भूमिपतिना प्रेषितस्तेन साद्भुतः। स कृष्णशक्तिः सखिभिः साकं देशमगान्निजम्॥ ८७
उत्सार्य गोत्रजान्भार्यां नन्दयित्वा चिरोत्सुकाम्। सिद्धेप्सिताधिकः सोऽथ भेजे राज्यश्रियं पराम्॥ ८८
एवं सोद्भुतचारित्रो विक्रमादित्यभूमिपः। एकदात्र ददर्शैकमूर्ध्वरोमकचं द्विजम्॥ ८९
पप्रच्छ तं च हे ब्रह्मन्नीदृक्कस्माद्भवानिति। ततः सोऽस्मै स्ववृत्तान्तमेवं राज्ञे द्विजोऽब्रवीत्॥ ९०
अग्निस्वामीति विप्रोऽभूद्देव पाटलिपुत्रके। महाग्निहोत्रिणस्तस्य देवस्वामीत्यहं सुतः॥ ९१
मया च दूरतो देशाद्विप्रकन्या विवाहिता। बालत्वात्सा च तत्रैव स्थापिताभूत्पितुर्गृहे॥ ९२
कालेन यौवनस्थां तामानेतुं श्वाशुरं गृहम्। आरुह्याश्वं सहैकेन भृत्येन गतवानहम्॥ ९३
सत्कृतः श्वशुरेणाहं सहायातैकचेटिकाम्। आदायाश्वाधिरूढां तां भार्यां प्रायामहं ततः॥ ९४

अर्धमार्गे च साश्वाया अवरुह्यैव मे वधूः। अम्बुपानापदेशेन नदीकच्छमगात्किल ॥ ९५
चिरं नायाति यावत्सा तावच्च तदवेक्षणे। सह स्थितं तं तत्रैव भृत्यमस्मि विसृष्टवान् ॥ ९६
सोऽपि नायाति यावच्च तावदस्मि गतः स्वयम्। तच्चेटिकां स्थापयित्वा तुरगीरक्षणाय ताम् ॥ ९७
गत्वा पश्यामि यावत्स भृत्यो मद्भार्यया तया। भक्षयित्वास्थिशेषो मे कृतो रक्ताक्तवक्त्रया ॥ ९८
वित्रस्तश्च ततो यावद्गच्छामि तुरगीं प्रति। तावत्सापि तया तद्वत्तच्चेट्या भक्षिता मम ॥ ९९
ततः पलाय्य यातोऽहं तत्रासेनाधुनापि मे। नैवोर्ध्वरोमकेशत्वमन्तःस्थेन निवर्तते ॥ १००
तदत्र मे गतिर्देव इति तं वादिनं द्विजम्। आज्ञया विक्रमादित्यो गतत्रासं व्यधत्त सः ॥ १०१
अहो धिङ्नास्ति विश्वासः स्त्रीषु साहसभूमिषु। इति राज्ञि वदत्यस्मिन्नेकोऽमात्योऽब्रवीदिदम् ॥ १०२
तादृश्य एव दुर्ज्ञाताः स्त्रियो देव तथा च किम्। न श्रुतं वृत्तमिह यद्ब्राह्मणस्याग्निशर्मणः ॥ १०३
इहैवास्त्यग्निशर्माख्यः सोमशर्मसुतो द्विजः। पित्रोः प्राणसमो मूर्खः सर्वविद्यास्वशिक्षितः ॥ १०४
वर्धमानपुरात्तेन परिणीता द्विजात्मजा। बालेति सा च न त्यक्ता पित्रा धनवता गृहात् ॥ १०५
तस्यां च यौवनस्थायामग्निशर्माणमूचतुः। पितरौ पुत्र भार्यां तां नानयस्यधुनापि किम् ॥ १०६
श्रुत्वैवैतदनापृच्छ्य पितरौ स जडाशयः। अग्निशर्मा ततः प्रायादेकाकी गृहिणीं प्रति ॥ १०७
निर्गतस्य गृहात्तस्य दक्षिणोऽभूत्कपिञ्जलः। दक्षिणा च विरौति स्म शिवा वामैकशंसिनी ॥ १०८
सोऽपि मूर्खोऽभ्यनन्दत्तज्जीव जीवेत्युदीरयन्। अदृश्या च जहासास्य श्रुत्वा शकुनदेवता ॥ १०९
संप्राप्य श्वाशुरं स्थानं तस्य च प्रविविक्षतः। वामः कपिञ्जलो वामा शिवाभूत्कथिताशिवा ॥ ११०
भूयोऽपि चाभ्यनन्दत्स जीवजीवेत्युदीर्य तत्। अचिन्तयच्च शकुनाधिष्ठात्री देवतापि सा ॥ १११
अहो मूर्खोऽयमशुभं शुभमित्यभिनन्दति। तत्कार्यं जीवयति यद्रक्ष्यो जीवोऽस्य तन्मया ॥ ११२
इत्यस्यां चिन्तयन्त्यां च देवतायां विवेश सः। दत्तप्रहर्षः श्वशुरस्याग्निशर्मा निवेशनम् ॥ ११३
आगतोऽसि किमेकाकीत्युक्तोऽत्र श्वशुरादिभिः। आयातोऽस्मि गृहेऽनुक्त्वा सर्वेषामिति सोऽब्रवीत् ॥ ११४
ततः कृतोचितस्नानभोजनस्य निशागमे। शय्यागृहेऽन्तिकं भार्या तस्योपागात्प्रसाधिता ॥ ११५
पथिश्रमाच्च सुप्तस्य तस्य निर्गत्य सा बहिः। चौरस्योपपतेः शूलविद्धस्याप्यन्तिकं ययौ ॥ ११६
आलिङ्गन्ती च तद्देहं दशनैश्छिन्ननासिका। भूतेन तत्प्रविष्टेन पलायत ततो भयात् ॥ ११७
गत्वा च पत्युः सुप्तस्य तस्य न्यस्यासिधेनुकाम्। पार्श्वे विकोपामाक्रन्ददेवं श्रावितबान्धवा ॥ ११८
हा हा मृता मृतास्म्येषा निष्कारणमनेन मे। किमप्युत्थाय यद्भर्त्रा कृतं नासानिकर्तनम् ॥ ११९
तच्छ्रुत्वा स्वजनस्तस्या एत्य तां छिन्ननासिकाम्। दृष्ट्वा तमग्निशर्माणं लगुडाद्यैरताडयत् ॥ १२०
प्रातश्च विज्ञप्य नृपं तदादेशाद्बधाय तम्। निर्दोषं भार्याद्रोहीति वधकेभ्यः समर्पयत् ॥ १२१
नीते वध्यभुवं तस्मिन्सा तच्छकुनदेवता। तद्भार्यानैशवृत्तान्तदर्शिनी समचिन्तयत् ॥ १२२
अनिमित्तफलं तावत्प्राप्तमेतेन यत्स्वयम्। उक्तवाञ्जीव जीवेति तेन रक्ष्याम्यमुं वधात् ॥ १२३
इत्यालोच्यान्तरिक्षात्सा निगूढा देवताभ्यधात्। निर्दोष एष वधका न वध्यो विप्रपुत्रकः ॥ १२४
शूलस्थचौरदन्तान्तर्गत्वा पश्यत नासिकाम्। इत्युक्त्वा तद्वधूरात्रिवृत्तान्तं तं जगाद सा ॥ १२५
ततस्तत्प्रत्ययात्क्षत्तृमुखेन वधकैर्नृपः। विज्ञप्तो वीक्ष्य नासां तां चौरदन्तान्तरस्थिताम् ॥ १२६
वधात्तमग्निशर्माणं निर्मोच्य व्यसृजद्गृहम्। कुर्वीं तां च निजग्राह तद्वधूं श्राप्यदण्डयत् ॥ १२७
एवंविधाः स्त्रियो राजन्नित्युक्ते तेन मन्त्रिणा। स राजा विक्रमादित्यस्तत्तथेत्यन्वमोदत ॥ १२८
ततोऽब्रवीन्मूलदेवो धूर्तो राजान्तिकस्थितः। देव साध्व्यो न सन्त्येव किमसाध्वीषु कासुचित् ॥ १२९
किं न चूतलताः सन्ति सतीषु विषवल्लिषु। तथा च श्रूयतामेतदनुभूतं मयैव यत् ॥ १३०

---

१ श्लोकोऽस्मुद्रितपुस्तकेऽस्मादनन्तरम् 'अदृश्या च जहासास्य श्रुत्वा शकुनदेवता। ..........................
.................. ॥' इति त्रुटितोत्तरार्धः श्लोकोऽधिकोऽस्ति.

अहं पाटलिपुत्रं प्रागगच्छं शशिना सह । मत्वा नागरिकक्षेत्रं तद्वैदग्ध्यदिदृक्षया ॥ १३१
तत्र बाह्ये सरस्येकां दृष्ट्वा स्त्रीं वस्त्रधाविनीम् । इह कावास्यते पान्थैरित्यहं परिपृष्टवान् ॥ १३२
इह तीरेषु चक्राह्वैर्मत्स्यैर्वारिणि षट्पदैः । अब्जेष्वावास्यते नात्र पान्थावासो मयेक्षितः ॥ १३३
एतत्तयाहं वक्रोक्त्या प्रत्युक्तो वृद्धयोषिता । विलक्षः शशिना साकं प्राविशं नगरान्तरम् ॥ १३४
तत्रैकमुष्णे पात्रस्थे परमान्ने पुरः स्थिते । बालं दृष्ट्वा गृहद्वारि रुदन्तमवदच्छशी ॥ १३५
अहो अबुद्धिर्बालोऽयं योऽग्रदत्तं न खादति । परमान्नं वृथात्मानं क्लिश्नाति रुदितैः पुनः ॥ १३६
तच्छ्रुत्वा सोऽब्रवीद्बालः प्रमृज्य नयने हसन् । मूर्खा यूयं न जानीथ रोदने ये गुणा मम ॥ १३७
परमान्नं शनैरेति स्वादुतां शीतलीभवत् । घटतेऽभ्यधिकं चान्यच्छ्लेष्मा गच्छति च क्षयम् ॥ १३८
एते गुणा मे रुदतो नाहं मौर्ख्येण रोदिमि । यूयं ग्राम्याः पुनर्मूर्खा नाभिप्रायं विदन्ति यत् ॥ १३९
इत्युक्ते तेन बालेन स्ववैदग्ध्यविलज्जितौ । शशी चाहं च साश्चर्यावपसृत्यान्यतो गतौ ॥ १४०
तत्राप्याम्रतरुस्कन्धगतामाम्रावचायिनीम् । वरकन्यामपश्याव मूलस्थितपरिच्छदाम् ॥ १४१
प्रयच्छास्मभ्यमप्याम्रफलानि कतिचिच्छुभे । इति चास्माभिरुक्ता सा कन्यकैवमभाषत ॥ १४२
अश्नीयाम्रफलान्युष्णान्युत किं शिशिराणि वा । तच्छ्रुत्वाश्चर्यजिज्ञासुस्तां कन्यामहमब्रवम् ॥ १४३
अश्नीम तावदुष्णानि ततोऽन्यान्यपि सुन्दरि । श्रुत्वैतदक्षिपद्भूमौ पांसुष्वाम्रफलानि सा ॥ १४४
भुक्तानि नीरजीकृत्य तान्यस्माभिर्मुखानिलैः । ततः सपरिवारा सा कन्या प्रहसिताब्रवीत् ॥ १४५
एतानि पूर्वमुष्णानि दत्तान्याम्रफलानि वः । तथा च दत्त्वा फूत्कारान्भवन्तो यान्यभक्षयन् ॥ १४६
गृह्णीत शीतलान्येतान्यफूत्काराणि वाससि । एवमुक्त्वाञ्चलेष्वन्यान्यक्षिपत्सा फलानि नः ॥ १४७
तान्यादाय ततः स्थानाद्वयं याता विलक्षिताः । ततः सहचरानन्याञ्शशिनं चाहमब्रवम् ॥ १४८
अवश्यं परिणेयैषा विदग्धा कन्यका मया । अवहासप्रतीकारः कार्यः का धूर्ततान्यथा ॥ १४९
एवं मयोक्तैरन्विष्टं तैस्तस्याः सदनं पितुः । वयं वेषान्तरालक्ष्या अगच्छामापरेऽहनि ॥ १५०
तत्रास्मान्पठतो वेदं यज्ञस्वामीत्युपेत्य सः । तत्कन्याजनकोऽपृच्छत्कुतो यूयमिति द्विजः ॥ १५१
वयं मायापुरीस्थानाद्विद्याहेतोरिहागताः । इत्युक्तः स ततोऽस्माभिराढ्योऽवोचद्द्विजोत्तमः ॥ १५२
तर्हीहैव चतुर्मासीमेतां वसत मद्गृहे । कुरुतानुग्रहं यूयं दूरदेशागता यतः ॥ १५३
श्रुत्वेत्यवोचाम वयं ब्रह्मन्कुर्मो भवद्वचः । चतुर्मासावसाने चेदर्थितं नः प्रदास्यसि ॥ १५४
एवमस्माभिरुक्तः स यज्ञस्वामी द्विजोऽभ्यधात् । शक्यं यदर्थं मृग्यध्वे तद्दास्याम्येव निश्चितम् ॥ १५५
इति प्रतिश्रुते तेन तद्गृहे वयमास्महि । अथोक्तः स द्विजोऽस्माभिः पूर्णे मासचतुष्टये ॥ १५६
यामो वयं तत्पूर्वोक्तं देहि यत्प्रार्थयामहे । किं तदित्युक्तवन्तं तं मां प्रदर्श्याब्रवीच्छशी ॥ १५७
अस्मन्मुख्याय कन्यास्मै भवता दीयतामिति । ततः स विप्रो वाग्बद्धो यज्ञस्वामी व्यचिन्तयत् ॥ १५८
छलितोऽस्म्येभिरस्त्वेतत्को दोषो गुणवानयम् । इत्यालोच्य स मे विप्रो यथावत्तामदात्सुताम् ॥ १५९
नक्तं चाहं हसन्वासगृहे तामवदं वधूम् । कच्चित्स्मरसि तान्याम्राण्युष्णानि शिशिराणि च ॥ १६०
तच्छ्रुत्वा प्रत्यभिज्ञाय सा मां सस्मितमभ्यधात् । एवमेव विडम्ब्यन्ते ग्राम्या नागरिकैरिति ॥ १६१
ततोऽहमप्यवोचं तामास्स्व नागरिके सुखम् । ग्राम्यो यास्याम्यहं दूरं त्वां विहाय प्रतिज्ञया ॥ १६२
एतच्छ्रुत्वाकरोत्सापि प्रतिज्ञां निश्चितं मया । वष्टभ्यानायितव्यस्त्वं त्वत्तो जातेन सूनुना ॥ १६३
इत्यन्योन्यं प्रतिज्ञाते सा शेते स्म पराङ्मुखी । स्वाङ्गुलीयमहं चास्याः सुप्ताया अङ्गुलौ न्यधाम् ॥ १६४
निर्गत्य च मिलित्वा तैरहं सहचरैस्ततः । तस्या दिदृक्षुर्वैदग्ध्यमागामुज्जयिनीं निजाम् ॥ १६५
सापि विप्रसुता प्रातरपश्यन्ती प्रबुध्य माम् । अङ्गुलीयं च पश्यन्ती मन्नाङ्कमचिन्तयत् ॥ १६६
गतस्तावत्स मां त्यक्त्वा प्रतिज्ञा तेन पालिता । मयापि स्वप्रतिज्ञातं पाल्यं त्यक्तानुतापया ॥ १६७
मूलदेवेति नामास्मिन्दृश्यते चाङ्गुलीयके । तद्ध्रुवं मूलदेवो यः ख्यातो धूर्तः स एव सः ॥ १६८
स चोज्जयिन्यां वसतीत्युच्यते सततं जनैः । तत्तत्र युक्तितो गत्वा मया साध्यं समीहितम् ॥ १६९

इति संकल्प्य पितरं सैवं कृतमृषाब्रवीत्। गतस्तात परित्यज्य भर्ता मां सहसैव सः ॥ १७०
तद्वियुक्ता कथं चाहं तिष्ठामीह यथासुखम्। तद्यामि तीर्थयात्रायै क्लिश्नाम्येतां हतां तनुम् ॥ १७१
इत्युक्त्वा तमनिच्छन्तमप्यनुज्ञाप्य यत्नतः। पितरं सा ततः प्रायात्सधना सपरिच्छदा ॥ १७२
क्रमेण गत्वा कृत्वा सा महार्घं गणिकोचितम्। वेषं विवेशोज्जयिनीं पुरीं लोकैकसुन्दरी ॥ १७३
कृत्वा च परिवारेण सह कर्तव्यसंविदम्। सुमङ्गलेति साकार्षीन्नाम विप्रसुतात्मनः ॥ १७४
कामरूपान्महात्यागभोग्या नाम्ना सुमङ्गला। आगता गणिकैषेति भृत्यैराख्याप्यतात्र सा ॥ १७५
देवदत्ताभिधानाथ तत्रत्या गणिकोत्तमा। ददावभ्येत्य तस्यै स्वं राजार्हं मन्दिरं पृथक् ॥ १७६
तत्र स्थितां भृत्यमुखेनादौ मित्रं स मे शशी। तामब्रवीत्ख्यातिहृतो भाटिर्मे गृह्यतामिति ॥ १७७
अस्मद्वचोऽनुतिष्ठेद्यः प्रविशेत्सोऽत्र कामुकः। न भाट्या कार्यमस्माकं नान्यैः पशुनिभैर्नृभिः ॥ १७८
इत्युक्तस्तन्मुखेनैव स सुमङ्गलया तया। तथेत्युक्त्वा शशी रात्रिमुखे तन्मन्दिरं ययौ ॥ १७९
तत्र स प्रथमं द्वारं संप्राप्यावेदितात्मकः। द्वारपालेन जगदे कुर्वस्तत्स्वामिनीवचः ॥ १८०
स्नातोऽपीह पुनः स्नाहि प्रवेशो नास्ति तेऽन्यथा। तच्छ्रुत्वा स शशी स्नानं तथेत्यङ्गीचकार तत् ॥ १८१
ततः स यावद्दासीभिरभ्यङ्गोद्वर्तनोत्तरम्। विस्रब्धं स्नपितस्तावत्प्रथमः प्रहरो गतः ॥ १८२
स्नात्वा प्राप्तोऽथ स द्वारं द्वितीयं द्वाररक्षिणा। ऊचे स्नातोऽसि तत्तावत्प्रसाधनविधिं कुरु ॥ १८३
तथेत्युक्तवतस्तस्य दास्यस्तावत्प्रसाधनम्। चक्रुर्यावद्द्वितीयोऽपि प्रहरः पर्यहीयत ॥ १८४
तृतीयमथ संप्राप्तः कक्ष्याद्वारं स रक्षिभिः। जगदे भुङ्क्ष्व तावत्त्वं प्रविशाभ्यन्तरं ततः ॥ १८५
बाढमित्युक्तवन्तं तं दास्यस्तावद्व्यलम्बयन्। आहारैर्विविधैर्यावत्तृतीयः प्रहरो गतः ॥ १८६
अथ वासगृहद्वारं चतुर्थं स कथंचन। संप्राप्तो द्वारपालेन तत्रैवं निरभर्त्स्यत ॥ १८७
ग्राम्यकामुक निर्याहि मा खलीकारमाप्स्यसि। कालः किं पश्चिमे यामे गणिकानवसंगमे ॥ १८८
एवं तिरस्कृतस्तेन स कालेनेव रूपिणा। शशी विगलितच्छायो यथागतमगात्ततः ॥ १८९
इत्थं सुमङ्गलेत्याख्यां दधत्या वञ्चितास्तया। गणिकारूपया विप्रसुतयान्येऽपि कामुकाः ॥ १९०
तच्छ्रुत्वा कौतुकादेव कृत्वा दूतगतागतम्। अहं नक्तं गृहं तस्या अगच्छं सुप्रसाधितः ॥ १९१
तत्र द्वाःस्थान्प्रतिद्वारमनुरञ्ज्यार्थदानतः। तस्या वासगृहद्वारं प्राप्तोऽहमविलम्बितः ॥ १९२
कालप्राप्तो विमुक्तश्च द्वाराद्द्वाःस्थैः प्रविश्य ताम्। वेश्यावेशापरिज्ञातामपश्यं स्वप्रियामहम् ॥ १९३
सा पुनः प्रत्यभिज्ञाय कृतप्रत्युद्गमादिका। वेश्येव धूर्ता पर्यङ्कनिषण्णं मामुपाचरत् ॥ १९४
ततो लोकैकसुन्दर्या साकं नीतनिशस्तया। बद्धानुरागो निर्गन्तुं नाशकं तद्गृहादहम् ॥ १९५
सापि बद्धरतिः पार्श्वान्नापयाति स्म मे तदा। यावद्दिनैः सगर्भाभून्मेचकाग्रपयोधरा ॥ १९६
कृत्वाथ कूटलेखं सा विदग्धा मह्यमर्पयत्। राज्ञा मे प्रभुणा लेखः प्रहितो वाच्यतामिति ॥ १९७
ततश्चाहं तमुन्मुच्य लेखमेवमवाचयम्। श्रीकामरूपतः श्रीमान्मानसिंहो महीपतिः ॥ १९८
सुमङ्गलामादिशति स्थितास्यत्र चिरं कथम्। शीघ्रमागम्यतां हित्वा देशान्तरकुतूहलम् ॥ १९९
मयैवं वाचिते लेखे साब्रवीद्दुःखितेव माम्। याम्यहं मयि मा मन्युं कृथाः परवती ह्यहम् ॥ २००
एवं कृत्वा मिषं प्रायात्स्वं सा पाटलिपुत्रकम्। अहं तु तां परायत्तेत्यनुरक्तोऽपि नान्वगाम् ॥ २०१
सा च पाटलिपुत्रस्था कालेन सुषुवे सुतम्। स वर्धमानश्च कलाः सर्वाः शिशुरशिक्षत ॥ २०२
द्वादशाब्दश्च वयसा स बालो बालचापलात्। दासेरकं सवयसं लत्तया जात्वताडयत् ॥ २०३
ताडितस्तं च सोऽवादीद्रुदन्दासेरको रुषा। त्वं ताडयसि मां यस्य तव न ज्ञायते पिता ॥ २०४
मातुर्विदेशभ्रान्तायां जातस्त्वं हि यतस्ततः। इत्युक्तस्तेन वैलक्ष्याद्गत्वाप्राक्षीत्स मातरम् ॥ २०५
अम्ब को मे पिता कुत्र स चास्ते कथ्यतामिति। साथ माता द्विजसुता वीक्ष्य क्षणमुवाच तम् ॥ २०६
पिता ते मूलदेवाख्यो मां त्यक्त्वोज्जयिनीं गतः। इत्युक्त्वा मूलतस्तस्मै स्ववृत्तान्तं शशंस सा ॥ २०७
ततः स बालोऽवादीत्तामम्ब तर्ह्यानयाम्यहम्। गत्वा तं पितरं बद्ध्वा प्रतिज्ञां पूरयामि ते ॥ २०८

इत्युक्त्वा जननीमेव स बालः प्रस्थितस्ततः। तयोक्तमदभिज्ञानः प्रापदुज्जयिनीमिमाम्॥ २०९
दीव्यन्तमक्षैर्मां तत्र दृष्ट्वाभिज्ञाननिश्चितम्। ठिण्ठास्थानेत्य सर्वांश्च द्यूतेन जयति स्म सः॥ २१०
बालत्वेऽपि महाधूर्तः सर्वस्य कृतविस्मयः। अर्थिभ्यः स ददाति स्म तद्द्यूतावजितं धनम्॥ २११
रात्रौ स्वयुक्त्या चागत्य कार्पासनिचयोपरि। लघु विन्यस्य सुप्तं मां शय्याखट्वामपाहरत्॥ २१२
ततः प्रबुद्धो दृष्ट्वाहमात्मानं तूलपृष्ठगम्। अखट्वं सहसाभूवं सलज्जाहासविस्मयः॥ २१३
अथाहमापणं देव शनैर्गत्वा परिभ्रमन्। तमेव बालं तां खट्वां विक्रीणानं व्यलोकयम्॥ २१४
उपगम्याब्रवं तं च कियता दीयते त्वया। एषा मूल्येन खट्वेति ततो बालोऽब्रवीत्स माम्॥ २१५
न लभ्यतेऽसौ मूल्येन खट्वा धूर्तशिरोमणे। अपूर्वाद्भुतवृत्तान्तवर्णनेन तु लभ्यते॥ २१६
तच्छ्रुत्वाहमवोचं तं तर्हि वच्म्यद्भुतं तव। तत्त्वतः सत्यमिति तद्बुद्ध्वा चेदनुमन्यसे॥ २१७
यदि त्वसत्यमिति तद्वक्ष्यस्यप्रत्ययेन मे। ततस्त्वं जारजातः स्याः खट्वां च प्राप्नुयामहम्॥ २१८
अनेन समयेनाङ्ग विचित्रं शृणु वच्मि ते। पूर्वं दुर्भिक्षदोषोऽभूद्राष्ट्रे कस्यापि भूपतेः॥ २१९
स वाहनानां नागानां शीकराम्बुमहाभरैः। सूकरप्रेयसीपृष्ठे स्वयं चक्रे कृषिं नृपः॥ २२०
ततो धान्यैः समुत्पन्नैः समृद्धः स महीपतिः। दुर्भिक्षं शमयामास प्रजानां जनपूजितः॥ २२१
एवं मयोक्ते विहसन्सोऽवादीद्बालकस्तदा। नागानां वाहना मेघाः सूकरप्रेयसी क्षितिः॥ २२२
विष्णोः सूकररूपस्य सा हि प्रियतमोच्यते। तस्यां मेघाम्बुभिर्धान्यमुत्पन्नं चेत्किमद्भुतम्॥ २२३
इत्युक्त्वा बालधूर्तो मां विस्मितं सोऽब्रवीत्पुनः। इदानीमहमाख्यामि तवापूर्वं किमप्यदः॥ २२४
प्रत्येषि यदि विज्ञाय तत्सत्यमिति तत्त्वतः। तत्ते खट्वां ददाम्येतां स्यास्त्वं दासो ममान्यथा॥ २२५
तथेत्युक्ते मया सोऽथ बालधूर्तोऽब्रवीदिदम्। उदपादि पुरा धूर्तपते कोऽपीह बालकः॥ २२६
अकम्पयत्पदभरेणोर्वीमुत्पन्न एव यः। तदैव वृद्धो भूत्वा च चक्रे लोकान्तरे पदम्॥ २२७
इत्युक्तवन्तं बालं तं तद्बुद्ध्वाहमब्रवम्। अलीकमेतन्नास्त्यत्र सत्यता काप्यहो इति॥ २२८
ततः स बालोऽवादीन्मां जातस्यैव न किं हरेः। चकम्पे चरणाक्रान्ता वसुधा वामनाकृतेः॥ २२९
तदैव वृद्धिं गत्वा च चक्रे तेन न किं पदम्। द्युलोके तज्जितोऽस्येव मया दासीकृतोऽसि च॥ २३०
अत्रापणगताश्चैते सर्वे नौ साक्षिणः पणे। तदहं यत्र गच्छामि तत्रागच्छ समं मया॥ २३१
इत्युक्त्वा सोऽग्रहीद्बालो धीरो मां पाणिना भुजे। तत्रस्थाश्च तथैवास्य साक्ष्यं सर्वे व्यधुर्जनाः॥ २३२
ततश्च मामवष्टभ्य पणबद्धं स सानुगः। नयति स्मान्तिकं मातुः पुरं पाटलिपुत्रकम्॥ २३३
तन्माता च तदानीं तं दृष्ट्वा सा मामभाषत। आर्यपुत्र मयाप्येषा स्वप्रतिज्ञाद्य पूरिता॥ २३४
[आ]नायितोऽस्यवष्टभ्य त्वज्जातेनैव सूनुना। इत्युक्त्वावर्णयत्साध्वी वृत्तान्तं सर्वसंनिधौ॥ २३५
[त]स्तां बान्धवाः सर्वे स्वप्रज्ञासाधितेप्सिताम्। पुत्रापमृष्टकौलीनामभ्यनन्दन्कृतोत्सवाः॥ २३६
कृतार्थश्च तया पत्न्या साकं तेन सुतेन च। उषित्वा चिरमत्राहमागामुज्जयिनीमिमाम्॥ २३७
एवं सन्त्येव देवेह भर्तृभक्ताः कुलाङ्गनाः। न पुनः सर्वथा सर्वा दुर्वृत्ता एव योषितः॥ २३८
इत्येतां मूलदेवस्य निशम्य वदनात्कथाम्। विक्रमादित्यनृपतिस्तुतोष सह मन्त्रिभिः॥ २३९
इत्याश्चर्याणि शृण्वन्स पश्यन्कुर्वंश्च भूपतिः। विजित्य विक्रमादित्यः सद्वीपां बुभुजे महीम्॥ २४०

इति संयोगवियोगैर्निचितामाख्याय विषमशीलकथाम्।
कण्वमुनिः पुनरवदत्तस्मिन्मां मदनमञ्चुकाविरहे॥ २४१

एवं भवन्त्यचिन्त्या विरहाश्च समागमाश्च जन्तूनाम्।
तत्स्यात्तवापि नचिरान्नरवाहनदत्त संगमः प्रियया॥ २४२

अवलम्बस्व धृतिं तत्सुचिरं भोक्तासि वत्सराजसुत।
भार्यासचिवसमेतो विद्याधरचारुचक्रवर्तिपदम्॥ २४३

एवं कण्वर्षिगिरा लब्धधृतिः क्षपितविरहकालोऽथ ।
भार्या विद्याः खेचरसाम्राज्यं च क्रमादहं प्राप्तः ॥ २४४

तच्च यथा संप्राप्तं वरदस्यानुग्रहान्मया शंभोः ।
आदावेव तदखिलं वर्णितवानेव वो महामुनयः ॥ २४५

इति नरवाहनदत्तः स्वकथामाख्याय मुनिजनं निखिलम् ।
गोऽपालकं च मातुलमहर्षयत्कश्यपाश्रमे तस्मिन् ॥ २४६

नीत्वा च तत्र जलदागमवासरांस्तानामन्त्र्य मातुलमृषींश्च तपोऽवनस्थान् ।
प्रायात्सदारसचिवः स ततो विमानमारुह्य खेचरचमूपिहितान्तरिक्षः ॥ २४७

प्राप्य क्षणादृषभकं स्वनिवासमद्रिं साम्राज्यभोगसुखितो द्युचरेन्द्रमध्ये ।
देव्या समं मदनमञ्चुकया स्थितोऽथ रत्नप्रभाप्रभृतिभिश्च स कल्पजीवी ॥ २४८

इत्येषा शशिशेखरेण तुहिनक्ष्माभृत्सुताभ्यर्थना-
त्सोत्साहेन बृहत्कथा निगदिता कैलासपृष्ठे पुरा ।
उत्पन्नैरथ शापतः क्षितितले कात्यायनाद्याकृती-
र्बिभ्रद्भिर्गमिता प्रसिद्धिमतुलां तैः पुष्पदन्तादिभिः ॥ ३४९

एतां मद्वदनोद्गतां पठति यो यो वा शृणोत्यादरा-
द्यश्चैतां सुकथां बिभर्ति नचिरात्स ध्वस्तपापः कृती ।
सद्विद्याधरतामवाप्य नियतं लोकं मम प्राप्नुया-
दित्यस्याश्च तदा वरं गिरिसुताकान्तः कथाया ददौ ॥ २५०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके पञ्चमस्तरङ्गः ।

समाप्तोऽयं विषमशीललम्बकोऽष्टादशः ।

समाप्तश्चायं कथासरित्सागरः ।

# ग्रन्थकर्तुः प्रशस्तिः ।

श्रीसातवाहनकुलाम्बुधिपारिजातः सङ्ग्रामराज इति भूमिपतिर्बभूव ।
येनावतीर्य विविधैर्विबुधैः श्रितेन कश्मीरमण्डलमनीयत नन्दनत्वम् ॥ १

तस्यात्मजो नमदशेषमहीशमौलिमाणिक्यकायनिकषीकृतपादपीठः ।
श्रीमाननन्त इति तत्कुलकल्पवृक्षः शौर्यैकराशिरुदपद्यत चक्रवर्ती ॥ २

द्वाराग्रसीमनि च यस्य निकृत्तकण्ठः क्षिप्त्वोदरं नरपतेर्लुठति स्म मूर्धा ।
सेवागतो जितमहाहरिचक्रचारुकीर्तिश्रवेण परितोषमिवैत्य राहुः ॥ ३

सोऽथ त्रिगर्ताधिपतेस्तनूजां राजेन्दुरिन्दोर्वहति स्म देवीम् ।
तमोपहां सूर्यवतीं प्रजानां विभातसंध्यामिव विश्ववन्द्याम् ॥ ४

आम्नायैरिव नानादेशसमुद्भूतविप्रशतसेव्यैः ।
अब्धिभिरिव रत्नभृतैर्भीतिभृतां भूभृतामपि शरण्यैः ॥ ५

कल्पद्रुमैरिवान्वहमाशोपगतार्तिहारिभिरुदारैः ।
देव्या यया विरचितैः कश्मीरा मण्डिता मठप्रवरैः ॥ ६

यन्निर्मितान्यमलतोयवहद्वितस्ताविस्तीर्णतीरभुवि सौधसुधासितानि ।
व्योमापगापरिगतान्तहिमाद्रिशृङ्गभङ्गिं भजन्ति सुतरां सुरमन्दिराणि ॥ ७

दत्तैरसंख्यमणिहेममहाग्रहारकृष्णाजिनद्रविणपर्वतगोसहस्रैः ।
विश्वंभरा······न च नापि भू······विश्वं सदा भगवती किल या बिभर्ति ॥ ८

क्ष्मामण्डलैकतिलकोऽप्यनलीकलग्नो यस्या घनामृतमयो गुणिबान्धवोऽपि ।
विद्वेषिपर्षदशिवोऽपि शिवावतारः श्रीमान्सुतः कलशदेव इति क्षितीशः ॥ ९

उर्वीभृतो नमयितुं निखिलानुदग्रान्पातुं क्षमश्च जलधीनपि सप्त धीरः ।
सृष्टः सुरैरभिनवः कलशोद्भवो यः श्रीहर्षदेव इति भूपवरः स यस्याः ॥ १०

तस्याः सदैव गिरिशार्चनहोमकर्मनानाप्रदानविधिबद्धसमुद्यमायाः ।
शास्त्रेषु नित्यविहितश्रवणश्रमाया देव्याः क्षणं किमपि चित्तविनोदहेतोः ॥ ११

नानाकथामृतमयस्य बृहत्कथायाः सारस्य सज्जनमनोम्बुधिपूर्णचन्द्रः ।
सोमेन विप्रवरभूरिगुणाभिरामरामात्मजेन विहितः खलु संग्रहोऽयम् ॥ १२

प्रविततरङ्गभङ्गिः कथासरित्सागरो विरचितोऽयम् ।
सोमेनामलमतिना हृदयानन्दाय भवतु सताम् ॥ १३

---